वारि च ॥ पक्कजले ॥
पक्काधानम् न० पक्काशये ॥
पक्कान्नम् न० कृतपाकेतण्डुलादौ ॥
यथा । यतीच ब्रह्मचारीच पक्कान्न-
स्वामिनावुभौ । तयो रन्न मदत्त्वा तु
भुक्त्वा चान्द्रायणं चरे दिति सदा-
चारः धार्मशूद्रस्य पक्कान्नं पक्ष
मुत्सृष्ट मुच्यते । इतितिथितत्त्वम् ॥
पक्काशयः पुं० नाभ्यधःस्थले ॥ पक्काशय
स्त्वधोनाभेरूर्ध्वमामाशयः स्मृतः ॥
पक्कस्य आशयः ।
पक्षः । पुं० मासार्द्धे ॥ पच्यते॰परिक्र-
म्यतेदैवकार्यार्थेपितृकार्यार्थेवायःका-
लविशेषःपक्षः । सचशुक्लकृष्णभेदा-
द् द्विविधः । शुक्लपक्षेतिथिर्ग्राह्या
यस्यामभ्युदितोरविः । कृष्णपक्षे
तिथिर्ग्राह्या यस्यामस्तमितोरविः ॥
पक्षपरिग्रहे । कर्मणिघञ् ॥ पक्षयति ।
पक्ष्यतेवा । अच् । घञ्वा ॥ यद्वा ।
पच्यते चन्द्रस्यपञ्चदशानां कलाना-
मापूरणं क्षयोवाऽनेनेतिसः ॥ छन्दो-
वापक्षशब्दोविभक्तौमासस्यैकैकमर्द्ध-
न्दृते ॥ यद्वा । पक्षते । पक्ष० । अधि-
पर्ग्रोर्दकोचेतिसः धातोः कान्ता-
देशः॥ पार्श्वगृहे ॥ साध्ये ॥ विरोधे ॥
केशादेः परतोवृन्दे ॥ मित्रबले ॥
सहायबले ॥ चुल्लीरन्ध्रे ॥ पतत्रे ॥
पक्षिपक्षे । गरुति ॥ राजकुञ्जरे ॥
पार्श्वे । पाखाड़ितिभाषा ॥ वर्गे ॥
देहाङ्गे ॥ सहाये ॥ यथा । श्रुति-
शिरः पक्षः समाश्रीयतामित्यु-:
पदेशः ॥ शरपक्षे । बाणे ॥ भित्तौ ॥
एकतरकोटौ ॥ सन्दिग्धसाध्यवति ॥
यथा॰धूमवत्त्वे हेतौपर्वतः ॥ सिषा-
धयिषितधर्मविशिष्टो धर्मी पक्षः ।
यथा । महानसेधूमवन्ह्योः सम्बन्धे
तत्पूर्वकं पर्वतेवह्निज्ञानम् ॥
पक्षकः । पुं० पार्श्वद्वारे खड्किकायाम्
खिड़कीद्वारइ० भा० ॥ पार्श्वभावे ॥
पक्षइव । इवेप्रतिकृतावितिकन् ॥
स्वार्थेकोवा ॥ सहाये ॥
पक्षघातः । पुं० पक्षाघाताभिधवातरोगे
पक्षचरः । पुं० चन्द्रे । विधौ ॥ यूथभ्रष्ट
पृथक्चारिगजे ॥
पक्षच्छिद्रम् । न० तिथिविशेषे ॥ अष्टमी
द्वादशी चैव चतुर्थी च चतुर्दशी ॥ अ-
मावास्याच मुनिभिः पक्षच्छिद्र मुदा
हृतम् ॥
पक्षजः । पुं० चन्द्रमसि ॥ पक्षेजातः ।
जनी० डः ॥ त्रि० । पक्षजन्मनि ॥
पक्षजन्मा । पुं० चन्द्रे ॥ पक्षेजन्मास्य ॥
त्रि० । पक्षजाते ॥
पक्षता । स्त्री० अनुमित्साविरहविशिष्ट
सिद्ध्यभावे ॥ इयमनुमितिकारणम्
तत्र । पर्वतेवन्ह्यनुमितौअनुमित्सा
विरहविशिष्टपर्वतधर्मिकवन्हिनिश्चया
भावः । यथा । सिषाधयिषयाशून्या
सिद्धिर्यत्रनतिष्ठति । सपक्षस्तद्वत्तत्त्व

ज्ञानादनुमितिर्भवेदिति ॥ भाषापरिच्छेदः ॥

पक्षतिः । स्त्री० पक्षमूले ॥ प्रतिपत्तिथौ पक्षस्यमूलम् । पक्षात्तिः ॥

पक्षद्वारम् । न० पक्षके ॥ पक्षेपार्श्वेद्वारम् ॥

पक्षधरः । पुं० सुधांशौ ॥ इन्दौ ॥ यज्ञपत्युपाध्यायक्कात्रे । चिन्तामणेश्लोककारे । मिश्रे ॥ त्रि । पक्षधारणकर्त्तरि ॥

पक्षधर्मता । स्त्री० व्याप्यस्यपर्वतादिवृत्तित्वे ॥

पक्षपातः । पुं० आसक्तिविशेषे ॥ अन्याय्यसाहाय्यकरणे ॥ पक्षेपातः ॥ पक्षिणांज्वरे ॥ पक्षपातःपतङ्गानामित्युक्तिः ॥

पक्षपातिता । स्त्री० सहायतायाम् ॥

पक्षपालिः । स्त्री० खड्किकायाम् ॥

पक्षभागः । पुं० गजस्यपार्श्वभागे ॥ पक्षयत्यनेन । पक्ष० । चु० । पुंसीति घः । पक्षस्यपक्षएववाभागः ॥

पक्षमूलम् । न० पक्षतौ । डानक्० इ० गौड़० भा० ॥ पक्षस्यमूलं ॥

पक्षवाहनः । पुं० खगे । विहगे ॥

पक्षः । न० पक्षे । गरुति ॥ पक्षति । डुपचष् । पचिवचिभ्यांसुट्चेत्यसुन् । पक्षसीतुस्मृतौपक्षाविति शुभाङ्कः ॥ त्वनीकाधिकरणेपूर्वोत्तरेद्वे पक्षसी इतिशवरस्वाम्यादयः ॥ माधवस्तु

पक्षपरिग्रहइत्यस्मादसुन् । पक्षशुद्धिः संवत्सरार्द्धेस्यात् ॥

पक्षसुन्दरः । पुं० लोध्रे ॥ इतिहारावली ॥

पक्षाघातः । पुं० अर्धांगइतिख्याते भावप्रकाशोक्तवातजन्ये रोगविशेषे ॥ पक्षेयाहननम् ॥

पक्षान्तः । पुं० द्वयोः पक्षदशोः ॥ अमायाम् ॥ पूर्णिमायाम् ॥ पक्षस्यअन्तः ॥

पक्षाशुः । पुं० पक्षिणि ॥ इतिशब्दचन्द्रिका ॥

पक्षावसरः । पुं० पूर्णिमायाम् ॥ अमायां ॥

पक्षिणी । स्त्री० पूर्णिमायाम् ॥ खग्याम् । विहग्याम् ॥ शाकिनीभेदे ॥ आगामिवर्त्तमानाहर्युतायांनिशि ॥ आगामिवर्त्तमानेअहनीयुक्ता यस्यां सारात्रिः पक्षिणी । यथा । द्वे पक्षी प्रकारात्रिश्च पक्षिणीत्यभिधीयते । इति । रात्रिरित्युपलक्षणम् । तेन पूर्वोत्तररात्रियुतंदिनमपिपक्षिणी । पूर्वापरदिनेरात्री वा पक्षाविवसौ यस्याम् । अत इनिः ॥

पक्षी । पुं० खगे । विहगे । शकुनौ ॥ पक्षी । इतिपंक्ती० इतिचभा० ॥ पक्षावस्यस्तः । अतइनिठनावितीनिः ॥ धान्याङ्कुरचरायेत्ततेषांमांसं लघूत्तमम् । आनूपजलजन्मांसंस्निग्धं

गुरुतरंस्मृतम् ॥ पक्षविशेषं वि
ष्किरे ॥ लिङ्गदेहे ॥ पंचमाचिकास्य
द्वितीयप्रभेदे ऽ । ऽ वाणे ॥

पक्षिपानीयशाला । स्त्री० (चुरटीह
पक्षिपानीयशालिका । स्त्री० (तालवाले ।
पक्षिजलपानस्थाने ॥

पक्षिराजः । पुं० सम्पातौ ॥ पक्षिणां
राजा । टच् ॥ शलभरूपेशिवे ॥

पक्षिलः । पुं० वात्स्यायनमुनौ ॥

पक्षिशाला । स्त्री० कुलायिकायाम् ।
नीडे ॥

पक्षिसिंहः । पुं तार्क्ष्ये । गरुडे ॥
पक्षीसिंह इव पक्षिणांसिंहोवा ॥

पक्षिस्वामी । पुं ० गरुडे ॥

पक्षीन्द्रः । पुं० जटायौ ॥ तार्क्ष्ये ॥

पक्ष्मगुः । त्रि० पाकयात्तरि । पक्तरि ॥
पचेःक्तुरितिबोपदेवः ॥

पक्ष्म ॥ न० सूत्रादिसूक्ष्मांशे ॥ किञ्ज-
ल्के । कुसुमच्छदे ॥ नेत्रलोमनि ॥
अणीयसि । गरुति ॥ पच्यतेऽनेनवा ॥
पच० । कर्मकरणादौमनिन् ॥

पङ्कः । पुं० न० पापे ॥ कर्द्दमे ॥ पङ्को
दाहापित्तार्त्तिशोषघ्नःशीतलःसरः ॥
पञ्च्यतेद्रुःसमनेन । पचिव्यक्तीकरणे
उन्यथे रिकरणे घञ् । कुत्वम् । पञ्
च्यतेवा । पचिविस्तारे । कर्मणिघञ् ॥

पङ्ककर्पटः पुं० दलाव्ये । कलमुक्तपङ्के ।
दलाद्दल० इ० भा० ॥

पङ्ककीरः । पुं० कोयष्टिखगे ॥

पङ्कगडः । पुं०
पङ्कगडकः । पुं० } पाकाल० इ० गौ० भा०

पङ्कगतिः । स्त्री० मत्स्ये ॥
ब्रह्म्याम् ॥

पङ्कग्राहः । पुं० मकरे ॥ इ० हारा
वली ॥

पङ्कजम् । न०
पङ्कजन्म । न० } पद्मे । सामले, ॥ इति
राजनिर्घण्टः

पङ्कजिनी । स्त्री० पद्मसमूहे ॥ जलजा
करे ॥ पङ्कजानिसन्त्यस्याम् । पुष्क
रादिभ्योदेशेइतिइनिः ॥

पङ्कधूमः । पुं० नरकभूभेदे ॥ पङ्कइव
धूमोऽस्मिन् ॥

पङ्कप्रभा स्त्री० कर्द्दमयुक्तनरकवि० ॥

पङ्कमण्डूकः पुं० शम्बूके । जलडिम्बे ॥

पङ्कवली ॥ स्त्री० वृत्तविशेषे ॥ पादकु-
सुमरवगन्धमनोहरनायकयुगलकरूप
मधाकर । नागन्नमतिवरभापितसु-
दृतिवृत्तमसलमिहपङ्कवलीतिहि ॥
यथा । शारदविशदनिशामयिनिन्द
तिसम्प्रतिहृदयभिदामपिविन्दति ।
मन्मथविशिखभयेननिमीलतिमाधव
तवविरहेणविषीदतीति ॥

पङ्कवासः । पुं० कर्कटे ॥ इ० रा० नि ॥

पङ्कशुक्तिः । स्त्री० सिशालिकायाम् ।
दुर्नामायाम् ॥

पङ्कशूरणः । पुं० शालूके ॥ इ० त्रि० ॥

पङ्कारः पुं० शैवले । सेतौ ॥ सोपाने ।

जलकुक्कुटके ॥ इतिमे० ॥

पङ्किलः । त्रि० सजम्बाले । पङ्काढ्ये ॥ पङ्कोस्मिन्नस्ति । पिच्छादित्वात् इलच् ॥

पङ्किलत्वम् । न० आर्द्रतायाम् ॥

पङ्कजम् । न० पद्मे ॥ पङ्केजातम् । जनी० । सप्तम्यामितिडः । तत्पुरुषइत्यलुक् ॥

पङ्केरुहम् । न० पद्मे ॥ पङ्केरोहति । रुह० । इगुपधेतिकः । तत्पुरुषे कृतीत्यलुक् ॥

पङ्क्तिः ॥ स्त्री० सजातीयसंस्थानविशेषे । वीथ्याम् । श्रेण्याम् ॥ पङ्क्तिसाङ्कर्य्ये दोषा यथा । नसंदसीचपतितैर्नचाण्डालैर्नपुक्कशैः । न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः ॥ एकशय्यासनंपङ्क्ति भाण्डपक्वान्नमिश्रणम् । याजनाध्यापनेयोनि स्तथैवसहभोजनम् ॥ सहाध्यायस्तु दशमः सहयाजनमेवच ॥ एकादशसमुद्दिष्टा दोषाः साङ्कर्य्यसंज्ञिताः ॥ समीपे चाप्यवस्थानात् पापंसंक्रमतेनृणाम् । तस्मात्सर्वप्रयत्नेन साङ्कर्य्यं परिवर्ज्जयेत् ॥ पङ्क्तिसाङ्कर्य्यदोषनिवारणोपायो यथा । एकपङ्क्त्युपविष्टायेनस्पृशंतिपरस्परम् । भस्मनाकृतमर्यादा नतेषां सङ्करोभवेत् ॥ अग्निनाभस्मनाचैव यद्भिः पङ्क्तिर्विभिद्यते । इतिकूर्मेपञ्चदशाध्यायः ॥ सान्तरवीथ्याम् ॥ पचनम् । पचि व्यक्तीकरणे । क्तिन् ॥ यद्वा । पञ्चते । पचिविस्तारे । क्तिच् ॥ दशाक्षरच्छन्दसि ॥ दशसंख्यायाम् ॥ सुप्रतिष्ठाभेदे । पञ्चाक्षर पादच्छन्दोभेदे । यथा । भूगौगितिपङ्क्तिः ॥ यथा । कृष्णसनाथा तर्णकपङ्क्तिः । यामुनकच्छे चारुचचार ॥ क्षितौ ॥ सङ्ख्यायै ॥ पञ्चकाद्वयम् पञ्चपदानि वा परिमाणमस्य । पङ्क्तिविंशतित्रिंशदिति निपातनात्प्रकृतेः पञ्चन् शब्दस्य टिलोपः तिप्रत्ययः । चोः कुरितिकुत्वम् । पदशब्दोत्रपादपर्यायः । रूढिशब्दोयम् । तथाचावनावयवार्थो ऽभिनिवेष्टव्यम् । पङ्क्तिशब्दोहिनानार्थः । पङ्क्तिक्रमसन्निवेशे यथा ब्राह्मणपङ्क्तिः पिपीलिकापङ्क्तिरिति । पङ्क्तिचदशसङ्ख्यायाम् । क्रतवान्पङ्क्तिरथोविषद्धयदिति दशरथइत्यर्थः पङ्क्तिश्छन्दोविशेषे यथा । यस्यपञ्चाक्षराः पादाः । तथा चछन्दोविशेष एवार्थइतिबोध्यम् ॥

पङ्क्तिग्रीवः । पुं० रावणे ॥

पङ्क्तिचरः । पुं० कुररपक्षिणि । कुरुजङ्ग० भा० ॥

पङ्क्तिदूषकः । पुं० अपाङ्क्तेये । मन्वादिस्मृत्युक्तश्राद्धभोजनानर्हब्राह्मणे ॥

पङ्क्तिपावनः । पुं० श्राद्धभोजनार्हब्राह्मणे ॥ पञ्चाग्निप्रभृतौ ॥ यथाह

हारीत : । पवन: पावनस्त्रेतायस्य
पञ्चाग्नयोगृहे । सायम्प्रात : प्रदीप्य
न्तेसविप्र : पङ्क्तिपावन : ॥ इति
अगस्त्या : सर्वेषुवेदेषुसर्वप्रवचनेषुच
योचियान्वयजाश्चैवविज्ञेया : पङ्क्ति
पावना : ॥ इत्यादिनामनुक्तेपुत्रा
श्रमेषु ॥

पङ्क्तिरथ : पुं ॰ दशरथनृपे ॥

पङ्क्तिवीज : पुं ॰ वर्वूरवृक्षे ॥

पङ्गु : । पुं ॰ शनैश्चरे ॥ परिव्राजि ॥ यथा
भिक्षार्थंगमनंयस्यविण्मूत्रकरणायच ।
योजनान्नपरंयातिसर्वथापङ्गुरेवस : ॥
त्रि॰ खोणे । जङ्घावैकल्येनचलनाक्षमे ।
जङ्घाहीने ॥ पन्गतिपत्त॰ वा॰ गु: ॥

पङ्गुग्राह : । पुं ॰ शनैश्चरग्रहे ॥

पङ्गुल : । पुं ॰ सितकाचाभघोटके ॥
इतिहेमचन्द्र: ॥

पङ्गुत्वहारिणी । स्त्री॰ शिम्बडीवृक्षे ॥

पङ्गू :-। स्त्री ॰ विकलजङ्घायाम ॥
पङ्गोरूङ्स्यूङ् ॥

पच : । त्रि॰ पाककर्त्तरि ॥ पचति ।
डुपचष् । पचाद्यच् ॥

पचत : । पुं॰ पचे ॥ स्त॰ क : ॥

पचत् । त्रि॰ पचमाने ॥ पचति ।
लट : शत्रितिपचे : शत ॥

पचत : । पुं॰ चन्द्रे ॥ सूर्यें ॥ वह्नौ ॥
पचति । डुपचष्॰ । भृमृदृशियजि-
पर्विपच्यमितमिनमिहर्यिभ्योतच् ॥

पचत्पुट : । पुं॰ सूर्यमणिवृक्षे ॥

पचन : । पुं॰ अग्नौ ॥ न॰ पाके ॥
त्रि॰ पाककर्त्तरि ॥

पचनी । स्त्री॰ वनवीजपूरके ॥

पचन्ती । स्त्री॰ पाककर्त्र्याम् ॥

पचमान : । पुं॰ वह्नौ ॥ त्रि॰ पाकक-
र्त्तरि ॥ पचति । पचते । डुपचष्॰ ।
लट : शतृशानचाविति॰शानजादे-
श : । आनेमुक् ॥

पचम्पचा । स्त्री॰ दार्व्याम् । दारुहरि-
द्रायाम् । पचति । पचे : पचाद्यच् ।
पु॰ ॥ ...

पचा । स्त्री॰ पाके ॥ पचनम् । पचे :
षित्वादङ् ॥ टाप् ॥

पचि : । पुं॰ अग्नौ ॥ पचति । डुपच-
ष्॰ । सर्वे ॰ इन् ॥

पचेलिम : । पुं॰ सूर्ये ॥ वह्नौ ॥ पच-
ति । पचएलिमच् । त्रि॰ पक्तव्ये ॥
यथापचेलिमा : शालय : पक्तव्या
इत्यर्थ : पच्यते । पचे : कर्मणि के-
लिमरत्वपसङ्ख्यानं ॥

पचेलुक : । पुं॰ पाचके । सूदे ॥ इति
त्रिकाण्डशेष : ॥

पच्छ : । अ॰ पादस्यार्द्धमित्यर्थे ॥

पच्यमान : । त्रि॰ वर्त्तमानपचनकर्म-
ताश्रये । वर्त्तमानपाकविशिष्टतण्डु-
लादौ ॥

पज्र : । पुं॰ शूद्रे पदो जात : :
कर्नी॰ । इ : ॥

पञ्झटिका । स्त्री॰ मात्रावृत्तान्तरे ॥

यथा। प्रतिपद्यमर्कितपोडशनामा नवमगुरुत्वविभूषितगात्र। पञ्चटिकायाएपविवेकः क्वापिनमध्यगुरुर्गणएकः॥ यथा। तरलवतंसाश्रिष्टस्कन्धस्थलतर पञ्चटिका कटिबन्धः। मौलिचपलशिखिचन्द्रकवृन्दः कालियशिरसिनटनमुकुन्दः॥

पञ्चकम्। न० धनिष्ठादिपञ्चनक्षत्रेषु॥ पञ्चग्रहनिमित्तत्वणकाष्ठहरणेदोषो यथा। अग्निचौरभयंरोगो राजपीडा धनक्षतिः। सङ्ग्रहे तृणकाष्ठानां कृतेवस्वादिपञ्चके॥ त्रि० पंचसङ्ख्यापरिमाणविशिष्टे॥ पंचसङ्ख्यापरिमाणमस्य। तदस्यपरिमाणमित्यनुवृत्तौसङ्ख्यायाः संज्ञासंघसूत्राध्ययनेष्विति पञ्चसङ्ख्यापरिमितिमंघार्येकन्प्रत्ययः॥ पञ्चभिः क्रीते॥ संख्यायाअतिशदन्तायाःकन्॥ पञ्चानांनिमित्तंसंयोगउत्पातोवा॥

पञ्चकपालः। पुं० पञ्चसुकपालेषु संस्कृतपुरोडाशे॥ संस्कृतंभक्ष्याइत्यणोद्विगोर्लुगनपत्यइतिलुक्॥ न०॥ पंचानांकपालानांसमाहारे॥

पञ्चकर्म। न० पञ्चप्रकारशारीरकचिकित्साविशेषे॥ यथा। वमनं रेचनं नस्यं निरूहश्चानुवासनम्। पञ्चकर्मेदमन्यत्तु कारणंक्षेपणादिकम्॥ इति श० चं०॥

पंचकषायाः। पुं० शराब्जानीयपंचप्रकारकषायद्रव्ये॥ यथा। जम्बुशाल्मलिवाट्यालं बकुलंबदरंतथा। कषायाः पंचविज्ञेया देव्याः प्रीतिकाराः शुभाः॥ पंचततिकषायाश्च॥

पञ्चकारुकी। स्त्री० कुलालकर्मारवर्द्धकिनापितरजकेषु॥

पञ्चकृत्यः पुं० महादेवे॥ न०॥ सृष्ट्यादिषु॥ यथा। यस्मिन्सृष्टिस्थितिध्वंसपिधानानुग्रहात्मकम्। कृत्यंपञ्चविधंशश्वद्भासतेतंनुमःशिवमिति॥

पञ्चकोलम्। न० पञ्चौषधी। पाचनविशेषे॥ यथा। पञ्चकोलंकणामूलचव्याग्निनागरैः। पञ्चकोलंरसेपाकेकटुकंरुचिकृन्मतम्। तीक्ष्णोष्णंपाचनंश्रेष्ठंदीपनंकफवातनुत्। गुल्मप्लीहोदरानाहशूलघ्नंपित्तकोपनम्॥ इतिभावप्रकाशः॥

पञ्चकोषाः। पुं० अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेषु॥ कोषा इवात्माच्छादकत्वात्कोषाः। पञ्चपञ्चकोषाश्च॥ यथाहुर्विचारणगुरवः पितृभुक्तान्नजाद्वीर्याज्जातोऽन्नेनैवर्द्धते। देहःसोऽन्नमयोनात्मा प्राक्चोर्ध्वंतदभावतः॥ १॥ पूर्वोदेहेबलंयच्छन्नक्षाणांयःप्रवर्तकः। वायुःप्राणमयोनासावात्माचैतन्यवर्जनात्॥ २॥ अहन्तांममतांदेहगेहादौचकरोतियः। कामाद्यवस्थयाभ्रा

न्तो नासायात्मामनोमयः ॥ ३ ॥ ली
नासुप्तौवपुर्बोधे व्याप्ताद्यानखाग्रगा
चिच्छायोपेतधीर्नात्मा विज्ञान
मयशब्दभाक् ॥ ४ ॥ काचिदन्तर्मुखा
वृत्तिरानन्दप्रतिबिम्बभाक् ॥ पुण्यभो
गेभोगशान्तौनिद्रारूपेणलीयते ॥ ५ ॥
कादाचित्कत्वतोनात्मास्यादानन्दम
योप्ययम् ॥

पञ्चक्लेशाः । पुं० अविद्यास्मिता राग
द्वेषाभिनिवेशेषु ॥ पंचसंक्लेशाश्च ।

पंचक्षारगण : । पुं० क्षारपंचके ।
पंचलवणे ॥ क्षारैस्तुपंचभि : प्रोक्तः
पंचक्षाराभिधोगण : । काचसैन्धव
सांमुद्र-विट्सौवर्चलकै : समै : ॥
स्यात्पंचलवणंतच्च कथ्यतेपंचका
ख्यम् ॥

पंचगणयोग : । पुं० विदारिगन्धा
वृहती पृश्निपर्णीनिदिग्धिका : ॥

पञ्चगव्यम् । न० गोर्दध्यादिपञ्चसु ॥
यथा । पञ्चगव्यंदधिक्षीरघृतगोमूत्र
गोमये रिति ॥ तन्मानं यथा । पल
मात्रं दुग्धभागं गोमूत्रं तावदिष्यते ।
घृतंचपलमात्रंस्याद् गोमयंतोलक
त्रयम् ॥ दधिप्रसृति मात्रंस्यात्
पञ्चगव्यमिदंस्मृतम् । अथवा पञ्च
गव्यानां समानोभागइष्यतइति
गोतमीयतन्त्रम् ॥ अपिच । गोश
कृद्द्विगुणंमूत्रं पय : स्यात्तच्चतुर्गु
णम् । घृतंतद्द्विगुणंप्रोक्तं पञ्च
गव्ये तथादधीति ॥

पञ्चगुप्त : । पुं० चार्वाकदर्शने ॥
कमठे ॥

पञ्चगुप्तिरसा । स्त्री० स्पृक्कायाम् ॥

पञ्चचामरम् । न० षोडशाक्षरपादे
छन्दोविशेषे ॥ यथा ॥ प्रमाणिका
पदद्वयम् वदन्तिपञ्चचामरम् ॥ यथा ।
सुरद्रुमूलमंडपे विचित्ररत्न निर्मिते
लसद्वितानभूषिते सलीलविभ्रमाल
सम् । सुराङ्गनाजनव्रजै करप्रपन्न
चामरस्फुरत्समीरवोजितं सदाच्युतं
भजामितमिति ॥

पञ्चचीर : । पुं० मञ्जुघोषे ॥

पञ्चचूडा । स्त्री० अप्सरोविशेषे ॥

पंचजन: । पुं० नरे । पुरुषे ॥ पंचभिर्भू
तैर्जन्यते । जनी० । घञ् । जनिव
ध्योश्चेतिनवृद्धि : ॥ यद्वा । पञ्चजना
उत्पादकायस्य ॥ संज्ञादपुमे दैत्य
विशेषे ॥ गन्धर्वा : पितरोदेवा असु
-रारक्षांसिपञ्चजनपदवाच्यानिभ-
वन्ति ॥ निषादपञ्चमावर्णाश्च ॥

पंचजनीन: । पुं० भाण्डे ॥ त्रि । पञ्च
जनहिते ॥ रथकारपंचमाश्चत्वारो
वर्णा : पञ्चजना : । दिक्संख्ये
संज्ञायामिति० समास : । पञ्चजने
भ्योहितम् । पञ्चजनादुपसङ्ख्यान
मितिख : । उपसङ्ख्यानस्यकर्मधा
रयविषयत्वात् । षष्ठीसमासात्पञ्च
जनीनाय छम्त्र । पंचजनीयम् ॥

न० मैथुने ॥ त्रि० । पंचानांपूरणे ॥ रुचिरे ॥ दक्षे ॥ पंचानांपूरणः । तस्यपूरणेडट् ॥ नान्तादितिमट् ॥

पंचमवेदः । पुं० भारते ॥

पञ्चमहायज्ञाः । पुं० गृहस्थकर्त्तव्येषुपंचविधनित्यकर्मसु ॥ यथा । पाठोहोमश्चातिथीनांसपर्यातर्पणंबलिः । एतेपंचमहायज्ञाब्रह्मयज्ञादिनामकाः । तथाचमनुः पंचसूनागृहस्थस्यचुल्लीपेषण्युपस्करः । कण्डनीचोदकुम्भश्चबध्यतेयास्तुवाहयन् ॥ तासांक्रमेणसर्वासां निष्कृत्यर्थंमहर्षिभिः । पंचक्लृप्तामहायज्ञाः प्रत्यहंगृहमेधिनाम् ॥ अध्यापनंब्रह्मयज्ञः पितृयज्ञस्तुतर्पणम् । होमोदैवोबलिर्भौतो नृयज्ञोतिथिपूजनम् इति ॥ बध्यतेहन्यतेत्यर्थः पापंत्वात् । अथवाबध्यतेहिंसाजनितदुरितेनसम्बध्यतेहन्यतेपित्यर्थः । वाहयन् प्रवर्त्तयन् ॥

पञ्चमारः । पुं० बलदेवस्यपुत्रे ॥.

पञ्चमास्यः । पुं० कोकिले ॥ पञ्चमोरागः स्वरोवाआस्येयस्य ॥ *

पञ्चमी । त्रि० पञ्चमासादिकेत्वष्टादौ ॥ पञ्चमोमासोवर्षोवास्य । वयसिपूरणादितीनिः ॥

पञ्चमी । स्त्री० द्रौपद्याम् ॥ तिथिवि० । साचन्द्रस्यपञ्चमकलाक्रियारूपा । तदुपलक्षितकालश्च । अस्यांजातस्यफलम् । यथा । भूपालमान्योमनुजः सुशानः कृपासमेतोविदुषांवरिष्ठः । वाग्मीगुणीबन्धुजनैकमान्यः प्रसूतिकालेयदिपञ्चमीस्यात् ॥ इमि० स्याम् ० स्यम् ० स्व ० त्रिक ॥ पञ्चानांपूरणी ॥ डट् । मट् । ङीप् ॥ विद्याविशेषे ॥ रागिणीविशेषे । वसन्तरागभार्यायाम् ॥ अस्याध्यानं यथा । सङ्गीतगोष्ठीपुरगेहभावसमाश्रिता गायनसम्प्रदायैः । स्वर्णाङ्गिनीनूपुरपादपद्मासापंचमीपंचमवेदवेत्रीतिसङ्गीतदर्पणः ॥

पंचमुखः । पुं० शिवे ॥ पञ्चमुखानियस्य ॥ सिंहे । मृगेन्द्रे ॥ पञ्चते । पचि० । अच् । पञ्चंविस्तृतंमुखमस्य । यद्वा । मुखंपादाद्य० पञ्चमुखानीयस्य ॥

पंचमुखी । स्त्री० सिंहभार्यायाम् ॥ वासके ॥ जवापुष्पविशेषे ॥ शिवायाम् इति शब्दाम्बुधिः ॥

पञ्चमीव्रतम् । न० माघशुक्लपञ्चमीमारभ्यपड्वर्षपर्यन्तंप्रतिमासीयशुक्लपञ्चम्यांभविष्य पुराणोक्तस्त्रीकर्त्तव्येनियमविशेषे ॥

पञ्चमुद्रा । स्त्री० सन्न्यासिनोचिह्नदण्डकमण्डलुशिक्यपात्र जलपवित्ररूपेलिङ्गे ॥ पूजायामावाहन्यादिषु ॥

पञ्चसूत्रम् । न० गोजाविमहिषीगर्दभीनांसूत्रे ॥ पञ्चानांसूत्राणां

समाहार : ॥

पञ्चमूर्त्तिः । पुं० सदाशिवे ॥ सृष्टिस्थितिसंहारनिरोधानुग्रह लक्षणपञ्चकृत्यसिद्ध्यर्थं मीशानतत्पुरुषाघोरवामदेवसद्योजातलक्षणाः पञ्चमूर्त्तयोयस्य ॥

पञ्चमूलम् । न० स्वनामप्रसिद्धेषधविशेषे ॥ तत्त्रिविधम्यथा । श्रीफल : सर्वतोभद्रापाटलागणिकारिका । श्योनाक : पञ्चभिश्चैतैः पञ्चमूलंमहन्मतम् ॥ पंचमूलंमहत्तिक्तकषायंकफवातनुत्। मधुरंकासश्वासघ्नमुष्णंलघ्वग्निदीपनम् ॥ २ लघुपञ्चमूलन्तु । शालपर्णीपृश्निपर्णीवार्ताकीकण्टकारिका । गोक्षुर : पञ्चभिश्चैतैः कनिष्ठंपञ्चमूलकम् ॥ पञ्चमूलंलघुस्वादुबल्यंपित्तानिलापहम् । नात्युष्णंबृंहणंग्राहिज्वरश्वासाश्मरीप्रणुत् ॥ ३ तृतीयतृणाख्यंतत्तु । कुश : काश: शरो दर्भइक्षुश्चेतितृणोद्भवम् । पित्तघ्नमेतत्पञ्चमूलंबस्तिविशोधनमिति ॥

पञ्चमूली । स्त्री० लघुपंचमूलपाचने ॥ पञ्चानांमूलानां समाहार : । द्विगोरितिङीप् ॥

पञ्चरङ्गक : । पुं० पञ्चमीडवृक्षे ॥

पञ्चरत्नम् । न० कनकादिरत्नपञ्चके ॥ यथा । कनकंहीरकंनीलं पद्मरागश्च मौक्तिकम् । पंचरत्नमिदंप्रोक्तमृषिभि : पूर्वदर्शिभि : ॥ रत्नानामप्यभावेतुस्वर्णंकार्षार्द्धमेववा । सुवर्णंमाज्यंवेतुमाज्यंत्रं सर्वविचक्षणैरितिहेमाद्रिः ॥ पञ्चानांरत्नानांसमाहार : ॥

पञ्चरसा । स्त्री० आमलक्याम् ॥

पंचरात्रम् । न० ग्रन्थविशेषे ॥ यथा। रात्रञ्चज्ञानवचनंज्ञानंपंचविधंस्मृतम् । तेनेदंपञ्चरात्रंचप्रवदन्तिमनीषिण : ॥ तत्सप्तविधंयथा । पञ्चरात्रंसप्तविधंज्ञानिनोज्ञानदंपरम् । ब्राह्मंशैवंचकौमारंवाशिष्ठंकापिलंपरम् ॥ गौतमीयंनारदीयं सिदंसप्तविधंस्मृतम् । श्रुतिनारदपञ्चरात्रेप्रथमरात्रम् ॥ एतदतिरिक्तानिहयशीर्षपृथुप्रभृत्यादिपञ्चरात्राणिसन्ति ॥ पञ्चमुनिशास्त्र ॥

पञ्चलक्षणम् । न० पुराणे ॥ यथा । सर्गश्चप्रतिसर्गश्च वंशोमन्वन्तराणिच । वंशानुचरितंचैव पुराणंपञ्चलक्षणमिति ॥ पुं० । पुरुषविशेषे ॥

पञ्चलवणम् । न० सैंधवादिपञ्चसु ॥ यथा । सैंधवंचकंचैवविडंसामुद्रकंगुडमिति ॥ पञ्चानांलवणानां समाहार : ॥

पञ्चलाङ्गलकम् । न० महादान विशेषे ॥

पञ्चलोहम् । न० सौराष्ट्रकालोहेदेति हेमचन्द्र : ॥ स्वर्णरूप्यताम्रसीसकारकूटेषु ॥

पञ्चलोहकम् । न० स्वर्ण रजत ताम्र

वह्निभागेषु ॥

पञ्चवक्त्रः । पुं॰ शिवे ॥ पञ्चवक्त्राणियस्यस । तानियथा । विभाव्यसुखपद्मंहि शिवस्यवरवर्णिनि । सद्योजातंवामदेवमघोरंचततः परम् ॥ तत्पुरुषंतथेशानंपञ्चवक्त्रंप्रकीर्तितम् ॥ सद्योजातंचवैशुक्लं शुद्धस्फटिकसन्निभम् । पीतवर्णंतथासौम्यंवामदेवंमनोहरम् ॥ कृष्णवर्णमघोरंच सर्वभीमविमर्दनम् । रक्तंतत्पुरुषंदेविदिव्यमूर्तिमनोहरम् ॥ श्यामलंचतथेशानं सर्वदेवशिवात्मकम् । चिंतयेत्पश्चिमेवक्त्रंद्वितीयंचतथोत्तरे ॥ अघोरंदक्षिणेदेवंपूर्वेतत्पुरुषंतथा । ईशानंमध्यतोज्ञेयंचिन्तयेत्भक्तितत्परइति निर्वाणतन्त्रे षष्ठःपटलः ॥ शिवे ॥

पञ्चपटः । पुं॰ उरस्कटे । कोटिङ्गे । वालयज्ञोपवीतके । तीर्थविशेषे ॥

पञ्चवटी । स्त्री॰ दण्डकारण्यान्तर्भूतस्थलविशेषे ॥ पञ्चानांवटानां समाहारः । द्विगोरितिङीप् । तद्रुपलक्षितत्वात् । पञ्चवटीत्यभिधिस्त्रतः प्रसिद्धोदेशउच्यते ॥ तत्र कारणादिपञ्चप्रकारवृक्षविशेषे ॥ यथा । अश्वत्थोविल्ववृक्षश्चवटोधात्रीअशोककः । वटीपञ्चकमित्युक्तंस्थापयेत् पञ्चदिक्षुच ॥ अश्वत्थंस्थापयेत्प्राचिविल्वमुत्तरभागतः । वटंपश्चिमभागेतुधात्रींदक्षिणतस्तथा ॥ अशोकं वह्निदिक्स्थाप्यंतपस्यार्थंसुरेश्वरि । मध्येवेदीं चतुर्हस्तां सुन्दरीं सुमनोहराम् ॥ प्रतिष्ठां कारयेत्तस्याः पञ्चवर्षोत्तरंशिवे । अनन्तफलधात्री सा तपस्याफलदायिनी ॥ इयंपञ्चवटीप्रोक्तायहत्पञ्चवटींशृणु । बिल्ववृक्षंमध्यभागेचतुर्दिक्षुचतुष्टयम् । वटश्चंचतुष्कोणे वेदसंख्यंप्ररोपयेत् । अशोकंवर्तुलाकारंपञ्चविंशतिसम्मितम् ॥ दिग्विदिक्षासमलक्षीच एकैकंपरमेश्वरि । अश्वत्थंचचतुर्दिक्षु बृहत्पञ्चवटीभवेत् ॥ यः करोति महेशानि साक्षादिन्द्रसमोभवेत् । इहलोके मन्त्रसिद्धिः परेचपरमागतिः ॥ इति हैमाद्रीयव्रतखण्डधृतस्कन्दपुराण वचनानि ॥



पञ्चवर्गः । पुं॰ कापटिकोदास्थितगृहपतिवैदेहिकतापसव्यञ्जनात्मके राज्ञांपञ्चविधेचारवर्गे ॥ यथा । तत्र परमर्मज्ञः प्रगल्भश्छात्रः कपटव्यवहारित्वात्कापटिकः । तंचार्थ विनिमर्थमानाभ्यामुपगृह्यरहसिराजाब्रूयात्त्वस्यदुष्टंपश्यसितत्तदानींमेसमचिवक्तव्यमिति ॥ १ ॥ प्रव्रज्यारुद्धपतित उदास्थितः । तं लोकेषु विदित दोषंप्रज्ञाशौच युक्तं हस्तर्यिनं प्राग्वारकमिताजापूर्वद्

ब्रूयात् । वह्नृत्पत्तिकमठे स्थापयेत् ॰ प्रचुर सस्योत्पत्तिकंभूम्यन्तरंच तद्वृत्त्यर्थमुपकल्पयेत् सचान्येषामपिप्रव्रजितानां राज चारकर्म कारिणां ग्रासाच्छादनादिकंदद्यात् ॥ २ ॥ कर्षक : क्षीणवृत्तिः प्रज्ञाशौचयुक्तो गृहपतिव्यञ्जनः ॥ तमपि पूर्ववदुक्त्वास्वभूमौकृषिकर्मंकारयेत् ॥ ३ ॥ वाणिजकः क्षीणवृत्तिर्वैदेहिकव्यञ्जनः । तंपूर्ववदुक्त्वाधनमानाभ्यां मात्मीकृत्य वाणिज्यङ्कारयेत् ॥ ४ ॥ मुण्डोजटिलोवावृत्तिकामस्तापसव्यञ्जनः । सोपिक्वचिदाश्रमेव सन्बहुमुण्डजटिलान्तर कपटशिष्यगणश्चौगुप्तराजोपकल्पितवृत्तिर्मासमासयेत् । मासद्विमासान्तरितं प्रकाशं बदरादि मुष्टिमश्नीयात् । राजैश्चिचराजोपकल्पितं यथेष्टमाहारंकल्पयेत् । शिष्याश्चास्यातीतानागतज्ञानादिकं ख्यापयेयुः तेनबहुलोकवेष्टनमासाद्य सर्वेषां विश्वसनीयत्वात् सर्वेकार्य मकार्यंच पृच्छन्ति अन्यामग्र्यकुक्रियादिकं कथयन्ति ॥ ५ ॥ एवंपञ्चवर्गं प्रकल्पनेन राज्ञः प्रतिराजस्य आत्मीयानां चामात्यादीनां मनुरागविरागज्ञानं भवति ॥ पञ्चानां वर्गः ॥

पञ्चवल्कलम् । न० त्वक्पञ्चके ॥ यथा । न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः । सर्वैरेकत्र संयुक्तैः पञ्चवल्कलमुच्यते ॥ अपिच । न्यग्रोधोदुम्बराश्वत्थ प्लक्षपिप्पल पीतनाः । चीरिवृक्षास्त पञ्चैषां वल्कलं पञ्चवल्कलम् ॥ पञ्चैते चीरिणो वृक्षास्तेषां त्वक्पञ्च लक्षणम् । त्वक्पञ्चं कांदिमं शाखित्वग्योथ विसर्पविद्रधिराजनिघण्टः ॥

पंचबाणः पुं ॰ कामदेवे । स्मरे ॥ पंचबाणाः द्रावणाद्याश्च । तेच । द्रवणं शोषणं बाणं तापनं मोहनाऽभिधम् । उन्मादनंचकामस्यबाणाः पंचप्रकीर्तिताः ॥ अपिच अरविन्दमशोकंच चूतंचनवमल्लिका । नीलोत्पलंचपञ्चैते पंचबाणस्यसायकाः ॥ पंचानां बाणानां समाहारे ॥ त्रि० । पंचबाण विशिष्टे ॥

पंचवायवः । पुं० प्राणापानव्यानोदान समानाख्येषु ॥ पंचवृत्ति वांयवय ॥

पंचविधकार्त्यम् । न० जगज्जन्मस्थितिध्वंसतिरोभावविमुक्तिषु ॥

पंचविपर्ययभेदाः । पुं ॰ अविद्यास्मिता रागद्वेषाभिनिवेशेषु यथासंख्यंतमोमोहमहामोहतामिस्रान्धतामिस्रसंज्ञकेषु ॥ विपर्यय प्रभावानामस्मितादीनां विपर्यय स्वभावत्वात् ॥ यद्वा । यदविद्यायाविपर्ययेणा यथार्थेत वस्तु अस्मिता दय

सात्त्वभावा : सन्ततद्भि निविशं ति । अतएव पंच पर्वा अविद्ये त्याह पार्थंगव्य : ॥ *

पंचशर : । पुं॰ कामे । मकरध्वजे ॥ पं चशरास्तु । तेच उन्मादनतापनश्च शोषणस्तम्भनस्तथा । सम्मोहनश्च कामस्यपंचवाणा: प्रकीर्त्तिता : ॥ पञ्चेन्द्रियार्थाःशरा : यस्येत्यन्ये ॥

पंचशलाका । स्त्री॰ विवाहोपयोगिवि घ विशेषे ॥

पञ्चशस्यम् । न ॰ धान्य मुद्गतिल यव श्वेतसर्षपरूपे शस्यपञ्चके ॥ सर्षपस्थाने मापोपीतिदुर्गोत्सव पद्धति : ॥

पञ्चशाखः । पुं॰ शये । पाणौ । हस्ते ॥ पञ्च शाखा इव यङ्गुलयोऽस्य॥ न॰ पञ्च शाखानां समाहारे ॥ त्रि॰ । पञ्च शाखा विशिष्टे ॥

पंचशिख : । पुं॰ सिंहे ॥ धर्मस्य हिंसाभार्यायां जातमुनिविशेषे ॥ यथोक्तं वामन पुराणे ५ अध्याये । धर्मस्यभार्याहिंसाख्या तस्यां पुत्र चतुष्टयम् । सम्प्राप्तं मुनि शार्दूल योगशास्त्रविचारकम् ॥ ज्येष्ठ : सन त्कुमारोभूद्द्वितीयश्च सनातनः । तृ तीय : सनकोनाम चतुर्थश्च सनन्द न : ॥ साङ्ख्य वेत्तारमपरं कपि लस्वोढु मासुरिम् । दृष्ट्वा पञ्च शिख श्रेष्ठं योगनिष्ठं तपोनिधिम् । ज्ञानयोगंनते दद्युर्ज्यायांसो पिकनी यसामिति ॥

पंचगूरण : । पुं पंचप्रकारगूरणे ॥ यथा । श्रल्पाञ्चपर्णीकाण्डीर माला कन्द द्विगूरणै: । क्रमोभवतिशेषोयं पञ्चगूरणसंज्ञक : । इतिराजनिर्घंट: गूरणः श्वेतगूरणश्चेति गूरणद्वयम् । पञ्चशैरीयकम् । न॰ शिरीषस्यत्वगादि पंचकम् ॥ त्वक्पुष्पफलमूलानिकुसुम श्चैवपंचमम् ॥

पंचषा : । त्रि॰ पंचवापट्वापरिमाणयेषां तेषु ॥ बहुवचनान्तोयम् ॥

पंचसिद्धौषध : । पुं॰ पंचप्रकारौ षधिविशेषे ॥ यथा । तैलकन्द सुधा कन्द क्रोडकन्द रुदन्तिका: । सर्प नेत्रयुता : पंच सिद्धौषधिकसंज्ञकाः॥

पञ्चसुगन्धकम् । न ॰ पंचप्रकार सुगन्धद्रव्ये ॥ यथा । कर्पूरकक्कोल लवङ्गपुष्प गुवाकजाती फलपंच केन । समांशभागेनचयोजितेनम नोहरं पंचसुगन्धकंस्यात् ॥

पंचसूना । स्त्री ॰ पंचप्रकारप्राणिव धस्थाने । यथा । पंचसूनागृहस्थस्य चुल्लीपेषण्युपस्कर : । कण्डनीचोद कुम्भश्च बध्यते यास्तुवाहयन् ॥

पंचसूरणम् । न ॰ पंचगूरणे ॥

पंचस्कन्धी । पुं ॰ रूपविज्ञानादिस्क न्धानांसमुदाये॥

पंचस्रोत : । पुं ॰ मेघयागे ॥

पंचस्वरा । स्त्री० ज्योतिषग्रन्थविशेषे ॥

पंचस्वरोदयः । पुं० ज्योतिःशास्त्रविशेषे ॥

पंचाग्निः । पुं० अग्निहोत्रिणि ॥ गार्हपत्यदक्षिणाग्न्याहवनीयसभ्यावसथ्याख्याः पंचाग्नयोयस्यतथोक्तेऽस्ति ॥ पवनः पावनस्त्रेतावस्थपंचाग्नयोगृहे । सायंप्रातःप्रदीप्यन्ते सविप्रःपङ्क्तिपावनः ॥ सुपर्णान्यपृथिवीषु सपयोपिषुअग्निहस्त्रिंयः कुरुते ० सोऽग्निहोत्रादिकारीवापंचाग्निः ॥

पंचाङ्गः । पुं० पुष्पिताश्वे । पंचभेदे ॥ कूर्मे ॥ प्रणामविशेषे ॥ यथा । बाहुभ्यांचैवजानुभ्यां शिरसावचसादृशा । पंचाङ्गोयंप्रणामः स्यात् पूजासुप्रवरोह्यसौ ॥ राज्ञांनये ॥ यथा । सहायाः साधनोपायाविभागोदेशकालयोः । विनिपातप्रतीकारः सिद्धिः पंचाङ्गमिष्यतेइति ॥ भ० । वृक्षस्त्वगादिषु ॥ यथा ॥ त्वक्पत्रंकुसुमंमूलं फलमेकस्यशाखिनः । एकत्रमिलितश्चैतत्पंचाङ्गमितिसञ्ज्ञितम् ॥ अधिकरणे ॥ यथा ॥ विषयोविषयश्चैव पूर्वपक्षस्तथोत्तरम् । निर्णयश्चेतिपंचाङ्गंशास्त्रे धिकरणंस्मृतमिति ॥ देवाराधनार्थस्तोत्रादिषु ॥ यथा ॥ स्तोत्रंच कवचं चैवपद्धतिः पटलंतथा । नाम्नांसहस्रमित्येतत्पंचाङ्गं तन्त्रवेदिन इति ॥ तिथिवाराद्यात्मकेपत्रे । यथा । तिथिर्वारंचनक्षत्रंयोगः करणमेवच । पंचांगस्यफलंश्रुत्वागङ्गास्नानफलंलभेदिति ॥ अपिच । वारोहरतिदुःस्वप्नंनक्षत्रंपापनाशनम् । तिथिर्भवतिगङ्गायायोगः सागरसङ्गमः ॥ करणंसर्वतीर्थानिश्रूयतेयत्नपंचिकेति ॥

पञ्चाङ्गगुप्तः । पुं० कमठे । कच्छपे ॥

पञ्चाङ्गप्रणामः । पुं० भक्तिश्रद्धातिशययुक्तैर्गुर्वादिप्रणतिविशेषे ॥ यथा । जानुभ्यांचसपाणिभ्यां सुरसाशिरसागिरा । पंचाङ्गताप्रणामस्यपूजायांप्रवरामतेति ॥

पंचाङ्गुलः । पुं० मण्डे । एरण्डे ॥ शुक्लैरण्डे ॥ त्रि । पंचाङ्गुलिमिते ॥ पंचाङ्गुलयोस्य । तत्पुरुषस्याङ्गुलेरित्यच् ॥ अङ्गुलिसदृशावयवेधान्यादिविक्षेपकेकाष्ठे ॥पञ्चाङ्गुलयोयस्य । अङ्गुलेर्दारुणीत्यच्समासान्तः ॥

पंचाङ्गुली । स्त्री० तक्रालुपे ॥ इ० राजनि० ॥

पंचातपा । स्त्री० तपस्या विशेषे ॥ यथा । चर्या पंचा तपाचिन्ताशाम्भवी शाम्भवो जपः । यत्रियैर्दीक्षभिः शुष्कैश्चतुर्दिक्षुचतुष्कृतम् । वह्निसंस्थापनं चोर्ध्वे तीव्रांशुस्तत्र पंचमः । हस्तान्तरे चतुर्वह्नीन् कृत्वावैश्वानरैरिना ॥ तन्मध्यस्था सूर्यबिम्बं वीक्षती पङ्कुलांशुके

तिकालिका पुराणम् ॥

पञ्चात्मक : । त्रि॰ पाञ्चभौतिके ॥

पञ्चानन : । पुं॰ शिवे । पञ्चआननान्यस्य ॥ सिंहे ॥ पञ्चंविस्तृत माननं यस्यस : ॥ यद्वा । मुखं पादाश्च पञ्च आननानीव यस्यसः ॥ चित्रके ॥

पंचाप्सर : । न॰ दण्डकारण्यस्थे तटाक विशेषे ॥ पंचाप्सरसोनिवसन्त्यत्र ॥

पञ्चामरा । स्त्री॰ पञ्चप्रकारामरलतासु ॥ यथा । एकातु अमरा दूर्वा तस्यास्थिं समानयेत् । अन्यातु विजया देवी सिद्धिरूपा सरस्वती । अन्यातु बिल्वपत्राख्या शिवसन्तोषकारिणी । अन्यातु योगसिद्ध्यर्थे निर्गुण्डीचामराख्यता ॥ अन्यातु काल तुलसी श्री विष्णोः प्रियतोषणी । एताः पञ्चा मरा ज्ञेया : योगसाधनकर्मणीति रुद्रयामलोत्तर खण्डे ७६ पटलः ॥

पञ्चामृतम् । न॰ दुग्धादि पञ्चसु । यथा । दुग्धं सशर्करं चैव घृतं दधि तथामधु । पञ्चामृत मिदं प्रोक्तं विधेयं सर्व कर्मसु ॥ पञ्चानाममृतानां समाहार : ॥

पञ्चामृतयोग : । पुं॰ गुडूच्यादि पञ्चानांयोगे ॥ यथा । गुडूची गोक्षुरश्चैव मुसलीमुण्डिकातथा । शतावरीति पञ्चानां योगः पञ्चामृताभिध इ॰ राज॰ नि॰ ॥

पञ्चाम्नाय : । पुं॰ शिव पञ्चमुख निर्गत पञ्चप्रकार शैवशास्त्र विशेषे ॥ ॥ यथा ॥ पूर्वाम्नाय : पूर्वमुख : पश्चिम : पश्चिमा मुख : । दक्षिणोदक्षिणस्तद्व दुत्तरश्चोत्तर : परः । निरुत्तरतयाचोर्द्धं सिद्धान्तागमरूपिणम् । ऊर्द्ध्वाम्नायपरिज्ञानं नाल्पस्यतपस : फलम् ॥ पूर्वाम्नाय : शब्दरूपो दक्षिण : कर्मरूपक : । पश्चिम : प्रमरूप : स्यादुत्तरश्चोत्तरस्तथा ॥ ऊर्ध्वाम्नायस्तत्त्वबोध : केवलानुभवात्मक : इति भैरव तन्त्रादि ॥

पंचाम्रवापी । स्त्री॰ पंचानामाम्रसशिरानां वृक्षविशेषाणां समारोपणे ॥ यथा । अश्वत्थमेकंपिचुमर्दमेकं न्यग्रोधमेकं दशपुष्पजाती : । द्वे द्वे तथादाडिम मातुलुङ्गे पंचाम्रवापी नरकंनयाति तिवाराहपु॰ ॥

पंचाम्लम् । न॰ अम्लवेतसादिपञ्चसु ॥ यथा । अम्लवेतसवृक्षाम्ल वृहज्जम्बीरनिम्बुकै : । चतुरम्लंहि पंचाम्लं बीजपूरयुतै र्भवेत् ॥

पंचार्गी । स्त्री॰ शालिञ्चलायाम् ॥ इतिशब्दरत्नमाला ॥

पंचार्चि : । पुं॰ बुधग्रहे । इ॰ त्रि॰ ॥

पंचाल : । पुं॰ वर्णवृत्तप्रभेदे ॥ यथा । तार्थेनर्दैन पंचालमाख्याति ॥ यथा । शर्मांग्निमर्थाधि । देयानि

पंचावयवः | पंचिका

कद्राणि ॥ पुंभूम्नि । पंचालाः । नीवृद्विशेषे । कान्यकुब्जादिपश्चिमाभि धदेशेषु ॥ पंचते । पचिविस्तारे । तमि विशि विडीत्यादिना कालन् ॥ पंचालाः क्षत्रियाः तेषांनिवासो जनपदः पंचालाः । निवासे ऽ योजनपदे लुप् । लुपियुक्तवद्व्यक्ति वचने ॥ पुराणोक्ता स्त्वस्तिस्तद्वर्थं प्रज्ञान्मुद्गल सञ्जय बृहदिषु यवीनर काम्पिल्यसंज्ञाः पंचानामेतेषां विष याणां रक्षणायालमेतेमत्पुत्रा इति पुत्रा ऽ भिहिता इति पंचालाः । ह० वि० पु० ४ अंशे १९ अध्यायः ॥ कुरुक्षेत्रात् पश्चिमेतु तथाचोत्तर भागतः । इन्द्रप्रस्थात्महेशानि दश योजनकद्वये ॥ मञ्चालदेशो देवेशि सौन्दर्यगर्वभूषित इति तन्त्रशास्त्रम्॥

पञ्चालिका । स्त्री ० वस्त्रादिकृत पुत्रिकायाम्॥ गीतिविशेषे॥ पञ्च भिर्वर्णैरल्यते । अलभूषणादौ । पञ् । खर्धिकन् । टाप् । प्रत्ययस्था दितीत्वम् ॥ संज्ञायामितिएवुल्वा ॥ संज्ञापूर्वकत्वान्नवृद्धिः ॥

पंचाली । स्त्री ० पंचालिकार्थे ॥ शारि शृङ्खलायाम् ॥

पंचावटम् । न० उरस्कटे । यज्ञोपवीते ॥

पंचावयवः । पुं ० अनुमाने ॥ पंच अवयवा यस्य । तेचयथा । प्रति ज्ञाहेतूदाहरणोपनयनिगमनानि पं चावयवाः । यथा । पर्वतोवन्हिमा निति प्रतिज्ञा • धूमवत्वादिति हेतुः योयोधूमवान् ससोग्निमान् यथाम हानसम् इत्युदाहरणम् तथाचाय मित्युपनयः तस्मात्तथेति निगमन म् ॥

पञ्चावस्थः । त्रि० मृते । शवे ॥

पंचावस्था । स्त्री० भूम्नि । कौमारं पंचमाब्दंस्यात्पौगण्डंदशमावधि । कैशोरमापंचदशाद्यौवनंचततः परम् । वार्द्धकंचततःप्रोक्तं पंचाव स्था : प्रकीर्त्तिता : ॥ त्रि ० । पंचावस्थायुक्ते ॥

पंचाशत् । त्रि० सङ्ख्याविशेषे ॥ पंच दशतः परिमाणऽमस्य । पङ्क्तिविं शति त्रिंशदित्यादिना निपातनात् प्रकृतेपंचाभाव : शत्प्रत्ययः ॥ सङ्ख्येये ॥

पंचास्यः । पुं० सिंहे ॥ पंचते । पचि व्यक्तिकरणे । पंचविस्तृतमास्यमस्य यद्वा । सुखं पादाश्च पञ्चास्यानीवयस्यसः ॥ शिवे ॥ पञ्चास्यान्यस्य ॥

पञ्चिका । स्त्री० द्यूतविशेषे ॥ सतुपंच भिरक्षैः पंचभिः कपर्दैः पंचभि शलाकाभिर्वाभवति । तत्रयदा सर्वे उत्ताना : पतन्ति अवाचो वा तदा पातयिता न्यं जयति । तस्मै वान्यथापाते सतिपातयिताऽन्येन जीयते ॥

पंचकारणम् । न ० आकाशादिसूक्ष्मभूतानां परस्परव्यवहर्त्तप्राणिनिकायव्यवहार निर्वाहकतदीय धर्माधर्मापेक्षपरमेश्वर सान्निध्यादि निमित्तापेक्षया विभागेन मिलितानां स्थूलतापत्तौ ॥ तत्प्रकारस्तु । आकाशादिषु पञ्चसु एकैकं द्विधासमंविभज्य तेषु दशभागेषु प्राथमिकान् पञ्चभागान् प्रत्येकं चतुर्द्धासमंविभज्यतेषां चतुर्णां भागानां स्वस्वद्वितीयार्द्धभाग परित्यागेन भागान्तरेषुयोजनमिति । तदुक्तम् । द्विधाविधायचैकैकं चतुर्धाप्रथमं पुनः । स्वस्वेतरद्वितीयांशैर्योजनात् पञ्चपञ्चतेति ॥ स्वार्धेषु स्वेतरार्द्धानां याट्शो योजनन्तुतदितिच ॥ अपिच । द्विधाकृतखभूम्यादे रर्द्धमेकंचतुष्कृतम् । स्वान्यद्विती यार्धेषु संयुक्तंपञ्चताकरम् ॥ एवमर्द्धद्विभूतानामितराष्टमभागकम् । स्वांशाधिक्येनभूम्यादि व्यपदेशोत्वसंस्फुट इति ॥

पञ्चेन्द्रियम् । न० श्रोत्रादिषु । श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं पञ्चेन्द्रियमतम् । पञ्चानामिन्द्रियाणांवै शुभेश्रवणदर्शने । श्रवणात्स्तुविज्ञानं दर्शनाच्चित्तरञ्जन मिति भागवतम् ॥ वागादिषु ॥ वाक् पाणि पाद पायू पस्थाख्य कर्मेन्द्रियं मतमिष्युते : ॥

पञ्चेषु : । पुं० मदने ॥ पञ्चरूपवीऽस्य ॥

पञ्चोपविषम् । न० उपविषाणां पंचके ॥ यथा । स्नुह्यर्क करवीराणि लाङ्गली विषमुष्टिका । एतान्युपविषाण्याहुः पंचपांडित्य शालिन इ० रा० नि० ॥

पञ्चोषणम् । न० पञ्चकोले ॥

पञ्चोष्माणः । पुं ० भुक्ति आहार पाचक शरीरस्थ पञ्चाग्निषु ॥ यथा ॥ भौमाऽऽग्नेय वायव्याः पञ्चोष्माणः सनाभसाः । पञ्चाहार गुणान् स्वान् स्वान् पार्थिवादीन् पचन्त्यनु ॥ पार्थिवाः पार्थिवानेव शेषाः शेषांश्चदेहगान् ॥ इति सारकौमुदी ॥

पञ्जरः । पुं० शरीरे ॥ देहास्थि समूहे । काङ्काले ॥ कलियुगे ॥ गवां नीराजनाविधौ चेति सारस्वताभिधान मिति राधाकान्तः । न० । कायास्थिवृन्दे । शरीरास्थिपञ्जरे ॥ शालारे । मध्यादिबन्धगृहे । पिंजरा० इ० भा० ॥

पिंजराखेट : । पुं ० पोली ० इ० गौ० भाषा प्रसिद्धे पलवे । मत्स्यमारणोपाये ॥

पञ्जल : । पुं० कोलकंदे ॥

पञ्जि : । स्त्री० सूचनालिकायाम् । पाइस० इ० गौ० भा० ॥ पञ्जि

कायाम् ॥

पञ्जिका । स्त्री॰ तूलनालिकायाम् । पांड्ल॰ गौ॰ भा॰ ॥ टीकाविशेषे ॥ यथा । टीकानिरन्तर व्याख्या पञ्जिकापद भञ्जिकेति हेमचन्द्र : ॥ व्ययसम्बन्धाम् ॥ पञ्चाङ्गे । यथा दू॰ भा॰ । तिथिवारादि बोधके पत्रे ॥ आयव्यय लेखनार्थपत्रे । वही॰ खाता दू॰ भा॰ ॥ सकल पदव्याख्यायाम् ॥ पिञ्ज्यतेऽर्थोऽस्याम् । पिजिभांषार्थः । गुरोश्च हल इत्य : । पृ॰ । इकारस्याकार : । स्वार्थेक : ॥ पिञ्जयतिवा । वुन् ॥

पञ्जिकारकः । पुं॰ कायस्थजातौ ॥ त्रि॰ । टीकाकारके ॥

पञ्जी । स्त्री॰ तिथ्यादिज्ञापके पत्र विशेषे । तिथिपत्र॰ इ॰प्र॰ । पञ्जिकायाम् ॥ यथा । य : शूद्रदैवज्ञ मुखेन पञ्जीं शृणोति राजा नरकं प्रयाति । दैवज्ञ यत्नेन शृणोति पञ्जीमन् : चययाति शशीव कृष्णे ॥ग्रन्थवि॰ । टीकायाम् ॥

पञ्चीदार : । पुं कायस्थे । पञ्जिकाकृति ॥

पट : । पुं॰ चायालद्रुमे ॥ पुरस्कारे ॥ न॰ । चाले । पटले । छदिषि ॥ पुं॰ सुचिक्के । शोभनवस्त्रे ॥ वस्त्रे ॥ चित्रपटे । चत्र॰ इ॰भा॰ ॥ पटति । पटगतौ॰ पटविस्तारे वा । पचाद्यच् ॥ यद्वा । पव्यतेऽनेन पटभासने । खनोघचेतिघ : घित्वादन्यस्मादपि । हलश्चेतिघञ् संज्ञा पूर्वकत्वाद् वृद्ध्यभाव : । क्वचिद् घञाद् विषयेऽप्युत्सर्गोभिनिविशत इतिघञ् विषये पुंसीतिघोवा ॥

पटक : । पुं॰ सेनानिवेशे । शिविरे ॥

पटकार : । पुं॰ तन्तुवाये ॥ चित्रकरे ॥ चाले रा ॰ इ॰ भा॰ ॥ पटंशोभन वस्त्रं चित्रपटंवा करोति । कुञ् । कर्मण्यण् ॥

पटकुटी । स्त्री॰ वस्त्र वेश्मनि । दूष्ये । गुणाश्रयनिकायाम् । तंबू । इ॰ भा॰ ॥

पटच्चरम् । न॰ जीर्णवस्त्रे ॥ पटते । पट॰ वा॰ चत् । भूतपूर्वंपटत् । भूतपूर्वेचरट् ॥ यद्वा । पटत्वृत्य व्यक्तं शब्दं चरति करोति । चच् ॥ यद्वा । पटइवाचरति । सर्वप्रातिप दिकेभ्य : क्विप्वा । आचारक्विपिश चन्ताच्चरट् ॥ पुं॰ । चौरे ॥

पटवन्ध : । पुं॰ पटका इतिख्यातेकटि वन्धवि॰ पटस्यवन्ध : ॥

पटभवनम् । न॰ उपकार्यायाम् । पट मण्डपादिराजसदने ॥

पटवामठ : । पुं॰ अंशुकालये ॥

पटमण्डप : । पुं॰ पटभवने । दूष्ये ॥

पटमयम् । न० वस्त्रालये । दूष्ये ॥ शांब्याम् । पटवासे ॥

पटरकः । पुं० गुन्द्रवृक्षे । पटेरा इ०भा०

पटलम् । न० पिटके ॥ परिच्छदे । परिवारे ॥ छदिषि । गृहाच्छादने । छानिइ०भा० तिलके ॥ दृग्योगे । दृष्टेरावरके । चोखकापड़दा इ० भा० यथा । प्रथमे पटलेदोषो यस्यदृष्ट्याव्यवस्थितः । अव्यक्तानिसरूपाणि कदाचिदथपश्यति ॥ दृश्यांपत्वारि पटलानिसन्ति रसरक्ताश्रयवाद्यम् द्वितीयंमांससंश्रयम् । तृतीयमेदःसंश्रितम् चतुर्थंकालकाश्रितम् ॥ तथा चसुश्रुतः । तेजोजलाश्रितंबाह्यं तेष्वन्यत्पिशिताश्रितम् । मेदस्तृतीयंपटलमाश्रितत्वस्थिचापरम् ॥ पञ्चमांशसमंदृष्टे स्तेषांबाहुल्यमिष्यते॰इति० ॥ अमरोक्त: शब्दिनरत्नम् जन्मशब्देभरसोव्याख्यातः । तेषुपटलेषु वाद्यादिभेदेनाधिष्ठानविशेषप्रभावात् दोषाणां लिङ्गविशेषमाह प्रथमे पटले इत्यादि । प्रथमेपटलेसर्वाण्यनरेनलुबाद्वि ॰इ० विजयरचित: ॥ स्त्री०न० । ग्रन्थे । वृन्दे । सञ्चये । पुं० न० ग्रन्थप्रभेदे ॥ पटंविस्तारंलाति । ला० । आतोनुपेतिकः ॥ पटलुदकंवा । पटगतोऽस्त्यर्थः । वृषादित्वात्कलच् ॥

पटलप्रान्तम् । न० वलीकनीध्रे । परीखी इति० परावली इतिच भाषा० ॥ पटस्य छदिषःप्रांतम् ॥

पटली । स्त्री० छदिषि ॥ गौ० ङीष् ॥

पटवापः । पुं० अंशुकालये ॥ चूर्णविशेषे । पटस्यवासः ॥ पटोवास्यतेयेनवा । वास० । चु । घः ।

पटवासकः । पुं० चूर्णवि० । पिष्टातै । बुक्का इ० भा० ॥ पटोवास्यतेयेन । वासउपसेवायाम् । चु० । घः । स्वा० कन् ॥ पटंवासयतिवा । कर्मण्यण् । कन् ॥ ०

पटहः । पुं० समारम्भे । आरम्भे ॥ युद्धेवाद्यमानढक्कायाम् । आडम्बरे ॥ पटहोदुन्दुभिरितिस्वामी । हिंसने ॥ पुं० । न० । आनके । ढोल इ० भा० ॥ पटंहन्ति । हन् । अन्येभ्योपीतिड: ॥ पटेतिशब्दं जहाति । ओहाक्त्यागे । आतोनुपेतिकः ॥

पटाकः । पुं० पक्षिविशेषे ॥ पटति । पट० । पिनाकादयः ॥

पटाका । स्त्री० पताकायाम् ॥ टाप् ॥ इतिशब्दरत्नावली ॥

पटालुका । स्त्री० जलौकायाम् ॥

पटिः । स्त्री० पटविशेषे ॥ वागुली ॥ कुंभिकाद्रुमे ॥ इतिमेदिनी ॥

पटिका । स्त्री० वस्त्रे ॥

पटिमा । पुं० पटुतायाम् । पाटवे ॥ पटोर्भाव. । पृथ्० इमनिच् ॥

पटिष्ठः । त्रि० पटुतमे ॥ अयमेषा

मतिशयेनपटु : । अतिशायनेतम-
विष्ठनाविति० इष्ठन् ॥

पटी । स्त्री० तिरस्करिण्याम् । यव-
निकायाम् ॥ वस्त्रविशेषे ॥ गौरा-
दित्वान्ङीष् ॥

पटीयान् । त्रि० पटुतरे ॥ अयमनयो-
रतिशयेनपटु : । द्विवचनविभज्यो
पपदेतरबीयसुनौ ॥ स्त्री० । उगित
श्चेतिङीपि० पटीयसी ॥ समर्थतरे
चित्रिक्ष : ॥

पटीर : । पुं० पाटीरार्थेषु ॥ पटति
पटगतौ । कृशृपृकटिपटिशौटिभ्य-
ईरन् ॥

पटु : । पुं० पटोले । कारवेल्ल-
याम् ॥ कारवेल्ले ॥ चौरके ॥ पटोल
पत्रे ॥ न० । छत्रायाम् ॥ लवणे ॥
पांशुलवणे ॥ त्रि० । दक्षे ॥ चतुरे ॥
मधुरे ॥ नीरोगे । रोगविहीने ॥
तीक्ष्णे ॥ स्फुटे ॥ निर्दये ॥ निष्ठुरे ॥
धूर्ते ॥ पाटयति । पटगतौ । वा-
क्त : । फलिपाटीच्छु : पटादेशश्च ॥

पटुक : । पुं० पटोले ॥

पटुतम : । त्रि० पटिष्ठे ॥ अयमेषाम-
तिशयेनपटु : । अतिशायनेतमप् ॥

पटुत्वचकम् । न० लवणाल्के ॥

पटुपत्रिका । स्त्री० क्षुद्रचञ्चुचुपे ॥

पटुपर्णिका । स्त्री० चौरिणीलते ॥

पटुपर्णी । स्त्री० स्वर्णक्षीर्याम् ॥ हैम-
वत्याम् ॥ पटूनिपर्णान्यस्या : ॥
पाककर्णेतिङीष् ॥

पटोटजम् । न० छत्राके ॥

पटोल : । पुं० औषधि विशेषे । कर्क-
च्छदे । तिक्तके । परवर इ० पलवल
इतिचभा० ॥ पटोलं पाचनं हृद्यं
वृष्यंलघ्वग्निदीपनम् । स्निग्धोष्ण
हन्तिकासास्त्र ज्वरदोषत्रयक्रमीन् ॥
पटोलस्यभवेन्मूलं विरेचनकरंसुखा
त् । नालंश्लेष्महरंपत्र पित्तहारिफ-
लंपुन : । दोषत्रयहरंप्रोक्तं तद्वत्ति
क्तापटोलिका ॥ अपिच । पटोलप
त्रंपित्तघ्नं मूलंतस्यविरेचकम् । फलं
तस्यत्रिदोषघ्नंनाडीतस्यकफापहा ॥
पटति । पट० । अन्तर्भावितण्यर्थो
वा । कपिगडिगण्डीत्योलच् ॥ न०
वस्त्रान्तरे ॥

पटोलक : । पुं० शुक्तौ ॥

पटोलपत्रम् । न० पलवलपत्तीतिप्रसि
द्धशाके ॥ पटोलपत्रंपित्तघ्नं दीपनं
पाचनंलघु । स्निग्धं वृष्यं तथोष्णञ्च
ज्वरकासकृमिप्रणुत् ॥

पटोलिका । स्त्री० ज्योत्स्न्याम्पचेंडा
० इ० प्र०दीर्घफले । पटति । पट०
। ओलच्प्रत्यात् ० स्वा ० कन्० ।
टाबित्वञ्च ॥

पटोली । स्त्री० ज्योत्स्न्याम् । चचेंडा०
मंडोल० इ० भा०प्र० दीर्घफले ॥
जातेरिति० गौरादित्वाद्वाङीप् ॥

पट्ट : । पुं० पेषणपाषाणे । शिल० इ०

तिभाषा ॥ व्रणादीनांवन्धने । पट्टी इ० भा० ॥ चतुष्पथे । चौवाटा०इ० भा० राजादिशासनवि० पट्टा०इ० भा० ॥ पीठे । पट्टा इति पटड़ा० इतिच भा० ॥ फलके । ढाल० इ तिभाषा० ॥ शाकप्रभेदे ॥ कौषेये ॥ नृपादीनां किरीटविशेषे ॥

पट्टक : । पुं० पट्टार्थे ॥

पट्टजम् । न० वस्त्रान्तरे । पट्टवस्त्रे ॥

पट्टदेवी । स्त्री० महाराज्ञ्याम् । पटरानी० इ० भाषा० ॥

पट्टनम् । न० पत्तने ॥ पटन्तिजनायत्र पटगतौ ॥ धा० तनन् ॥

पट्टनी । स्त्री० पत्तने ॥

पट्टरङ्गम् । न० पतङ्गे । बक्कम्० इ०भा

पट्टरञ्जनकम् । न० पट्टरङ्गे ॥

पट्टलक्षणम् । न० नृपादीनां किरीट विशेषस्वरूपे ॥ यथा । विस्तरशोनि र्दिष्टं पट्टानां लक्षणं यदाचार्यैः । तत्सङ्क्षेपः क्रियते मयात्रसकला र्थसम्पन्न : ॥ पट्ट : शुभदोराज्ञो म ध्येऽष्टावङ्गुलानि विस्तीर्ण : । सप्ताङ्गु लैश्च महिष्या : षडङ्गुयुवराजस्य नि र्दिष्ट : ॥ चतुरङ्गुल विस्तार : पट्ट: सेनापते र्भवतिमध्ये । द्वेचप्रसाद पट्ट : पञ्चैते कीर्तिता : पट्टा : ॥ सर्वेद्विगुणा यामा मध्यादर्द्धेन पा- र्श्व विस्तीर्णा : । सर्वेच शुद्धकांचन विनिर्मिता : श्रेयसो वृद्ध्यै ॥ पञ्चै

व शुभाशुभज्ञानमाह । क्रियमाणं यदिपत्रं सुखेन विस्तारमेति पट्टस्य । वृद्धिजयौ भूमिपतेस्तथा प्रजानांच सुखसम्पत् ॥ जीवितराज्य विना शंकरोति मध्ये व्रण : समुत्पन्न : । मध्ये स्फुटितस्त्याज्यो विघ्नकर : पार्श्वयो : स्फुटित : ॥ अशुभेलक्ष णे दृष्टे किञ्चयांदित्याह । अशुभ निमित्तोत्पत्तौ शास्त्रज्ञ: शान्तिमा दिशेद्राज्ञ : । शस्तनिमित्त : पट्टो नृपराष्ट्रविवृद्धये भवति ॥

पट्टशाकम् । न० नाडीचे । नालिता शाक० इ० गौ० भा० । नालीकशा क ॥ इ० दे० भा० ॥

पट्टारोहा । स्त्री० पट्टदेव्यां ॥ पट्टे आ रोहोयस्या: सा ॥

पट्टार्ही । स्त्री० पट्टदेव्याम् ॥

पट्टिका । स्त्री० अल्पविस्तारेपट्टवस्त्र विशेषे ॥ पट्टी० इ० प्र० भर्ले ॥ किञ्चिद्विस्तारेवस्त्रे ॥ पट्टिकाख्य लोध्रे ॥

पट्टिकाख्य : । पुं० क्रमुके । रक्तलोध्रे ॥ पट्टिका आख्यायस्य ॥

पट्टिकालोध्र : । पुं० क्रमुके । लाक्षाप्र सादने । रक्तलोध्रे ॥

पट्टी । पुं० रक्तलोध्रे । पट्टिकाख्ये ॥ त्रि० । पट्टविशिष्टे ॥ पट्टोस्यास्ती ति । अतइनि : ॥

पट्टिल : । पुं० पूतिकरञ्जे ॥

पट्टिश : पुं० खड्गविशेषे । अस्त्रविशेषे ॥

पट्टिस : । पुं० परशु : पट्टिशोनाम सएवचपरश्वध इतिभरत : ॥

पट्टी । स्त्री० ललाट भूषायाम् ॥ पट्टिकालोध्रे ॥ तलसारके । अश्ववक्षोबन्धनरज्जौ ॥ व्रणावृतौ ॥ क्लिन्नात्पट्टियब्दात्ङीष् ॥

पट्टोलिका । स्त्री० व्यवस्थापत्रे ॥ पट्ट इ० भा० प्र० इ० केचित् ॥

पट्ट : । पुं० रथे ॥ भूलोके ॥ पच्यते पटगतौ । सर्वनिघृष्वरिष्वेति साधु : ॥

पठक: । पुं० पठनकर्त्तरि ॥ पठति । पठ० । अच् । स्वा ॥ क: ॥

पठनम् । न० वाचने ॥ यथा । भूतप्रेतपिशाचानांपठनादेवनाशनमिति ॥

पठमञ्जरी । स्त्री० श्रीरागस्यचतुर्थरागिण्याम् । अस्यालक्षणंयथा । वियोगिनीकान्तवितीर्णपुष्पा सर्वाङ्गवल्लीवपुषा तिमुग्धा । आश्वासमानाप्रियायाच सख्याविधूसराङ्गीपठमञ्जरीयमिति दामोदर: ॥

पठसमञ्जरी । स्त्री० रागिणीविशेषे ॥ इतिहलायुध : ॥

पठि : । स्त्री० पठने ॥ इ० शब्द० ॥

पठित: । त्रि० वाचिते । अधीते । कृत पाठे । यथा । भयान पठिताचण्डी त्वयानापिचिकित्सितम् । अकस्मान्नगरोपान्ते कथंधूमा यतीचितेतित

सार्णव : ॥

पठितव्य: । त्रि० पठनीये । पाठ्ये ॥

पड्वीशशब्द : । पुं० अश्वस्य पादबन्धनकीलके ॥ पद्नशीला: पादा: । तेषांसं इति: पड्वी । तस्याईशो नियामक पड्वीश : वर्णविकारश्छान्दस : । सचासौशब्दश्चेतिवैदिकोयम् ॥

पण: । पुं० वराटकानांविंशतिगण्डके ॥ मूल्ये ॥ कार्षापणे ॥ द्रव्यमाक्षाद्विकायाम् । विक्रय्यशाकादिमुष्टौ ॥ व्यवहारे ॥ भृतौ ॥ धने ॥ द्यूतादौ तत्पणे ॥ इतिहेमचन्द्र: ॥ पणनम् पण्यते ऽनेनवापण० । नित्यंपण: परिमाणे इत्यप्पुंसीति बोधा । हल श्चेतिघञ्वा । संज्ञापूर्वकत्वान्नवृद्धि: । शौण्डिकी ॥ पणितव्ये स्वीकृते ॥ ग्लहे । शौण्डइतिभाषा ॥ पण्यते उत्सृज्यते । इ०स० ॥ द्यूते ॥ पणो ग्लहो ऽस्त्यस्मिन् । अर्शआद्यच् ॥

पणग्रन्थि : । पुं० हट्टे ॥

पणनम् । न० विक्रये ॥

पणफरम् । न० लग्नाद्द्वितीय पंचमाष्टमैकादशलग्नेषु ॥

पणबन्ध : । पुं० संधौ ॥ फलसिद्धौ ॥

पणव : । पुं० वाद्यविशेषे ॥ गायन पटहे ढोलकी० इ० प्र० ॥ करताल इ० ख्याते ॥ मुखवाद्यवि० । नेपालेतुर्ज्जरेच भूकार इ० नाम्ना प्रसिद्धे द्रव्ये ॥ करणाल इ० भाषा० प्र०

इवाद्रौ ॥ पर्णवाति॰ गच्छति । श्वा त इ॰ क :॥ पणायति चनास्त न्त्वोक: पगरइति स्वामी ॥

पणवा । स्त्री॰ पणव वाद्ये ॥ इतिद्वि॰ ॥

पणस : । पुं॰ पनसे । पणद्रव्ये ॥ पणायतेस्म । पणाव्यवहारेस्तुतौच । चत्वविचमीत्यसच् ॥

पणाङ्गना । स्त्री॰ वेश्यायाम् ॥ इ॰ हे॰

पणाया । स्त्री॰ क्रय विक्रयरुपे व्यवहारे ॥

पणायित: । त्रि॰ ईड़िते । स्तुते ॥ पणायतेस्म । पण॰ । क्त : । आयादय आर्द्धधातुकेवा ॥

पणास्थि । न॰ वराटके ॥ पणस्यास्थि ॥

पणास्थिकम् । न॰ वराटके । कपर्दके ॥

पणि : । पुं॰ चौरे ॥

पणित : । त्रि॰ पणायिते । स्तुते ॥ पणाय्यतेस्म । पण॰ । क्त : । आयाभाव : ॥

पणितव्य : । त्रि॰ विक्रेयद्रव्ये ॥ स्तोतव्ये ॥ व्यवहार्ये ॥ पण्यते । पण॰ । तव्यत्तव्यानीयर : ॥

पण्ड : । पुं॰ क्लीबे । नपुंसके ॥ पंडाते । पडिगतौ । अच् ॥ यद्वा पणते ॥ पण॰ । अमन्ताड्ड : ॥ त्रि॰ । निष्फले ॥

पण्डक : । पुं॰ पण्डे ॥ भिक्षौ । परिव्राजि ॥ यथा । चद्यथातां यथा नारीतथा षोड़श वार्षिकीम् । शत वर्षांच योहष्ट्वा निर्विकार : सपण्डक इति॰॥

पण्डा । स्त्री॰ धियि । वुद्धौ ॥ पण्ड्यते ज्ञायतेऽनया । पण्डि॰ । गुरोश्चहल: । टाप् । तत्त्वानुगायां वुद्धौ ॥ निर्णयात्मज्ञाने ॥

पण्डापूर्वम् । न॰ फलजनकापूर्वे ॥ त्रि॰ । तद्विशिष्टे ॥

पण्डित : । पुं॰ विदुषि । दोषज्ञे । सद्भायति । कवौ । धीरे । निषेवते प्रशस्तानि निन्दितानिन सेवते । अनास्तिक : श्रद्दधान एतत् पण्डित लक्षणम् ॥ पठका: पाठकाश्चैव येचान्ये शास्त्र चिन्तका: । सर्वे व्यसिनोमूर्खाय: क्रियावान् सपण्डित इत्युक्तलक्षणं महाभारते वनपर्वण्युक्तम् ॥ सम्यदर्शिनि । समदर्शिनि । ज्ञानिनि विचार वत्यात्म तत्त्वज्ञानवति ॥ शास्त्रकुशले ॥ उपदिष्टार्थवहनसमर्थे ॥ पण्डाजाता अस्य ता॰ । इतच् ॥ यद्वा ॥ पण्डतेऽस्मात् पण्डि॰ । गत्यर्थेति क्त : । इट् ॥ नात: परतरंलोकेकचिदाश्चर्यमद्भुतम् पुत्रदारगृहासक्त : पण्डित: परिगीयते ॥ सिल्हके ॥

पण्डितमन्य : । त्रि॰ आत्मानंपण्डितंमन्यतेयस्तस्मिन् ॥

पण्डितमानी । त्रि॰ पण्डिताभिमानिनि ॥

पण्यम् । त्रि० विक्रेये । विक्रयक्रिया कर्मणि । पणितव्ये ॥ पण्यते । पण० अवद्यपण्य वर्य्यागर्ह्यपणितव्याऽनिरोधेष्विति साधु ॥ व्यवहर्त्तव्ये ॥ स्तुत्यर्हे ॥

पण्यवीथिका । स्त्री० विपणौ ॥ पण्यानां वीथी । स्वार्थेकन् । वाणीआवी-शीद्रतिवक्तार० इतिप्रभाषा ॥ आपण: पण्यवीथी च द्वयं वीथीतिसंज्ञितमितिशाश्वत: ॥

पण्यवीथी । स्त्री० विपणौ । हट्टशून्ये विक्रयस्थाने ॥ क्रयविक्रयस्थाने ॥ हट्टमार्गे ॥ पण्यानांवीथी ॥

पण्यशाला । स्त्री० हट्टे । विक्रयगृहे ॥ पण्यानांशाला ॥

पण्यस्त्री । स्त्री० वेश्यायाम् ॥

पण्या । स्त्री० ज्योतिष्मत्याम् । मालकाङ्गणी० इ० भा० ॥ टाप् ॥

पण्याङ्गना । स्त्री० वेश्यायाम् ॥

पण्याजीव: । पुं० क्रयविक्रयिके । वणिजि ॥ पण्यमाजीवोऽस्य ॥

पण्याजीवकम् । न० हट्टे ॥

पण्यान्धा । स्त्री० तृणविशेषे । कङ्गुनीपत्रायाम् ॥ दीर्घामध्यातवाङ्गस्तापघ्नान्ध्यान्निविघास्मृता । रसवीर्यविपाकेषुमध्यमा गुणदायिकेतिराजनिर्घण्ट: ॥

पतम् । न० पत्ते ॥

पतग: । पुं० पक्षिणि ॥ पतनपत्रेण ग-च्छति । गम्० । ड: ।

पतगोत्तम: । पुं० गरुडे ॥ पतगेषूत्तम: ॥

पतङ्ग: । पुं० शलभे ॥ शालिप्रभेदे ॥ पक्षिणि ॥ सूर्ये ॥ कन्दुके ॥ योसौत्वथाकारसरोरुहत: पतङ्गइतिलक्ष्यम् । अलमधूके । पतति । पत्ऌ० । पतेरङ्गच्पक्षिणि । बाहुलकात्पक्षान्तरेऽप्यङ्गच् । न० । सूते । पारदे । पटरञ्जनके । वक्कम्० इ० भा० प्र० । पतङ्गंमधुरंशीतंपित्तश्लेष्मव्रणास्रनुत् । हरिचन्दनवद्वेद्यंविशेषाद्दाहनाशनम् ॥

पतङ्गिका । स्त्री० पुत्तिकायाम् । मधुमक्षिकाप्रभेदे ॥ पक्षजन्मात्पतति : स्वार्थेकन्संज्ञायांवा ॥

पतञ्चिका । स्त्री० धनुर्ज्यायाम् ॥ इ० शब्द ० ॥

पतञ्जलि: । पुं० गोनर्दीये । चार्पगव्ये । महाभाष्यकारमुनौ ॥ वररुचौ० इतिशब्दरत्नावली ॥

पतन् । पुं० खगे ॥ त्रि० । पातुके । पतनशीले ॥ पतति । पत्ऌ । लट: शत्रादेश: ॥

पतत्पति: । पुं० अण्डजमण्डलेश्वरे । गरुडे ॥ पततां पति: ॥

पतत्रम् । न० पक्षिपक्षे । पंख० इ० भा० ॥ पतत्नांत्रायते । त्रैङ् । आतोऽनुपसर्गे क: ॥ पतत्यनेनवा ।

पतेर्वाहुलकादचन् । पतति । पतृ्लृ० । अमिनक्षीत्यचन् वा ।

पतत्रिः । पुं० खगे । पक्षिणि ॥ पतति । पतृ्लृ० । पतेरत्रिन् ॥

पतत्री । पुं० विहंगे । पक्षिणि ॥ पतत्रमस्त्यस्य । अतइनिः ॥

पतद्ग्रहः । पुं० कटखोले । प्रतिग्राहे । प्रोष्ठे । निष्ठीवनपात्रे । पीकदानी इति भा० ॥ पतन्तंग्रह्णाति । ग्रह० । विभाषायह इतिपक्षेऽच् ॥ पतत्तो ग्रह इतिवा ॥

पतनम् । न० पाते । पडना० इ० भा० ॥ यथा । अशनैः पतनैवेदना पतनस्थान मतोबद्धः सकमिति ॥ पापे ॥ यथा । अकुर्वन्विहितं कर्म निन्दितञ्चसमाचरन् । प्रसक्तश्चेन्द्रियार्थेषु नरः पतनमृच्छतीति ॥ पतेर्ल्युट् ॥

पतयालुः । त्रि० पातुके । पतनशीले ॥ पतयति ॥ पतगतौ । चु० । अदन्तः । स्पृहिगृहीत्यालुच् ॥

पतसः । पुं० पक्षिणि ॥ पक्षिविशेषे ॥ पतंगे ॥ चन्द्रे ॥ पतति । पतृ्लृ० । अत्यविचमीत्यादिनाऽसच् ॥

पताका । स्त्री० ध्वजाञ्चले । वैजयन्त्याम् । केतने ॥ शोभमाना ध्वजाग्रेयापताकासा प्रकीर्त्तिता ॥ पततिपत्यतेऽनयावा । पतृ्लृ० । बलाकादयश्चेति साधुः ॥ ध्वजे ॥ सौभाग्ये ॥ नाटकाङ्के ॥ कीर्त्तौ ॥

पताकिकः । त्रि० पताकावति ॥ पताकास्त्यस्य ॥ व्री० ठन् ॥

पताकी । त्रि० पताकासंयुक्ते । वैजयन्तिके ॥ पताकास्यास्तित्री० इनिः । रिष्टारिष्ट बोधके ज्योतिर्विदां चक्रविशेषे ॥

पताकिनी । स्त्री० सेनायाम् ॥ नान्तलक्षणोङीप् ॥

पतिः । पुं० कान्ते । धवे । प्रिये । भर्त्तरि । विधिनापाणिग्राहके । भर्त्तार० इ० भा० ॥ अनुकूल दक्षिणधृष्टशठभेदात् पतिश्चतुर्विधः ॥ परमेश्वरे । यथा । सर्वपतिः स्वादकुतोभयः स्वयम् समन्ततः पाति भयातुरंजनम् । सएकएवेतरथामिथोभयंनैवात्मलाभादधि मन्यतेपरमिति ॥ मूले ॥ गतौ ॥ त्रि० । ईशे ॥ स्वामिनि ॥ पाति । पारक्षणे । पातेर्डतिः ॥

पतिम्वरा । स्त्री० स्वयम्वरायाम् । स्वेच्छया पतिकृति कन्यायाम् । पतिं वृणोति । वृञ् ० । संज्ञायांभृतृवृजीत्यादिना खच्पूर्वं पदस्यमुम् ॥ पतिंवृणीतेवा । वृङ्सम्भक्तौ ॥ कृष्णजीरके ॥ इ० श० चं० ॥

पतिघ्नी । स्त्री० पाणिरेखाविशेषे ॥ पतिं हन्ति । हन० । अमनुष्यकर्तृके चेतिटक् ॥ स्वामिहन्त्र्याम् ॥ लक्षणे जायापत्योष्टक् । उपधालोपः कुत्वम् ॥

पतितः । त्रि० महापातकिनि । स्वधर्मच्युते । पातित्यविशिष्टे ॥ स्वधर्मं यः समुच्छिद्य परधर्मं समाश्रयेत् । अनापदि स विद्वद्भिः पतितः परिकीर्तितः ॥ गलिते । पतनाश्रये । प्रस्कन्ने । मेदा० इ० भा० ॥ पतृ० । क्तः । द्वितीयाश्रितातीतपतितेति निपातादिट् ॥ पतिताग्गुरवस्त्याज्या नतुमाता कदाचन । गर्भधारण पोषाभ्यां तेभ्यो माता गरीयसी ॥

पतिदेवता । स्त्री० पतिव्रतायाम् ॥ पतिरेव देवतायस्याः ॥

पतिबान्धवः । पुं० पत्युर्मातृ प्रभृतिषु ॥ यथा । पत्युर्माता पिताभ्राता पत्युर्भ्रातुः स्वसुः सुता । पत्युः पितुः सोदराश्च विज्ञेयाः पतिबान्धवाः ॥ इतिमहानिर्वाणतन्त्रम् ।

पतिवत्नी । स्त्री० सधवायाम् । सभर्तृकायाम् ॥ पतिर्विद्यते यस्याः । मतुप् । अन्तर्वत्पतिवतोर्नुगित्यनेन निपातनात् वत्वं नुगागम विधानञ्च । ततङ्ङीप् ॥

पतिव्रता । स्त्री० सुचरित्रायाम् । सत्याम् । साध्व्याम् । पतिशुश्रूषा व्रतायाम् ॥ पत्यौव्रतं नियमोऽस्याः । पतिर्व्रतमस्याना । पतिशब्दः पतिसेवायां लाक्षणिकः ॥ यथा । आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा । मृतेम्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता ॥ अपिच । सुप्ते पश्चाच्छयानिते पूर्वमेव प्रबुध्यते । नान्यं कामयते चित्ते सा स्त्रीज्ञेया पतिव्रतेति ॥ धर्मार्थकामेषु मनोवाक् काय कर्मभिः पतिरेव मया परिचरणीय इति व्रतंयस्याःसा ॥

पत्नीरः । पुं० खगे ॥ पक्षिणि ॥ त्रि० । गन्तरि । गमनशीले ॥ पतति । पत् लृ० । पतिकठिकुठीत्यरन् ॥

पत्तङ्गम् । न० रक्तचन्दने । चक्रम् ०इ० भा० प्र०वृचवि० ॥ पतङ्ग । रक्तकाष्ठे । सुरङ्गदे ॥ पत्तङ्गनुरक्तसारं सुरङ्गरञ्जनं तथा । पटरञ्जन माख्यातं पत्तूरंचकुचन्दनम् ॥ पत्तङ्गं मधुरंशीतं पित्तश्लेष्मव्रणास्रनुत् । हरिचन्दवदुक्तंयविशेषाद्दाहनाशनम् ॥

पत्तनम् । न० नगरे । पुटभेदने ॥ पतन्तिजनायत्र ॥ पतलृ० । विपतिभ्यां तनन् ॥ यत्रराजाततत्परिचारकाश्च तिष्ठन्तिततपत्तनम् ॥ महत्यांपुर्याम् ॥ मृदङ्गे ॥

पत्तनवणिक् । पुं० स्वाध्यायिनि । नगरवणिजि ॥ इतित्रिकाण्डशेषः । पत्त

नस्यवचिक् ॥

पत्तनम् । न० श्वघनद्रुमे ॥ इति प्रा पाक्तशब्दाम्बुधिः ॥

पत्तिः । पुं० पदगे । पदातिके । म्यते । पद० । पादुलकात्तिः । क्तिच्श ॥ वीरमाचे ॥ चतुर्भीधिकास्य चतुर्थभेदे ॥ स्त्री० । गतौ ॥ सेनाविशेषे ॥ एकेभैकरथात्र्यश्वापत्तिः पंच पदातिमित्युक्ते : ॥ अपिच । एको रथोगजश्चैकोनराः पंचपदातयः । चयश्चतुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥ समसत्तसङ्ख्यया पत्त्यादयते परिकीर्त्तिता : ॥ पततिपत्यतेवा पतुल्छ० । क्तिन् ॥ पद्यते, पद० स्त्रियांक्तिन् । क्तिश्चा ॥

पत्तिकः । पुं० पत्तिपतौ ॥ इस्त्यश्वरथपदात्यात्मकस्याङ्गस्यकसैकः पतिः कार्यः सपपत्तिकउच्यते ॥

पत्तिसंहतिः । स्त्री० पादाते । पत्तीनां संहतिः ॥

पत्तूरः । पु० शालिञ्चशाके । लोहमारकौ ॥ म० । पत्तङ्गौ । कुचन्दने ॥

पत्नी । स्त्री० द्वितीयायाम् । पाणिगृहीत्याम् । सहधर्मिण्याम् ॥ पतिव्रता रूपवती स्वाचारासंयतेन्द्रिया । पत्नीयदावदावेहि नाल्पस्यतपसःफलम् ॥ पत्युर्यज्ञसंयोगो यथादस्य त्योः सहाधिकारात् पत्युर्नोयज्ञसंयोगे० द्र० नकारान्ता देशोडीपच ॥



सर्वावयवसंपूर्णा सुवृत्तामुदहेन्नरः । क्रयक्रीताचयानारी पत्नीसानविधीयते ॥

पत्नीसंयाजः । पुं० यागविशेषे ॥

पत्न्याटः । पुं० वासागारे । भोगयहे । निष्कुटे ॥ द्र० चि० शी० ॥

पत्मा । पुं० अन्तरीचे ॥ पतन्ति पचिणोऽस्मिन् । चन्येभ्यो० द्र० पतनेर्मनिन् ॥

पत्रम् । पुं० । न० अश्वादिवाहने । यानमाचे ॥ पलाशे । पर्णे । दले ॥ शरपक्षे ॥ पचिपक्षे ॥ छुर्याम् ॥ पतन्त्यऽनेनेत्यर्थे दामनीशसेत्यादिनाकरणेष्ट्रन् ॥ पततियः । पतृल्छ० । सर्वधातुभ्य : ष्ट्रन् ॥ तेजपत्रे । तमालपत्रे । पत्रकं । लेखनाधारे । पत्रा० द्र० भा० ॥ यथा । वाएमासिकेतुसम्प्राप्ते भ्रान्तिः सञ्जायते यतः । धात्राक्षराणि सृष्टानि पत्रारूढान्यतः पुरा ॥ धातुमय पत्राकृति द्रव्ये । पत्तर० द्र० भा० ॥ दूरदेशस्थ सुहृदादीनां वार्त्तावोधक लिपिविशेषे । चिट्ठी० पत्री० द्र० भा० ॥ अथ पत्ररञ्जनम् । सुवर्णरूप्य रङ्गाद्यै रञ्जयेत् पत्रमुत्तमम् । सामान्योत्तम मध्यानां पत्ररञ्जनमीरितम् ॥ अथ पत्रप्रमाणम् । षडङ्गुलाधिकं हस्तं पत्रमुत्तममीरितम् । मध्यमं हस्तमात्रं स्यात् सा

पत्रम्

मान्यं मुष्टिहीनकम् ॥ अथ पत्रम द्रप्रकार : । पत्रन्तु त्रिगुणी कृत्य जर्द्धे तु द्विगुणं लखेत् । शेषभागे लिखेद्वर्णान् गद्यपद्यादि संयुतान् ॥ अथ पत्रस्वरचनक्रम : । राजले खकमाहूय नृपो ब्रूयात् प्रयत्नतः । मत्र मुक्तयथा ऽयं गद्यपद्यादिसंयुतम् ॥ पण्डितद्वय मानीय लेख कौरद्वलिखित : । यथायोग्यानु सारेणपत्रं कुर्यात् मनोरमम् ॥ द्विस्त्रयंत्र्यंथापि विचार्यपण्डितैनवै । स्व भावदर्पणं ज्ञात्वा विलिखेत्पत्रयुक्त कौ ॥ सामान्यपत्रं मंलिख्य रहसिश्राव येन्नृपम् । नृपाज्ञयाशुभेपत्रं विलि खेद्राजलेखकः ॥ अथ लेखनप्रका र : । अङ्कुशं प्रथमं दद्यात् सङ्गार्थ विचक्षण : । मध्ये बिंदु समा युक्त मथ : सप्ताङ्क संयुतम् ॥ तदध : स्वस्ति विन्यस्य ततोगर्द्य सुशोभनम् । तत : श्री मच्छ्रुपाणि पदन्यासक्रमंलिखेत् ॥ भाषयासंस्क तेनैव कुशलंविलिखेत्सुधी: । तत: शुभाशुभावार्तां संस्कृते : प्राकृते स्तथा ॥ तत : प्रसाक्षसंदेशं ततोवा र्तांनियोजयेत् । कीर्तिप्रीतियुतंपद्यं तत : किमधिकादिकम् ॥ पत्रप्रे षगशीघ्रंच बहुमासादिसंयुतम् । सर्वेषामेव पत्रेषु लिखनं चैवमीरि तम् ॥ सर्वेषामेव पत्राणां विधिंज्ञा

पत्रम्

त्वालिखेत्तु य : । स्वदेशे कीर्तिमा प्नोति तथा देशान्तरेष्वपि ॥ एवं शास्त्रक्रमंज्ञात्वा योलिखेत्राजपत्र कम् । सराज मन्त्रिभि:सार्द्धं यश : प्राप्नोत्यनुत्तमम् ॥ शास्त्रसन्दर्भम ज्ञात्वा योलिखेद्राजपत्रकम् । स राज मन्त्रिभि : सार्द्धं दुर्यशोसदा प्नुयात् ॥ ० ॥ अथ पत्रनयनक्रमः । राजपत्रं नयेन्मूर्ध्नि ललाटेमन्त्रिणां मतम् । गुरुपत्रं नयेन्मूर्ध्नि ब्राह्मणा नांतथैवच ॥ यतिसन्न्यासिनांचै व स्वामिनस्तथैवच । सांदरेणैवच लेन तथासूत्रं निधारयेत् ॥ भार्यासु तसमित्रस्य हृदयेधारयेत्सुधी : । प्रवीरांणांकण्ठदेशे पत्रधारणमीरि तम् ॥ एतेषांचैवपत्राणां सूत्रंधार कलक्षणम् । अन्येषामपिपत्राणां नि यमोनापदर्शित : ॥

अथपत्रपठनप्रकार : । पत्रंधृत्वान मस्कृत्य पूर्वासंस्थापयेत्सुधी : । द्विजायेपसदसि नृपाग्रेराजलेक : । पत्रं वितत्सदसि विचारंमनसा पठेत् । स्फुटंपश्चात्प्रवक्तव्यसचोभो राजलेखक : ॥ रहसिश्रावयेत्पत्रं शुभंवाय्दिवाऽशुभम् । पत्रंश्रुत्वावि दित्वार्थं सभायांश्रावयेत्तत : ॥ रहस्यपत्रं रहसि नृपाग्रेश्रावयेद्द्विजः । अशुभंनैवसदसि शुभंचत्नृपाज्ञ या ॥ एवंक्रमेणपत्रार्थं श्रावयित्वा

पत्रम्

द्विजोत्तम : ॥ नृपते : सन्निधौस्थि
त्वा नृपाज्ञामनुवर्त्तते ॥
अथ पत्रचिह्नानि । ऊर्द्ध्वे षडङ्गुलं
त्यक्त्वा वर्त्तुलंचन्द्रबिम्बवत् । कस्तूरी
कुङ्कुमैःकुर्यात् राजपत्रंसुचिह्नितम् ॥
मन्त्रिणांकुङ्कुमेनैव पण्डितस्यैवचन्द
नैः । गुरूणांचन्दनेनैव सिंदूरेणैव
स्वामिनः ॥ भार्यायाश्चाप्यलक्तेनच
चन्दनैःपितृपुत्रयोः । सन्यासिनांचन्द
नेन यतीनांकुंकुमेनच ॥ रक्तचन्दन
पंकेन भृत्यस्यसमुदीरितम् ॥ श्रोणि
तेनैवशत्रूणां पत्रचिह्नंप्रकल्पयेत् ॥
एतेषांचैवसर्वेषां यथायोग्यानुसार
तः । पत्रस्योर्द्ध्वेतुमतिमान् कुर्यात्
चिह्नंसुवर्त्तुलम् ॥ अथ राजपत्रस्यको
णच्छेदनप्रकारः । दक्षिणेपत्रकोणस्य
चाधस्ताच्छेदयेत्सुधीः ॥ एकाङ्गुलप्र
माणेन राजपत्रस्यवैबुधः ॥ अथ राज
पत्रादेः पदन्यासः । महाराजाधिरा
जस्य दानशौर्य्यंतथैवच । तथासच्चरि
तत्वंच काव्यशास्त्रादिकंन्यसेत् ॥ य
थायोग्यानुसारेण तथैवगुणभेदतः ।
राजपत्रेषुसर्वेषु पदन्यासक्रमविदुः ॥
अथमन्त्रिपत्रस्य । प्रवरंगुणभेदेन त
थासच्चरितादिकम् । विन्यस्यविलि
खेत्प्राज्ञो मन्त्रिपत्रेपदक्रमम् ॥ अथ
पण्डितस्य । सद्भावद्वन्दितपदंशा
स्त्रार्थनिपुणादिकम् । पण्डितानांच
पत्रेषु विलिखेद्वैपदक्रमम् ॥ अथ

पत्रम्

गुरुपत्रस्य । साङ्गसिद्धान्तनिपुणंसन
मस्कारकंपदम् । विन्यस्यविलिखेत्
प्राज्ञो गुरुपत्रे पदक्रमम् ॥ ८ ॥ अथ
स्वामिपत्रस्य । प्रवर्यं सनमस्कारंप्रा
णप्रियादिकंपदम् । विन्यस्यविलिखे
द्धीमान् स्वामिपत्रे पदक्रमम् ॥ ०
अथ भार्या पत्रस्य । प्राण प्रियापदं
साध्वी तथासच्चरितादिकम् । भार्या
पत्रे लिखेद् विद्वान् पदक्रममनुत्तम
म् ॥ ० ॥ अथ पुत्रस्य प्राणपुत्रपदं
तद्वत्तथासच्चरितादिकम् । आशीर्व
चनसंयुक्तं पुत्रपत्रे पदक्रमम् ॥
। अथपितृपत्रस्य । प्रभुवर्यंनमस्कारं
तथासच्चरितादिकम् । विन्यस्यवि
लिखेत्पुत्र : पितृपत्रे पदक्रमम् ॥
अथ सन्न्यासियतिपत्रस्य । सर्वथा
स्वाविनिमुक्तं सर्वशास्त्रार्थपारगम् ।
सन्न्यासियतिपत्रेषु विलिखेच्चपद
क्रमम् ॥ सामान्यस्य । सामान्य
भृत्यशत्रूणां विनियोग्यासुकांप्रति । य
स्वावशेषितपदं छागतुल्यादिकंतथा
॥ एतेषामेवपत्रेषु यथायोग्यानुसा
रतः । विन्यस्यविलिखेत्प्राज्ञः
पदक्रममनुत्तमम् ॥ अथश्रीशब्द
विन्यास सङ्ख्या षड्गुरोः स्वामि
नःपञ्च द्विभृत्ये चतुरो रिपौ ।
श्रीशब्दानां च मित्रे एकैकंपुत्रभा
र्ययोः ॥ अथराज्ञः प्रशस्तिः । स्व
स्तिगीर्वाणचक्रचूडारत्नराजिरोचि

पत्रम्

चुम्बितचन्द्रचूडचरणनखेन्दुवृन्दच
न्द्रिकासंदोहास्वादचतुरचेतश्चकोरव
रविषमसमरसम्बरत्प्रबलतरतुरगखु
रपुटपटलदलितभूपृष्ठोत्थितदृभूयिष्ठ
धूलिधाराधूसरितसकलहरिदन्तरप्र
चण्डभुजदण्डभ्राजमानखरतरासि
विलासितप्रत्यर्थिपृथ्वीपतिसार्थप्रा
र्थितानुकम्पासुधासम्पातानवरतवि
द्राविद्र[illegible]विद्वद्द्रविणराशिवि
श्राणनसमुपार्जितोर्जितयशोमराला
वलिकवलितवलिदधीचिसञ्चितोय
श्रीमत्पासजालभूपालकुलतिलकश्री
युतमहाराजाधिराजेषु ॥ १ ॥
स्वस्तिप्रचण्डदोर्दण्डखण्डखण्डिता
रिमण्डलमुण्डोन्मुक्तमुक्तावलीमंडि
तसङ्ग्रामाङ्गनविक्रमाणानीकवारण
वारणादिनायकांडमण्डतरनक्रचक्रच
ङ्क्रमणदुरतिक्रमणीयापगापतिप्रभू
तयशश्चन्द्रचन्द्रिकाद्योतविद्योतिता
खिलजगन्मण्डलविविधद्रविणार्पणस
न्तोषितसूरिसंमूहस्तूयमानावदात
कीर्तिनर्तकीनर्तनलीलाविप्रलेपितगी
तिधुरीणोर्वश्यादिवेश्याजनसविला
सगीयमानगुणग्रामान्दोलिताखंड
श्रवणकुंडलपरित:प्रसर्पितप्रतापात
पनीतापितारातिसमध्यासितनि
कुञ्जपुञ्जप्रस्तुतसौन्दर्यगाथामुदितश्री
मन्नारायणचरणकिङ्करश्रीयुतमहारा
जदानशौण्डेषु ॥ २ ॥

पत्रम्

अथमन्त्रिप्रशस्ति : । स्वस्तिश्रीमत्स
मस्तसामन्तसेवक निर्वाहकेषु को
षंगोकृषिकृषीवल गजवाजिगृहपरि
वारहर्षहेतुनीतिसेतुरक्षणनिपुणेषु
अस्मद्विश्वासैकनिकेतनेषु श्रीश्रीमन्त्रि
प्रवीरेषु आशीराशिनिवेदनपूर्वोऽयं
वर्णभूतोऽत्रत्यं भव्यमावेदयन् तत्र
त्यं भव्यमव्याहत मनुदिनमनुवर्णं
पृच्छतितम ॥ ॥
अथगुरुप्रशस्ति : ॥ स्वस्तिश्रीनाराय
णपदपाथोरुहनिस्सरन् मकरन्दमधु
पायमानमानसेषु । विविधविद्या
विद्योतिताखिलगुणगणा लंकृत
वेदवेदाङ्ग पारग [illegible] स्वाश्रमोचिताचार
[illegible] काचार्यसेव्य
सम्पन्नपरमहंसपरिव्राजक [illegible] चरणारवि
मान श्रीगोविन्दस्वरूपगुरुचरणा
न्देषु कोटिश : प्रणामा : ॥
अथभार्यायाः स्वामिप्रशस्ति: । स्वस्ति
श्रीमदुद्दाम प्रेमभूषिताखण्डा
दिभक्तजनेषु । कर्णयोरधिष्ठानेषु ।
नेत्रयोरधिदैवतेषु । कामस्यपरि
णामेषु । चतुर्वर्गप्रदायकेषु । म
मापररूपेषु । श्रीमत् स्वामिचरणा
रविंदेषु । गोविंदकवेंदिराया :
शङ्करस्य गिरिजाया : महेन्द्र इव
पुलोमजाया : प्रतिदिनं वर्धमाना
समाराधना प्रणामपूर्वमास्ताम् ॥
० ॥ अथमसुभ[illegible]प्रशस्ति : ।
स[illegible]

पत्रम्

मूर्त्तौप्रियतमायां नेत्रयुग्मस्यकनी
निकायामिव चन्द्रस्यचणदायामिव
कमलाकरस्य कमलिन्यामिव पथि
कस्य छायायामिवतृषातुरस्य शीत
लाम्बुधारायामिव ममसप्रेमनिवे
दयन्ती पत्नीशुभाशीराशीन् निवेद
यतुसर्वदा ॥ ७ ॥ अथपुत्रस्यपितरं
प्रतिप्रशस्ति : । स्वस्तिश्रीमदभिन्न
वृषभध्वजचित्तचिन्तितस्वीयानुरागा
नुरञ्जितानुगृहीतसमग्रवर्गेषु ।
निजचरणसरोजरञ्जितपरागसंरक्षा
स्वदादि भालस्थलविशालभाग्य सं
भावुकेषु । श्रीयुतपितृचरण सरो
रुहेषु । अकिञ्चनःकरकिङ्करस्यमम
नमस्कार समुपुटस्यावनीपृष्ठलग्ना :
साष्टाङ्गप्रणाम : सहस्रमसकृत् वि
ज्ञाप्यञ्च ॥ ८ ॥ अथपितु : पुत्रं
प्रति प्रशस्ति : । स्वस्तिश्री विश्वे
श्वरचरणसरोरुहानुग्रहसमासादि
तातिविस्तृतानवद्यविद्याविलासपी
यूषपरम्पराभावुकानुपममाधुरीधु
रीणविविधगुणालङ्कृतनिजवंशा
वतंससकलविश्रामनिधाननिजकु
लपवित्रीकृतात्मप्रायेषु । श्रीयुत
शुभाचारपरिपूरितपुत्रेषुशुभाशिषां
राशय: सन्तुविज्ञाप्यञ्च ॥ ९ ॥ अथ
सन्न्यासियतिप्रशस्ति : । स्वस्तिश्री
मत्परमहंसपरिव्राजकाचार्यवरद
निपुणतामराङ्मुखेषु । विषमविष

पत्रम्

यदोषदर्शनदूषितप्रपञ्चरचनाविभा
वेषु । वेदवेदान्तसाङ्ख्यसिद्धान्त
वद्देवप्रकृतिपुरुषविवेकज्ञानशीले
षु । सङ्ख्यावन्मुख्यवन्दितचरणा
रविन्दस्वाश्रमोचिताचारपरिपालन
पवित्रीकृतधरित्रीतलेषु । सकलभू
देवपूजितश्रीयुतगोस्वामिचरणारवि
न्देषु । ममावनीसंलग्नसाष्टाङ्गप्र
णामसहस्रमजस्रमोंनमोनारायणाये
तिमन्त्रेणाकलितमस्तु ॥ ७ ॥ अथ
भृत्यप्रशस्ति : । स्वस्तिभगवच्चरणप
रायणसकलद्रव्याधिरक्षकगोमहि
ष्यादिप्रतिपालकनिखिलवंशानुसेव
कश्रीयुतदासुकभृत्यंप्रति ॥ ० ॥
॥ ११ ॥ अथारिप्रशस्ति : । स्वस्ति
समराङ्गनभ्रष्टप्रतिभटयश : परि
पूरितसकलसामन्तराजधानीविजृ
म्भितवीरजस्यावशेषितनिजवंशानु
रञ्जकसततपरिचरणशरणागतामुकं
प्रति ॥ १२ ॥ अथ शिष्येभ्योऽभिप्र
शस्ति : । स्वस्तिश्रीभगवत्पदपङ्कज
पूजनोपार्जितपुण्यपुञ्जपवित्रीकृता
त्मा : करणदिग्विलासिनीविसरधम्
मिल्लमिलन्मल्लीमालायमानयशोनु
वन्धिनिरवधिवसुवितरणनाधरीकृ
तसुरपुरभूमिरुहेषु । स्वस्तिश्रीमत्
परमेश्वरपादपाथोरुहस्वादचतुर
चित्तचञ्चरीकभूर्वृन्दारकवृन्दानन
न्दनिलाम्बितयश : पटीरपङ्कपट

लालङ्कृतदिगङ्गनागणस्तनतटप्र बलप्रतापौर्वखर्वीकृतप्रत्यर्थिसार्थग र्वाकूपारपारेषु ॥ इतिवररुचिकृता पत्रकौमुदी ॥ * ॥ * ॥ * ॥ पत्र पात्रेत्यादिलिङ्गानुशासनात्पुंस्त्वम पिज्ञेयम्

पत्रकम् । न० पत्राशे । तेजपत्रे । तै जपात० हि० भा० ॥ पत्रकं मधुरं किंचित् तीक्ष्णोष्णं पिच्छलं लघु । निहन्तिकफ वातार्शो हृल्लासा रुचि पीनसान् ॥ पत्रावल्याम् ॥ पुं० । शालिचशाके ॥

पत्रकाहला । स्त्री० पत्रशब्दे । पिच्छि लायां ॥

पत्रकृच्छ्रः । पुं० पर्णकृच्छ्रव्रते ॥ यथा । पर्णोदुम्बरराजीव बिल्वपत्र कुशोद कैः । प्रत्येकं प्रत्यहं पीतैः पर्ण कृच्छ्रउदाहृतः इति याज्ञवल्क्यः ॥ पलाशोदुम्बरारविन्दश्रीवृक्षपर्णा नामेकैकेन क्वथितमुदकं प्रत्यहंपिबे त् कुशोदकंचैकस्मिन्नहनीति पञ्चाह साध्यः पर्णकृच्छ्र इतिमिताक्षरा ॥

पत्रगुप्तः । पुं० स्नुहीभेदे । त्रिधारे ॥

पत्रघना । स्त्री० सातलायाम् ॥

पत्राङ्गम् । न० पत्राङ्गे । रक्तचन्दने ॥

पत्रभङ्गारः । पुं० रायभाटी० हि०गौ ० भा० प्रसिद्धे ॥ पुरोटी ॥

पत्रणा । स्त्री० शरपत्र रचनायाम् ॥ शराणां पत्ररचना पत्रणापरिकीर्त्ति ते तिहारावली ॥

पत्रतण्डुली । स्त्री० यवतिक्तायाम् ॥

पत्रतरुः । पुं० दुर्गखदिरे ॥

पत्रत्रयम् । न० वर्बरादिषु ॥ बर्बरा तु लसी बिल्वपत्रत्रयमुदाहृतम् ॥

पत्रदारकः । पुं० करपत्रे । क्रकचे ॥

पत्रद्रुमः । पुं० तालीदलतरौ ॥

पत्रनाडिका । स्त्री० पत्रशिरायाम् ॥

पत्रपरशुः । पुं० स्वर्णकारादिनां स्वर्णा दिच्छेदिकायाम् । व्रश्चने । छेनी हि० भाषा० ॥ पत्रमिवपरशुः ॥

पत्रपा । स्त्री० अपत्रपायाम् । लज्जाया म् ॥ हि० शब्द० ॥

पत्रपालः । पुं० आयतायांछुरिकाया म् ॥

पत्रपाली । स्त्री० कर्त्तर्याम् । कैंची० हि० भा० ॥

पत्रपाश्या । स्त्री० सुवर्णादि रचिते ल लाटाभरणे । ललाटिकायाम् ॥ पाशा नांसमूहःपाश्या । पत्रमिवपाश्या ॥

पत्रपिशाचिका । स्त्री० टोका० हि० गौ० भा० प्र० । मूर्द्धखोले । हि० वि० जलवायाम् । खर्परे । वारिला याम् । शिरसिपलाशपत्राणां बंध ने । बंधः पलाश पत्राणां शीर्षेपत्र पिशाचिके तिहारावली ॥

पत्रपुष्पः । पुं० रक्ततुलस्याम् ॥

पत्रपुष्पकः । पुं० भूर्जपत्रे ॥

पत्रपुष्पा । स्त्री० तुलस्याम् ॥ क्षुद्रपत्र

तुलस्याम् ॥

पत्रबंधः । पुं० पुष्प रचनायाम् ॥ यथा रचनाच परिष्यन्दः पत्रबंध इति त्रयम् । पत्रमङ्ग प्रसूनादि रचनायां निगद्यते ॥ इतिशब्द रत्नावली ॥

पत्रबालः । पुं० तुलाचटेर्डांड इति गौ० भा० ॥

पत्रभंगः । पुं० स्तनकपोलादौ कस्तूरिकादि रचित पत्रावल्याम् । पत्रवल्लयाम् ॥

पत्रभङ्गिः । पुं०)
पत्रभङ्गी । स्त्री० ) ॥ पत्रभंगे ॥

पत्रयौवनम् । न० नवीनपर्णे । पल्लवे किसलये ॥ नवोद्गते किसलयं कि सलं पत्रयौवनम् ॥ इतिजटाधरः ॥

पत्ररथः । पुं० पक्षिणि । पत्रिणि । पत्रंरथइवयस्य ॥

पत्ररलम् । न० पत्रदधिनि इति हेमचन्द्रः ॥

पत्रलेखा । स्त्री० पत्रभंगे । स्तनादौ कस्तूरिकादिनारचिते तिलकविशेषे । पत्राङ्गुल्याम् ॥ पत्राकारा लेखा । शा० ॥

पत्रवल्ली । स्त्री० पत्रभंगे ॥ पलाशोलतायाम् ॥ रुद्रजटायाम् ॥

पत्रवाहः । पुं० वाणे ॥ पक्षिणि ॥ त्रि० । लिपिवाहके ॥ पत्रस्यवाहोरयो मनुष्यादिर्वा ॥ पत्राणिवहतिवा । अण् ॥

पत्रशाकः । पुं० षड्विध शाकान्तर्गत पत्रात्मकशाके ॥

पत्रशिरा । स्त्री० पत्रनाडिकायाम् । मात्त्वां ॥

पत्रश्रेणी । स्त्री० द्रवन्त्याम् ॥ पर्णपङ्क्त्याम् ॥

पत्रश्रेष्ठः । पुं० बिल्वे । दृ० रा० नि० ।

पत्रसूचिः । पुं० कण्टके ॥ दृ० नि०

पत्रहिमम् । न० हिमदुर्दिने ॥

पत्राख्यम् । न० तेजपत्रे ॥ तालीश प त्रे ॥ हरितालप्रभेदे ॥ यथा ॥ स्वर्णवर्णं गुरुस्निग्धं सपत्रं चाभ्रपत्रवत् ॥ पत्राख्यं तालकं विद्याद्गुणाढ्यं तद्रसायनं ॥

पत्राङ्गम् । न० रक्तचन्दने ॥ भूर्जे ॥ पद्मके ॥ *रक्तचन्दनसदृशे काष्ठविशेषे।* वकम् ॥ पतङ्ग० इभा० ॥ पत्रमेवा ङ्गमस्य ॥ पत्रे पुष्पङ्गतिमा । चगिरगती । पच् ॥

पत्राङ्गुलिः । स्त्री० भङ्गे । स्तनकपोलादौकस्तूरिकादि रचितपत्रावल्याम् ॥ पत्रार्थमङ्गुलिः अङ्गुलिव्यापारः ॥

पत्राञ्जनम् । न० मस्यां ॥

पत्राढ्यम् । न० पिप्पलीमूले ॥ पर्वततृणे । तृणप्रिये ॥ तालीशे ॥

पत्रान्त्यम् । न० पत्राङ्गे ॥

पत्राम्बा । स्त्री० चुक्रिकायाम् । चुक्रा०

इ०भा० ॥

पत्रालुः । पुं० इक्षुदर्भायाम् ॥ कासालौ ॥

पत्रावलिः । स्त्री० गैरिके । पत्रश्रेण्याम् ॥

पत्रावली । स्त्री० पत्रलेखायाम् ॥ नवदुर्गासम्प्रदानमधुमिश्रितयवचूर्णयुक्तनवाश्वत्थपत्रेषु ॥ यथा । अमायां निशि सङ्घेतु पत्रेष्वाश्वत्थसंज्ञके । क्रमात्पत्रावलीदेयं मधुनायवचूर्णकम् ॥ देवादिसन्निधौसन्दिग्धवस्तुनोरेकतराय धारणार्थमानाह्मणवा लक्षीरोपितसत्तसन्दे हकोटिलिखिरा पत्रसमूहे ॥

पत्राशारः । त्रि० तपोविशेषाल्लब्धसंज्ञे तापसविशेषे । दीर्घपत्राशने ॥

पत्रिका । स्त्री० लघुपत्रे । चिट्ठी इ० भा० ॥ पत्र्याम् । लिपौ ॥

पत्रिकाख्यः । पुं० कर्पूरविशेषे ॥ त्रि० पत्रिकानामके ॥

पत्रिणी । स्त्री ० पल्लवे ॥

पत्री । पुं० श्येने ॥ पत्ररथे । खगे ॥ काण्डे बाणे ॥ द्रुमे ॥ रथिके ॥ पर्वते ॥ रथे ॥ तालद्रुमे ॥ श्वेतकिणिह्याम् ॥ गङ्गापत्र्याम् ॥ पाच्याम् ॥ पत्राणि संन्यस्यपतद्गनिठनापितीनि : ॥ अतिशयितम् ० प्रशस्तंवापत्त्रमस्येति वा ॥ त्रि० । पत्रयुक्ते ॥

पत्री । स्त्री० पत्रे ॥ लिपौ ॥ यथा । सन्म

पत्री ॥

पत्रोपस्करः । पुं० कासमर्दे ॥

पत्रोर्णः । पुं० शोणके । स्योनाकवृक्षे । अरलू० इ० भा० ॥ न० । धौतकौषेयवाससि । मुकटा० इ० भा० ॥ पत्रे ऊर्णाऽस्य । पत्रेपुकृत्ताऊर्णाकीटलालाभिः पत्रेपुकृमिभिरूर्णायाःकृतत्वात् । पत्रोर्णाऽस्यच । अर्शआद्यच् ॥

पत्सलः । पुं० पथि ॥ पतति । पत्लृ० पतेरस्थलच्० सरः ॥

पथः । पुं० मार्गे ॥ पथति । पथेगतौ । प० अच् । यादः पथश्चमार्गश्च तिसृभूतिचन्द्रपुरुपोत्तमौ । पथः पथीति विरूपेपुविश्वश्च ॥

पथकः । पुं० पथिकुशले ॥ तत्रकुशलः पथ इतिवुन् ॥

पथरयः । पुं । अध्वरथे ॥

पथिकः । त्रि० अध्वनीने । अध्वगे ॥ पन्थानंगच्छति । पथःष्कन् ॥

पथिकसन्ततिः : स्त्री० )

पथिकसंहतिः : स्त्री० ) इयौ । पथिकसमूहे ॥

पथिका । स्त्री० कपिलद्राक्षायाम् ॥

पथिकी । स्त्री ० अध्वगायाम् ॥ पन्थानं गच्छति । पथःष्कन् । षित्वात् ङीप् ॥

पथिद्रुमः । पुं० श्वेतखदिरे ॥

पंथाः । पुं ० अयने । वर्त्मनि । मार्गे । अध्वनि ॥ शायिमाधव पन्थानीयत्र

वेदाः प्रतिष्ठिताः । प्रवृत्तिलक्षणो धर्मोनिवृत्तौचविभावित : ॥ पथंते ऽनेन । पथि० । पथिमथिभ्यामिनिः ॥ पतन्त्यनेनवा । पतेःस्थश्चेतिइनिः । थान्तादेशश्च ॥ पन्थादेयोनाचाणा यस्त्रियैराज्ञे स्नातकस्य ये । वृद्धायभार युक्तायरोगिणेदुर्बलायच ॥ यथाहम नुः । चक्रिणोदशमीस्थस्यरोगिणोभा रिणःस्त्रियाः । स्नातकस्यचराज्ञश्च पन्थादेयो वरस्यच ॥ तेषान्तु समवेता नांमान्यौ स्नातक पार्थिवौ । राजस्ना तकयोश्चैव स्नातको नृपमानभा गि ति ॥ गमनगुणाः । पन्थामेद : क फस्थौल्यसौकुमार्यविनाशन : । य शुचङ्क्रामगंमानिदेहपीडाकरंभवे त् ॥ तदायुर्बलमेधाग्निप्रदमिन्द्रि यबोधनम् ॥ उपाये ॥ यथा । एषप न्था अमृतस्वप्राप्तये यदेतदात्मज्ञान मिति ॥

पथिप्रज्ञ : ॥ पुं० मार्गाभिज्ञे ॥ पन्था नम् प्रजानाति । प्रेहाज्ज्ञइतिकः ॥

पथिल : । त्रि० पथिके ॥ पथन्तीऽने न । पथि० । मि० इलच् ॥

पथिवाहक : । पुं० निष्ठुरे ॥ शाकुनि के ॥

पथ्यः । पु ० हरीतकीवृक्षे ॥ न० । सैन्धवे ॥ त्रि० । हिते । चिकित्सा दौ हितकारके ॥ यथा । चर्मोते- नाभिनाज्ञानं पयःपानेननाःस्त्रियः । एतद्वेमानवाःपथ्यं स्निग्धमल्पश्चभो जनम् ॥ मानवाः इतिसम्बोधनम् ॥ विनापिभेषजैर्व्याधिःपथ्यादेवनिव र्तते । नतुपथ्यविहीनस्य भेषजानांश तैरपि ॥ न० । शुभावहेवचने ॥ शा स्त्रीयात्पथोनपेतः । धर्मपथ्यर्थेभ्या दिनायत् ॥ भूयोपिपथ्यंवक्तव्यमेपमा हर्हितैषिणः ॥

पथ्यशाकः । पुं० तण्डुलीयशाके ॥

पथ्या । स्त्री० हरीतक्याम् । अभया- याम् ॥ विजयारोहिणीचैवपूतना- चामृताभया । जीवन्तीचेतकीचेति पथ्यायाः सप्तजातयः ॥ अलाबुवृत्ता विजयावृत्तासारोहिणीस्मृता । पूत नास्थिमती सूक्ष्मा अमृतामांसला स्मृता ॥ पञ्चरेखाभयाप्रोक्ता जीव न्तीस्वर्णवर्णिनी । त्रिरेखाचेतकीज्ञे या सप्तानामियमाकृतिः ॥ विजया सर्वरोगेषु रोहिणीव्रणरोहिणी । प्र लेपेपूतनायोज्या शोधनार्थेऽमृताहि ता ॥ अक्षिरोगेऽभयाशस्ता जीवन्ती सर्वरोगहृत् । चूर्णार्थेचेतकीशस्ता यथायुक्तंप्रयोजयेत् ॥ बंध्याकर्कोट क्याम् ॥ सगीयारी ॥ चिर्भिटायाम् ॥ पथोनपेता । धर्मपथ्यर्थं न्यायाद नपेते०इ०यत् । टाप् । चतुर्दशाक्ष रच्छन्द : प्रभेदे । यथा ॥ सजसाय लोचमध्येनपथ्यासरा ॥ यथा । न्य गयनृत्यसुः शमितचाराकार्तस्वराः

### पदार्थः

पिण्डस्य कौमार यौवनाद्यवस्था
भेदेऽपि स एवायमित्यभिन्नप्रत्यय नि
मित्ता डित्थत्वादिका जातिर्वाच्या
क्रियास्वपि जातिर्विद्यते सैव धातु
वाच्या पठति पठतः पठन्तीत्यादेर
भिन्नस्य प्रत्ययस्य सद्भावात् तन्निमि
त्तजात्यभ्युपगमः ॥ व्यक्तिवादिन
स्त्वाहुः शब्दस्य व्यक्तिरेवाभिधेया
जातिस्तूपलक्षणभावेनाश्रयणादान
न्त्यादिदोषानवकाशइतिकैयटः ॥
पदानां घटपटादीनां योऽर्थोऽभिधेयः
पदार्थः ॥ द्रव्य गुणकर्म सामान्य
विशेष समवाया भावेषु सप्तसु ॥
यथा । द्रव्यं गुणास्तथा कर्म सामा
न्यं सविशेषकम् । समवाय स्तथा
भाव : पदार्थाः सप्त कीर्तिताः ॥
एतेवैशेषिक प्रसिद्धाः पदार्था नैया
यिकानामप्य विरुद्धाः ॥ गौतमी
याः षोडश पदार्थास्तु । यथा । प्र-
माण प्रमेय संशय प्रयोजन दृष्टान्त
सिद्धान्ताऽवयव तर्कनिर्णयवादजल्प
वितण्डा हेत्वाभासच्छल जाति नि
ग्रह स्थानानां तत्त्वज्ञानान्निःश्रेयसा
धिगमः ॥ एषां लक्षणानि॰ यथा
। प्रत्यक्षानुमानोपमानशब्दाः प्रमा
णानि ॥ १ ॥ आत्मशरीरेन्द्रियार्थ
बुद्धि मनः प्रवृत्तिदोषप्रेत्यभावफल
दुःखापवर्गास्तु प्रमेयम् ॥ २ ॥ समा
नानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपल

### पदार्थः

ब्ध्यनुपलब्ध्यव्यवस्थातश्चविशेषापेक्षो
विमर्शः संशयः ॥ ३ ॥ यमर्थमधिकृत्य
प्रवर्तते तत्प्रयोजनम् ॥ ४ ॥ लौकि
कपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं
स दृष्टान्तः ॥ ५ ॥ प्रतिज्ञा हेतूदा
हरणोपनयनिगमनान्यवयवाः ॥ ७ ॥
अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्त
त्त्वज्ञानार्थमूहस्तर्कः ॥ ८ ॥ विमृ
श्य पक्षप्रतिपक्षाभ्यामर्थावधारणं नि
र्णयः ॥ ९ ॥ प्रमाणतर्कसाधनोपाल
म्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः
पक्षप्रतिपक्षपरिग्रहो वादः ॥ १० ॥
यथोक्तोपपन्नश्छलजातिनिग्रहस्थानोपा
लम्भो जल्पः ॥ ११ ॥ स प्रतिपक्षस्था
पनाहीनो वितण्डा ॥ १२ ॥ सव्यभि
चारविरुद्धप्रकरणसमसाध्यसमकाला
त्ययापदिष्टा हेत्वाभासाः ॥ १३ ॥
वचनविघातोऽर्थविकल्पोपपत्त्या छलम्
॥ १४ ॥ साधर्म्यवैधर्म्याभ्यां प्रत्यवस्था
नं जातिः ॥ १५ ॥ विप्रतिपत्तिरप्र
तिपत्तिश्च निग्रहस्थानमिति ॥ १६ ॥
+ ॥ अनेकान्तवादिनां जीवाजीवा
दिसप्तसु ॥ यथा । [illegible]सप्तपदार्थाः
स्युर्जीवाजीवास्रवास्त्रयः । संवरो
निर्जरश्चैव बन्धमोक्षावुभावपीति
॥ + ॥ शैवानां पतिपशुपाशेषु त्रि
षु ॥ ■ ॥ अध्यात्मवादिनां पदार्थो
द्विविधः आत्मा अनात्मा चेति ।
तत्रापि आत्मापि द्विविधः । ईश्वरो जी

वर्त्त्येतिएतावपिशुद्धाशुद्धभेदाद्द्विविधौ । तत्राशुद्धो मायाविद्योपाधित्वेन भेदव्यवहारहेतू । शुद्धोत्वभेदव्यवहारहेतु । अनात्मापि विविधः । कारणसूक्ष्मस्थूलभेदात् एतदेव शरीरत्रयमिति व्यवह्रियते पदस्यार्थः पदार्थः । सद्विविधः शाब्दिको लाक्षणिकश्चेति ॥ धर्मार्थकाममोक्षेषु ॥ यथा । द्वावेवास्तः पदार्थानांद्वावेवनिधनङ्गतौ । प्रथमश्चतुरीयश्च विपुलोकेसुदुर्लभौ । अर्थकामौ प्रशस्तौहि सर्वेषां सम्मतौ प्रियौ । धर्माधर्मेति चाम्बादो दृश्यंयं महतामपि ॥ पश्चात्तापवचनमेतद्दृष्टासुरवधमुनीनाम् ॥

पदार्थाभिनयः । पुं० नृत्ये ॥ पदार्थाभिनयोनामङ्गयोवागङ्गसत्त्वजः । इतिभरतः । सत्त्वमन्तः करणम् ॥

पदासनम् । न० पादपीठे ॥

पदिकः । पुं० पदातौ ॥ पादाभ्यां चरति । पर्या० ष्ठन् । ठस्येकः । इकिचरतावितिपदादेशः ॥

पद्गः । पुं० पदातिके ॥ पद्भ्यांगच्छति । गमुस्हृ० । अन्येभ्यो० डः । पादेनसमानार्थः पच्छब्दः ॥

पद्धतिः । स्त्री० पङ्क्तौ ॥ वर्त्मनि । पथि ॥ अनुष्ठानक्रमेग्रन्थे ॥ ग्रन्थार्थबोधकेग्रन्थे ॥ पादाभ्यांहन्यते । हन्० । क्तिन् । हिमकापिहतिषु चेतिपद्भावः ॥

पद्धती । स्त्री० पद्धतौ ॥ बह्वादिभ्यश्चेति ङीष् ॥

पद्मिमम् । न० पादशीतलतायाम् ॥

पद्मः । पुं० नागराजविशेषे ॥ दाशरथौ ॥ द्वादशजिनचक्रवर्त्यन्तर्गतचक्रवर्तिविशेषे । पद्मोत्तरात्मजे ॥ बलदेवे । रतिबन्धविशेषे ॥ यथा हस्ताभ्याञ्च समालिङ्ग्य नारींपद्मासनोपरि । रमेद्गाढंसमाकृष्य बन्धोयंपद्मसंज्ञकः ॥ पुं० । न० । नलिने । अरविन्दे । कमले । तामरसे । राजीवे ॥ वसन्तेशीतभीताश्च कोकिलस्वनेकृतम् । अन्तर्जलगताः पद्माः श्रोतुकामाइवोत्थिताइति ॥ पद्मके । इभाननबिन्दुवृन्दे । व्यूहविशेषे । निधिप्रभेदे । दशार्बुदे १००००००००० पद्मकाष्ठौषधौ ॥ न० । पुष्करमूले ॥ सीसके ॥ चित्रकाव्यभेदे ॥ पद्मालङ्कारे क्लिश्नाति । अर्शआद्यच् ॥ पद्यते । पद० । अर्त्तिस्तुसुहुस्त्रिति मन् ॥

पद्मकम् । न० बिन्दुजालके । हस्त्याननादिस्थबिन्दुवृन्दे ॥ पद्मकाष्ठे । पद्माकइतिभाषाइतिचभाषा ॥ ऋष्यभाद्रिसमुद्भवे पद्मदलसमानवर्णे चन्दनविशेषे ॥ पुं० सुगन्धिपुष्पे वृक्षविशेषे ॥ पद्मकंतुवरंतिक्तंशीतलं वातलंलघु । विसर्पदाहविस्फोटकुष्ठ

जलदास्तडित्तुलितकांतकार्तस्वराः। जगतीरिहस्फुरितचारुचामीकराः सवितुः क्वचित् कपिशयन्तिचामीकराः ॥ * ॥ आर्याप्रभेदेपि ॥ यथा। प्रथमगणत्रयविरतिर्दलयोरुभयोः प्रकीर्त्तितापथ्या ॥ यथा। जयजयजगदीश्वरविभोकेशवकंसान्तमाधवानन्त। कुरुकरुणामितिभणितिः पथ्याभयरोगदुःस्थानाम् ॥ *

पथ्यादिगुग्गुलुः । पुं॰ भावप्रकाशोक्तौषधविशेषे ॥

पथ्यापथ्यम् । न॰ रोगाणांहिताहितकारकद्रव्येषु ॥ तत्प्रतिपादकग्रन्थे ॥

पथ्यावक्त्रम् । न॰ विषमवृत्तविशेषे ॥ यथा। युजोश्चतुर्थतोजेन पथ्यावक्त्रं प्रकीर्त्तितम् ॥ यथा। रासकेलिसतृष्णास्य कृष्णस्य मधुवासरे। आसीद्गोपसुगाक्षीणां पथ्यावक्त्र मधुस्रुति रिति ॥

पत्॰द् । पुं॰ चरणे। पादे ॥ पदाते। पदगतौ। क्विप् ॥ स्वामीतुदान्तं नमन्यते। पदन्निस्यादेशविधानात् ज्ञापकात्। अन्येतुपदादेशएवाय मित्याहुः। प्रकृतिप्रत्ययस्वप्रकाराधितत्वेनप्रसाधनंतभूतेपितत्प्रवृत्तेः सम्भवात्। अतएवभोष्ठः प्रश्नां ककुदोपथी इति भाष्योदाहरणं सङ्गच्छते ॥

पदः । पुं॰ किरणे ॥ न॰ व्यवसितौ। व्यवसाये ॥ त्राणे ॥ स्थाने ॥ शास्त्रस्थितौ ॥ लक्ष्मणि। चिह्ने ॥ चङ्घ्रौ। पादे ॥ पादचिन्हे ॥ वस्तुनि ॥ अङ्के ॥ प्रदेशे ॥ श्लोकपादे ॥ वाक्ये ॥ शब्दे ॥ विभक्त्यन्ते ॥ पदंद्विधान्तेसुप्तिङ्भ्यामव्ययं तद्विवर्जितम् ॥ चत्वारिपदजातानिनामाख्यातउपसर्गनिपाताश्चेति नैरुक्ताः ॥ चत्वारिपदजातानिनामाख्यातोपसर्गनिपाताश्चेतिमहाभाष्यम् ॥ मिषे। व्याजे ॥ पदनीयेआत्मतत्त्वे। आनन्दरूपे। ब्रह्मणि। स्वरूपे ॥ पद्यते प्राप्यतेयोगादिसाधनैः सर्वैर्मुनिभिः प्राप्यतेवा। पदस्थैर्ये॰ पदगतौवा। पचाद्यच्। भावकर्मकरणेषुवाघञ्। संज्ञापूर्वकत्वाद्वृद्ध्यभावः। खनोघचेतिचिल्करणादन्यतोप्ययमिति ज्ञापनाद्वा ॥

पदकः । पुं॰ पदग्रन्थाभिज्ञे ॥ पदमधीतेवेदवा। क्रमा॰ वुन्। त्रि॰। पदज्ञातरि ॥ देवपदचिह्नादियुक्तेस्वनामाप्रसिद्धेकण्ठभूषणे ॥

पदगः । पुं॰ पदातौ ॥ पादाभ्यांगच्छति। गमत्ट॰। अन्येभ्यो॰डः। पादस्यपदाज्यातिगोपहतेष्वितिपादस्यपदइत्यदन्ताचादेशः ॥

पदजातम् । न॰ पदसमूहे। परापश्यन्तीमध्यमावैखरीरूपाणीतिवि

चरणकारा : ॥

पदनीय : । त्रि० गमनीये ॥ पदेरनीयर् ॥

पदन्यास : । पुं० गोक्षुरे ॥ पदविन्यासे ॥

पदभञ्जनम् । न० निरुक्ते । गूढार्थपदव्याख्यायाम् ॥

पदभञ्जिका । स्त्री० पञ्जिकायाम् । व्याख्यायाम् ॥ पदानांभञ्जिका ॥

पदवाक्यप्रमाणज्ञः । त्रि०व्याकरणमीमांसातर्काभिज्ञे ॥

पदविः । स्त्री० पदव्याम् । मार्गे ॥ पद्यतेऽनया । पदगतौ । पद्यटिभ्यामविः ॥

पदवी । स्त्री० अयने । वर्त्मनि । पथि । सृतौ ॥ कृदिकारादक्तिनश्च० ङीप् ॥

पदमाला । स्त्री०मोहनशीलायाम् विद्यायाम् ॥ इतिदेवीपुराणम् ॥

पदष्ठीवम् । न० पादौष्ठीवतोश्च० तयोः ॥ अचतुरविचतुरेति निपातनात् टिलोपः पद्भावश्च ॥

पदाङ्कः । पुं० क्रमाङ्के । पादचिह्ने ॥

पदाङ्गी । स्त्री० हंसपद्याम् ॥

पदाजिः । पुं०पत्तौ । पदगे । पादातिके ॥ पादाभ्यामजति । अज० अज्यतिभ्यांपादेचेतीण् । पादस्यपदाजीतिपदादेशोऽजेर्व्यभावश्च ॥

पदातिः । पुं० पदगे। पादातिके । पत्ते ॥

पादाभ्यामतति । अत० । अज्यतिभ्यांपादेचेतीण् । पादस्यपदाज्यातिगोपहतेष्विति पदादेशः । चतुर्मात्रिकसान्विमप्रभेदे ॥

पदातिकः । पुं० पत्तौ । पदगे ॥ स्वा० कन् ॥

पदानुप्रासः । पुं० शब्दालङ्कारविशेषलाटानुप्रासे ॥ पदानामनुप्रासः ॥

पदारः । पुं० पादधूलौ ॥ पादालिन्दे ॥

पदार्थः । पुं० भावे । धर्मे । तत्त्वे । वस्तुनि ॥ * ॥ किंपुनराकृतिः पदार्थ आहोस्विद्द्रव्यम् । उभयमित्याह । उभयथाह्याचार्येणसूत्राणि प्रणीतानि । आकृतिंपदार्थं मत्वाजात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यामित्युच्यते। द्रव्यं पदार्थं मत्वा सरूपाणामेकशेष आरभ्यतेइतिभाष्यम्। तत्रजातिपदार्थिनश्चाहुः । जातिरेवशब्देनप्रतिपाद्यते। व्यक्तीनामानन्त्यात् सम्बन्धग्रहणासम्भवात् ॥ साजातिः सर्वव्यक्तिष्वेकाकारप्रत्ययदर्शनादस्तीत्यवसीयते । तत्र गवादयःशब्दाभिन्नद्रव्यसमवेतां जातिमभिदधति ॥ तस्यांप्रतीतायांतदावेशात्तदवच्छिन्नंद्रव्यंप्रतीयते ॥ शुक्लादय : शब्दागुणसमवेतांजातिमाचक्षते गुणेतुसत्तासम्बन्धात्प्रत्ययः । द्रव्ये सम्बन्धि सम्बन्धात् संज्ञाशब्दानामप्युत्पत्ति प्रभृत्याविनाशात्

श्चैष्मास्रपित्तहृत्। गर्भसंस्थापनं रुच्यं वमिव्रणतृषाप्रणुत्॥ पद्ममिव। इवेप्रतिकृतावितिकन्॥

पद्मकन्दः। पुं० शालूके। पद्ममूले॥

पद्मकर्कटी। स्त्री० पद्मबीजे॥

पद्मकर्णिका। स्त्री० पद्मकर्णिकायाम्॥ पद्मस्यकर्णिकातिक्ताकषाया मधुराहिमा। मुखवैशद्यकृल्लघ्वीतृष्णास्रकफपित्तनुत्॥

पद्मकाष्ठम्। न० पद्मके। पीतके केदारजे। पाटलापुष्पसन्निभे॥

पद्मकी। पुं० क्षपके। भूर्जवृक्षे॥

पद्मकेशरः। पुं०। न० किञ्जल्के॥

पद्मखण्डम्। नं० पद्मसमूहे॥ तस्य-समूहइत्यधिकारे खलगोरथात् इत्यस्य खण्डः॥

पद्मगन्धि। न० पद्मके। पद्माकृति। माला० इतिशब्दमा०॥ पद्मस्यगन्ध इवगन्धोस्य। उपमानाच्चेतीत्वम्

पद्मगर्भः। पुं० ब्रह्मणि॥पद्मोगर्भः जन्मकारणमस्य॥ हरौ॥पद्मस्य हृदयाख्यस्यमध्येउपास्यत्वात्॥

पद्मचारिणी। स्त्री० उत्तरापथभवस्य नामख्यातवृक्ष विशेषे। पद्मबाधायाम्। अतिचरायाम्। चारव्याम्। स्थलपद्मिन्याम्॥पद्मचरितुशीलमस्याः। सुपीतिणिनिः॥

पद्मजः। पुं० चतुरानने। मधुविशेषे। पद्मेजातः। जनीडः॥

पद्मतन्तुः। पुं० मृणाले॥

पद्मदर्शनः। पुं० श्रीवासे। धूपविशेषे॥

पद्मनाभः। पुं० मधुरिपौ। विष्णौ॥ पद्मं नाभौयस्य। अच्प्रत्यन्ववपूर्वादिति योगविभागादच्। पद्ममिवसुवर्तुलानाभिरस्यवा॥ यद्वा। पद्मस्यहृदयपद्मस्यनाभौमध्येप्रकाशनात् पद्मनाभः। पु० साधुः॥भाविजिन विशेषे॥

पद्मनाभिः। पुं० पद्मनाभे। विष्णौ॥ पद्मंनाभौयस्य। अजितियोगविभागस्यासार्वत्रिकत्वाज्ञाच्॥

पद्ममृणालम्। न० मृणाले॥ इतिहेमचन्द्रः॥

पद्मपत्त्रम्। न० पुष्करमूले॥ पद्मस्येवपत्त्रमस्य॥ पद्मदले॥

पद्मपर्णम्। न० पद्मपत्त्रे॥

पद्मपाणिः। पुं० ब्रह्मणि॥ सूर्ये॥ बुद्धे॥ त्रि०। कमलहस्ते॥ पद्मंपाणौयस्य॥

पद्मपुराणम्। न० पाद्मे॥ तत्संख्या श्लोकायथा। पञ्चपञ्चाशत्साहस्र-पद्माख्यंविपुलंमतमिति॥

पद्मपुष्पः। पुं० कर्णिकारे। पिक्षाद्यप-क्षिणि॥

पद्मप्रभः। पुं० वृत्तार्हद्विशेषे॥ त्रि०। पद्मसमानप्रभायुक्ते॥

पद्मप्रिया। स्त्री० लक्ष्म्याम्॥ जरत्कारुमुनेःपत्न्याम्। मनसादेव्याम्॥

पद्मानिप्रियाणियस्याः ॥

पद्मबन्धः । पुं० चित्रकाव्यविशेषे ॥

पद्मबन्धुः । पुं० सूर्ये । पद्मानांबन्धुः ॥ भ्रमरे ॥ पद्माबंधवोऽस्य ॥

पद्मभूः । पुं० ब्रह्मणि ॥

पद्ममुखः । त्रि० पद्मसमानमुखयुक्ते ॥

पद्ममुखी । स्त्री० दुरालभायाम् । फञ्जिकायाम् ॥ पद्मतुल्यास्यविशिष्टायां ॥

पद्मयोनिः । पुं० धातरि । द्रुहिणे । ब्रह्मणि ॥ पद्मंयोनिरुत्पत्तिस्थानंयस्य ॥

पद्मरजः । न० पद्मरेणौ । पद्माक्षतृणे ॥

पद्मरागः । पुं० रक्तवर्णमणिविशेषे । शोणरत्ने । लोहितके । माणिक्ये । माणक .इ० भा० ॥ पद्मस्येवरागोऽस्य ॥ मणिकमन्धेतिसमासः ॥ यस्योत्पत्त्याद्ययोयथा ॥ सौगन्धिककुरुविन्दस्फटिकेभ्यः पद्मरागसम्भूतिः । सौगन्धिकजाभ्रमराञ्जनाब्जजम्बूरसद्युतयः ॥ कुरुविन्दभवाः शबलामन्दद्युतयश्चधातुभिर्विद्धाः । स्फटिकभवाद्युतिमन्तोनानावर्णाविशुद्धाश्च ॥ स्निग्धः प्रभानुलेपी स्वच्छोऽर्चिष्मानगुरुः सुसंस्थानः । अन्तः प्रभोतिरागोमणिरत्नगुणाः समस्तानाम् ॥ कलुषामन्दद्युतयो लेखाकीर्णाः सधातवः खण्डाः । दुर्विद्धानमनोज्ञाः सशर्कराश्चेति मणिदोषाः ॥ सर्पभयोर्लं चयम् भ्रमरशिखिकण्ठवर्णोदीपशिखासप्रभोभुजङ्गानाम् । भवतिमणिः किलमूर्द्धनियोऽनर्घ्यः सविज्ञेयः ॥ यस्तंबिभर्तिमनुजाधिपतिर्नतस्य दोषाभवन्तिविषरोगकृताः कदाचित् ॥ राष्ट्रेचनित्यमभिवर्षतितस्यदेवः शत्रूंश्चनाशयतितस्यमणेः प्रभावात् ॥ ६ ॥ षड्विंशतिसहस्राण्येकस्यमणेः पलप्रमाणस्य । कर्षत्रयस्यविंशतिरुपदिष्टानिपद्मरागस्य ॥ अर्द्धपलस्यद्वादशकार्षस्यैकस्यषट्सहस्राणि । यच्चाष्टमाषकधृतस्यसहस्रत्रयंमूल्यम् ॥ माषकचतुष्टयंदशशतक्रयंद्वौतुपञ्चशतमूल्यौ । परिकल्प्यमन्तरालेमूल्यंहीनाधिकगुणानाम् ॥ वर्णन्यूनस्यार्द्धं तेजोहीनस्यमूल्यमष्टांशम् । अल्पगुणोबहुदोषोमूल्यात् प्राप्नोतिविंशांशम् ॥ आधूम्रंव्रणबहुलंस्वल्पगुणंचाप्नुयाद्द्विशतम् । इतिपद्मरागमूल्यंपूर्वाचार्य्यैः समुद्दिष्टम् ॥ ११ ॥ इत्यन्येषामशीतिसर्वाणाम् ॥ विशेषोयुक्तिकल्पतरौद्रष्टव्यः ॥

पद्मलता । स्त्री० मृणालिन्याम ॥

पद्मलाञ्छनः । पुं० ब्रह्मणि । वेधसि ॥ भास्करे । रवौ ॥ धनदे ॥ कुबेरेश्वरे ॥ बुद्धभेदे । लोकेश्वरे ॥

पद्मलाञ्छना । स्त्री० तारायाम् ॥ लक्

स्याम् । श्रियाम् ॥ वाग्देवतायाम्। सरस्वत्याम् ॥ पद्मंलाञ्छनंयस्याः

पद्मवर्णकम् । न० पुष्करमूले॥ त्रि० पद्मसमानवर्णवति ॥

पद्मवासा । स्त्री० लक्ष्म्याम् ॥ पद्मे वासोस्याः ॥

पद्मबीजम् । न० गालोड्ये । पद्माक्षे । कमलबीजइतिकमलगट्टा० इतिचभाषा ॥ पद्मस्यबीजम् ॥ पद्मबीजं हिमंस्वादुकषायंतिक्तकंगुरु ॥ विष्टम्भिवृष्यंरूक्षञ्च गर्भसंस्थापकंपरम् ॥ कफवातकरंबल्यं ग्राहिपित्तास्रदाहनुत् ॥

पद्मबीजाभम् । न० मखान्ने । मखाना इ० भा० प्र०पा बीयफले ॥

पद्मव्यूहः । पुं० पद्माकृतौव्यूहविशेषे ॥ समविस्तृतपरिमण्डलो मध्योपविष्टजिगीषुः पद्मव्यूहः । तेनराजापुरस्थितं स्यसर्वदा कपटनिवेशमंकुर्यात् ॥

पद्महस्ता । स्त्री० श्रियि । लक्ष्म्याम् ॥ पद्मंहस्तेयस्याः ॥ त्रि० पद्मविशिष्टकरे॥

पद्मा । स्त्री० फञ्जिकायाम् । भार्ग्यादि पद्माभंपुष्पमस्त्यस्याः ॥ श्रियि । रमायाम् ॥ चारव्याम् । पद्मचारव्याम् ॥ पद्मानुष्णाकटुस्तिक्ता कषायाकफवातजित् । सूत्रकृच्छ्राश्म शूलघ्नी श्वासकास विषापहा ॥ मनस्याम् । मनसायाम् । जरत्कारुमुनेः पत्न्याम् ॥ हर्ताईन्मातरि ॥ कल्किदेवेनविवाहितायाम्बृहद्रथराजकन्यायाम् ॥ कुसुम्भ पुष्पे ॥ पद्ममस्त्यस्याः । अर्शआद्यच् ॥ यद्वा । पद्यते । पद् ० । अर्त्तिस्तुसिविमन् । टाप् ॥

पद्माकरः । पुं० तडागे । कासारे । सपद्मागाधजलाशये ॥ योग्यतयानिष्पद्मेपमहाजलाशये ॥ पद्मानामाकर:उत्पत्तिस्थानम् ॥ क्वचित्पद्मशून्येपि योग्यतयाप्रयोगः ॥

पद्माक्षम् । न० पद्मबीजे ॥ त्रि० । पद्मलोचने ॥

पद्माख्या । स्त्री० पद्माह्वायाम् ॥

पद्माटः । पुं० चक्रमर्द्दे । उरणाक्षे । पवाड० इ० भा० ॥ पद्ममिवपद्मांवाद्मपत्रमूर्द्ध्वा अटति अटगतौ । कर्मण्यण् ॥

पद्मालया । स्त्री० लक्ष्म्याम् । कमलायाम् ॥ पद्ममालयोऽस्याः ॥

पद्मावतिका । स्त्री० मात्रावृत्तविशेषे ॥ यथा । यदाष्टचतुष्कलगणनिर्मित पदकरपदकर्णद्विजविहिता सापद्मावतिकाविबुध सुमहिता जगणविरहिता सुकविविहिता । वृद्दशवसुभुवनैर्भवति विरामः सकलाभिमलफलाधरदाफणिनायकपिंगलभणित सुमहल रसिकमनः संनिहितमदा ॥ यथा । विधुरेवविधुरयतिमर्भनिलम्पतिजनयतिशर्म्म नमर्मसरः चन्दनवन पवनोविकलयतिमनो द

जयतिमदनोह्रदयमद : । प्रियसखि
ममनयनंपङ्कजनयनंकीर्त्तिसिंहधर
णीरमणंयदिमिलतिविशालं भवति
सदालं विरहपयोनिधिसन्तरणम् ॥
पद्मावती । स्त्री॰ जरत्कारुमुने : प
त्न्याम् । मनसादेव्याम् । नदीप्रभे
दे । पद्मा॰ ई॰ गौ॰ भा॰ ॥ पद्
मचारिण्योषधौ ॥ पद्मावतिका
वृत्ते ॥ जयदेवकवेः पत्न्याम् ॥
पद्मावतीप्रियः । पुं॰ जरत्कारुमुनौ ॥
पद्मासनम् । न॰ योगिनामासनविशेषे
॥ यथा । वामोरूपरिदक्षिणं नियम
त : संस्थाप्य वामंतथा दक्षोरूपरि
पश्चिमेनविधिनाधृत्वाकराभ्यां धृत
म् । अङ्गुष्ठं हृदयेनिधायचिबुकंना
साग्रमालोकयेदेतद्व्याधिविकारना
शनकरंपद्मासनंप्रोच्यते इति ॥ अ-
पिच । वामोरुपरिदक्षिणंहिचरणंसंस्थाप्य
वामंतथा दक्षोरूपरिपश्चिमेन विधिना धृत्वा कराभ्यां दृढम्
...

पद्मी । पुं॰ हस्तिनि ॥ पद्मं बिन्दु
जालकमस्त्यस्य । इनि : ॥ हरौ
॥ पद्मं हस्तेऽस्य ॥

समूहे ॥ कम०खराड : ॥

पद्मिनीवल्लभ : । पुं० सूर्ये ॥

पद्मेशय : । पुं० कृष्णे । विष्णौ ॥ पद्मेशेते । शीङ् । अधिकरणेशेते रित्यच् । शयवासेत्यलुक् ॥

पद्मोत्तर : । पुं० कुसुम्भे ॥

पद्मोत्तरात्मज : । पुं० जिनचक्रवर्त्ति विशेषे ॥

पद्मोद्भव : । पुं० अब्जयोनौ । सुब्ध्ये ॥ पद्मेउद्भवोऽस्य ॥

पद्मोद्भवा । स्त्री० मनसादेव्याम् ॥

पद्य : । पुं० शूद्रे । अवयवे ॥ न० श्लोके । कविकृतौ ॥ तल्लक्षणं यथा । गद्यंपद्यमिति प्राहुर्वाङ्मयं द्विविधंबुधैः । वर्णमात्राप्रभेदेन पद्यं बहुविधंस्मृतम् ॥ अपिच । पद्यंचतुष्पदीतच्च वृत्तंजातिरिति द्विधा । वृत्तमक्षरसङ्ख्यातं जातिर्मात्राकृताभवेदिति ॥ शाब्दे ॥

पद्या । स्त्री० वर्त्मन्याम् । वर्त्मनि ॥ पादार्थंपिशा । शरीरावयवाद्यत् । पद्यत्यतदर्थेइतिपद्भाव : ॥ कर्दमे पदहग्रमस्मिन् । पदमस्मिन्हग्रमितिशायत् ॥ यद्वा ॥ पाटोकिध्नितपद्या : शर्करा : । विध्यत्यधनुर्षेतियत् ॥ तुलायिनिविष्ट : ॥

पद्र : । पुं० ग्रामे ॥ जनपदे ॥ पद्यते ऽस्मिन् । पद० । स्फायितञ्चीतिरक् ॥

पद्व : । पुं० भूर्लोके ॥

पद्वा । पुं० पथि ॥ रथे ॥ पद्यते । पद० । आमदिपदीत्यादिनावनिप् ॥

पद्वरी । स्त्री० गतौ । वनोरचेति ङीब्रौ ॥

पनस : । पुं० फलवृक्षवि० । कण्टकिफले । कटहलइतिख्यातस० इतिभाषा ॥ अस्यपर्यायादयोयथा पनस : कण्टकिफल : फणशीतिहृहत्फल : । पनसंशीतलंपक्वंस्निग्धंपित्तानिलापहम् ॥ तर्पणंवृंहणंस्वादुमांसलंश्लेष्मलंभृशम् । बल्यंशुक्रप्रदंहन्तिरक्तपित्तक्षतव्रयान् ॥ आमंतदेवविष्टम्भिवातलंतुवरंगुरु । दाहकृन्मधुरंबल्यं कफमेदोविवर्धनम् ॥ पनसोद्भूतबीजानिवृष्याणिमधुराणिच । गुरूणिवद्धवर्चांसिसृष्टमूत्राणिसंवदेत् ॥ मज्जापनसजोवृष्योवातपित्तकफापह : । विशिपात्पनसंबल्यं गुल्मिभिर्मन्दवह्निभि : । अत्रंपनसपाकाय फलंफल्गुस्तथा ॥ इतिभावप्रकाश : ॥ कण्टाफलंसुमधुरं वृंहणंस्निग्धशीतलम् । दुर्जरंवातपित्तघ्नं श्लेष्मशुक्रबलप्रदम् ॥ तद्बीजमपिवातघ्नंस्निग्धंदाहदमप्रदम् । छर्दिघ्नंपचनंपुष्पं म्लेष्मवातपित्तनुत् । कण्टाफलमज्जान्पाथायसादुवातनम् । रसायिसरस्वादु तत्फलाम्लापितगु

शम् ॥ इतिराजवल्लभः ॥ कण्टके ॥ वानरविशेषे ॥ पनाय्यतेस्तूयते । पन० अत्यविचमितमीत्यादिना असच् ॥

पनसतालिका । स्त्री० पनसस्यफले॥

पनसा । स्त्री० रोगप्रभेदे ॥ राक्षसीविशेषे ॥ वानरीविभेदे । नदीविशेषे ॥

पनसिका । स्त्री० भावप्रकाशोक्तकर्णमध्यजातव्रणेक्षुद्ररोगविशेषे ॥

पनायितः । त्रि० शस्ते ॥ पनाय्यतेस्म । पण । पनच । क्तः । आयादयआर्धधातुकेवा ॥

पनितः । त्रि० ईडिते । पनायिते ॥ पन० । क्तः । आयाभावः ॥

पन्थकः । त्रि० पथिजाते ॥ पथः पन्थचेतिवुन् ॥

पन्नः । पुं० अधोगमने । नीचैर्गतौ ॥ पर्नेः सूदसूसीतिनन् ॥ त्रि० । च्युते । गलिते । पतिते ॥ पद्यतेस्म । पद० । क्तः । गत्यर्थेतिकर्तरिक्तः ॥

पन्नगः । पुं० नागेभ्योभिन्नेपवनाशने । सर्पे ॥ पन्नं गच्छति । गमन्त० सर्वपन्नयोरुपसङ्ख्यानमितिडः ॥ पद्भ्यांनगच्छतीतिवाविग्रहः ॥ पद्मकाष्ठे ॥

पन्नगकेशरः । पुं० नागकेशरपुष्पे ॥ पन्नगाख्यःकेशरः ॥

पन्नगाशनः । पुं० गरुडे । वैनतेये ॥ पन्नगान्अश्नातिअश० । ल्युः ॥ पन्नगाअशनंयस्येतिवा ॥

पन्नगी । स्त्री० सर्पिण्याम् ॥ सर्पिणीक्षुपे । मनसादेव्याम् ॥

पन्नद्धा । स्त्री० चर्मपादुकायाम् ॥

पन्नध्री । चर्मपादुकायाम् ॥ पनद्धा पनद्धी० इतिचभाषा ॥

पर्मीः । पुं० सोमे । चन्द्रे । सूर्ये ॥ पातिलोकमपिबतिवा । पा० । पा पो । किदृ चेतिईः ॥

पयुः । पुं० पावके ॥ स्त्री० । धात्र्याम् ॥ पाति । पा० । कुर्भश्चेतिचकारादन्यतोपिकुर्वातीदेव ॥

पमरा । स्त्री० सखुकी० इ० गौ० भा० प्र० गंधद्रव्यविशेषे ॥

पम्पा । दण्डकारण्याभ्यन्तरसरोविशेषे ॥ ऋष्यमूकसमीपवर्तिन्यां पुष्करिण्याम् ॥ यथा । पश्यलक्ष्मणपम्पायाबकः परमधार्मिकः । शनैःशनैःपदान्न्यस्यति जीवानांवधशङ्कया ॥ बकः किंवर्ण्यते राममयेनाहंनिष्कुलीकृतः । सहवासी विजानाति चरित्रंसहवासिनामिति ॥ चोड्रदेशस्थनदीविशेषे ॥

पयःकन्दा । स्त्री० चीरविदार्याम् ॥ पयः कन्देयस्याः ।

पयःखलः । पुं० चतुष्पदवन्नीयेजलाहरणार्थेचर्मपुटविशेषे । दृती । प

खालङ्कतिभा० ॥

पयः पूरः । पुं० अपांसमूहे ॥

पयः प्रसादि।न० कतके ।पङ्कजानिर्म्मली० इ० भा० ॥

पयःफेनी । स्त्री० । दुग्धफेनीक्षुपे ॥

पयश्चयः । पुं० अपांसमूहे । पूरे ॥ पयसांचयः ॥

पयः । न०क्षीरे । दुग्धे ॥ नीरे । जले ॥ पय्यते०पयतेवा । पयगतौपीङ्०पानेवा । सर्वधातुभ्यइत्यसुन् ॥

पयस्यः । पुं० मार्जारे ॥ त्रि० । पयःपानकर्त्तरि ॥ पयः पिबति । पा० । सुपीतिकः ॥

पयस्पायम् ।न० कुत्सितपयसि ॥पाय्येमानप् । पाश्यकल्पककाम्येष्विति विसर्गस्यसः ॥

पयस्यः । त्रि० पयोजातान्यदध्यादौ ॥ पयोहिते ॥ पयसोविकारः । गोपयसोर्यत् ॥

पयस्या । स्त्री० दुग्धिकायाम् ॥ क्षीरकाकोल्याम् ॥ स्वर्णक्षीर्याम् ॥ सूर्य्यवल्ल्याम् ॥ कुटुम्बिनी क्षुपे ॥ आमिक्षायामितिहेमचन्द्रः ॥

पयस्वान् । त्रि० पयस्विनि ॥ पयोस्त्यस्यमतुप् ॥

पयस्वला । स्त्री० छाग्याम् ॥ पयोस्त्यस्याम् । पन्येभ्योपीतिवलः ॥

पयस्विनी । स्त्री० नद्याम् ॥ भारतवर्षस्यविशेषनद्याम् ॥ धेनौ ॥ विभावर्य्याम् ॥ रजन्याम् ॥ काकोल्याम् ॥ दुग्धफेन्याम् ॥ क्षीरविदार्य्याम् ॥ छाग्याम् ॥ जीवन्त्याम् ॥ पयोस्त्यस्याम् ॥ अस्मायामेधेतिविनिः ङीप् ॥

पयोगडः । पुं० हिमे ॥ घनोपले ॥

पयोघनः । पुं० घनोपले ॥ श०दा० ॥

पयोजन्मा । पुं० घने । मेघे ॥ पयसोजन्मयस्मात् ॥

पयोदः । पुं०मेघे ॥ पयोददाति॥ सुद्रा अ० । कः ॥

पयोऽवान्तम् । न० अम्भःकणे

पयोधरः । पुं०कुसुमविशेषे । कोषकारे ॥ नारिकेले ॥ स्त्रीस्तने । कुचे ॥ यथा । यापांसुधामधुरमधुर्बिम्बसापुरासीत् सैवालकाद्‌रसतामधुनाविभर्त्ति वक्रौ प्रसर्पति समीर्व्वितनोति खर्व्वीभाव : पयोधरसमुन्नतिरवप्तु रिति ॥ कशेरुकि ॥ मेघे ॥ धरति । धृञ्० । अच् । पयसोधरः ॥ गुरुमध्यगतचतुर्मात्रिकाप्रभेदे ॥ कर्णिकारतरौ इतिशब्दाम्बुधिः ॥

पयोधाः । पुं० समुद्रे ॥ जलाधारे ॥ पयोदधाति । डुधाञ्० । पयसिचेति धातोरसि : ॥ मेघे ॥

पयोधिः । पुं० समुद्रे ॥ पयांसिधीयन्तेऽत्र । डुधाञ् । कर्मण्यधिकरणेचेतिकिः ॥

पयोधिकम् । न० समुद्रफेने ॥

पयोनिधि : । पुं० समुद्रे ॥ क्षीराब्धौ ॥ पयांसिनितरांधीयन्तेऽत्र। डुधा ञ्० । अधिकरणेकि : ॥

पयोमुक् । पुं० मेघे ॥ पयोमुञ्चति ॥ मुच्लृ०क्विप् ॥

पयोलता । स्त्री० क्षीरविदार्याम् । पयसीलतेव ॥

पयोव्रत: । पुं० पयोमात्रपानरूपव्रत विशेषे । दाहशाहसाध्ये विष्णु व्रतवि० ॥

पयोष्णिजाता । स्त्री० सरस्वतीसरि ति ॥

पयोष्णी। स्त्री० तीर्थविशेषे ॥ विन्ध्या चलादक्षिणेप्रसिद्धायांनद्याम् ॥ पयोष्णी. सलिलंरम्यंपवित्रंपापनाशन म् । सर्वपापहरं सौख्यबलकान्ति प्रदंलक्ष्मितिराजनिर्घण्टः ॥

पर: । पुं० देहाद्व्यतिरिक्तात्मनि ॥ ब्र० ह्मणआयुषि ॥ यथा। कालसङ्ख्या समासेनपूर्वार्धद्वयकल्पिता । सएव स्यात्पर: कालस्तदन्तेप्रतिसृज्यते ॥ निजेनतस्यमानेन चायुर्वर्षशतंस्मृ तम् । तत्पराख्यं तदर्धञ्चपरार्धम भिधीयते ॥ अपिच । चौथिकल्प शतानिस्युस्तथा षष्टिर्द्विजोत्तमा: ॥ ब्रह्मण: कथितंवर्षंपराख्यंतच्छतंपद म् ॥ द्र० कूर्मपुराणे ५ अध्याय: ॥ मायातीतेपरमेश्वरे ॥ न० । पश्चा द्वार्विनिकार्ये ॥ न० ॥ कैवल्ये ॥ मोक्षे ॥ यथा ॥ यस्यवाङ्मनसे स्यातांसम्यक्प्रणिहितेसदा । तप स्त्यागश्चसत्यञ्चसवै परमवाप्नुयादि ति ॥ सत्तायाम् । परसामान्ये ॥ ब्रह्मणि ॥ वि० । प्रकृष्टे । श्रेष्ठे ॥ निरतिशये । उत्कृष्टे । प्रकृतिगु णासंस्पृष्टे । अप्रामाण्यशङ्काकलङ्क शून्ये ॥ यथा एकाक्षरंपरम्ब्रह्म प्राणायाम:परंतप: । सावित्र्यास्तु परंनास्तिमौनात् सत्यं विशिष्यत इतिमनु: ॥ बहुकालीने ॥ अरौ । शत्रौ ॥ दूरे । अन्यस्मिन् । व्यति रिक्ते । स्वस्मादितरस्मिन् ॥ उत्तर स्मिन् ॥ विपर्सिरोपम्०पूर्यते०ऽमी नशा । पृ० । प० । त्ह्दोरम्० पु सीतिघोवा ॥

पर:शत: । त्रि० शतात्परस्मिन्सङ् ख्येये । शताधिके । शतात्पर: । पञ्चमीतियोगविभागात्समास: । राजदंतादि: । पारस्करादित्वात्- सुट् ॥ पर: शताद्यास्तेयेषांपरासङ् ख्याशतादिकात् ॥

पर:सहस्र: । त्रि० सहस्रात्परस्मिन् । स हस्राधिके ॥ सहस्रात्परं । पञ्च मीति योगविभागात्०स०राजदंता दि: । पारस्० सुट ॥

परकीय: । त्रि० परसम्बन्धिनि ॥ पर स्येदम् । गहादिषुकुग् जनस्यपरस्य चेतिच्छ: ॥

परकीया । स्त्री० नायिका भेदे ॥

परकृतिः। पुं० पुरुषविशेषनिष्ठमिथोवि रुद्धकथने । अर्थवादविशेषे ॥

परक्षेत्रम् । न० परभूमौ ॥ यथा । वृ षापिहिपरक्षेत्रेचाद्यावानिवेचरत्वकः । स्मृति ॥ परपत्न्याम् ॥ परश रीरे ॥

परग्रन्थिः । पुं० पर्वविधौ । अङ्गुलि पर्वणि ॥ हे० हा० ॥

परच्छिद्रम् । न० परदोषे ॥ नीचः सर्ष पमात्राणिपरच्छिद्राणिपश्यति । आ त्मनो बिल्वतुल्यानिपश्यन्नपिनपश्य ति ॥ चू० म० पु० ॥

परजातः । पुं०कोकिले ॥ त्रि० । परा श्रिते । परैधिते ॥ परस्माज्जातः परपोषितत्वात् ॥

परजितः । त्रि० ग्राम् गापराजिते ॥

परञ्जः । पुं० तैलयन्त्रे ॥ क्षुरिकाफ ले ॥ फेने ॥ असौ ॥

परञ्जनः । पुं० वरुणे ॥ हे०तिरेम चन्द्रः ॥

परञ्जयः । पुं० वरुणे ॥ त्रिकाण्ड शेषः ॥ त्रि०शत्रुजयकर्त्तरि ॥

परतन्त्रम् । न०परकीयशास्त्रे ॥ व्यक्ते ॥ यथा । बुद्ध्यादिस्वकार्येऽहङ्कारे जनयितव्येप्रकृत्यापूरोऽपेक्ष्यते अन्य थाचीणासतीनालमहङ्कारंजनयितु मितिस्थितिः । एवमहङ्कारादि भिरपिस्वकार्यजनने प्रकृत्यापूरम पेक्ष्यते । तेनप्रकृतिंपरामपेक्ष्यमाणं कारणमपि कार्योपजनने परतन्त्रं भवति । त्रि० । परवशे । पराधीने ॥ परस्तन्त्रंप्रधानंयस्य ॥ परेषां तन्त्रम् ॥

परतः । अ० परस्तादर्थे ॥ परस्मिन्पर- स्याम्परस्मात्परस्याः परः परावा । पसख्यागतोरमर्षोर्यंवा । विभाषाप- रावराभ्यामित्यस्तसुच् । तद्धितश्चा- सर्व्वविभक्तिरित्यव्ययत्त्वम् ॥

परत्र । अ० परलोके ॥ परस्मिन् । स- प्तम्यास्त्रल् ॥

परत्रभीरुः । त्रि० धार्म्मिके । परकाल- भयशीले ॥

परत्वम् । न० परतायाम् । परव्यव- हारकारणे ॥ तद्विविधम् । दिक्- कृतङ्कालकृतञ्च दूरस्थेदिक्कृतं परत्वम् । ज्येष्ठेकालकृतंपरत्वमि ति ॥

परदारः । पुं० परभार्यायाम् ॥ तद्ग- मनेदोषोयथा । परदाररतार्थैश्चपर द्रव्यहरायये । अधोधीनरकेघाम्ति पीड्यन्तेयमकिङ्करैरिति ॥

परदुःखम् । न० अन्यजनपीडायाम् ॥

परदेवता । स्त्री० परमात्मनि । परब्र- ह्मणि ॥

परद्वेषी । त्रि० विद्वेषके । परद्वे- ष्टरि ॥

परधर्म्मः । पुं० स्वभिन्नविहिते । पर-

स्यपरेणावाधर्मः।
परध्यानम्। न॰ ध्यानविशेषे॥
परन्तपः। पुं॰ परतापिनि। शत्रुतापने॥ जितेन्द्रिये॥ परेषांकाम क्रोधलोभादिशत्रूणांतापजनके। अज्ञानशत्रुदमने॥ परंशत्रुंकाम क्रोधादिरूपंशत्रुगणंशौर्येणबलवता विवेकेनतपसाचभानुरिवतापयती तिविग्रहेतपसमासाद्यत्रस्यसारस्य न्तात्परिकर्मख्युपपदेदिमत्परयोस्तर् मिरितिखच्प्रत्ययः। खचिहस्वः। मुम्॥
परन्तु। अ॰ प्रागुक्तविपर्यये॥
परमदम्। न॰ मुक्तौ॥ श्रेष्ठस्थानेपरमञ्चतत्पदञ्च॥
परपाकनिवृत्तः। पुं॰ परोद्देश्यकपाकरहिते। पञ्चयज्ञाकर्त्तरि॥ यथा। शश्रीत्वानिवं समारोप्यपञ्चयज्ञान्नि निर्वपेत्। परपाकनिवृत्तोऽसौमु निभिः परिकीर्तितः॥ इतिमिताक्षरा॥
परपाकरतः। पुं॰ परपाककर्त्ता॥ प्रातः पञ्चयज्ञान्निर्वर्त्यपरान्नमोजिनि॥ यथा। पञ्चयज्ञान्स्वयंकृत्वापरान्नमुपजीवति। सततंप्रातरुत्थायपरपाकरतस्तुसः॥ परपाकनिवृत्तस्यपरपाकरतस्यच। अपचस्य चभुक्त्वान्नंद्विजश्चान्द्रायणंचरेत्॥ इतिमिताक्षरायांप्रायश्चित्ताध्यायः॥

परपिण्डादः। त्रि॰ परान्ने। परान्नजीविनि॥ परस्यपिण्डः। तमत्ति॥ अद॰। कर्मण्यण्॥
परपुरुषः। पुं॰ विष्णौ॥ परश्चासौ पुरुषश्च॥ अन्यपुंसि॥ उपनायके॥
परपुष्टः। पुं॰ अलकण्ठे। कोकिले॥ परेणवायसेनपुष्टः पालितः॥ त्रि॰। अन्यपालिते। परेण पोषिते॥
परपुष्टमहोत्सवः। पुं॰ आम्रे॥ परपुष्टानांमहोत्सवोयस्मिन्॥
परपुष्टमहोत्सवा। स्त्री॰ वेश्यायाम्॥ परपुष्टेमहोत्सवोयस्याः॥
परपुष्टा। स्त्री॰ पणाङ्गनायाम्। वारनार्याम्॥ परैः पुष्टा॥
परपूर्व्वा। स्त्री॰ पुनर्भ्वाम्। स्वैरिण्याम्। परोऽन्यःपूर्वभर्तायस्याः सा। परपूर्वाःस्त्रियस्त्वन्याःसप्तप्रोक्तायथा क्रमम्। पुनर्भूस्त्रिविधातासां स्वैरिणीतुचतुर्विधेति नारदः। पतिंहित्वाऽपकृष्टंस्वमुत्कृष्टं यानिषेवते। निन्द्यैवसाभवेल्लोकेपरपूर्व्वेतिचोच्यते इतिमनुः॥
परप्रतिनप्ता। स्त्री॰ (इतिहेम
परप्रपौत्रः। पुं॰ दृढप्रपौत्रे॥(चन्द्रः॥
परभाषा। स्त्री॰ अपशब्दे। म्लेच्छिते॥
परभागः। पुं॰ गुणोत्कर्षे॥ सम्पत्ति॥ शेषांशे॥ शोभातिशये॥

॥ परभागोभवेद्वर्णद्वयसंसर्गजारुचि:
परभुक्ता । स्त्री० अन्यपुरुषसम्भोगवि
शिष्टायाम् ॥ परभुक्ताष्चकान्ताञ्च
योभुङ्क्ते सनराधम: । सपच्यते
कालसूत्रे यावच्चन्द्रदिवाकरौ ॥ इ
त्यादिनाब्रह्मवैवर्त्तेश्रीकृष्णजन्मखण्डे
१८८ अध्यायेविशेषोद्रष्टव्य: ॥
परभृत् । पुं० काके ॥ परंबिभर्त्ति
डुभृञ्० । क्विप् ॥
परभृत: । पुं० कोकिले पिके ॥ परै
रन्यकाकैर्भृत: ॥ त्रि० ॥ परपो-
षिते ॥
परम् । अ० नियोगे ॥ कोपे ॥ किन्त्व
र्थे ॥ केवले ॥
परम: । पुं० प्रणवे ॥ त्रि० । परे ।
उत्कृष्टे ॥ अवसरे ॥ प्रथमे ॥ प्र-
कारे ॥ प्रकृष्टे । उत्पत्तिविनाशशू
न्यस्वप्रकाशपरमानन्दरूपे । निरति
शयपुरुषार्थपर्यवसायिनि ॥ प्रधाने
॥ पराउत्कृष्टामायस्य: ॥
परमगति: । स्त्री० मुक्तौ ॥ त्रि० मो
क्षहेतौ ॥ योगिप्राप्यसर्वत: शाश्वा
विशुद्धाज्ञाननिराया: । गतिगच्छ
न्तिसन्मार्गात् : परमांगति
मितिमोक्षधर्म: ॥
परमन्तप: । न० इन्द्रियजये ॥ मन
सर्व न्द्रियाण्यादौकाय्यंपरमंतप:
। प्राणायामान्नाक्षयन्यदेवविधि
दर्शिता: । व्याह्रतिप्रदपुष्पाक्षा वि



त्रेयं परमंतप: ॥ आलोचने ॥
परमपद: । पुं० न० श्रेष्ठस्थाने ॥ पर
देवताचरणे ॥ पद्यतेज्ञानिभि: प्रा
प्यते इति पद:परमश्चासौपदश्चेति
परमब्रह्म । न० परमेश्वरे । नारायण ॥
परमम् । अ० अनुज्ञायाम् । अनुमतौ
। शां० सू० भा० ॥ परंमिमीतेमि
नोतिमीनातिवा । डम् ॥
परमर्षि: । पुं० भेलाद्यृषिविशेषे ॥
सप्तर्षिषु ॥
परमहंस: । पुं० आत्मा नात्मविवेकि
परिव्राजिब्राह्मणे । संवर्त्तकारुणि
श्वेतकेतुदुर्वासाऋभुनिदाघजडभरत
दत्तात्रेयरैवतकप्रभृतौ ॥ सुखज्ञाना
समर्थधर्मौ यतिष्वेलिङ्गधारणं । वाङ्
नारोकवालाना समर्थधर्मौ नविद्यते
॥ ० ॥ चतुर्विधाश्रमूतेषुतुरीये ॥
यथा । चतुर्णामवधूतानां तुरीयोहं
सउच्यते । चयोन्ते भोगयोगाव्या
मुक्ता: सर्वेशिवोपमा: ॥ हंसोन
सुर्यात् स्त्रीसङ्गनवाधातुपरिग्रहम् ।
प्रारब्धमश्नन्विहरेन्निषिद्धविधिवर्जि
त: ॥ लज्जत्स्वजातिचिह्नानि च
मांनिरवमेधिनाम् । तुरीयोविचरे
त्क्षोणीं नि: संकल्पोनिरुद्यम: ।
सदात्मकामसंतुष्ट: शोकमोह विव
र्जित: । निर्निकेतस्तितिक्षु: स्या
न्नि: शंकोनिरुपद्रव: ॥ नार्थयंभ
ध्यपेयानांनतथ्यानधारणाम् :

स्तोविरक्तोनिर्द्वन्द्वोहंसाचारपरोयति
रिति महानिर्वाणतन्त्रम् ॥

परमगति : । स्त्री० साक्षान्मोक्षहेतौ
॥ यथा । कृपयापरिमितः कर्मोचिस्थर
नन्तुपरमागतिरिति ॥

परमाणु : । पुं० परिमण्डले । परमेणौ
। यतोऽणुर्नास्ति सपरमाणुरित्यर्थः
॥ जालान्तरगतेभानौयत्सूक्ष्मंदृश्य
तेरज : । तस्य : षष्ठकोभाग: पर
माणु : सउच्यते ॥ ॥ सौत्रान्ति
कादिमतेचतुष्टयेचपृथिव्यादिपरमा
णव:खरस्नेहोष्णेरणस्वभावा : । तथा
हि कठिनस्वभावा:पृथिवीपरमाणव:
। स्नेहस्वभावा:यपांपरमाणव: । उष्ण
स्वभावास्तेजस : परमाणव: । ईर
णस्वभावावायुपरमाणव : इति ॥
परमश्वासायणुश्च ॥ ॥ । पृथिव्या
दिभूतचतुष्टयानाद्व्यणुकानामवय
व : परमाणु : । सचनित्योनिरवय
वश्वास : सूक्ष्मतमपिनाक्षि । यथा ।
नित्याऽनित्याचसाद्वेधा नित्यास्याद
णुलक्षणा । अनित्यातुतदन्यास्यात्
सैवावयवयोगिनी ॥ पारिमाण्डल्य
नामकतत्परिमाणन्तु नकस्यापिक
रणम् । यथा । पारिमाण्डल्यभिन्ना
नांकारणत्वमुदाहृतम् ॥ जलादिप
रमाणुरूपस्यनित्यत्वम् । पार्थिवपर
माणुरूपस्याऽनित्यत्वम् । यथा ।
जलादिपरमाणौतन्नित्यमन्यत्सहेतु
कम् । इ० भा० प० ॥ तैरेवपरमा
णुभिराद्युपादानैर्द्व्यणुकत्रसरेण्वा
दिक्रमेणास्थूलक्षितिजलतेजोमरुत:
सृजतिपरमेश्वर : । यथा । अयोन
नंपरमाणुकर्मतथाचसर्गाद्यकालीन
द्व्यणुकारम्भकपरमाणुकर्मयत्नजन्य
प्रयत्नवदात्मसंयोगजन्यंवाकर्मत्वाद
स्मदादिशरीरकर्मवदिति कुसुमाञ्ज
लि : ॥ प्रलयेऽतिस्थूलस्थूलनाशान
न्तरंपरमाणुक्रियाविभागपूर्वसंयोग
नाशादिक्रमेणद्व्यणुकनाशान्तरंतिष्ठ
न्तिपरमाणवएवेति । यथा । दोषूय
मानास्तिष्ठन्तिप्रलयेपरमाणव : । इ
ति प्राचीनकारिका ॥ तस्यमहत्त्वा
भावादतीन्द्रियत्वम् । यथा ॥ मह
त्त्वंषड्विधेहेतुरिति० भा० प० ॥ ॥
कालविशेषे ॥ यथा । सकाल : पर
माणुर्वैयोभुङ्क्तेपरमाणुताम् । सतो
विशेषभुग्यस्तुकाल : सपरमोमहा
न् ॥ यणार्द्धौपरमाणूस्यात्त्र्यसरेणु
त्रय : स्मृत : । जालार्करश्म्यवग
त : खमेवानुपतन्नगात् ॥ इ० श्री
भागवते ३स्कन्धे ११ अध्याय : ॥
अस्यार्थ : । सत : प्रपञ्चस्यपरमाणु
तांपरमाण्ववस्थांयोभुङ्क्तेसकाल :
परमाणु : तस्यैवाविशेषसाकल्यंयो
भुङ्क्तेसपरममहान् । अयमर्थ : ।
ग्रहर्क्षताराचक्रस्थद्धल्यादिनायत्सूर्य
पर्यटनं वच्यति तत्रसूर्योयावतापर

माणुदेशमतिक्रामति तावान्कालः परमाणुः । यावता चद्वादशराश्यात्मकं सर्वंभुवनकोषमतिक्रामति । सपरममहान्संवत्सरात्मकः तस्यैवावृत्त्या युगमन्वन्तरादिक्रमेण द्विपरार्द्धान्तत्वमिति । तथाच पञ्चमे सूर्यगत्यैव कालादिविभागं वक्ष्यति । इदानीं द्व्यणुकादिलक्षणपूर्वकं मध्यमकालावस्थां कथयतिद्वौ परमाणू अणुः स्यात् त्रयो यस्त्रसरेणुः सतु प्रत्यक्षतुल्याकाशार्केति । गवाक्षप्रविष्टप्रकाशे क्षिप्रं व्रजतः कोसौ योसितश्चत्वेन खमेवानुपतन् अगात्गतः । नगामितिपाठे खमेवानुपतन्नवगतः नतुगां पृथ्वीम् । इति श्रीधरस्वामिनः ॥

परमावक्रकः । पुं॰ विष्णौ ॥

परमात्मा । पुं॰ चिदात्मनि । स्वप्रकाशज्ञानस्वभावात्मनि । कार्यकारणविलक्षणे नित्यशुद्धबुद्धमुक्तस्वभावे ॥ देहादिषु दृश्यमानानामविद्यात्मत्वेन कल्पितानांपरमः प्रकृष्टतमपदृष्ट्यादि विशेषणविशिष्टयात्मा ॥ अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेभ्यः पञ्चभ्योऽविद्याकल्पितात्मभ्यः परमः प्रकृष्टोऽकल्पितोब्रह्मपुच्छं प्रतिष्ठितः आत्माच सर्वभूतानांप्रत्यक्चेतनः । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । परात्मा सायानन्दि यौयम्यस । सतति सर्वं व्याप्नोतीत्यात्मा । परमश्चासावात्माचेतिवा ॥ परमात्मा सत्प्रदर्थः सर्वोपाधिविवर्जितः ॥ अन्यत्रं श्रीदेवीभागवते । याशक्तिः परमात्मासौयोसौसापरमात्मता । अन्तरंनैतयोः कोपिसूक्ष्मं वेद्वेनारदेति ॥ अंतरंभेदः सूक्ष्ममपिनवेद ॥ अस्यध्यानं यथा । हृत्पद्ममध्ये पुरुषंपुराणं सत्वात्मकंसर्वंजगत् स्वरूपम् । ध्यायामिनित्यंपरमात्मसंज्ञं चिद्रूपमेकंवचसामगम्यमिति ॥

परमाद्वैत : । पुं॰ विष्णौ ॥ मतविशेषे ॥ यथा । निर्गुणंवामभागेचसव्यभागेऽद्भुतानिजा । मध्येनाथः स्वयंज्योतिस्तज्ज्योतिर्मैतमोहरमिति ॥

परमानन्द : । पुं॰ अविनाशिनिरतिशयत्वाभ्यामुत्कृष्टे सुखविशेषे ॥ परमश्चासावानन्दश्च । अतिशयाह्लादे ॥ ब्रह्मानन्दे ॥ सार्वभौमादिहिरण्यगर्भान्तानन्दानामुत्तरोत्कर्षपरमावधित्वात् ॥

परमान्नम् । न॰ क्षीरिकायाम् ॥ पायसे । क्षीर इ॰ भा॰ ॥ परमञ्च तदन्नञ्च ॥ यद्वा । परमाणामुत्तमानांदेवादीनामन्नम् ॥

परमायत्त : । त्रि॰ अतिश्रान्ते ॥ परमश्रामी आयस्तश्च ॥

परमायु : । पुं॰ विंशत्यधिके वर्षशते । क्षीरिकायाम् ॥ यथा । शतांयथा

णिर्विंशत्यानिशाभि : पञ्चभि : स ह । परमायु रिदंप्रोक्तं नराणांकरि णामिह। चन्द्राद्यानिं शतम्नानाशुनां द्वादशवत्सरा : । पञ्चविंशतिवर्षाणि खरस्यकरभस्यच॥ चतुर्विंशतिरव्द्रानांवयस्यमहिपस्यच । मृगशूकरव सादिपशूनांषड्दशान्विता : ॥ इ॰ शब्दमाला ॥

परमायुष : । पुं॰ असनद्रुमे ॥

परमार : । पुं॰ पवांर इ॰ भाषा॰ प्र॰ क्षत्रियजातिविशेषे॰ ॥

परमार्थ:। पुं॰ सत्ये । एकरूपेणावस्थि तेर्थे ॥ परमार्थोद्विधाप्रोक्तो मयाद्दे स्वर्गवासिन: । एक: स्वभावत: सा क्षात्परमार्थ : सदैवतु ॥ स्शिव: सत्यचैतन्यसुखानन्दस्वलक्षण:। अपर: कल्पित : साक्षात् ब्रह्मण्यध्यस्तमा यया ॥ व्यावहारिकसत्यार्थे साक्षात् सत्यार्थविद्वचनं । उभयंवत्तिवेदस्तु मार्गानिवंवदन्तिहि ॥ इत्युक्तं ब्रह्म गीतायांब्रह्मणाब्रह्मदर्शिना ॥ २ ॥ अध्याये ॥ चतुर्वर्गेषूत्कृष्टे मोक्षे । यथार्थे ॥ प्रपञ्चोयदिविद्येत निवर्त्ते तनसंशय : । मायामात्रमिदंद्वैतम द्वैतंपरमार्थत : ॥ परमश्चासावर्थश्च ॥ स्वर्गादिषुधर्मादिषुवापरमोमोक्षो र्थ : परमार्थ : ॥

परमार्थवित्। त्रि॰ । तत्त्वदर्शिनि ॥ अम्ब मेधशतसहस्राण्यथकुरुतेब्रह्मघातल क्षाणि । परमार्थविन्नपुण्यै र्नचपापै र्लिप्यतेविमल: ॥

परमार्हत: । पुं॰ जैनराजर्षिविशेषे ॥

परमाशक्ति: । पुं॰साम्यावस्थमायोपा धिकब्रह्मरूपिण्याम् ॥ यद्दाहगीता सु । अपरेयमितस्त्वन्यांप्रकृतिंवि द्धिमेपराम् । जीवभूतांमहाबाहोय येदंधार्यतेजगदिति ॥

परमृत्यु: । पुं॰काके । वायसे ॥ परो मृत्युरस्य ॥

परमेश: । पुं॰ परशिवे॥ परमात्मनि ॥ परमश्चासावीशश्च । परमादुत्कृष्टादि भ्योप्युत्कृष्टाब्रह्मादय:तेषामीश: ।

परमेश्वर: । पुं॰महेश्वरे । शिवे ॥ पर मात्मनि । सर्वजडवर्गसत्तास्फूर्ति प्रदत्वेनबाध्यबाधकभावशून्ये । सर्व दोषानस्कंदिते । परमश्चासावीश्वर श्च । परमउत्कृष्ट:ईश्वरेभ्यो हिरण्य गर्भादिभ्य: मचासावीश्वरश्च ।

परमेश्वरी । स्त्री । दुर्गायाम् । परदेव तायाम् । पराम्बायाम् ॥ परमा चासावीश्वरीच । यद्वा । परमाणां ब्रह्मादीनामीश्वरीनियन्त्री ॥

परमेष्ठी। पुं॰ धातरि। पितामहे। अब्ज योनौ ॥ परमेव्योम्निचिदाकाशेब्रह्म पदेवातिष्ठतिष्ठा॰ । परमेस्थ.किंदि तीनि: । तत्पुरुषेकृतीत्यलुक् । स्था स्थिन्स्थूणामितिपत्वम्॥ गुरुविशेषे। यथा । आदौसर्वचदेवेशिमन्त्रद:पर

मोगुरुः । परापरगुरुस्त्वंहिपरमेष्ठी त्वहंगुरुरितितन्त्रनीलतन्त्रे २ पटलः ॥ मन्त्रदातागुरुःप्रोक्तोमन्त्रस्तुपरमोगुरुः । परापरगुरुस्त्वंहिपरमेष्ठि गुरुस्त्वहमितितन्त्रान्तरम् ॥ शाल ग्रामविशेषे ॥ यथा ॥ परमेष्ठीचशुक्लाभः पद्मचक्रसमन्वितः । चिपाक्लतिस्तथापृष्ठे शुषिरस्त्वातिपुष्कलम् ॥ परमेष्ठीलोहिताभश्चक्रमेकंतथायुतम् । बिम्बाकृतिस्तथा रेखाशुषिरस्त्वातिपुष्कलमितिब्रह्मपुराणम् ॥ अपिच । परमेष्ठीचशुक्लाभश्चक्रपद्मसमन्वितः ॥ समसुलक्षणायीतः पृष्ठेचशुषिरंसुषमिति पुराणसंग्रहः ॥ परमेष्ठीतुरक्ताभश्चक्रपद्मसमन्वितः । विधाकृतस्तथापृष्ठे शुषिरस्वामिवर्तुलम् ॥ भीतवर्णयुतोवापिभुक्तिमुक्तिवरप्रद इति वैश्वानरसंहिता ॥ जिने । बुधे ॥

परमेष्ठिनी । स्त्री० ब्राह्म्याम् । धामन रूटी० इ० गौ० भा० ॥ परमेष्ठिनः शक्तौ ॥

परमेष्वासः । पुं० उत्कृष्टधनुषि ॥ त्रि० महाधनुर्धरे ॥

परम्परः । पुं० मृगविशेषे ॥ तनयस्य प्रपौत्रे इतिमेदिनी ॥ प्रपौत्राद्यापि ति हेमचन्द्रः ॥

परम्परा । स्त्री० परिपाट्याम् । अनुक्रमे ॥ वधे । हिंसायाम् ॥ अन्वये । सन्ताने ॥ परम्पराशब्दोऽव्युत्पन्नं प्रातिपदिकम् ॥ यद्वा । परंपिपर्ति । पृ० । अच् । खपचनारहरेतिवत् । सतपुरुषेकृतीति वहुलग्रहणादमोलुक् । पू० ॥

परम्पराकम् । न० दृष्ट्यांपशुघाते । शमने । प्रोक्षणे ॥ परम्परायाअकनं । अक० । भावेघञ् । अस्तीर्घञ् वा ॥ यद्वा । परमतिशयेऽव्ययम् । परंपरः । श्रेष्ठः । काकोऽस्मात् ॥

परम्परीणः । त्रि० परम्पराप्राप्ते ॥ परांश्चपरतरांश्चअनुभवति । परोवर परम्परेत्यादिनाखः । प्रकृतेः पर म्परभावोनिपातनात् ॥ खच्मीपरम्परीणांत्वंपुत्रपौत्रीणतांनयेतिभट्टिः ॥

परशीयम् । न० पर्वणि ॥ पर्वन्तरसि ॥ पर्णसिराणाम् ॥ पुस्तकान्तरे ॥ इतिहेमचन्द्रः ॥

परकः । पुं० केशराजे । भ्रङ्गरोदरे ॥

परलोकः । पुं० स्वर्गादिलोकान्तरे । प्रज्जनि ॥ परश्चासौलोकश्च ॥

परलोकगमः । पुं० मृत्यौ ॥

परवचनम् । न० परस्यव्याजेनवशीकरणे ॥ परस्यवचनम् ॥

परवान् । त्रि० पराधीने ॥ परः सामीप्यमस्यास्ति । तदस्यास्त्यस्मिन्निति मतुप् । मादुपधायाश्चमतोर्वोऽ यवादिभ्यइतिवत्वम् ॥

परवशः । त्रि० अमुतन्त्रे । परायत्ते

। पराधीने ॥ परस्ववश : ॥
परवश्य : । त्रि॰ पराधीने । परस्याधीनताङ्करे ॥
परवाणि : । पुं॰ धर्माध्यक्षे ॥ वत्सरे । वर्षे ॥ कार्त्तिकेयस्यवाहने ॥
परवैराग्यम् । न॰ फलभूतवैराग्ये ॥ तत्परमपुरुषख्यातेर्गुणवैतृष्ण्यमितियोगसूत्रम् ॥ १६ ॥ तत् वैराग्यं परमुत्कृष्टम्प्रथमंवैराग्यं विषयविषयम् । द्वितीयन्तुगुणविषयमुत्पन्नगुणविवेकख्यातेरेवभवति । निरोधसमाधेरनुकूलत्वात् । पु॰ भोज : ॥ सम्यक्चागमसमाधिपाटवेन गुणत्रयात्मिकात् प्रधानाद्विविक्तस्य पुरुषस्यख्याति : साक्षात्कारस्तस्मात् तत्तदशेषगुणत्रयव्यवहारेषु वैतृष्ण्यं यद्भवतितत्परंश्रेष्ठं फलभूतंवैराग्यम् । तत्परिपाकनिमित्ता च्चित्तोपशमपरिपाकादविलम्बेनकैवल्यमिति ॥ परस्तद्वैराग्यंच ॥ संसारमेवनिस्सारंदृष्ट्वासारदिदृक्षया प्रव्रजन्त्यकृतोद्वाहा: परंवैराग्यमाश्रिता : इति विविदिषासन्न्यास परंवाक्यम् ॥
परव्रत : । पुं ॰ धृतराष्ट्रे ॥
परशम् । न॰ रत्नविशेषे ॥
परशव्यम् । त्रि॰ परशवेहिते । उगवादिभ्योयत् ॥
परशु: । पुं॰ सुधितौ । कुठारे ॥ परं शृणाति ॥ शृहिंसायाम् । आङ्परयो : खनिशृभ्योडिच्चेतिकु : ॥
परशुधर : । पुं॰ गणेशे । लम्बोदरे । धरति । धृञ्॰ । अच् । परशोर्धर: । त्रि॰ परशुधारिणि ॥
परशुराम : । पुं॰ जामदग्न्ये । भार्गवे ॥ अवतारेषोडशमेपश्यन् ब्रह्मद्रुहोन्नृपान् । त्रि : सप्तकृत्व : कुपितोनि : क्षत्रामकरोन्महीम् । परशुनारामः । मर्यने तांशुगादाव तीर्थ : । अस्योत्पत्त्यादिकमुक्तंकालिकापुराणे ८५ अध्याये यथा । मार्कण्डेयउवाच अथकालेव्यतीतेतु जमदग्निर्महातपा : । विदर्भराजस्य सुतांप्रयत्नेन जितांस्वयम् । भार्यार्थे प्रतिजग्राह रेणुकांलक्षणान्विताम् । सातस्मात् सातस्मात् सुषुवेपुत्रांश्चतुरो वेदसंमताम् । कृपखन्स्तुमेपञ्च विष्णुंविष्णुसुतया । पश्चात्तस्यां स्वयंतु सोभगवान्मधुसूदन : ॥ कार्त्तवीर्यवधायाशुशक्राद्यै : सकलै : सुरै: । याचित : पञ्चम : सोभूत्तेषांरामाह्वयस्तुय : ॥ भारावतरणार्थाय जात . परशुनासह । सहज : परशुस्तस्य नंजहातिकदाचन ॥ अयंनिजपितामह्या चरुभुक्तिविपर्ययात् । ब्राह्मण : क्षत्रियाचारोरामोभूत् क्रूरकर्मकृत् ॥ सवेदान खिला

न्त्राच्चाधनुर्वेदांश्चसर्वश : । स्वता तात्क्रतत्क्षत्योभूतवेदविद्या विशारद इति ॥ विशेष : पाद्मोत्तरखण्डे द्र ष्टव्य : ५० अध्याये ॥

परशुरामक : । पुं० भृगूणांपती । जा मदग्न्ये ॥ सूर्यक : ॥

परश्वध : । पुं० कुठारे । आरसा० धू० भा० । परश्वधनस् । टुमोश्वि ० । अन्यं क्षधीसिड : । परश्वधस रिं । घेट् ० । आतोनुपेतिक : ॥

परश्वान् । पुं० दन्दशूकविशेषे ॥

परश्व : । अ० श्व : परेऽह्नि । आगामिदि नात्परदिने । परसों भू० भा० ॥ परहतत्श्वश्च । श्व:परंवा । राजद- न्तादि : ॥ अतिक्रान्ते पूर्वतरेदिने परश्वोभाव इति प्रयोगोगौण : ॥

परसंज्ञक : । पुं० आत्मनि ॥

परस्तात् । अ० परस्तोर्थे ॥ परस्मिन् परस्याम्परस्मात्परस्या:पर:परावा थंसश्चागतोरमणीयंवा । विभाषा परावराभ्यामितिपक्षे अस्ताति: ॥

परस्परम् । अ० अन्योन्यार्थे ॥ परस्परं विप्रानमंति । कर्मव्यतिहारेसर्वना मोद्वेवाच्ये । असमासवद्भावे पूर्वप दस्यसुप : सुर्वक्तव्य : । कस्का दित्वात्विसर्जनीयस्यस : ॥

परस्परपराहृतम् । न० सन्दुखे । क्लिष्टे ॥ विरुद्धे वाक्ये । मातामेवन्ध्येति विरुद्धार्थवचने ॥ परोघाति । अन्ते : कर्मणिक्त : । परस्परेणपराहृतम् ॥

परस्मैपदम् । न० तङानौ वर्जयित्वा लादेशेषु तिप्० तस् झि । सिप् थस् थ० । मिप् वस् मस् एतेषु० शतृक्वसु० इत्येतेषां च ॥ तादर्थ्ये चतुर्थीति योगविभागात् समास : ॥ परस्मैइतिचतुर्थ्याअलुक् ॥

परस्वध : । पुं० परश्वधे । कुठारे ॥ परस्वंदधाति । काष्ठदण्डधार कत्वात् । सुधाञ्० । आतोनुपेति क : ॥

परा । अ० विमोचे ॥ प्राधान्ये ॥ प्राति लोम्ये ॥ धर्षणे ॥ आभिमुख्ये ॥ भृशार्थे ॥ विक्रमे ॥ गतौ ॥ वधे ॥ इ० मेदिनी ॥ अपिच । वधेग तौ दर्शनेच विक्रमाभि मुखेभृशे । अधीनमोक्षणप्रातिलोम्यकेषु परास्म ृत : ॥ यथा । वधेपराहत : । गतौ परागत : । दर्शने पराहृष्ट : । विक्र मे पराक्रान्त : । अभिमुखेपरावृत्त : । भृशे पराजित : । अधीने पराधी न : । मोक्षणे पराकृत : । प्राति लोम्ये पराङ्मुख इति ॥

परा । स्त्री० वन्ध्याकर्कोटक्याम् ॥ नाभिरूपमूलाधारात् प्रथमोदितना दरूपवर्णे ॥ मूलाधारात् प्रथमसु दितोयस्तुतार : परार्ख्य : ॥ इत्य लङ्कारकौस्तुभे १ किरण : ॥

पराक : । पुं० खड्गे ॥ क्षुद्रे । ॥ रोग

विशेषे । जन्तुभेदे ॥ व्रतविशेषे ॥ यथाह मनुः । यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् । पराको नाम कृच्छ्रोऽयं सर्वपापापनोदन इति ॥ द्वादशाहोपवासेन पराकः सर्वपापहा । एकैकं ग्रासमश्नीयात् वर्धयेच्छुक्ले कृष्णे च ह्रासयेदिति म॰ पु॰ ॥ पराकेण पक्षेण वः । पराकस्य प्राशाम परम पक्षस्य तुल्य स्यात् ॥

पराकरणम् । न॰ पराक्रियायाम् । प-राङ्मुखकरणे ॥

पराकृत : । त्रि॰ प्रत्याख्याते । परा करि । कृञ् । क्त :

पराक्पुष्पी । स्त्री॰ अपामार्गे ॥ परा क्षिपुष्पाण्यस्या ॥

पराक्रम : । पुं॰ विक्रमे ॥ सामर्थ्ये ॥ सहसि । बले । शौर्ये ॥ उद्योगे ॥ अ-भियोगे ॥ निष्क्रामत्वाविति यम् ॰ ॥ पराक्रमणम् ॰ पराक्राम्यति अनेन वा । क्रमु॰ । हलश्चेति॰ घञ् । नोदा त्तोपदेशस्येति न वृद्धिः ॥ नसामर्थ्य गुणाय कल्पते नदानमर्थोपचिते प्रवर्तते । नभेदसाध्यावलदर्पितात्म नाः पराक्रमस्त्वेवममेश्वरोचते इति रामायणम् ॥

पराक्रिया । स्त्री॰ पराकरणे ॥ तथाचा र्षवेदान्तविदः । यो विप्रजातिमेव न्यादन्यदगृह्यभिमन्यते । कौशल्या सुतं पराकुर्यात् विप्रजातिपराङ्मुख म् ॥ ब्राह्मणोऽहमिति भ्रान्त्या हस्य तिसत्वादिषु । महतोलभते जन्मस्थ चैवास्य पराक्रियेति ॥

पराग : । पुं॰ सुमनोरजसि । कुसुमरेणौ ॥ धूलौ ॥ स्नानीये ॥ गिरिभेदे ॥ विख्याते ॥ उपरागे ॥ चन्दने ॥ परागच्छति । गम्॰ । अन्येष्वपीति डः ॥ स्वच्छन्दगमने इति शब्द॰ ॥

परागति : । स्त्री॰ मोक्षे ॥ यद्गत्वा न नि वर्तन्ते सैव प्रोक्ता परागतिः ॥ स्वर्गे ॥ कर्मफले ॥ प्रकृष्टायां गतौ ॥ परा चासौ गतिश्च ॥

परागृध्नी । त्रि॰ पराभिध्यामे ॥

पराङ्गद : । पुं॰ शिवे ॥

पराङ्गव : । पुं॰ समुद्रे ॥

पराङ्मुख : । त्रि॰ विमुखे । प्राचीने ॥ पराङ्चति॰ । अनभिमुखो भवति । अञ्चु॰ । ऋत्विगित्यादिना क्विन् । पराक्मुखमस्य ॥

पराच् । त्रि॰ प्रतिलोमगमनाश्रये ॥ परा॰ अञ्चति । अञ्चु ॥ क्विन् ॥ पश्चादर्थे ॥

पराचित : । पुं॰ कोकिले ॥ त्रि॰ । औदासीन्येन परपुष्टे । परिस्कन्दे । परैश्चितः ॥ परैरेवाचितः । चि ञ्॰ । क्त :

पराचीन : । त्रि॰ विमुखे । पराङ्मुखे ॥ पराञ्चति अनभिमुखो भवति ।

अस्य० । कर्त्तिगादिनाक्विन् ततः स्वार्थेविभाषाष्ट्ठे रदिक् स्त्रियामिति ख : ॥

पराजय : । पुं० रणेभंगे । पराभवे । पराजयनम् ॥ विश्वभिभवे । पराजयनम् एरच् ॥ सर्वेचजयमन्विच्छेत् पुत्रादेकंपराजयमित्यत्रोक्षार : ॥

पराजित : । त्रि० पराभूते । निर्जिते । जिते ॥ पराजीयतेस्म परैराजौ यत्तेसावा । विश्वभिभवे । क्त : ॥ पराजिते ॥ परेणपाजीयतेस्म । जि० । क्त : । यद्वा । परेणाभाव : येष गणितमस्य । ता० । इतच् ॥

पराङ्ग : । पुं० परस्मार्थे ॥

पराङ्गीनम् । न० पश्चिम : पराङ्गत्यगमनेे ॥

परात्पर : । त्रि० श्रेष्ठतमे ॥ विश्वात्मनि॥ परात्वस्मादेरमिपर: श्रेष्ठ: । दूरार्थत्वात् पञ्चम्या: स्तोकादिभ्यश्चत्यलुक् ॥

परात्प्रिय : । पुं० तृणविशेषे ॥ त्रि० प्रियोत्तमे ॥

परात्मा । पुं० प्रत्यगभिन्ने ब्रह्मणि ॥ उच्यायोनात्मन : सर्वान्वयव्यतिरेकत: । प्रत्यक्प्रधानसाक्ष्यानिवात्मानमवेत्परम् ॥ परश्चासावात्माच । परसात्मा ॥

परादन: । पुं० पारसीकाश्वे ॥ इति त्रिकाण्डशेष : ॥

पराधीन : । त्रि० परवशे । परतन्त्रे । नाथवति ॥ परस्मिन्नधि सप्तमीशौण्डैरितिसमास : । अषडक्षेतिख : ॥ स्वाधीनवृत्ते : साफल्यं नपराधीनवृत्तिता । येपराधीनकर्माणोजीवन्तोपिचतेमृता : । इति गरुडपुराणे ११३ अध्याय : ॥

परानन्द: । पुं० निरतिशयसुखस्वरूपे ॥ परश्चासावानन्दश्च ॥ परानन्दावाप्तिस्रागमाचार्यात्मानुभवप्रत्ययश्च यस्यैकविषयत्वेनभवति । यथाहुरागमविद : । शास्त्राद्गुरोर्गिरोवाक्यं तृतीय : स्वात्मनिश्चय : । निरन्तरानुसन्धानंपरानन्दाभिहितश्च इति ॥

परानसा । स्त्री० चिकित्सायाम् ॥

परान्तकाल : । पुं० देहपातावसानेपरस्यकार्यब्रह्मण : परान्तकाल : विनाशकाल : ॥

परान्नम् । अन्यस्वामिकभक्तपिष्टकादौ ॥ परस्य‚ष्ठान्नं ॥ परान्नं परदारांश्च निन्द्यं धर्मरतस्त्यजेत् ॥ त्रि० । परपिण्डादे । परान्ने भोपजीविनि ॥ परस्यान्नम् । परान्नं नित्यमस्य । अर्शआदिभ्योऽच् ॥

परापम् । त्रि० परेपि ॥ परागताआपोऽस्मिन् । अवर्णान्तादृ तिपद्ये चपर्दृद्भाव : ॥

परापरम् । न० परूषके ॥ त्रि० परस्मिन्नपरस्मिंश्च ॥

परापरगुरुः । पुं॰ गुरुविशेषे ॥ पार्व त्यां ॥

परापरज्ञः । त्रि॰ विद्याविद्याविभाग ज्ञे ॥

पराप्रकृतिः । स्त्री॰ अपराप्रकृतेर्भिन्ना यांप्रकृतौ ॥ अपरेयमितस्त्वन्यां प्रकृतिंविद्धिमेपराम् । जीवभूतां महाबाहोययेदंधार्यतेजगत् ॥ चेत नात्मिकायाम्॰ पराशक्तौ ॥

पराभवः । पुं॰ तिरस्कारे । न्यक्कारे । तिरस्क्रियायाम् । परिभवे ॥ यथा । विश्वंप्रलयमंदिवंजगतः प्रभवाप्ययम् । भर्गंतिपेपुष्करार्च नतेयान्तिपराभवमिति ॥ आत्मप्र ख्यापथव्यापकमेवपराभव इति विवरणकारः ॥ विनाशे ॥ परा जये ॥ विपदि ॥ चत्वारिंशत्त ङ्ख्यसंवत्सरे ॥ यथा । पार्थिवेन्द्रै मसैन्यैश्च समस्तैः खण्डमण्डली । प्रपीड्यन्ते जनाः सर्वेभयभीताःप राभवे ॥

पराभिध्यानः । त्रि॰ परागृद्धिमिनि ॥

पराभूतिः । स्त्री॰ पातालादिकला न्ताधुवर्त्ति विविधैश्वर्य्य सम्पन्नत त्तद्भुवनाधिपत्ये ॥

पराभूतः । त्रि॰ जिते । प्राप्ताभि भवे । पराजिते । पराभूतेश्च । भू॰ । क्तः ॥

परामर्शः । पुं॰ विवेचनायाम् । युक्तौ । वितर्के । विमर्शने । तर्के । ऊहे ॥ स्मरणज्ञाने ॥ व्याप्तिवि शिष्टपक्षधर्मताज्ञाने ॥ यथा । व्या प्यस्यपक्षधर्मतधीः परामर्शउच्य ते । अस्यार्थः । व्याप्तिविशिष्टस्य पक्षेणसहवैशिष्ट्यावगाहिज्ञानमनु मितिजनकम् । तच्चव्याप्यः पक्षे इतिज्ञानम् । पक्षोव्याप्यवान् इति ज्ञानंवा । इति सिद्धान्तमुक्तावली ॥ सचानुमतौ व्यापारः । यथा । व्यापारस्तुपरामर्शः करणंव्याप्तिधी र्भवेत् । अस्यार्थः । अनुमायामनु मितौव्याप्तिज्ञानंकारणंपरामर्शोव्या पारः । तथाहि । येनपुरुषेणमहा नसादौधूमेवह्नेर्व्याप्तिर्गृहीतापश्चा त्सएवपुरुषः क्वचित्पर्वतादौ अवि च्छिन्नमूलांधूमरेखांपश्यति तदनन्तरं धूमोवह्निव्याप्य इत्येवंरूपं व्याप्ति स्मरणंतस्यपुरुषस्यभवतिपश्चाद्वह्नि व्याप्यधूमवान्पर्वतइतिज्ञानंभवति सएवपरामर्श इत्युच्यते । इतिसि द्धान्तमुक्तावली ॥

परामृतम् । न॰ गोघृते ॥ वर्षणे ॥

परामृष्टः । त्रि॰ सम्बद्धे । सम्बन्धयुक्ते ॥ कृतपरामर्शे ॥ विवेचिते । परा मृश्यते । मृश॰ । क्तः ॥

पराम्बा । स्त्री॰ पराम्बिकायाम् । साम्यावस्थमायोपाधिक ब्रह्मरूपि ण्याम् ॥

परायण : । त्रि० अभीष्टे ॥ तत्परे ॥ आश्रये ॥ यथा । शुद्धाभवन्ति यदन्त्येऽन्त्यजाःकृष्णपरायणाद्गृति । न०आसक्तवचने ॥ परमुत्कृष्टमय नंस्थानमस्य । ब्रह्मणि । परमुत्कृष्टं पुनरावृत्तिरहितंचतदयनंमुक्तिप्राप्यंस्थानंचे तिपरायणम् । पूर्वपदादितिणत्वम् ॥

परायत्त: । त्रि० पराधीने ॥

परारि अ० पूर्वतरवर्षे गततृतीयवर्षे ॥ पूर्वतरे मत्सरेइत्यर्थेसद्यःपरुत्परार्यैषमइत्यादिनापूर्वतरस्यपरभावः आरिचसंवत्सरे ॥

परारि. । त्रि० मरणशी ॥

परारित्ना त्रि० पूर्वतरवत्सरसम्बन्धिनि ॥ परारिभवइत्यर्थेचिरपरुत् परारिभ्यस्त्नोपसंख्या: ॥

परारु: । पुं० कठिल्ले । कारवेल्ले ॥

परारुक: । पुं० अश्मनि ॥

परार्थानुमानम् न० परप्रतिपत्त्यर्थेऽनुमानवचने । यत्स्वयमेवधूमादग्निमनुमायपरप्रतित्पत्त्यर्थं पञ्चावयवंवाक्यंप्रयुङ्क्तेतस्मिन् ॥ यथा । पर्वतोवह्निमान् धूमात्योयोधूमवान्स सोऽग्निमान् यथामहानसम् तथा चायम् तस्मात्तथेति । अनेनप्रतिपादितात्लिंगात्परोऽप्यग्निंप्रतिपद्यते ॥

परार्द्धम् । न० ब्रह्मणआयुषोऽर्द्धे ॥ यथा । निर्जीनतस्मानेनआयुर्वर्षशतंस्मृतम् । तत् पराख्यं तदर्द्धञ्चपरार्द्ध मभिधीयते ॥ द्र० वि० पुं० ॥ हृदये ॥ परस्यब्रह्मणोर्द्धं स्थानम् । तस्मिन् हिपरब्रह्मोपलभ्यते ॥ दशमध्यसंख्यायाम् । **** । १००००००००००००००००० ॥ स्थानात्स्थानन्दशगुणमेकस्माद्गणितेद्विज । ततोऽष्टादशमेभागेपरार्द्धमभिधीयते ॥

परार्ध्य: । त्रि० प्रधाने । श्रेष्ठे ॥ परस्मिन्नर्द्धे भव : ॥ अर्द्धाद्यत् । पराधराधमोत्तमपूर्वाच्च ॥

परावतम् । न० परूषके । फालसा इ० भा० ।

परावर : त्रि० परमात्मनि । ब्रह्मणि । सर्वात्मके ॥ परंहिरण्यगर्भपदम् अवरंयस्मात् ॥ यथा । परंहिरण्यगर्भादिअवरंमनुष्यादि परञ्चअपरञ्चपरावरम्० सर्वात्मकंब्रह्म्यर्थः ॥

परावर्त्त: । पुं० परिवर्त्ते । विनिमये ॥

परावह : । पुं० वायौ : षष्ठस्कन्धे ॥ ईदृक्ष : पुरुषोन्यादृक् यमितासमदृक् तथा । धामभ्रमतिदृक्षश्च त्यासर्पे : परावह : ॥ सप्तवायुन्तर्गतसप्तमवायौ ॥ सतुपरिवहवायोरूर्द्ध स्थित : ॥

परावित्त: । पुं० कुबेरे ॥ त्रि० । परै:शत्रुभिराविद्धे । अविद्धे च ॥

पराविद्या । स्त्री॰ ब्रह्मविद्यायाम् ॥ यथा । परांविद्यांशृणुमुनेययाब्रह्मावगम्यते । यत्तद्रहस्यमयाह्य मगोचरणं ध्रुवम् । अपद्यु : श्रोत्रंतद पाणिपादंनित्यं विभुंसर्वंगतं सुसूक्ष्ममिति ॥

परावृत्त : । अपावृत्त ॥

परावृत्ति : । स्त्री॰ निवृत्तौ ॥ उपलब्धे ॥

परावेदी । स्त्री॰ बृहत्याम् ॥

पराशक्ति: । स्त्री॰ पराप्रकृतौ ॥ पराख्यायाम् ॥ यथाहजनमेजय प्रति व्यास : । यदाविभूतिमत्सत्त्वं श्रीमदूर्जितमेवषा । तत्तदेवावगच्छत्वं पराशक्त्यंशसम्भवम् । एतैचान्ये चराचरा : पराशक्त्युपासका: । संसारतरुमूलस्य कुठारा अभवन्नृपेति ॥ पराघासौशक्तिश्च ॥

पराशर : । पुं॰ व्यासमुनेर्जनके । शक्तिमुने : पुत्रे ॥

पराश्रय : । त्रि॰ अन्यावलम्बे ॥ परस्याश्रयोयस्य ॥

पराश्रया । स्त्री॰ वृक्षोपरिजातलता विशेषे । वृन्दायाम् । वृक्षादन्याम् ॥

परासनम् । न॰ मारणे । वधे ॥ असु॰ । ल्युट् ॥

परासिसु : । त्रि॰ परासितुमिच्छौ ॥ अस्यते , सन्नन्तादुप्रत्यय : ॥

परासु : । त्रि॰ मृते ॥ परागताअसवो यस्मात् ॥

परासुता । स्त्री॰ मृतत्वे ॥ निद्रापरवशतायाम् ॥

परास्कन्दी । पुं॰ चौरे ॥ परान्आस्कन्दितुंशीलमस्य । स्कन्दिर्॰ । सुपी णिनि : ॥

परास्त : । त्रि॰ अपास्ते । अवक्षाते । निरस्ते । पराजिते ॥ परास्यतेस्म । असु॰ । क्त : ॥

पराहत : त्रि॰ दूरीभूते ॥ ताडिते पराहन्यतेस्म । हन॰ । क्त: ॥

पराहन्ता । स्त्री॰ समष्ट्यहङ्कारे । पराहन्तारूपयहङ्कारत्वम्भि । योवै दाऽहंब्रह्मास्मीति वृत्तिरूपतम : । तथाच सृष्टिसमयेव : प्रथमोभावो ब्रह्मणस्यपरायाणोरूपोऽयमस्मीत्युत्पन्न : पराहन्तारूप : सोऽहङ्कार : स देवसोम्यं दमयवासी दिव्यलोकात् सतउत्पन्न हरिनीलकण्ठ : ॥

पराह्य : । पुं॰ अपराह्ण ॥ परमस्य तदहश्चेतिविग्रह : ॥

परि । अ॰ सर्वतोभावे ॥ वर्जने ॥ व्याप्तौ ॥ शेषे ॥ कृत्यभूताख्याने ॥ भागे ॥ वीप्सायांस् ॥ आलिङ्गने लक्षणे ॥ दोषाख्याने ॥ निरसने ॥ पूजायाम् ॥ व्याप्तौ ॥ भूषणे ॥ उपरमे ॥ शोके ॥ सन्तोषभाषणे ॥

परिकथा । स्त्री॰ वाङ्मयभेदे ॥ यथा । अथवाङ्मयभेदा : सुयस्तुत

राडकथाकथा। आख्यायिकापरिक्ष घेति। त्रिकाण्डशेषः॥

परिकम्पः। पुं॰ भये॥ कम्पे॥ परितः कम्पः॥

परिकरः। पुं॰ सङ्घे, गणे॥ पर्यङ्के॥ परिवारे॥ वस्त्रादिनाप्रगाढगात्रिकाबन्धे॥ यथा। सकृदुच्चरितं येन हरिरित्यक्षरद्वयम्। बद्धः परिकरस्तेन मोक्षाय गमनं प्रतीति॥ युद्धोचितपरिधाने॥ समारम्भे॥ विवेके॥ सहकारिणि॥ यत्ने॥ अलङ्कारवि॰॥ यथा॥ विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः॥ अर्थाद्विशेष्यस्य। उदाहरणम्। यथा। महौजसो मानधना धनार्चिताधनुर्भृतः संयतिलब्धकीर्त्तयः। न संहतास्तस्य नभिन्नवृत्तयः प्रियाणिवाञ्छन्त्यसुभिः समीहितुम्॥ यद्यप्यपुष्टार्थस्य दोषतभिधानात्तन्निराकरणेनपुष्टार्थस्वीकारः कृतः तथाप्येकनिष्ठत्वेनबहूनांविशेषणानामेवमुपन्यासेवैचित्र्यमित्यलङ्कारमध्येगणितः॥ परिक्रीयते। कृञ्विक्षेपे। ऋदोरप्॥ परिक्रियतेऽनेन। पुंसीतिघः॥

परिकर्त्तिका। स्त्री॰ गुदेकर्त्तनवत्पीडायाम्॥

परिकर्त्ता। पुं॰ अनूढज्येष्ठाकनिष्ठाविवाहस्ययाजकेऽनूढज्येष्ठत्वम्॥

परिकर्म्मा। पुं॰ सेवके। परिचारके॥ इतिरत्॥ न॰। अङ्गसंस्कारे। कुङ्कुमादिनाशरीरशोभाधायककर्म्मणि॥ परिमलवर्जनार्थाक्रियापरिकर्म्मस्नानोद्वर्त्तनादीत्यर्थः॥

परिकर्म्मी। त्रि॰ सेवके॥ इ॰वै॰॥

परिकल्पितः। त्रि॰ कृते॥

परिकल्प्यः। त्रि॰ परिकल्पितुंयोग्ये॥

परिकाङ्क्षितः। त्रि॰ तपस्विनि॥ इतिशब्द॰॥

परिकीर्णः। त्रि॰ व्याप्ते॥ परितः कीर्णः॥

परिकूटम्। न॰ पुरद्वारकूटके। नगरद्वारकूटके। हस्तिनखे। इयन्ते॰ इ॰ध॰ भा॰॥

परिक्रमः। पुं॰ विहारे। क्रीडार्थंपदभ्यांसञ्चरणे॥ मदविणे। परिक्रमः॰अ॰भा॰परिक्रमणम्। क्रमु॰। घञ्॥ नोदात्तोपदेशस्येतिनवृद्धिः॥

परिक्रमसहः। पुं॰ छागले॥

परिक्रयणम्। न॰ नियतकालंभृत्यास्वीकारे॥ परितःक्रयणम्॥ क्रयवास्यसमीपंवा॥

परिक्रिया। स्त्री॰ परिसर्पे। परिखादिनावेष्टने॥ परिकरणम्। कृञः शच्। रिङ्शयग्लिङ्क्षु॥

परिक्रान्तः। त्रि॰ परिश्रान्ते॥

परिचित्। पुं॰ नृपान्तरे॥ अभिमन्युपुत्रे॥ अश्वमेधे॥ परितोदुरितंक्षी

यतियेनेतिव्याख्यानात् ।

परिक्षिप्तः । त्रि० जलादिनाऽवच्छिन्ने । परिखादिनावेष्टिते । निवृते ॥ परितःक्षिप्यतेस्म । क्षिप० । क्तः सर्वतोभावेनक्षेपयुक्ते ॥

परिखा । स्त्री० खेये । राजधान्यादीनांखातरूपवेष्टने । खाई० इ० भा० । यथामाघम् । प्रक्षेपपरिखामानं यतश्चसंप्रयतस्तकम् । परितःशिविरा वास्तुगम्भीरदृढहस्तकम् ॥ सद्धर्म-सपूर्वकसैवपरिखाहारप्रोषितम् । गम्भीरगम्यमिवस्तागम्यमेवसुखेनचेति ॥ परितःखन्यते० परित.खाता-वा । अन्येभ्योपीतिडः ॥

परिखातः पुं० गर्ते ॥

परिख्यातः । त्रि० विख्याते ॥

परिगणितः । त्रि० सर्वतोभावेनगण नायुक्ते ॥

परिगत : । त्रि० प्राप्ते । विस्मृते । ज्ञाते । चेष्टिते । गते । वेष्टिते ।

परिगृह्या । स्त्री० नार्याम् ॥

परिग्रह : । पुं० परिजने । पुत्रमित्र कलत्रादौ । यथा । क्वचिदुपहृतिः कर्ताऽमीभिःकृताक्रियतेथवानघमु यिमवल्लेरेपुंमांसुखायपरिग्रहाः । दधतिविरहमर्मच्छेदतदर्थमपार्थकं तदपिविपुलायासाःसौर्दल्यहोयतः । भावः । पत्न्याम् ॥ स्वीकारे । मूले । मूले । शापे । शपथे । राहुग्रस्त-सूर्यचन्द्रस्वीकारे । प्रतिग्रहे । सैन्यपश्चाद्भागे । सङ्कटे ॥ शास्त्रऽनिषिद्धमार्गोपदेशयाचानिर्याश्चकाद्धिकभोगसाधनस्वीकारे । शरीरधारणार्थमस्य कर्तव्ये पिपरीपनीतवाद्योपकारणे ॥ परिग्रहातीपरिग्रहणमपरिग्रह्यातिवा यस्मद्विस्यपृथिभागायहङ्कर्तव्या । परिग्रह्यतेऽमिनेतिकरणव्युत्पत्तेर्हले॥

परिघः । पुं० योगविशेषे । तत्रजात स्यफलंयथा । अस्पतिकालेपरिघोय दिस्याद्ररक्तदावंशकुठारवत्स्यः । च सत्यसाधीयमयाविशीभःस्वल्पानुभोक्ताविजितारिपक्षः । लोहांगी० इ० प्र० अस्त्रविशेषे । परिघातने । लोहबद्धलगुडे । अर्गले । घाते । परिघाते । मुद्गरे । शूले । कलशे-पतयाःकाचघटेगोपुरस्त्रनोरिति शब्दरत्नावली । परिहननम् । परिहन्यतेऽनेनवा । हन० । परी-घश्चस्यप् । घादेशश्च ॥

परिघातः । पुं० अस्त्रे ॥ हनने ॥ परि तोघात : ॥

परिघातन : । पुं० परिघे । लोहबद्ध लगुडे ॥ लोहबद्धयष्ट्याम् ॥ परि तोघातद्रव्यमेन । ल्युट् ॥ । न० सर्वतोभावेनहनने ॥

परिघोष : । पुं० निनादे । शब्दे ॥ अवाच्ये ॥ मेघध्वनौ ॥ परितो घोषोऽस्या ॥

परिचयः। पुं० संस्तवे। विशेषेणज्ञाने ॥ परचो दू०भा० ॥ परिसमन्ताच्चयनम्। चिञ्। एरच् ॥ अभ्यासे ॥

परिचरः। पुं० युद्धकालेपरप्रहाराद्रथरक्षके ॥ परिविस्रौ। सेनायांराज्ञोदण्डनायके ॥ प्रयाणेसामन्तस्वोपमर्षे द्रष्टव्ये ॥ रथगजादेश्चक्रपादादिरक्षकेइ०केचित् ॥ सेवके ॥ परितश्चरति। पचाद्यच् ॥

परिचरणम्। न० शय्यादिशुश्रूषायाम् ॥

परिचर्य्या। स्त्री० सेवायाम्। उपासने। शुश्रूषायाम् ॥ परिचरणम्। चर०। परिचर्या परिसर्येतिशोयक्चनिपात्यते ॥

परिचायकः। पुं० समूहे ॥

परिचाय्यः। पुं० यज्ञाग्नौ। समूहे। उपचाय्ये ॥ परिचीयते। चिञ्०। अग्नौपरिचाय्येतिसाधुः। अग्निरिहनञ्चसन्तः। किन्त्वग्निधारणार्थमिष्टकाचयनेननिर्मितंस्थलम्। तस्मिन्नभिधेये ॥

परिचारः। पुं० परिचरणे। परिचरं घञ् ॥

परिचारकः। त्रि० भृत्ये। दासेरे। दासे। सेवके। परिचरति। चर०। ण्वुल् ॥

परिचारिणी। स्त्री० परिचरणशीलायाम्। परिचरणश्रितायाम्। परिचरतुतीचरेर्णिनिः। ङीप् ॥

परिचाय्यः। त्रि० सेव्ये ॥

परिचितः। त्रि० परिचयविशिष्टे। ज्ञाते। संस्तुते ॥

परिचेयः। त्रि० परिचयनीये। परिचेतव्ये ॥

परिच्छदः। पुं० परिजने। योध्यवर्गे ॥ वसनाभरणादौ। गृहोपकरणे ॥ युद्धोपकरणे ॥ आच्छादने ॥ परिच्छाद्यतेऽनेन। छद०। पुंसीतिघः। छादेर्घेद्व्युपसर्गस्येत्युपधाह्रस्वः ॥

परिच्छन्दः। पुं० परिच्छदे ॥

परिच्छन्नः। त्रि० परिच्छदविशिष्टे ॥ सर्वतोभावेनाच्छादिते। संवृते ॥

परिच्छित्तिः। स्त्री० परिमाणे। इयत्तायाम् ॥

परिच्छिद्य। अ० निश्चित्य ॥

परिच्छिन्नः। त्रि० परिच्छेदविशिष्टे। सावधिप्राप्ते। परिमिते। एकदेशवर्तिनि ॥ परिच्छिन्नत्वं त्रिविधम्। देशतःकालतोवस्तुतश्चेतिभेदात्। तत्रदेशान्तरनिष्ठाभावप्रतियोगित्वं कूपदेशस्यपरिच्छिन्नत्वं। कालान्तरनिष्ठाभावप्रतियोगित्वं कालतःपरिच्छिन्नत्वम्। वस्त्वन्तरनिष्ठभेदप्रतियोगित्वलक्षणंवस्तुपरिच्छिन्नत्वमिति ॥

परिच्छेदः। पुं० ग्रन्थसन्धौ। ग्रन्थस्य विच्छेदे। यथा सर्गोवर्गः परिच्छे

न्तरापत्तिः परिणामः ॥

परिणामदर्शी । त्रि० चरमकालप्रेक्षि-णि । पश्चाद्दर्शिनि । विषयादेः शेषद्रष्टरि ॥

परिणामवादः । पुं० वादविशेषे ॥ नवीनानामरूपप्रपञ्चभेदेनपरिणमतेऽस्तित्वेनोऽस्वनादिभावेन । अतएव प्राकृतरूपस्यसत्त्वस्यापरित्यागः प्रपञ्चेषु उदञ्चनादावित्यक्तितयास्यसत्यर्थः ॥ परिणामवादस्यसाङ्ख्यमतप्रसिद्धत्वात्तन्मतप्रदर्शनायाह ॥ यथा । गुणसाम्यं प्रधानंस्यात्त्रिगुणाःसत्त्वंरजस्तमः । सुखदुःखमोहरूपंदृश्यतेजित्स्फुटं जगत् ॥ प्रधानंस्यान्महान् सोऽहङ्कारोऽसौषोडशात्मना । आयतेपञ्चतन्मात्रपञ्चकाख्येकादशापियत् ॥ तन्मात्राण्यपिभूतानिजायन्ते तत्सद्भाया । चतुर्विंशतिरेतानितत्वानि पञ्चविंशतिः तदेवकार्यमुत्पन्नः पूर्वंकारकरूपकम् । आविर्भावतिरोभावौजन्मनाशावुदीरितावितिः ।

परिणामशूलः । पु० रोगविशेषे ॥ तस्योत्पत्तिर्यथा । स्वैर्निदानैःप्रकुपितो वायुः सन्निरुध्यतेयदा कफपित्तेसमावृत्यशूलकारीभवेद्बली ॥ तस्यौषधंयथा । लौहचूर्णसमायुक्तं त्रिफलाचूर्णमेववा । मधुनास्वादितंहन्ति परिणामाख्यशूलनुदिति ग० पु० ॥

परिणामी । त्रि० विकारिणि ॥ परिणामोऽस्त्यस्येति । म० इनिः ॥

परिणामवादी । त्रि० परिणामवादिनि ॥ पूर्वरूपत्यागेनरूपान्तरप्राप्तिलक्षणं परिणामंवदतीतिणिः ॥

परिणायः । पुं० शारीर्यासमन्तान्नयने ॥ परितोवामदक्षिणतोनयनम् । णीञ् ॥ परिन्योरितिघञ् । परिणायेननयतोन्(?)समन्तान्नयनमित्यर्थः ॥

परिणायकः । पुं० परिणेतरि ॥ नयतेर्ण्वुल् । उपसर्गादसमासेपीतिणत्वम् ॥

परिणाहः । पुं० विस्तारे । एनद्वा० चौडाईसार इत्यादिभा० । विशालतायाम् ॥ परिणह्यतेऽनेन । णह० । घञ् । उपसर्गादसमासेपीतिणत्वम् ॥

परिणिनंसुः । त्रि० परिणन्तुमिच्छुप्रहर्त्तुमिच्छौ ॥ नमेःसन्नन्तादुप्रत्ययः । एकाचउपदेशेऽनुदात्तादितीट् प्रतिषेधः ॥

परिणूतः । त्रि० स्तुते ॥ परिणूयते स्म । णू स्तुतौ । क्तः ॥

परिणेता । पु० भर्त्तरि । वोढरि ॥ परिणयति । णीञस्तृच् ॥

परितप्तः । त्रि० परिदूने ॥

परितर्क्षणम् । न० कष्टे ॥ हिंसायाम् ॥

परितर्प्पणम् । न० परितृप्तिक्रियायाम् ॥

परित :। अ० सर्वतोर्थे ॥ पर्यभिभ्याञ्चे तिपरिशब्दात्तसिल्सर्वोभयार्थाभ्या मिष्यते ।" सर्वत्र ॥

परिताप :। पुं० दुःखे ॥ नरकान्तरे॥ कम्पे ॥ भये ॥ शोके ॥ परिस न्ताप :॥

परितुष्ट :। त्रि० परितोषयुक्ते । सन्तु- ष्टे ॥

परितोष :। पुं० अतिलसौ। सन्तोषे। सर्वतोभावेनतुष्टौ ॥ यथा। त्वामु दरसाधुमन्येशाकैरपियदसिलब्धपरि तोषम् । हतहृदयंह्यधिकाधिकवा ञ्छाशतदुर्भरंनपुन : ॥

परित्याग :। पुं० सर्वतोभावेनवर्ज ने । परित्यजने । छोरणे ॥ सम्यो त्सारणे ॥ परितस्त्याग :,॥

परित्राणम् । न० सारणोद्यतास्त्रनिवार णे । हस्तधारणे । हस्तवारणे । पर्याप्तौ ॥ त्रैङ्० । ल्युट् । र क्षणे ॥

परिदर :। पुं० दन्तरोगविशेषे ॥ यथा। दन्तमांसानिशीर्यन्ते यस्मिन् ष्ठीवतिचाप्यसृक् । पित्तासृक्कफ जोव्याधिर्ज्ञेय:परिदरोहिसद्दति ॥

परिदानम् । न० नैमेये । परीवर्त्ते । विनिमये ॥ परिहास्यदानम् ॥ न्य स्तवस्तुप्रत्यर्पणेपीतिकश्चित् ॥

परिदायी । पुं० अनूढ्ज्येष्ठेतत्कनिष्ठा यकन्यादातरि ॥ यथाहहारीत :। ज्येष्ठेऽनिर्विष्टे कनीयान्निर्विशन् परिवेत्ताभवतिपरिविन्नोज्येष्ठ: प रिवेदनीयाकन्यापरिदायीदाताप रिकर्त्तायाजकास्ते सर्वेपतिताइति ॥

परिदीपक :। त्रि० अवबोधके ॥

परिदीपित :। त्रि० प्रकाशिते ॥ परिसर्वतोदीपित :॥

परिदृष्ट :। त्रि० समन्तात्साक्षात् कृते ॥

परिदेवनम् । न० अनुशोचनोक्तौ । विलापे ॥ दिवुपरिदेवने । चु० । ल्युट्॥

परिदेवना । स्त्री० शोकनिमित्त विला पे । शोकोक्तौ ॥ यथा। अव्यक्ता दीनिभूतानिव्यक्तमध्यानिभारत । अव्यक्तनिधनान्येवतत्रकापरिदेवना ॥ इतिभगवद्गीता ॥ ममस्वबल वीर्येणप्रज्ञया पौरुषेणच ॥ यलभ्यं लभतेमर्त्यं स्तत्रकापरिदेवना ॥ ए कसार्थप्रयातानांसर्वेषांतत्रगामि नाम् । यद्येकस्त्वरितोयातितत्रका नपरिदेवनेतिग० पु० ॥ दिवुपरि देवने । चु० । ण्यासश्रन्थोयुजिति युच् । टाप् ॥

परिद्यून :। त्रि० परिदेवनांप्राप्ते ॥- क्षीणचेतने ॥ दिवु ० क्तः ॥

परिद्रष्टा । त्रि० समन्तादर्शनसक र्त्तरि । साक्षिपुरुषे ॥ परिपश्यति । दृशिर :। धा० तृन् ॥

परिधानम् । न० अधोंशुके । अन्तरीये । उपसंव्याने ॥ परिधीयतेऽनेनवा । डुधाञ् ० ल्युट्ल्युटोबहुलम् ॥

परिधाय : । पुं० जलस्थाने । परिच्छदे । नितम्बे ॥

परिधावी । पुं० वत्सरविशेषे । यथा । अभिभूतंजगत्सर्वंक्लेशैर्बहुविधैः प्रिये । मारुतैःफलदाहैश्चपरिधाविनिशोभने ॥

परिधिः । पुं० यज्ञियद्रुशाखायाम् ॥ उपसूर्यके । परिवेशे । चन्द्रसूर्यसमीपमण्डले ॥ परितोधीयतेऽनेनवा । डुधाञ्० । उपसर्गेघोः किः ॥ चक्रप्रान्ते ॥ भूगोलादेर्वेष्टने ॥

परिधिस्थः । पुं० परिचरे ॥ परितः स्थिते सैन्यरक्षके ॥ परिधौसैन्यान्ते तिष्ठति । ष्ठा० । सुपीतिकः ॥

परिधेयः । त्रि० परिधानीये । परिधानीयपुत्रो उत्तरीयादिवस्त्रे ॥ परिधातुंयोग्यः । धाञ्० । अचोयत् ईद्यति । गुणः ॥

परिनिष्ठितः । त्रि० चतुरे । निष्ठिते ॥

परिपक्वः । त्रि० परिणते । परितः पक्वः ॥

परिपक्वमानसः । त्रि० श्रवणमननादिभिः स्थितप्रज्ञे ॥

परिपणम् । न० नीव्याम् । वणिङ्मूलधने । पूंजी० इति भा० ॥ परिपण्यतेऽद्व्यर्थंप्रयुज्यते । पण० । पुंसीतिघः ॥ राजपुत्रादेर्बन्धके ॥

परिपन्थकः । पुं० शत्रौ ॥ इ० है० ॥

परिपन्थी । त्रि० शत्रौ ॥ परिदोषाख्यानंपन्थयितुंशीलमस्य । पथिगतौ । चु० । णिनि ॥ परिवर्जनीयःपन्थाअस्यवासमासान्तविधेरनित्यत्वादीन ॥ विघ्नकारि । पथिकर्द स्थौ ॥

परिपल्लवम् । न० तीर्थविशेषे ॥

परिपवनम् । न० तितउनि ॥ तितउपरिपवनम्भवतीतिमहाभाष्यम् ॥

परिपाकः । पुं० विपाके ॥ परिपचनम् । डुपचष् । घञ् ॥ परिपक्वतायाम् ॥ यथा । दुःस्थत्वंतकेयलत्व क्रियंकमास्तिनमस्य : परिपाकमेतीतिभावप्रकाशः ॥ नैपुण्ये ॥ यथा । वीच्यस्यमिनयेपरिमार्षपाकमास नयदस्य शतोपेति० नैषधेपञ्चमः सर्गः ॥

परिपाकिनी । स्त्री० त्रिवृतायाम् ॥

परिपाटिः । स्त्री० अनुक्रमे । आनुपूर्व्याम् ॥ परिभागेनपाटनम् । पट० । स्वार्थण्यन्तः । अचइः ॥ कृदिकारादिक्तिनइतीङीषा ॥ इतिकर्त्तव्यतायाम् ॥

परिपाटी । स्त्री० आवृत्ति । अनु-

ग्रामे ॥ कृदिकारादिति ङीप् ॥

परिपिष्टकम् । न० सीसके ॥

परिपुष्करा । स्त्री० गोडुम्बायाम् । राजगोमकर्क०गौ०भा० ॥

परिपूतम् । न० निष्पुलाकीकृते । अपास्तपुलाके । अपास्ततुषधान्ये ॥ त्रि० । सर्वतोभावेनपवित्रे ॥

परिपूरी । त्रि० भक्तवरदे ॥ परिपूरयति कामैर्भक्तान् ॥ परिपूरयते णिनिः ॥

परिपूर्णः । त्रि० पूरिते ॥ परितः पूर्णः ॥

परिपूर्णता । स्त्री० आभोगे, सम्पूर्णतायाम् ॥ परितः पूर्यतेस्म ॥ पूरी० । गत्यर्थेतिक्तः । रदाभ्यामितिनिष्ठातत्वम् ॥ परिपूर्णस्यभावः । तस्यभावइतितल् ॥

परिपूर्णत्वम् । न० आभोगे । पूर्णतायाम् ॥ परिपूर्णस्यभावः । तस्यभावस्त्वतलौ ॥

परिपेलम् । न० कैवर्त्तीमुस्तके । नागरमोथा०इ०भा० ॥ यथा । परिपेलप्लवंवल्पतत्कुटन्नटसञ्ज्ञकम् । आयतीसुस्तकाकारशेवालकुलसंश्रये ॥

परिपेलवम् । न० कैवर्त्तीमुस्तके ॥ परितः पेलवम्स्टद्ग ॥

परिप्रश्नः । पु० कोऽहंकथमिदञ्जातःकोवैकर्त्तास्यविद्यते॰उपादानंकिमस्य



स्यकथंवद्वोस्मिकेनोपायेनमुच्येइत्यादिपृच्छायाम् ॥ पृच्छामात्रे ॥ परितः प्रश्नः ॥

परिप्लवः । त्रि० चञ्चले ॥ परिप्लवते । मुद्गती । य०अच् ॥ आकुले ॥

परिप्लुतः । त्रि० आप्लुते । व्याप्ते सर्वतोव्याप्ते ॥ परितः प्लुतः ॥

परिप्लुता । स्त्री० मदिरायाम् ॥ या स्वधर्मेवेदनावत्स्यायोनौ ॥ यथा । परिप्लुतायामभवतियाम्यधर्मेरुजाभृशम् । इतियोनिव्यापन्निदानेमाधवकरः ॥

परिफुल्ल । त्रि० हर्षपुलकिते ॥ फुल्लते । फुल्ल० । पचाद्यच्लत्वमत्तफुल्लेतिनिष्ठात्वं । अनुपसर्गादितिक्षयनाविरोधात् । परितः फुल्लः ॥

परिबर्हः । पु० राजयोग्यद्रव्ये । सितच्छत्रादौ ॥ परिच्छदे ॥ परिबर्हतेपरिबर्ह्यतेवा । बर्हप्रधान्ये । भ० घञ्वा ॥

परिभवः । पु० अनादरे ॥ यथा । सन्तान्यादिजजातयः परिभवैर्येतद्वच: पालनात्पीतः कुम्भसमुद्भवेनमुनिनाकिजातमेतावता । मर्यादांविलङ्घतेविविधशाखास्मिन्चयेवारिधिस्तैलोक्यसचराचरश्र सतिष कस्तचकुम्भोद्भवः ॥ परी भुवोऽवज्ञानइ०घञभावे स्मदोरप् ॥ स

र्वतोभवने ॥

परिभाव :। पुं० अनादरे । परिभवे ॥ पराभवोऽवज्ञानइतिभावेघञ् । वृद्धि : ॥

परिभावुक :। त्रि० तिरस्कुर्वति ॥ लषपतेत्यादिनोकञ् ॥

परिभाषणम् । न० सनिन्देउपालम्भे ॥ उपालम्भोहिद्विविध :। गुणाविष्करणपूर्वकोनिन्दापूर्वकश्च । आद्योयथा । महाकुलस्यभवत : किमुचितमिदमिति । द्वितीयस्तुयन्तकौलुतस्यभवतउचितमेवेदमिति । तत्रयोद्वितीयःसपरिभाषणशब्दार्थः ॥ भावव्यक्तायांवाचि । ल्युट् ॥ नियमे ॥ आलापे ॥

परिभाषा । स्त्री० परिष्कृतिभाषणे । पदार्थविवेचकाचार्याणांयुक्तियुक्तायांवाचि । प्रज्ञप्तौ । भेल्याम् ॥ अनियमनिवारकेन्यायविशेषे ॥ अनियमेनियमकारिणीपरिभाषेतिलक्षणात् ॥ आधुनिकसङ्केते ॥ द्र० शब्दिवादेगादाधरीटीका ॥

परिभू :। पुं० ईश्वरे ॥ सर्वेषामुपर्युपरिभवनात्॰परिसर्व्वतोभवति । भू० । क्विप् ॥

परिभूत :। त्रि० परिभवान्विते । अनादृते । अवमते । अवमानिते ॥ परिभूयतेस्म । भू० । क्त : ॥

परिभूयमानः त्रि० अनादरानुभवकारि ॥ यथा ॥ वैवालभावेनपठन्ति विद्यांकामातुरायौवननष्टचित्ताः । तेवृद्धकालेपरिभूयमाना :। सन्दह्यमाना : शिशिरेयथाब्जाइति ॥

परिभोग :। पुं० उपभोगे ॥ परिभोजनम् । भुज० । घञ् ॥

परिभ्रम :। पुं० सर्वतोभ्रमणे ॥

परिभ्रमणम् । न० पर्यटने ॥ धनाशापुरुषस्येश्वरपरिभ्रमणंकारणम् ॥

परिभ्रामणम् । न० हस्तादिघूर्णनेस्वापरिसञ्चालने ॥

परिमण्डलः । त्रि० वर्तुले ॥ परितश्चक्राकारे ॥ न० । परमाणौ ॥

परिमण्डलितः । त्रि० विवर्तिते ॥ वर्तुलीकृते ॥

परिमलः । पुं० विमर्दने । कुङ्कुमादिमर्दने ॥ विमर्दोत्थगन्धे । अतिमनोहरगन्धे ॥ जनमनोहरसुरतादिविमर्दनेनोत्पन्नेमाल्यादिगन्धे । सुरतोपमर्दविकसत्करीरदगादिसौरभे ॥ सम्भोगे ॥ पण्डितानांसमूहे । द्र० भव० ॥ परिमलनम् । मलधारणे । घञ् । संज्ञापूर्वकत्वान्नवृद्धि : ॥ घर्षणसमुद्भवेचन्दनादिगन्धे ॥

परिमाणम् । न० आढककुडवादौपरिच्छेदके । सर्वतोमाने ॥ आरोहपरिणाहाभ्यांस्वगराभ्यांविनकाष्ठादिनिर्मितेनद्रोणादिपरिमीयतेतत्

परिमाणंप्रस्थादिरित्यर्थ : । परि : सर्वतोभावे । यथोक्तम् । परिमाण-मनुसर्वत । इति ॥ न्यायमतेतुमानव्यवहारासाधारणकारणे । पृथिव्यादिनवद्रव्यवर्त्तिनि । तच्चतुर्विधम् । अणुमहत्दीर्घमृस्वंचेतिभेदात् । यथोक्तंभाषापरिच्छेदे । परिमाणंभवेन्मानव्यवहारस्यकारणम् । अणुदीर्घंमहद्ध्रस्वमितितद्भेद ईरित : ॥ अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् । सङ्ख्यात : परिमाणाच्च प्रचयादपिजायते ॥ अनित्यं द्व्यणुकादौतु सङ्ख्याजन्यमुदाहृतम् । परिमाणंघटादौतुपरिमाणजमुच्यते ॥ प्रचय : शिथिलाख्योय : संयोगस्तेनजन्यते । परिमाणंतूलकादौनाशस्त्वाश्रयनाशत : ॥ इति ॥ परिमीयतेपरिछिद्यते येनतद् ॥

परिमार्ज्जनम् । न० परिशोधने ॥ खाद्यविशेषे । मधुमस्तके । यथा । मधुतैलघृतैर्मध्ये वेष्टिता:समिताश्च या : । मधुमस्तकमुद्दिष्टं तस्याख्या परिमार्ज्जनमितिशब्दचन्द्रिका ॥

परिमित : । त्रि० परिमाणविशिष्टे । परिच्छिन्ने । एतावति । इतमाङ० भाषा० युक्तं । परितोमित : ॥

परिमिलित: । त्रि० व्याप्ते । समन्तात्सङ्गते ॥

परिमृष्ट : । त्रि० व्याप्ते ॥

परिमेय : । त्रि० परिमातुंयोग्ये ॥ माङ्० । अचोयत् । ईद्यति । गुण: ॥ परिमिते ॥

परिमोच : । पुं० मलत्यागे ॥ परितोमोचने ॥

परिमोषी । त्रि० परिमोषणशीले । चौरे ॥

परिरब्ध : । त्रि० दृष्टीते । आलिङ्गिते ॥

परिरम्भ : । पुं० आलिङ्गने । परिष्वङ्गे । बाहुभ्यांनिष्पीडने ॥ परिरम्भणम् । रभ० । घञ । रभेरणवृलिटोरितिनुम् ॥

परिरम्भित : । त्रि० आलिङ्गिते । रम्भिते ॥

परिवत्सर : । पुं० वत्सरे ॥ वत्सरविशेषे ॥ यथा । शकाब्दात्पञ्चभिर्हृते य : शेषस्तिष्ठतितेनैकादिक्रमेण संपरिइदानुवदापूर्वकवत्सर संज्ञका : वत्सराभवन्ति । यथोक्तम् । शकाब्दात्पञ्चभि . शेषात्समाद्यादिषुवत्सरा : । सम्परीदानुपूर्वाश्च तयोदापूर्वकामता : ॥ परिपूर्वेत्सरादानंयज्ञानांचद्विजोत्तमा : । इ० ति विष्णुधर्मोत्तरम् ॥ परितोवसन्त्यत्रायनर्त्वादय : । वस० । सपूर्वाच्चिदितिसर : । सस्यार्द्धधातुकइति सस्तत ॥

परिवर्जनम् । न० मारणे॥ परित्यागे। यथा। गोप्योनदोषोमथुराङ्गनानांधूर्तस्यकृष्णस्यहिरीतिरेषा। विपर्ययोयेनकृतः खपितोस्तस्तोभपत्रीपरिवर्जनंकिम्॥ वृजीवर्ज्जने। ल्युट्। परित्रोवर्ज्जनम्॥ कुभार्यांचकुमित्रञ्चकुराजानंकुसौहृदम्। कुबन्धुञ्चकुदेशञ्चदूरतः परिवर्ज्जयेत्॥ त्राह्मणंबालिशंचक्षमयोधारंविद्यंजडम्। शूद्रमक्षरसंयुक्तं दूरतःपरिवर्ज्जयेत्॥

परिवर्त्तः। पुं० कैमेवे। विनिमये॥ कूर्मराजे॥ प्रवर्त्तने॥ पलायिते। युगान्ते॥ परिवर्त्तनम्। वृतु०। भावेघञ्॥ ग्रन्थविच्छेदे॥ अपवर्त्तने॥

परिवर्त्तनम्। न० परिदाने। परिवर्ते। विनिमये॥ परेतता इ०भा०। इतस्ततोभ्रमणे॥(२००(७)८(९)

परिवर्त्तिका। स्त्री० भावप्रकाशोक्तमेढ्रजातक्षुद्ररोगविशेषे॥

परिवर्त्तित। त्रि० निवर्त्तिते॥

परिवर्त्ती। त्रि० विनश्वरे॥ संसारः परिवर्त्तीतिप्रसिद्धम्॥

परिवर्त्तिनी। स्त्री० विष्टुतिप्रभेदे॥

परिवर्हः। पुं० राजयोग्यद्रव्ये॥ परिच्छदे॥ परिवर्हतेपरिवर्ह्यते वा। वर्हप्राधान्ये। पचाद्यच्। घञ्वा॥

परिवर्हणम्। न० आराधने॥

परिवसथः। पुं० ग्रामे॥ परितो वसन्त्यत्र। वस०। उपसर्गेवसेरित्यथः॥

परिवहः। पुं० परावहवायोरुपरिस्थितेसप्तवायुस्कन्धान्तर्गतसप्तमवायौ॥

परिवादः। पुं० परदोषकथने। अपवादे। निन्दायाम्॥ यथा॥ सततसुखभटैर्योनिः सुखिनीवलोकोयदिभवपरिवादात्प्रीतिमाप्नोतिकश्चित्। परिवदतुयथेष्टंमत्समक्षंतिरोवाजगतिहिबहुदुःखेदुर्लभः प्रीतियोगइति। वीणावादनवस्तुनि॥ परिपूर्वाद्वदेर्भावेघञ्॥

परिवादकः। त्रि० परिवादकर्त्तरि॥

परिवादी। त्रि० परिवादकर्त्तरि॥ परिवादविशिष्टे॥

परिवादिनी। स्त्री० सप्ततन्त्रीयुक्तायां वीणायाम्। सप्ततन्त्रिका० इ० भा०॥ परिवदतिस्वरान्। वद०। सुपीतिणिनिः॥ परिवादविशिष्टायाम्॥

परिवापः। पुं० पर्युप्तौ। वपने॥ जलस्थाने॥ परिच्छदे। परिवारे॥ परिवपनम्अनेनअत्रवा। टुवप्०। भावेघञ्करणेतिवा॥

परिवापनम्। न० मुण्डने॥ हेतुमण्यिजन्ताद्भावेल्युट्॥

परिवापितः। त्रि० मुंडिते॥ परि

दियन्द्रजीसुवृष्टिस । शुक्रेयायिच-चियराज्ञीपीडाभिवश्चात्रम् ॥ चु-टनलम्रूयुनराधिपश्चसेम्योजायतेभ यंकितौ । परिविष्टेगर्भमयंराज्ञीव्या धिर्नृपभयश्च ॥ ० ॥ द्व्यादिमुपरि सुमध्यगतेपुफलमाह । युवानिवि मानीयात्परिवेषाभ्यन्तरेद्वयोर्ग्रह यो : । दिवसकृत : शशिनोवाचु-दृष्टिभयंविधुप्रोक्तम् ॥ यातिचतु र्पुनरेन्द्र : सामात्यपुरोहितोवशंस्त्र स्थो : । प्रलयमिवविद्धिजगत : प ञ्चादिपुमरज्जलस्थेषु ॥ ० ॥ अथता रावर्णाणांपृथक्परिविष्टानांफल माह । तारायहस्कुर्यात्पृथगेवस-मुत्थितोनरेन्द्रवधम् । नक्षत्राणाम थवायदिकेतोर्नोदयोभवति ॥ ० ॥ तिथिसप्तमेषपरिवेषफलान्याह । वि प्रक्षत्रियविट्शूद्रनाभवेत्प्रतिपदा-दिषुक्रमश : । श्रेणीपुरकोशानांप-ञ्चम्यादिष्वशुभकारी ॥ युवराज-स्याष्टम्यांपरतस्त्रिषुपार्थिवस्यदोषक र : । पुररोधोद्वादश्यांसैन्यत्क्षोभस्त्र-योदश्याम् ॥ नरपतिपत्नीपीडांपरि वेशोम्युत्थितश्चतुर्दश्याम् । कुर्याच्च पञ्चदश्यांपीडामनुवाऽधिपस्यैव ॥ ■ ॥ परिवेषलेखावशेनशुभाशुभमा ह । नागरकाणामाभ्यन्तरस्थिता-यायिनांस्वबाह्यस्था । परिवेषमध्य-रेखाविज्ञेयाक्रन्दसाराणाम् ॥ रक्त:



श्यामोरूक्षोभवतिपयेषांपराजयस्ते पाम् । स्निग्ध : श्वेतोद्युतिमान्येषां भागोजयस्तेषामिति ॥ ७ ॥ अ-पिच । दिनकरपरिवेष : पूर्वयामे-तुपीडा॰ दिनकरपरिवेषोद्विधियुद्ध द्वितीये ॥ दिनकरपरिवेष : क्षेम-मायुस्तृतीयेदिनकरपरिवेष : सर्व नाशश्चतुर्थे ॥ द्विधासूर्येपरिवेषोरा-चौचन्द्रेयदाभवेत् । एकस्मिंश्चेदृशो रवेतदानश्यतिपार्थिव : ॥ एतेन-विधिनानित्यंसप्ताहंपरिधिष्यते । सर्वभूतविनाश : स्यात्तस्मिन्नुत्पा तदर्शने ॥ परितोविष्यतेऽनेन । वि पल्व्यासो । घञ् ॥

परिवेषक : । त्रि॰ अन्नादिपरिवेषण कर्त्तरि ॥ सयथा । ज्ञातसन्दनव चित : सुवसन : स्वाप्रसन्नानन: स्पष्टासारसुभय : प्रसन्नहृदय : श्री मान्नापूजारत : । स्वामिसेवपर : सपाकनिपुण : प्रौढोवदान्य : शु-चिर्विप्रोनपरिवेषकस्तुकुलजस्त्यो पिवाभूपते : ॥ स्त्री॰ । परिवेषि का ॥ *यथा । स्नातातिशुद्धवसनाग* वपूषिताङ्गीकर्पूरसौरभमुखीनयना भिरामा । विम्बाधराशिरसिबद्धसु गन्धपुष्पामन्दस्मितावितिधृतांपरि वेषिकास्यात् ॥

परिवेषणम् । न॰ भोजनार्थमन्नादे : पात्रेसमर्पणे । परोसना॰इ॰भा॰ ॥

तत्प्रकारोयथा । पुरस्ताद्विमलं-
पात्रंसुविस्तीर्णंमनोहरम् । स्थापि
तंपीठकेशुभ्रेनाभिदेशसमुन्नते ॥ त-
त्रभक्तंपरिन्यस्तंमध्यभागेसुसंयतम् ।
सूपंसर्पिः फलंशाकंपिष्टमन्नंतुमस्य
कम् ॥ स्थापितंदक्षिणेपार्श्वेभुक्ता
नस्ययथाक्रमम् । प्रक्षेप्यात्द्रवा :
सर्वेपानीयंपानकंपयः ॥ चोष्यंस-
न्धानकंलेह्यंसव्यपार्श्वेनिधापयेत् ।
सर्पांनिक्षुविकारांश्चपक्वान्नंपायसंद-
धि ॥ पुरतःस्थापयेद्भोक्तुर्द्वयोः
पङ्क्त्योस्तुमध्यतः । एवंविज्ञायम
तिमान्परिवेषप्रकल्पनम् ॥ ततो-
ऽभिलभतिप्राज्ञः सम्यक्सम्परिवेषि
तुम् ॥ * ॥ अथश्राद्धेपरिवेषणेम-
नुः । पाणिभ्यान्तूपसङ्गृह्यस्वयम-
न्नस्यवर्द्धितम् । विप्रान्तिकेपितॄन्ध्या
यन्शनकैरुपनिक्षिपेत् ॥ अन्नस्येति
कर्म्मणिषष्ठी । वर्द्धितं॰पूर्णंपिठ-
रादिपात्रम् । उपनिक्षिपेत्ब्राह्मणा
नांसमीपेपरिवेषणार्थमस्वरयास्था
पयेत् । तथाचपाकस्थाल्याआकृष्य
प्रथमंभोजनपात्रेनदेयमपितुस्था
ल्यादिकंपाणिभ्यांपात्रसमीपेभूमौ
संस्थाप्यपश्चात्पाणिभ्यांपात्रान्तरि
ताभ्यांश्राद्धेपरिवेषयेत् । उभाभ्या-
मपिपाणिभ्यामाकृष्यपरिवेषयेत्॰
इतिमत्स्यपुराणात् । यत्तुश्राद्धेपरि
वेषणन्तुदक्षिणपाणिनैवाऽङ्ग

नभिधानादितिमैथिलोक्तं तन्न । ए-
केनपाणिनादत्तंशूद्रादत्तंनभक्षयेदि
त्यादिपुराणीयेनएकपाणिदत्तशूद्रा
दत्तभक्षणनिषेधेनतन्मात्रपरिवेष-
णस्यापिनिषिद्धत्वात्पाणिभ्यामपि
पात्रान्तरितंकृत्वादेयम् । हस्ताद्-
त्ताश्चयेस्नेहालवणंव्यञ्जनानिच ।
दातारंनोपतिष्ठन्तिभोक्ताभुङ्क्तेच-
किल्बिषम् ॥ तस्मादन्तरितंदेयंप-
र्णेनाथतृणेनवा । प्रदद्यान्नतुहस्तेन
नायसेनकदाचन ॥ इतिवशिष्ठवच
नेनसामान्यतोऽभिधानात् । पिष्ट-
भक्तिरत्ननिधिश्चाप्येवम् । मनुः ।
गुणांश्चसूपशाकाद्यान्पयोदधिघृतं
मधु । विन्यसेत्प्रयतः सम्यग्भूमा
वेवसमाहितः ॥ आमिषंपानपात्र
स्थभोक्तुर्दक्षिणतोन्यसेत् । भक्ष्यभो-
ज्यञ्चविविधंमूलानिचफलानिच ॥
हृद्यानिचैवमांसानिपानानिसुरभी
णिच । उपनीयचतत्सर्वंशनकैः
सुसमाहितः ॥ परिवेषयेत्प्रयतोगु
णान्सर्वान्प्रचोदयन् ॥ गुणान्उ
पकरणानिभूमावेवनतुव्यञ्जनादि-
पात्राणिअन्नादिपात्रोपरिनिक्षिपेत्
॥ इतिश्राद्धतत्त्वम् ॥

परिवेष्टितः । त्रि॰ परिक्षिप्ते । परि-
स्तृते । परिते ॥ परितोवेष्टितः ॥

परिवेष्टा । त्रि॰ परिवेषणस्यकर्त्तरि ॥
परिचारे ।

परिव्याध : । पुं० अम्बुवेतसे ॥ द्रुमोत्पले ॥ परिविध्यति । व्यधताडने । घञ् ॥ परिविध्यतिवा । स्यादृव्यधे सिप ः ॥

परिव्रज्या । स्त्री० तपस्यायाम् ॥ द्र० – के० ॥

परिव्राट्०ज् । पुं० भिक्षौ । कर्मन्दिनि । मारासरिणि । मस्करिणि ॥ तल्लक्षणंयथा । सर्वारम्भपरित्यागो-भैक्षाश्यंवृक्षमूलता । निष्परिग्रहताऽद्रोहः समतासर्वजन्तुषु ॥ प्रियाप्रियपरिष्वङ्गेसुखदुःखाविकारिता । सबाह्याभ्यन्तरंशौचंसुखदुःखाविकारिता ॥ सर्वेन्द्रियसमाहारोधारणाध्याननित्यता । भावसंशुद्धिरित्येषपरिव्राड्धर्मउच्यते ॥ द्र तिगरुडपुराणम् । परित्यज्यसर्वंव्रजति । व्रज० । परीव्रजिः प: पदा न्तइतिक्विप्•दीर्घश्चमदान्तविषयेष त्वञ्च ॥

परिव्राजक : । पुं० सन्यासिनि ॥ परि व्रजति । व्रज० । ण्वुल् ॥

परिव्राजि : । स्त्री० श्रावण्यामोषधौ ॥

परिशङ्कनीय : । त्रि० सर्वतोभावेनश ङ्काविषये ॥ यथा । शास्त्रंसुचिन्तितमपिप्रतिचिन्तनीयंस्वाराधितोऽपि नृपति : परिशङ्कनीय : । अङ्के स्थितापियुवति : परिरक्षणीयाशा स्त्रेनृपेचयुवतौचकुतोवशित्वम् ॥

परिशासनम् । न० भृत्यादिप्रेरणे । आकारणपूर्वकभृत्यादिप्रेषणे ॥ शा सु० । ल्युट् ॥

परिशिष्टम् । न० परिशेषविशिष्टे । अवशिष्टार्थबोधकेग्रन्थे ॥ त्रि० । अवशिष्टे ॥ परित : शिष्ट : ॥

परिशीलनम् । न० ग्रन्थादिविचारे ॥

परिशीलित : । त्रि० अभ्यस्ते ॥

परिशुष्कम् । न० मांसव्यञ्जनप्रभेदे ॥ यथा । स्विन्नंयत्तुदृढंतद्वत्सुघृता-लोड्यभर्जितम् । साययादधिसिंधूत्थरामठैलापरिप्लुतम् ॥ मरिचार्द्रकसंयुक्तंसुगन्धिद्रव्यवासितम् । गतद्रवंसुधातुल्यंपरिशुष्कंतदुच्यते ॥ अपिच । मांसंबहुघृतेभृष्टंसिक्तंस्नेहाम्बुनामुहुः । जीरकाद्यैःसमायुक्तंपरिशुष्कंतदुच्यते ॥ द्र० ॥ त्रि० सर्वतोनीरसे ॥ निर्मांसे ॥ परित : शुष्कम् ॥

परिशेष : । पुं० प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणेसम्प्रत्यये ॥ परिशिष्यते । शिष्लृविशेषणे । घञ् ॥

परिशोध : । पुं० परिशोधने । सर्वतोभावेनशुद्धौ ॥ परित : शोध : ॥

परिशोष : । पुं० सर्वतोभावेनशुष्कतायां ॥

परिश्रम : । पुं० श्रमे । क्लमे ॥ खेदे । प्रयासे । परिश्रान्तौ ॥ परित:श्रम: ॥

परिश्रय : । पुं० सभायाम् ॥ आश्रये ॥ परिश्रयणम् । श्रिञ्० । एरच् ॥
परिश्रान्त : । त्रि० सर्वतोभावेनश्रान्तियुक्ते ॥ परित : श्रान्त : ॥
परिश्रुत : । त्रि० सर्वतोभावेनश्रवणविशिष्टे ॥
परिश्लेष : । पुं० आश्लेषे ॥
परिषत् । स्त्री० अधीतशास्त्राणांसमवाये । सभायाम् ॥ परिषत्त्वंयथा । एकविंशतिसङ्ख्याकैर्मीमांसान्यायपारगैः । वेदाङ्गकुशलैश्चैवपरिषत्त्वंप्रकल्पयेत् ॥ परित : सीदन्त्यस्याम् । षद्लृ० । सं०क्विप् । सत्सूद्विषेतिसाक्विप् । सदिरप्रतेरितिषत्वम् ॥
परिषद : । पुं० पारिषदे । अनुचरे ॥ द्रू०लि० ॥
परिषद्वल : । पुं० सभ्ये । सभासदे ॥ परिषदस्यास्ति । रज : कृष्यासुतिपरिषदोवलच् ॥
परिषिक : । पुं० स्नानादौ ॥
परिष्कन्द : । पुं० परिस्कन्दे । पराश्रिते ॥ परिस्कन्दति । स्कन्दिर० । पचाद्यच् ॥ परेश्चेतिवाषत्वम् ॥
परिष्कार : । पुं० विभूषणे । अलङ्कारे ॥ परिष्क्रियतेऽनेन । घञ् । सम्परिभ्यामितिसुट् । परिनिवीतिषत्वम् ॥ संस्कारे । शुद्धौ ॥
परिष्कृत : । त्रि० अलङ्कृते । भूषिते ॥ परिस्क्रियतेस्म । क्त : । सम्परिभ्यामितिसुट् । परिनिविभ्य: सेवसितसयसिवुसहसुट्स्तुस्वञ्जामितिषत्वम् ॥
परिष्वक्त : । त्रि० आलिङ्गिते ॥ यथा । स्त्रीपुंसौपरिष्वक्तौभवत : ॥ अन्योन्यंगाढमालिङ्गितौभवतइत्यर्थः ॥
परिष्वङ्ग : । पुं० आलिङ्गने । परिरम्भे ॥ परिष्वञ्जनम् । ष्वञ्जपरिष्वङ्गे । घञ् । परिनिविभ्य : इति ष : ॥
परिसङ्ख्या । स्त्री० विधिविशेषे ॥ यथातत्रचान्यत्रचप्राप्तौपरिसङ्ख्येतिगीयते । साचोभयप्राप्तावितरनिवृत्तिंबोधयति । यथा । पञ्चपञ्चनखाभक्ष्याइत्यत्रशशादिमांसेतरपञ्चनखमांसभक्षणनिवृत्तिबोध : । तदुक्तम् । नियम : परिसङ्ख्यावा विध्यर्थोहिभवेद्यत : । अनात्मदर्शिनैवपरात्मानमुपास्त्वेइति ॥ एकस्योभयथप्राप्तावेकत्रनियमनेयथाङ्गः । एकस्यवस्तुन : प्राप्तावनेकचैकधायदा । एकत्रनियम : साहिपरिसङ्ख्यानिगद्यतेइति ॥ अलङ्कारविशेषे ॥ यथा । इयंचिदोषवतीयथाहस्यार्थ : । श्रुतार्थस्यपरित्यागादश्रुतार्थस्यकल्पनात् । प्राप्तस्यबाधादित्येवंपरिसङ्ख्याविदूषणेति ॥ किञ्चित्पृष्टमपृष्टंवाकथि

तयत्प्रकल्प्यते । तादृगन्यव्यपोहाय परिसङ्ख्या तु सा स्मृता ॥ प्रमाणान्तरावगतमपि वस्तु शब्देन प्रतिपादितम् प्रयोजनान्तराभावात् सदृशवस्त्वन्तरव्यवच्छेदाय यत् पर्यवस्यति सा भवेत् परिसङ्ख्या ॥ अस्याश्च प्रश्नपूर्वकं तदन्यथा च परिदृष्टं तयोर्भयञ्च व्यपोह्यमानस्य प्रतीयमानता वाच्यत्वञ्चेति चत्वारो भेदाः । क्रमेणोदाहरणम् । किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः । किमाराध्यं पुण्यं किमभिलषणीयञ्च करुणा यदासक्त्या चेतो निरवधि विमुक्त्यै प्रभवति ॥ किम्भूषणं सुदृढमत्र यशो न रत्नं किं कार्यमार्यचरितं सुकृतं न दोषः । किञ्चक्षुरप्रतिहतं धिषणा न नेत्रं जानाति कस्त्वदपरः सदसद्विवेकम् ॥ कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते । काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥ भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे । चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महतामिति ॥

परिसङ्ख्यानम् । न० गणनायाम् ॥

परिसङ्ख्याविधिः । पुं० उभयोश्च युगपत्प्राप्तावितरव्यावृत्तिपरे विधौ ॥ यथा । पञ्च पञ्चनखा भक्ष्या इति । इदं हि वाक्यं न पञ्चनखभक्षणपरम् । तस्य रागतः प्राप्तत्वात् । नापि नियमपरम् पञ्चनखभक्षणस्य युगपत्प्राप्तेः पक्षेऽप्राप्त्यभावात् । अतश्चेदम् पञ्चनखभक्षणनिवृत्तिपरमिति भवति परिसङ्ख्याविधिः । सा च द्विविधा । श्रौती लाक्षणिकी च । तत्र चकारावयववती श्रौती परिसङ्ख्या । एवकारेण समानातिरिक्तानां च व्यावृत्तेरभिधानात् । पञ्च पञ्चनखा भक्ष्या इति तु लाक्षणिकी इतरनिवृत्तिवाचकपदाभावात् । अतएव सैषा त्रिदोषग्रस्ता । दोषत्रयञ्च । श्रुतहानिः अश्रुतकल्पना प्राप्तबाधश्चेति । तदुक्तम् । श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात् । प्राप्तस्य बाधादित्येवं परिसङ्ख्या त्रिदूषणेति ॥ श्रुतस्य पञ्चनखभक्षणस्य निवृत्तेः कल्पनात् प्राप्तस्य च पञ्चनखभक्षणस्य बाधनादिति । अस्मिन् दोषत्रये शब्दनिष्ठं प्राप्तबाधस्त्वर्थनिष्ठ इति दिक् ॥

परिसमाप्तिः । स्त्री० निश्चये ॥

परिसरः । पुं० पर्यन्तभूमौ । नदीनगरपर्वतादेरुपान्तभूमौ ॥ परितः सरन्त्यत्र । सृ गतौ । पुंसीति घः ॥ मृत्यौ । विधौ ॥ देवे ॥

परिसरणम् । न० सर्वतोगमने ॥ सृ गतौ । ल्युट् ॥

परिसरा । स्त्री० नाड्याम् ॥

परिसर्प्यः। पुं० परिक्रियायाम् । प-रिजनादिनावेष्टने ॥ परिसमन्तात् सर्पणम् । सृप्लृगतौ । घञ् ॥

परिसर्प्यणम् । न० प्रसरणे ॥ परि-सर्प्य ॥

परिसर्य्या । स्त्री० परीसारे । सर्वतो-गमने ॥ परिसरणम् । स० । परि-चर्यापरिसर्यामृगयाटाट्यानामुपस-ङ्ख्यानमितिशप्रत्ययोयक्गुणौच-निपातनात् ॥

परिसीमा । स्त्री० प्रयत्तायाम् ॥ परि त :सीमा ॥

परिस्कन्दः । पुं० पराचिते । परपुष्टे ॥ परिस्कन्दति । स्कन्दिर्० । प० भय् । परेश्चेतिपचिषत्वाभावः ॥

परिस्तरणम् । न० आच्छादने ॥

परिस्तोमः । पुं० गजपृष्ठस्यचित्रकम्बले । प्रवेण्याम् । वर्णे । कुथे ॥ परि स्तूयते । ष्टुञ्० । अर्त्तिस्तुस्विति मन् । यद्वा । परिगतः स्तोमोऽव यवस्तोमत्वात् यतक्रियायुक्तादृति परेःस्तौतिप्रतिषनुपसर्गत्वाभ्रयः ॥

परिस्पन्दः । पुं० कुसुमप्रकारादेः यथा वस्त्यादिसरचनायाम् ॥ शिखास्थ माल्ये ॥ परिवारे ॥ परिस्पन्दन म् । स्पदि० । भावे अधिकरणेवा घञ् ॥

परिस्पन्दनम् । न० सर्वतोभावेनकम्प ने ॥

परिस्पन्दमानः । त्रि० सर्वतोभावेन कम्पमाने ॥

परिस्फुटः । त्रि० प्रसिद्धावयवार्थे ॥

परिस्फुरितः । त्रि० प्रकाशिते ॥

परिस्रुत् । स्त्री० वरुणात्मजायाम् । मदिरायाम् ॥ परितः स्रवति । स्रु० । क्विप्तुकौ ॥

परिस्रुतः । त्रि० स्रुत्रे । स्रवयुक्ते ॥ परितः स्रूयतेस्म । स्रु प्रस्रवणे । गत्य र्थेतिक्तः ॥

परिस्रुता । स्त्री० वारुण्याम् । मदि रायाम् ॥ परितःस्रवति । स्रु० । क्विप्० तुक् । भागुरिमते । टाप् ॥ यद्वा । परितः स्रूयतेस्मलोकैः । स्रु० । गत्यर्थेतिक्तः ॥

परिहापितः । त्रि० त्याजिते ॥

परिहारः । पुं० अनादरे ॥ परिह्रियते ऽनेनाथवा । हृञ् । घञ् । उपस र्गस्येति पाक्षिकोदीर्घाभावः ॥

परिहार्य्यः । पुं० वलये ॥ त्रि० । त्याज्ये ॥

परिहासः । पुं० नर्मवाक्ये । परीहा-सैठठ्ठा इतिभाषा ॥ परिहसनम् । हसेहसने । घञ् ॥

परीक्षकः । त्रि० निरूपके । कारणिके ॥ शास्त्रपरिशीलनप्राप्तबुद्धिप्रकर्षे । प्रतिपादके ॥ परीक्षते । ईक्षदर्शने । ण्वुल् ॥

परीक्षणम् । न० परीक्षायाम् । राज्ञा

धर्मकामार्थभयैरमाला देभीवसत्त्व निरूपणे । यथा । भेदोपजापा वुप धाधर्माद्यैर्यत्परीक्षणम् । इति ॥ सर्वतोभावेनदर्शने ॥ संशय्यपूर्वपक्ष निराकरणेनोत्तरपक्षव्यवस्थापने ॥ परिस : ईक्षणम् ॥

परीक्षा । स्त्री० विचारणायाम् ॥ परि तश्चेक्षणमनया । ईक्ष० गुरोश्चहलः । टाप् ॥ दिव्ये ॥

परीक्षित् । पुं० नृपविशेषे ॥ अभिम न्युसुते । विष्णुराते ॥ सयुधिष्ठि रानन्तरंकलियुगप्रारम्भे चक्रवर्ती-राजाबभूव । सएवलोकविख्यात : परीक्षिदितियतःप्रभु : । पूर्वदृष्ट-मनुध्यायन्परीक्षेतनरेष्विह ॥

परीक्षितः । पुं० परीक्षिति । अभिमन्यु पुत्रे नृपे ॥ यथा । परिक्षीणेषुवंशे पुत्रातोयस्माद्दरःसुतः । तस्मात्परी क्षितोनाम विख्यातः पृथिवीतले इ० देवीभागवतम् ॥ त्रि० । सम्या तापरीक्षायस्तता० कृतम् ॥

परीक्ष्यकारी । त्रि० सम्यग्विचेतुभिर्विभ्रं श्रयकारणशीले ॥

परीत : । त्रि० परिवेष्टिते । व्याप्ते ॥

परीतत् । त्रि० सर्वतोभावेनविस्तृ-ते ॥

परीप्सा । स्त्री० त्वरायाम् ॥ अपादा नेपरीप्सायामितिदर्शनात् ॥ प्राप्तु मिच्छायाम् । पर्याप्तुमिच्छायाम्

परीप्सु : । त्रि० जिघ्नासौ ॥ आप्नो-ते : सन्नन्तादुप्रत्यय : । आप्ज्ञप्-धामीदित्वीकार : । अत्रलोपोभ्या-सस्येत्यभ्यासलोप : ॥

परीभाव : । पुं० तिरस्क्रियायाम् अनादरे ॥ परीभुवोवज्ञानइति०-भावेघञ् । इति : । उपसर्गस्यघञी तिदीर्घः ॥

परीरम् । न० फले ॥ पृणाति । पृपा-लनपूरणयो : । कृगृपृकटिपटिशौ टिभ्यइरन् ॥

परीरण : । पुं० कमठे ॥ दण्डे ॥ प-ट्टयाटवी ॥ इतिमेदिनी ॥

परीरम्भ : । पुं० आलिङ्गने । परिर-म्भे ॥

परीवर्त : । पु० प्रतिदाने । विमये । नैमेये ॥ परिवर्त्तनम् । हृत० । भावे घञ् । उपसर्गस्येतिदीर्घ : ॥

परीवाद : । पुं० अपवादे । निन्दा-याम् ॥ परिपूर्वाद्वदेर्भावेघञ् । उप सर्गस्यघञीतिदीर्घ : । विद्यमान दोषस्याभिधानंपरीवाद : । अवि-द्यमानदोषाभिधानंनिन्देतिविवे-क : ॥ यथा । परीवादस्तथ्योभवतु वितथोवापिमहतांतथाप्युच्चैर्धाम्नां हरतिमहिमानंजनरव : तुलोत्तीर्णं स्यापिप्रकटनिहताशेषतमसोरवे-स्तादृक्तेजोनहिभवतिकन्यांगतस्य-त : ॥

परीवापः । पुं० पर्युप्तौ ॥ सलिलस्थाने परिवारे ॥ परिवपनम् अनेनात्रवा । टुवप्० । भावेघञ् इत्यत्रेतिवा । उपसर्गस्येतिदीर्घः ॥

परिवारः । पुं० परिजने ॥ खड्गकोषे ॥ परिच्छदे । शोभाजनके उपकरणे छत्रचामरादौ । सभ्यजनादौच ॥ परिवार्यते ऽनेनपरिवारयंवा । घञ् । उपसर्गस्येतिदीर्घः ॥

परीवाहः । पुं० जलोच्छ्वासे । परिवाहे ॥ परिवहन्त्यंभिः । वह० । हलश्चेतिघञ् उपसर्गस्यघञीति पाक्षिकोदीर्घः ॥ परिवहनम् । भावे० घञ् ॥ महीभृद्योग्यवस्तुनि

परीष्टिः । स्त्री० अन्वेषणायाम् ॥ इ-षेरनिच्छार्थस्यपरेर्वेतिपक्षेतिन् ॥ परिचर्य्यायाम् ॥ प्राकाम्ये ॥ परीसार : परिसर्य्यायाम् । सर्वतोगमने ॥ परिसरणम् । सृ० । घञ् उपसर्गस्यघञीतिदीर्घः ॥

परीहारः । पुं० अवज्ञायाम् । अनादरे । परिहरणम् । हञ्० । भावेघञ् । उपसर्गस्येतिपाक्षिकोदीर्घः ॥

परीहासः । पुं० द्रवकेलौ । नर्मणि ॥ परिहसनम् । हसे० । घञ् । पाक्षिकोदीर्घः ॥

परुः । पुं० वंशादिपर्वणि ॥ पिपर्त्ति । पॄ० । पाहलकादुः ॥

परुत् । अ० पूर्ववत्सरे । गतवर्षे ॥ पूर्वस्मिन्वत्सरेइत्यर्थे । सद्यःपरुदितिपूर्वस्यपरभावःउत्०च । संवत्सरे ॥

परुत्न : । त्रि० पूर्ववर्षभवे ॥ परुद्भव : चिरपरुत्परारिभ्यस्त्नोवक्तव्यः ॥

परुद्वार : । पुं० घोटके ॥

परुट् । पुं० पर्वणि ॥ यत्पत्त्यषिदिनमितिश्रुतौपरुषिपर्व पोरस्यर्थात् ॥

परुषम् । न० निष्ठुरवाक्ये ॥ नीलझिण्ट्याम् ॥ परुषफले ॥ न० । तिलकवृक्षे ॥ त्रि ० कर्बुरे॥ रूक्षे ॥ निष्ठुरोक्तौ । परोक्षदेशजातिकुलविद्याशिल्परूपवृत्ताचारपरिच्छदशरीरकर्मजीविनांप्रख्यदोषवचनम् परुषमितिवदन्त ॥ यच्चान्यत्क्रोधसन्तापवाससशङ्कजननंवचः । परुषंतच्चविज्ञेयंयच्चान्यत्तथाविधम् ॥ चक्षुष्मन्नितिखञ्जाचंडषंडांलंप्राज्ञमेव । प्रशंसानिन्दनंयेयत्परुषान्नविप्रियतेद्दितिदेवल : ॥ परुषवचनानामेवपरोक्षसुदाहरणमपवादप्रख्याद : ॥ निष्ठुरवाग्युक्ते ॥ पिपर्त्ति पूर्यतिअलंबुद्धिंकरोति । पॄ० । पॄनहिकलिभ्यउपन् ॥

परुषा । स्त्री० वृत्त्यनुप्रासघटकवृत्तिभेदे ॥ ओज : प्रकाशकैर्वर्णैः परुषाख्यासाप्तापरा ॥ वामनादिमतेगौडीयेया ॥

परु : । न० ग्रन्थौ । वंशादिपर्वणि ॥ पिपर्त्ति । पृपालनपूरणयो : । अ- र्त्तिपृवपीत्युस् ॥

परूषम् । न० फलवृक्षभेदे । अल्पाऽ- स्थिनि । नीलचर्मणि । परुसादृति च फालसा० इतिचभाषा० ॥

परूषकम् । न० परूषे ॥ परूषकंकषा याम्लमामंपित्तकरंलघु । तत्पक्वंम धुरंपाकेशीतंविष्टम्भिबृंहणम् ॥ हृ द्यंरक्तपित्तदाहज्वरक्षयसमीरह त्रितिभावप्रकाश : ॥

परेद्य । अ० परतोऽर्थे ॥ विभक्तिप्रतिरू पकमव्ययम् ॥

परेत : । पुं० भूतान्तरे ॥ त्रि० । मृते ॥ परलोकमृद्धत : ॥ परादूर- मितीया ॥

परेतर: । त्रि० आत्मीये । अवस्थके । परादितर : ॥ स्वामिकार्यार्थमितरे षांभेदके ॥ परान्विपक्षान्भूतरय- तिभेदेनआत्मसात्करोति । तत्क- रोतीतिण्यन्तात्कर्मण्यण् ॥

परेतराट । पुं० धर्मराजे । पितृपतौ । यमे ।परेतिपुस्त्रीपुराक्षते।राज्० । सत्सूद्विषेतिक्विप् । जान्त : ॥

परेद्यवि । अ० परस्मिन्नहनि ॥ सद्य : परुदित्यादिनापरस्मादेद्यव्यहनि- निपात्यते ॥

परेपम् । त्रि० पराणि ॥ परागतापा- पोयत्र । इयनारुपसर्गेभ्योपईदित्य- च्चवर्णान्ताद्विच्युक्तेः पाक्षिकईत् ॥

परेष्टुका । स्त्री० वहुसूत्याम् । वहुप- त्यायाङ्गवि ॥ परमिच्छतिपरैरिष्य- तेवा । आ०तु : । स्वा० क : ॥

परैधित : । पुं० कोकिले ॥ त्रि० । पराचिते । औदासीन्येनपरपुष्टे ॥ परैरेधित : सम्वर्धित : ॥

परोक्ष : । पुं० तपस्विनि ॥ त्रि० । इन्द्रियाविषये । अप्रत्यक्षे ॥ परो- क्षमस्त्यस्य । अर्शआद्यच् ॥ अक्ष्णः । परोभाव : परस्याक्षिपरोक्षेलिटि दृश्यताम् । उत्ववादे : परोऽक्षः : सिद्धवाक्यान्निपातनात् ॥ यस्मात् परोक्षेलिडितिनिर्देशात् ॥

परोक्षम् । अ० इन्द्रियाविषये ॥ इति विषयेऽक्षिशब्दइन्द्रियमात्रपर : । अक्ष्ण : परमितिविग्रहेशरदादिषु- प्रतिपरेतिसमासान्तविधानसाम- र्थ्यादव्ययीभाव : । परोक्षेलिडिति निपातनात्परस्यौकारादेशः ॥ पा रस्करादित्वात्सुडित्यप्याहु: । श्री भोजस्तुपरार्थपरःशब्दं मन्यते ॥

परोपकार: । पुं० परस्यपरेषांवाउपकृ ते । अन्यसम्बन्धिहिते । दधीचि- नापुरागीत : श्लोकश्चन्द्रधृग्भुवि । सर्वधर्ममय : सार : सर्वधर्मज्ञस- म्मत : । परोपकार : कर्त्तव्य: प्रा णै : कण्ठगतैरपि । परोपकारजंपु ण्यंनतुल्यंक्रतुशतैरपीतिपाद्मोत्तरख

गडे २२ अध्यायः ॥
परोवरीय : । त्रि० योऽपिपरांश्चाव-
रांश्चानुभवतितस्मिन् ॥ परोवरपर-
म्परपुत्रपौत्रमनुभवतीतिख : । च
वरस्यादेरुत्वंनिपात्यते । गुण : ॥
परोवरीयान् । त्रि० उत्तरमुत्तरंश्रेष्ठाद
पिश्रेष्ठे ॥ पुं० । परम्परंवरीयस्तु
गुणवतिप्राये ॥
परोष्णी । स्त्री० तैलपायिकायाम् ।
सुखविष्ठावागुलिकादिनामिकाया
म् । चटिकाविशेषे ॥ परंयच्चुष्णा
यस्याः । गौ०ङी ॥
पर्कटि : । स्त्री० प्लक्षवृक्षे ॥
पर्कटी । पुं० प्लक्षवृक्षे । चटिनि ॥
कामण्डलुतरौ ॥ पाकरि० इतिभा
षा ॥
पर्कटी । स्त्री० प्लक्षवृक्षे । पाकरि ०
इ० भा० प्र० ॥ पूगादेर्नूतनेफले
॥ पृच्यति पृ कौ० । बा० कट : ।
गौ० ङीष् ॥
पर्ज्जनी । स्त्री० दारुहरिद्रायाम् ॥ पि
पर्त्ति । पृ० पिच् । परस्यासौजनी
च ॥ परम्पालकंसास्थ्यंजनयति
वा।जनी ० ॥ स्त्रन्तः । कर्मण्यण् ॥
पर्ज्जन्य : । पुं० मेघशब्दे ॥ धनदम्ब
दे ॥ शक्रे ॥ पिपर्त्ति ॥ पर्षतिवा ।
पृ० । पृषुसेचनेवा । पर्जन्य इ० साधु:
॥ वृष्ट्यात्मकेदेवे ॥ पर्जन्योनाम वृ
ष्ट्यु पकरणाभिमानिनोदेवताविशे
ष इतिछान्दोग्यभाष्यम् ॥ मेवसा
मान्ये ॥ वज्राङ्कतिपर्जन्य: ॥ सूर्ये ॥
स्वगोभिर्भेनुमारेभेपर्ज्जन्य : क्ष
न्यागते
पर्ज्जन्यश्च : । पुं इन्द्रे ।
पर्ज्जन्या । स्त्री० दारुहरिद्रायाम् ॥
पर्ण : । पुं० वातपोथे । पलाशे ।
किंशुके । ढाक० इ० भा० ॥
॥ पिपर्त्ति । पृ० । धापृवस्यज्यति
भ्योन : ॥ यद्वा ॥ पर्णयति पर्णह
रितभावे । अच् ॥ न० । पत्रे ॥
ताम्बूले ॥ यथा । धनिधायमुखे
पर्णं पूगंखादयतीनर : । मतिभ्रंशो
दरिद्र:स्यादन्ते नस्मरतेहरिम् ॥
पर्णकृच्छ्र : । पुं० व्रतकृच्छ्रव्रते ॥ यथा ।
पर्णोदुम्बरराजीवबिल्वपत्रकुशोदकै:।
प्रत्येकंप्रत्यहाभ्यस्तै: पर्णकृच्छ्रउदा
हृत: ॥ इतिगरुडपुराणम् ॥
पर्णखण्ड : । पुं० वनस्पतौ ॥ ताम्बू
लैकांशे ॥
पर्णचोरक : । पुं० चोरकनामगन्ध
द्रव्ये ॥
पर्णध्वत् । त्रि० पर्णध्वंसकर्त्तरि ॥
पर्णनर : । पुं०पित्रादिशवासम्भवेभेदा
हार्यतत्प्रतिनिधिभूतशरपलाशपत्र
रचितोर्णातन्तुवेष्टितयवपिष्टलिप्तन
रामारिपुत्तलके ॥
पर्णभेदिनी । स्त्री० प्रियङ्गौ
पर्णभोजन: । पुं० छागे ॥ पर्णानि

भोजनंयस्य । त्रि० । पत्रभक्षके ॥

पर्णमाचाल : । पुं० कर्मरङ्गवृक्षे ॥

पर्णमृग : । पुं० वानरादिमृगगणविशे षे ॥ यथा । वनौकोऋक्षमार्जार वृ क्षमर्कटिकादय : । एतेपर्णमृगा : प्रोक्ता : सुश्रुताद्यै र्महर्षिभि : ॥ स्मृता : पर्णमृगावृष्याश्चक्षुष्या: शो षिणेहिता: । श्वासार्शकासशमना: सृष्टमूत्रपुरीषका इतिभावप्रकाश:॥

पर्णलता । स्त्री० नागवल्ल्याम् ॥

पर्णवल्ली । स्त्री० पलाशीलतायाम् ॥

पर्णशाला । स्त्री० उटजे । मुनिगृहे । पर्णनिर्मिताशाला । शाकपार्थि वादि : ॥

पर्णसि : । पुं० पद्मजी । पद्मे ॥ जल गृहे ॥ पृणोति । पृणीतौ । सानसि वर्णसि पर्णसीत्यादिनाऽसिप्रत्यय : पृणोतेर्नुक्च ॥

पर्णाशन : । पुं० घने । मेघे ॥

पर्णास : । पुं०स्वल्पपत्रतुलस्याम् । क ठिञ्जरे ॥ पर्णान्यस्यति । असु० । कर्मण्यण् ॥ यद्वा पर्णे रसति । अ सदीप्तौ । पचाद्यच् ॥

पर्णी । पुं० द्रुमे । वृक्षे ॥

पर्णिनी । स्त्री० माषपर्ण्याम् ॥

पर्णोटजम् । न० उटजे । पर्णशाला याम् ॥

पर्द्द : । पुं० अपानोत्सर्गे । कुत्सितशब्दे । गुदरवे ॥ पर्द्दते ॥ पर्द्द० । प० अच् ॥

पर्द्दनम् । न० पर्द्दे । पाद० इ०भा० ।

पर्प्प : । पुं० पङ्गुपीठे । येनकाष्ठेन पङ्गुश्चरतितस्मिन्काष्ठे ॥ पर्प्पग तौ । कलशे निकारणे घञ् ॥ न० । नवतृणे ॥ गृहे ॥ [illegible] । पृ० । खप्यगिल्वगल्वादिनापप्रत्ययान्त: साधु : ॥

पर्प्पट : । पुं० पित्तपातड़ा० इ० भा० भेषजान्तरे । कवचे । तिक्ते ॥ पर्पटो वरतिक्तश्चस्मृत : पर्पटयाश्च : । कथित: पांशुपर्यायस्तथा कवचनाम क : ॥ पर्पटोहन्तिपित्तास्रभ्रमतृष्णा कफज्वरान् । संग्राही शीतलस्ति क्तोदाहनुद्वातलोलघु : इतिभाव प्रकाश : ॥ पापड़० इ०भा० पिष्ट प्रभेदे ॥ धूमसौरचिताहिङ्गु हरिद्रा लवणै र्युता : ॥ सर्जिकाक्षीरकाभ्या ञ्चतन्तुल्यचवेष्टिता : ॥ पर्पटाख्ते तङ्गारभृष्टा : परमरोचका : । दी पना : पाचनारूक्षागुरव : किञ्चि दीरिता: ॥ मौहायसद्दृशा: प्रोक्ता विशेषाद्धघनोदिता : । चणकस्यग णै र्युक्ता : पर्पटाश्चणकोद्भवा: ॥ सर्वे इमृद्वामुतोसर्वे भवेयुर्मध्यमागुणै रितिभावप्रकाश : ॥

पर्प्पटक : । पुं० कवचे । तिक्ते । पर्प टे ॥

पर्प्पटद्रुम : । पुं० कुम्भीवृक्षे ॥

पर्प्पटी । स्त्री० सौराष्ट्रमृत्तिकायाम् ॥ पिष्टप्रभेदे । पापड़ी० इ० भा०॥ उत्तरदेशभवसुगन्धिद्रव्ये । पपरी० इ० भा० । रञ्जन्याम् । पक्षपर्प्पन्याम् ॥ अस्यागुणा यथा ॥ पर्पटी तुवरातिक्ताशिशिरावर्णकृल्लघुः । विषव्रणहरीकण्डूकफपित्तास्रकुष्ठनुत् ॥

पर्प्परीकः । पुं० सूर्य्ये ॥ वह्नौ ॥ भूपे ॥ पिपर्त्ति । पॄ० । सृपृहज्यादिस्यक् चाभ्यासस्य सिद्धकम् ० धातोर्हिंस्वं रुक्चाभ्यासस्य ॥ वेदभाष्येतुपॄ पालन पूरणयोरस्य निपातनमिदमाश्रित्यस्तोतॄणां पालक० इ० व्याख्यातं ॥

पर्प्परीणः । पुं० पर्णस्यशिरायाम् ॥ द्यूतकम्बले ॥ पर्णं चूर्णरसे ॥ न० पर्णे ॥ इतिमेदिनी ॥

पर्प्पिकः । पुं० पङ्गौ ॥ खञ्जे ॥ पर्पेण चरति । पर० ॥ स्त्री पर्प्पिकी ॥ षित्त्वान्ङीप् ॥

पर्फरीकम् । न० किसलये ॥ स्फुरति । स्फुरस्फुरणे । पर्फरीकादयश्चेतिईकान्धातोपर्फरादेशश्च ॥ यद्वा । धातोर्द्वित्वम्० उकारस्याकारःसलोपः रुक्चाभ्यासस्य । वेदभाष्ये तु त्रिफलाविशरणेस्यनिपातनमाश्रित्यशत्रूणां विदारयितेतिव्याख्यातम् ॥

पर्य्यङ्कः । पुं० मञ्चे । मांचा० इ० भाषा ॥ पल्यङ्क० पलङ्ग इ०भाषाख्याम् । उपवेशनासने ॥ पर्य्यस्तिकायाम् खाट० भा० ॥ परितोऽङ्क्यते । अकिलक्षणे घञ् ॥

पर्यङ्कपादिका । स्त्री० कोलशिम्ब्याम् ॥

पर्य्यक् । त्रि० परितोर्थे ॥

पर्य्यटनम् । न० भ्रमणे । व्रज्यायाम् । अटाय्याम् । फिरना० इ० भाषा अट० परिपूर्वः । भावेल्युट् ॥

पर्य्यनुयोगः । पुं० जिज्ञासायाम् ॥ इतिहलायुधः ॥ दोषविशेषे ॥

पर्यनुयोज्योपेक्षणम् । न० निग्रहस्थानप्राप्तस्यनिग्रहे ॥ निग्रहस्थानंप्राप्तवतोऽनिग्रहःनिग्रहनिग्रहस्थानानुद्भावनमित्यर्थः । यत्रस्वमेकनिग्रहस्थानपाते एकतरोद्भावनंतत्रनपर्यनुयोज्योपेक्षणम् । अवसरेनिग्रहस्थानोद्भावनस्यावच्छिन्नाभावस्यैवतस्वात् । ननुवादिनाकथमिदमुद्भाव्यंस्वकौपीनविवरणस्यायुक्तत्वादितिचेत्सत्यम् । मध्यस्थैर्नैवेदमुद्भाव्यम् । वादिवस्तुयमुद्भावनेऽप्यदोषः ॥

पर्यन्तः । पुं० अन्त्यसीमायाम् । प्रान्तदेशे ॥ परितोऽन्तः ॥ समीपे ॥

पर्य्यन्तभूः । स्त्री० नदीनगरादिसमीपभूमौ । परिसरे । पर्य्यन्तोभूः ॥

पर्यन्तिका । स्त्री० गुणभ्रंशे ॥

पर्य्यय : । पुं० व्यतिक्रमे । क्रमोल्लङ्घने । शास्त्रीयलोकव्यवहाराद्यप्राप्तस्यार्थस्यपरित्यागे । अतिपाते । उपात्यये ॥ पर्य्ययणम् । इण् गतौ । एरच् ॥

पर्य्ययणम् । न० अश्वसज्जायाम् । जीन॰इ०भाषा०पलानइतिच ॥

पर्य्यवसानम् । न० अवसाने ॥ शेषमल्पकर्मणि ॥ पर्य्यवपूर्व : । ल्युट् ॥

पर्य्यवसित : । त्रि० पर्य्यवसानप्राप्ते ॥

पर्य्यवस्था । स्त्री० विरोधने ॥ पर्य्यवस्थानम् । प्रा० । आतश्चोपसर्गे ॥

पर्य्यवस्थाता । त्रि० शत्रौ । विरोधिनि ॥ पर्य्यवतिष्ठति । प्रा० । तृच् ॥ पर्य्यवरोधरि ॥

पर्य्यवस्थानम् । न० विरोधे ॥ प्रा० । ल्युट् । सर्वतोभावेनावस्थितौ ॥

पर्य्यश्रु : । त्रि० परिगतानन्दवाष्पे ।

पर्य्यस्त : । त्रि० पतिते । क्षिप्ते । हैमचन्द्र॰इतिभा० । हते ॥ परितोऽस्त : ॥ परिक्षिप्ते । सर्वत:प्रसृते ॥ विक्षिप्ते ॥

पर्य्यस्तिका । स्त्री० खट्वायाम् ॥

पर्य्याचान्तम् । न० एकपङ्क्तिस्थान्यान्नवमन्ययत्नानिभुज्यमानेकेनचिदाचमनंक्रियतेतदन्नंपर्य्याचान्तमुच्यते ।

पर्य्याणम् । न० पल्ययने । घोडेकापलान॰इ॰भा० ॥ वङ्कायभागे॰ इ॰त्रि॰शे० ॥

पर्य्याधाता । पुं० आहिताग्नौकनिष्ठे । यथा । सोदर्य्येतिष्ठतिज्येष्ठेयस्त्वाधानंकरोतिहि । तयो : पर्य्याहितोज्येष्ठ : पर्य्याधाताकनिष्ठक: ॥

पर्य्याप्तम् । न० यथेष्टे । निकामे ॥ निवारणे ॥ त्रि० । शक्ते ॥ प्राप्ते ॥ कार्य्यकारणवद्धे ॥ परिमिते ॥ आप्लृव्याप्तौ । परिपूर्व : । भावे॰क्त : ॥ प्राप्तौ ॥ क्तप्रावितिमेदिनिकर : ॥

पर्य्याप्ति : । स्त्री० प्रकामे । प्राप्तौ ॥ रक्षणे । मारणोद्यतस्यनिवारणे ॥ पर्य्यापनम् । पर्य्याप्तिरितिस्त्रापणार्थ : । क्तिन् ॥ सामर्थ्ये । स्वरूपसम्बन्धविशेषे । सचसर्वेषामेवपदार्थानांविशिष्टबुद्धिनियामक : । पदार्थभेदेननाना । यथा । पर्य्याप्तिसम्बन्धेनैकोघटइत्यौदासित्यादिप्रतीतिसाक्षिक : स्वरूपसम्बन्धविशेषइतिदीधिति : । समवायेनगुणे गुणास्तस्त्वेपिचत्वारोगुणाइत्यादिप्रतीत्यागुणादिषुसङ्ख्यादिमत्त्वनियामकोपिताहशसम्बन्ध: । इतिसामान्याभावेजगदीश : । द्वितीयवादेगदाधरभट्टाचार्य्य ॥

पर्य्याय : । पुं० प्रकारे । अवसरे । क्रमे । आनुपूर्व्याम् । परिपाट्याम् । अनुक्रमे । वारी॰इ॰भा० ॥ निर्माणे । द्रव्यधर्मे । क्रमेणैकार्थवाचका : शब्दा : पर्य्याया : इतियेनय

जानू इतिच भा० ॥

पर्व्वकारी । पुं० धनादिलोभेनअपर्वसु अमावास्याक्रियाप्रवर्तके ॥

पर्व्वगामी । पुं० पर्वसु स्त्रीगामिनि ॥

पर्व्वतः । पुं० महीध्रे । शिखरिणि । क्ष्माभृति । अहार्ये । गोत्रे । गिरौ ॥ पर्व्वाणिसन्त्यस्य । तपपर्व्वमरुद्भ्याम् । यद्वा । पर्व्वति । पर्वपूरणे । भृमृदृशियजिपर्व्विपच्यमितमिनमिहर्यिभ्योऽतच् । विंशतिर्व्व प्रपर्व्वता यथा । हिमवान्हेमकूटश्चनिषधोनीलपर्वतः ॥ श्वेतश्चभृङ्गवान्मेरुर्माल्यवान्गन्धमादनः ॥ महेन्द्रोमलयः सह्यः शुक्तिमान्क्षमानपि । विन्ध्यश्चपारियात्रश्चकैलासो मन्दिरस्तथा ॥ लोकालोकोमहांश्चैव तथैवोरसमानसः । एतेविंशति विख्याताः पर्वतास्तत्र पावराः ॥ पाद्मे । ध्वजे ॥ शाकप्रभेदे । पावदा इ० गौ० शा० प्र० मत्स्यविशेषे । देवर्षिविशेषे ॥

पर्व्वसंकाशः । पुं० द्रोणकाके ॥

पर्व्वतजः । पुं० गिरिसंभववस्तुनि ॥

पर्व्वतजा । स्त्री० पार्वत्याम् ॥ सरिति । नद्याम् ॥ द्राक्षावि० । पहाड़ी० दाख इ० भा० ॥ पर्वतात्जाता । जनी० । सप्तम्यामिति डः ॥

पर्वततृणम् । न० तृणविशेषे । तृणाढ्ये । मृगप्रिये ॥

पर्वतमोचा । स्त्री० अद्रिकदल्याम् ॥

पर्वतराजः । पुं० नगाधिराजेहिमाद्रौ । पर्वतानांराजा । राजेतिटच् ॥

पर्व्वतराजपुत्री । स्त्री० उमायाम् । दुर्गायाम् । यथा । शुक्लपक्षात्प्रमयुते दशाहेमूलसंयुक्तासितसप्तमीयाः । आरभ्यतस्यांदशमीश्चयावत् प्रपूजयेत्पर्व्वतराजपुत्रीमिति ॥

पर्व्वतवासिनी । स्त्री० आकाशमांस्याम् ॥ गायत्र्याम् । काल्याम् ॥

पर्व्वताधारा । स्त्री० पृथिव्याम् ॥

पर्व्वतारिः । पुं० इन्द्रे । पर्व्वतानामरिः ॥

पर्व्वतालयः । पुं० वानरे ॥ पर्व्वतआलयोयस्य ॥

पर्व्वताशयः । पुं० मेघे ॥

पर्व्वताश्रयः । पुं० शरभे ॥ त्रि० । पर्व्वतवासिनि ॥

पर्व्वश्रयदेशः । पुं० देशविशेषेषु ॥ तेयथा । अतोदेशान्प्रवक्ष्यामिपर्व्वताश्रयिणश्चये । निराहारांहंसवर्णाश्चकुपथाश्चपथाःखशाः ॥ कुथप्रावरणाश्चैव उर्णाःदर्भाःसमुद्रकाः । त्रिगर्त्तामण्डलाश्चैवकिराताश्चामरैः सह ॥ इतिमत्स्यपुराणम् ॥

पर्व्वतीयः । पुं० अखोटे । पर्वतेभवः । विभाषामनुष्य इतिपक्षेछः ॥ त्रि० पर्वतोत्पन्नमनुष्यादौपर्वतोनिवासोऽस्य । पर्व्वताच्चेतिछः ॥

पर्व्वधि: । पुं० हिमांशौ । चन्द्रे ॥

पर्व्व । न० उत्सवे । मद्दे ॥ ग्रन्थौ ॥ प्रस्तावे ॥ लक्षणान्तरे । दर्शप्रतिपदो:सन्धौ ॥ विषुवत्प्रभृतिषु ॥ ग्रन्थविशेषे ॥ ग्रन्थसन्धौ ॥ यथा । महाभारतेऽष्टादशपर्व्वाणि । तानियथा आदि:सभावनविराटमथोद्यमस्वभीष्मोगुरुःकर्णशल्यमद्रसौप्तिकाश्च । स्त्री पर्व्वशान्तिरनुशासनमश्वमेधव्यासाश्रमौसुपलयानदिवारोहइतिमहाभारतटीका ॥ तिथिविशेषेषु ॥ चतुर्द्दश्यष्टमीकृष्णाश्चमावास्याचपूर्णिमा । पर्व्वाण्येतानिराजेन्द्ररविसङ्क्रान्तिया ॥ पर्वंति०पर्वतीवा । पर्व्वपूरणे । वा० कनिन् ॥ यद्वा । पिपर्त्ति पृणातिवा ॥ पृ० । व्यामदिपद्यर्त्तिपृशकिभ्योवनिप् ॥ लवो ॥

पर्व्वपुष्पी । स्त्री० रामदूतीवृत्ते ॥

पर्व्वपूर्णता । स्त्री० आयोजने । सम्भारे ॥ पर्व्वण:पूर्णत्वे ॥

पर्व्वमूला । स्त्री० श्वेतायाम् ॥

पर्व्वयोनि : । पुं० इक्ष्वादौ ॥ पर्वणियोनिरुत्पत्तिर्यस्य ॥

पर्व्वरुट् । पुं० पिण्डपुष्पे । दाड़िमे ॥

पर्व्ववल्ली । स्त्री० मालादूर्वायाम् ॥

पर्व्वसन्धि: । पुं० प्रतिपत्पञ्चदश्योरन्तरे ॥ पञ्चदशीशब्देनपूर्णिमाऽमावास्ययोर्द्वयोर्ग्रहणम् । अतएवपौर्णमास्यामावास्ययाश्चेषसार्द्धदण्ड चतुष्टयम्प्रतिपदश्चप्रथमसार्द्धदण्ड चतुष्टयं पर्वसन्धिरिति वृद्धा : ॥ सैंहिकेयोयदाराहुर्यसतेपर्वसन्धिष्वितिवच: ॥ पर्वणो:सन्धि : ॥

पर्व्वित: । पुं० पर्वतमत्स्ये ॥

पर्शु: । पुं० कुठारे । परशौ ॥ परंशृणाति । शृहिंसायाम् । आङ्परयो:खनिशृभ्यांडिच्चेतिकु : ॥ पृ० ॥ यद्वा । स्पृशति स्पृशसंस्पर्शने स्पृशेश्श्वण्शुनौपृचेति०शुन्० । पृ । आदेशश्च ॥

पर्शुका । स्त्री० पार्श्वास्थिनि । पांसु० इतिभाषा ॥ स्पृशति स्पृश्यतीवा । स्पृश० । स्पृशे:श्वण्शुनौपृच स्वार्थेकन् ॥ यथा पर्शुरिव । इवेप्रतिकृताविति कन् ॥

पर्शुपाणि: । पुं० गणेशे । विनायके ॥

पर्शुराम : । पुं० जामदग्न्ये । परशुरामे ॥

पर्शू : । स्त्री० पर्शुकायाम् ॥ अप्राणिजातेरित्यूङ् ॥

पर्श्वध : । पुं० कुठारे । परसा० इ० भा० ॥ परश्वयनम् । टुओश्वि० । अन्येष्वपीतिड : । परश्वंदधाति । डुधाञ् । आतइतिक: । पृषोदरादि : ॥

पर्षत् । स्त्री० सभायाम् ॥ यथाह० याज्ञवल्क्य : । चत्वारोवेदधर्मज्ञा: पर्षत्त्रैविद्यमेववा । सात्रूतेयंसधर्म:

पर्याय :

रचित : ॥ सम्पर्कविशेषे ॥ येनस-
हयत्सम्पर्क : सम्बन्धस्तेनसहतत्-
पर्याय : । यथा । समानं कुलभाव
सुदानादानन्तथैवच । तयोर्वैशस-
मानंहिपर्यायस्त्वप्रचक्षते ॥ इतिकु-
लदीपिका ॥ अलङ्कारवि० । यथा।
एकंक्रमेणानेकस्मिन्पर्याय : । एकं
वस्तुक्रमेणानेकस्मिन्भवतिक्रियते-
वासपर्याय : । क्रमेणोदाहरणम् ।
श्रोणीभारस्त्यजतितनुतांसेवतेमध्य
भाग : पद्भ्यांमुक्तास्तरलगतय :
संश्रितालोचनाभ्याम् । धत्तेवक्ष :
कुचसचिवतामद्वितीयस्त्ववक्त्रंतद्गा
त्राणांगुणविनिमय : कल्पितो-
यौवनेन ॥ यथावा । सन्ध्यास्वस्थि-
तिरियंतवकालकूटकेनोत्तरोत्तरवि
शिष्टपदोपदिष्टा ॥ प्रागर्णवस्यहृद
येवृषलक्ष्मणोथकण्ठेऽधुनावससि
वाचिपुन : खलानाम् । यथावा ।
विम्बौष्ठएवरागस्तेतन्विपूर्वमदृश्य
त । अधुनाहृदयेप्येषमृगशावाक्षि-
दृश्यते ॥ रागस्यवस्तुनोभेदेपिएक
तयाध्यवसितत्वादेकत्वमविरुद्धम्॥
तत्ताणसिरिसहोअररअणाहरणंमि
हिअअमेक्करसम् । विम्बाहरेपि
आणंनिवेसिअंकुसुमवाणेन ॥ * ॥
तत्तेषांश्रीसहोदररत्नाभरणेहृदय
मेकरसम् । विम्बाधरेप्रियाणांनिवे
शितंकुसुमवाणेनेतिसंस्कृतम् ॥

पर्याय :

श्रीसहोदररत्नंकौस्तुभ : आभरणं-
यस्यतस्मिन्विष्णौएकरसमेकतान
मासीत्तेषांपातालवासिनामसुराणामि-
तिचंडीदासहृदयम् । कुसुमवाणे-
नप्रियाणांकान्तानांविम्बसदृशेऽधरे
विनिवेशितमित्यनेकत्रस्थितौप्रयो-
जकनिर्देशाद्भेद : ॥ अन्यस्त्वन्य-
था । अनेकमेकस्मिन्क्रमेणभवति-
क्रियतेवासोन्य : । क्रमेणोदाहरण
म् । मधुरिमरुचिरंवच : खलाना-
ममृतमहोप्रथमंपृथुव्यनक्ति । अथ-
कथयतिमोहहेतुमन्तर्गतमिवहालह
लंविषंतदेव ॥ तद्गेहंनतभित्तिम-
न्दिरमिदंलब्धावकाशंदिव :साधेनु
र्जरतीनदन्तिकरिणामेताघनाभाव
टा : । सक्षुद्रोमुसल:ध्वनि: कलमि
दंसङ्गीतकंयोषितामाश्चर्यंदिवसैर्द्वि
जोयमियतीभूमिंसमारोपित: ॥ अ
त्रैकस्यैवहानोपादानयोरविवक्षितत्वा
न्नपरिवृत्ति : ॥ * ॥ अपिचलक्षणा
न्तरम् । क्रमेणैकमनेकस्मिन्नाधारे
वर्त्ततेयदि । एकस्मिन्नथवानेकपर्या
यालङ्कृतिर्मतेति ॥ पर्ययणम् ।
इण्० । परावनुपात्ययइणइतिघञ्
। व्यत्ययेपि ॥ यथा । प्राप्त: पर्याय
कालोय इतिब्रह्माण्डभाषतइति ॥
पर्यायशयनम् । न० उपशये । विभा-
गे । प्रहरिकादीनांपर्यायेणक्रमेणश
यनम् ॥

पर्यायोक्तम् । न० अलङ्कारविशेषे ॥ पर्यायोक्तंविनावाच्यवाचकत्वेन व-स्तुयत् ॥ वाच्यवाचकभावव्यतिरिक्तेनावगमनव्यापारेणयत्प्रतिपादनं तत्पर्यायेणभङ्ग्यन्तरेणकथनात् पर्यायोक्तम् । उदाहरणम् । यंप्रेक्ष्य चिररूढापिनिवासप्रीतिरुज्झिता मदेनैरावणमुखमानेनहृदयेहरेः ॥ अत्र रावणशक्रौमदमानमुक्तौजाता वितिव्यङ्ग्यमपिशब्देनोच्यते । तेनयदेवोच्यतेतदेवव्यङ्ग्यंयथातुव्यङ्ग्यंनतथोच्यतेयथागविशुक्लेचलति दृष्टेगौः शुक्लश्चलतीति विकल्पोय देवदृश्यतेतदेवविकल्पयति० नतुय थादृष्टंतथा० यतोभिन्नासंसृष्टत्वेनदृ ष्टमेदसंसर्गाभ्यांविकल्पयति ॥

पर्य्यासित : । त्रि० पर्य्यावर्त्तिते ॥

पर्य्याहारः । पुं० वीवधे । उभयतोवद्धशिक्ये स्कन्धवाह्ये काष्ठविशेषे । का मठइतिवङ्गीइतिचभा० । परित आह्रियतेऽनेन ॥

पर्य्याहितः । पुं० योऽग्रेऽग्न्याधानंकरोतितस्यज्येष्ठे । यथा । सोदर्यैतिष्ठ ज्येष्ठेचग्न्याधानंकरोतिहि । तयोः पर्य्याहितोज्येष्ठः पर्य्याधाताकनिष्ठकः ॥

पर्य्युदस्सनम् । न० वर्जने । त्यागे ॥ परितउदस्यते । अस् ० । कर्म्मण्यु टइतिकर्मणिल्युट् ॥



पर्य्युदस्तः । त्रि० पर्युदासविशिष्टे । विध्यन्वयिभेदात्मकनञर्थयुक्ते ॥

पर्युदासः । पुं० प्रतिषेधभेदे ॥ प्राधान्यन्तुविधेर्यत्रप्रतिषेधेऽप्रधानता । पर्युदासः सविज्ञेयोयत्रोत्तरपदेनन ञ् ॥ सामान्यशास्त्रप्राप्तनिषेधस्यै वपर्युदासत्वम् ॥ यथा । अमावास्यायाम्पितृभ्योदद्यात् रात्रौश्राद्धं नकुर्वीत । अत्रश्राद्धकरणे रात्रेः पर्युदासः ॥ परिसर्वतोभावेनउदासनमितिविधिर्यत्रसपर्युदासइतिगौडाः ॥

पर्युपयुक्त : । त्रि० समाप्ते ॥ यथा । आगमकालेनैवास्य युक्तत्वंपर्य्युपयुक्तंस्यादितिमहाभाष्यम् । आगमकालेनविद्याग्रहणकालेन । अस्य-विद्यार्थिनः । पर्य्युपयुक्तंसमाप्तमिति तदर्थः ॥

पर्युषितम् । त्रि० रात्र्यन्तरितपक्वान्ने । व्युष्टे । बासी० इ० भाषा० ॥ यातयामंगतरसंपूतिपर्युषितञ्चयत् । उच्छिष्टमपिचामेध्यंभोजनंतामसप्रियमितिभगवद्गीता ॥

पर्य्येषणा । स्त्री० अन्वेषणायाम् । ढूढणाइतिढूढइतिचभा॥ अन्यांप र्य्येषणांचर । तर्कादिनायथावोधित धर्म्मादन्वेषणे ॥ इषगत० द्वि० । इषआभीक्ष्ण्ये क्र्या० । आभ्यांपरे र्वेतिप्चेयुच् । टाप् ॥

पर्य्यङ्कम् । न० जरुपर्व्वणि । घोंटूइति

स्यादेकोवाऽध्यात्मवित्तमः ॥ इति ॥ अन्यदप्युक्तंलक्षणंभविष्यपुराणे । द्विगुणाश्चक्षियाणान्तु वैश्यानांत्रिगुणास्मृता । चतुर्गुणातुशूद्राणांपर्षदुक्तामहात्मनामिति ॥ परितः सीदन्त्यस्याम् । परि+सद्० । सं० क्विप् । सदिरप्रतेरितिषत्वम् । वा०परेरन्तलोपः ॥ यद्वा । गृहभसोऽदिरिति च्यदिप्रत्ययोबाहुलकात्पूर्वेरपि ॥

पर्षद्वलः । त्रि० परिषदर्हे । सभासदि । सभ्ये ॥ पर्षदस्यास्ति । रजः कृष्यासुतिपरिपदोवलजित्यत्र पर्षदित्यपिपाठाद्वलच् ॥

पल्लः । पुं० पलाले । अस्यहीनधान्यनाले । पराल० इ० भा० ॥

पलम् । न० आमिषे । मांसे ॥ उन्माने । कर्षचतुष्टये । तुले । प्रकुञ्चे । बिल्वे ॥ तत्तु शास्त्रे तोलकचतुष्टयम् । वैद्यकेऽष्टतोलकम् । लौकिकेसार्द्धरक्तिद्विमाषकतोलकत्रितयम् ॥ यथा । पलन्तुलौकिकैर्मानैः सार्द्धरक्तिद्विमाषकम् । तोलकत्रितयंस्वयंज्योतिर्विद्भिः स्मृतिसम्मतम् ॥ इति तिथितत्त्वम् ॥ पलंसुवर्णाश्चत्वारः पञ्चवापिप्रकीर्त्तिताः ॥ (००) ॥ त्रिघटिकायाम् । घटिकाषष्टिभागैकभागे । षष्टिविपले ॥ पलदण्डयोः प्रमाणन्तु दशगुर्वक्षरोच्चारणकालः प्राणः षडात्मकैः । तैः पलंस्यादेकोवा... तत्षष्ट्यादण्डइत्यभिधीयते ॥ तेनच । आकान्ते पञ्चसास्येपर्यं काश्मेदेशेस्वाप्तीः कान्तंवक्त्रंयतंपूर्णचन्द्रंमत्त्वारात्रौचेत् । क्षुत्क्षामः प्राटैस्तस्येतोराहुः क्रूरःप्रायात् तस्माद्भ्रान्त्येहर्म्यस्याग्रेशय्यै सामेकर्त्तव्या ॥ अस्यैकपाठात्पलम्पष्टिपाठाद्दण्डोभवति ॥ यथाहकालिदासः । गुर्वक्षराणामुदितस्वषष्ट्यापलंपलानांघटिकाभिलेका । षष्ट्याघटीनांभदिनंतयार्थैस्त्रिंशैर्वायाचन्द्रमसोदिनंस्यादिति ॥ पलति । पलगतौ । पचाद्यच् ॥

पलक्या । स्त्री० पालक्यशाके । इ० रा० नि० ॥

पलगण्ड : । पुं० लेपके । रान० इ० भा० ॥ पलंमांसंतत्तुल्येनमृदादिनागण्डतियद्वैकदेशमिवकरोति । गडिवदनैकदेशे । पचाद्यच् ॥

पलङ्कट : । त्रि० भयशीले । भीरौ ॥ इ० त्रि० ॥

पलङ्कर : । पुं० पित्ते ॥ इति त्रि० ॥

पलङ्कष : । पुं० राक्षसे ॥ कणगुग्गुलौ ॥ पलङ्कषति । कषहिंसायाम् । मू०कः । तत्पुरुषङ्० द्वितीयायाअलुक् ॥

पलङ्कषा । स्त्री० गोक्षुरके । रास्नायाम् । किंशुके । गुग्गुलौ । मुण्डीर्याम् । लाक्षायाम् । क्षुद्रगोक्षुरके । महाश्राव

ध्याम् ॥ मचिकायाम् ॥ टाप् ॥

पलप्रिय : । पुं० द्रोणकाके ॥ त्रि० । मांसादे ॥

पलभा । स्त्री० पलविभायाम् । विषुवत्प्रभायाम् ॥ साषमेषसङ्क्रमणा दृर्वाकसपाद्दाद्दिमेमध्याह्ने द्वादशाङ्गुलशङ्कुछाया । यद्योक्तंयष्ठलाचवे । मेषादिविसायमसागसूर्येदिनार्द्ध लाभापलभाभवेत्सेति ॥

पलल : । पुं० राक्षसे । यातुधाने ॥ न० पङ्के ॥ मांसे ॥ तिलचूर्णे ॥ पललंतिलकाल्कंस्यात् तिलचूर्णञ्चपिष्टकः । पललंमधुरंवल्यंपित्तघ्नमलपुष्टिदम् । इ० राजनिर्घण्टः ॥ सैन्धवतिलचूर्णे । तिलकुट० इ०भा । यथा । पललन्तु समाख्यातंसैन्धवतिलपिष्टकम् । पललंमलकृद्वृष्यं वातघ्नं कफपित्तकृत् । बृंहणंगुरुवल्यञ्चस्निग्ध मूत्रनिवर्त्तनम् ॥ पल-ति० पलयतेऽनेनवा । पलगतौ । वृषादिभ्यश्चिदितिकल : ॥

पललज्वर : । पुं० पित्ते ॥ इतिशारावली० ॥

पललप्रिय : । पुं० द्रोणकाके ॥

पललाशय : । पुं० गलडरोगे ॥

पलव : । पुं० प्लवे । मत्स्याखेटे । मत्स्यधारणोपाये । लोपो० इ०गौ० मायां० ॥

पलशतम् । न० तुलायाम् ॥ पलानां शतम् ॥

पलाग्नि : । पुं० पित्ते ॥

पलाङ्ग : । पुं० शिशुमारे ॥

पलाण्डु : । पुं० सुकन्दके । मुखदूषणे । शूद्रप्रिये । रोचने । प्याज० इ० भा० ॥ पलाण्डुर्यवनेष्टश्चदुर्गन्धोमुखदूषक : । फारसीन्तु ; पलाण्डुशालताकोंदृट्ट्र मयस: ॥ इ० धन्वन्तरि : ॥ सुश्रुतस्तु । लशुनोदीर्घपत्रश्चपिच्छगन्धोमहौषधम् । फरपवपलाण्डुश्च लताकोंद्यापदारिका ॥ ग्रञ्जनंयवनेष्टश्चपलाण्डो र्दश्यनातव : ॥ इत्याह ॥ पलाण्डुस्तुगुणैस्तुल्योरसोनसदृशोबुधैः : ॥ स्वादुपाकरसोऽनुष्ण : कफकृन्नातिपित्तल : ॥ परंतीक्ष्णलंवातंवलवीर्यकरोगुरुरिति भावप्रकाश : ॥ पलति । पलरक्षणे । बाहुलकात्पाण्डुप्रत्यय : ॥

पलाद : । पुं० । स्त्री० । राक्षसे ॥ पलमत्ति । अद० । कर्मण्यण् ॥

पलादन : । पुं० । स्त्री० । राक्षसे ॥ त्रि० मांसभक्षणशीले ॥

पलान्नम् । न० पाकराजेश्वरोक्तप्रकारे मांसादियुक्तसिद्धभक्ते । पलौदने । मांसौदने ॥

पलाप : । पुं० गजगंडे । हस्तिकपोले ॥

पलायनम् । न० अपयाने । प्रद्रावे । भयादिनास्थानान्तरगमने । भाग-ना० इ० मा०

पलायित : । त्रि० नष्टे ॥ गृहीतदिशि । तिरोहिते । पलायनविशिष्टे ॥ इ० है० ॥

पलाल : । पुं० । न० । निष्फलेतृणादिकाण्डे । सस्यशून्यधान्यनाले ॥ पलति पल्यतेवा । पलगतौ । सनिविशिविडिमण्डिकुलिकपिपलिपञ्चिभ्य : कालन् ॥ पलमलतिवा । अलु० । कर्मण्यण् ॥

पलालदोहद: । पुं० आम्रवृक्षे ॥ इति शब्दमाला ॥

पलालिनम् । न० महत्पलालपलाली तद्वति ॥ मत्वर्थे० ग्रामादित्वात्मः । ग्रामीपलालीदद्रूर्यांकृतसन्ध्य ॥

पलाली । पुं० महत्पलाले ॥

पलाश: । पुं० शट्याम् ॥ राक्षसे ॥ मगधदेशे ॥ हरिते ॥ किंशुके । पर्णे । ब्रह्मवृक्षे । याज्ञिके । ढाक० इ० भा० ॥ पलाशोदीपनीलघ्य : सरो पाविव्रणगुल्मजित् । कषाय : कटु कस्निग्ध : स्निग्धोगुदजरोगजित् ॥ भग्नसन्धानकृद्दोषग्रहण्यर्शः क्रमीन्हरेत् । तत्पुष्पंस्वादुपाकितुकटुतिक्तंकषायकम् ॥ वातलंकफपित्तास्रकृच्छ्रजिद्ग्राहिशीतलम् ॥ तृट्दाहशमनंवातरक्तकुष्ठहरंपरम् ॥ फलंलघूष्णमेहार्शः क्रिमिवातकफापहम् । विपाकेकटुकंरूक्षंकुष्ठगुल्मोदरप्रणुत् ॥ न० । कदने । पर्णे । कदे । पत्रा० इ० भा० ॥ पलाशपत्रे ॥ शासने ॥ परिभाषणे ॥ त्रि० । हरिद्वर्णविशिष्टे ॥ निर्दये ॥ पलाशस्यपत्रमायम् । अण् । संज्ञापूर्वकत्वाद्वृद्ध्यभाव : ॥ यद्वा । पलंमांसं० अश्नाति । अश० । कर्मण्यण् ॥ पलेमांसेशायायस्यवा ॥

पलाशक: । पुं शट्याम् । किंशुकवृक्षे ॥

पलाशपर्णी । स्त्री० अश्वगन्धायाम् ॥

पलाशसार : । पुं० शाकद्रुमे ॥

पलाशाख : । पुं० नाडीहिङ्गुनि ॥

पलाशाख्य : । पुं० नाडीहिंगुनि ।

पलाशाख्या । स्त्री० गन्धपत्रायाम् ॥

पलाशी । पुं० वृक्षमात्रे ॥ पलाशानि सन्त्यस्य । अतइनि : ॥ राक्षसे ॥ क्षीरिवृक्षे ॥

पलाशी । स्त्री० लताविशेषे । पत्रवल्ल्याम् । अल्पपल्याम् ॥ शट्याम् ॥ काश्मीरेगन्धपलाशीतिप्रसिद्धे । कर्चूरभेदे ॥

पलिक्नी । स्त्री० वृद्धायाम् ॥ पलितमस्त्यस्या : । अद्० अच् । असितपलितयोर्न । छन्दसिक्नमेके० इत्यनेकोक्तेर्भाषायामपिअनयोस्तद्दत्यस्यस्थानेक्नुइत्ये पआदेशोभवति । नान्तस्यानृङीप् ॥ गर्भिण्यांगवि ॥

पलिघ : । पुं० काचकलसे ॥ घटे ॥ प्राकारगोपुरे ॥ परिहन्यतेऽनेनवा । हन० । परीघकृत्यम्

घादेशश्च ।

पलितम् । न० केशपाके । जरसाकेशानांशौक्ल्ये ॥ फलतिफलनंवा । फलनिष्पत्तौ । ञिफलाविशरणे । नपुंसकेभावेक्तः । लोष्टपलितादितिसाधु ॥ फलेरितजादेश्चपोषः ॥ शैलजे ॥ तापे ॥ कर्दमे ॥ केशपाशे ॥ केशशुक्लताहेतौरोगे ॥ तन्निदानं यथा । क्रोधशोकश्रमकृतः शरीरोष्माशिरोगतः । पित्तञ्चकेशान्पचतिपलितंतेनजायत इतिमाधवः । अस्यचिकित्सा यथा । लोहचूर्णंस्यकार्यंशुद्धोर्द्धस्तु तमभ्रतः । धात्रीफलस्यसंपथ्यो द्वतयैकंविभीतकम् ॥ पिष्टालोहमयेभाण्डेस्थापयेन्निशिवासयेत् । लेपोऽयमचिराद्धन्ति पलितंनेहसंशयः ॥ दशार्द्धपञ्चवर्षाणि ॥ काश्मर्यामूलमादौसहचरकुसुमंकेतकस्यापिमूलंलौहंचूर्णसभृङ्गंत्रिफलपलयुतंतैलमेभिःपचेद्यः । कृत्वालोहस्यभाण्डेक्षितितलनिहितंस्थापयेन्मासमेकंकेशाःकाशप्रकाशाअपिमधुपनिभा अस्ययोगाद्भवन्ति ॥ त्रिफलानीलिकापत्रं मण्डूराजोऽयसोरजः । भवीमूत्रेणसंपिष्टं लेपात्कृष्णीकरंपरमिति भावप्रकाशः ॥

पलिता । स्त्री० कृष्णायाम् ॥ असितपलितयोर्नेति० प्रतिषेधात्ङीप्

तकारस्यनकारादेशश्च ।

पलौदनम् । न० मांसौदने । पलान्न० इ० भा० ॥ पलञ्चौदनञ्चअनयोः समाहारः ॥

पल्यः । त्रि० मांसभोजिनि ॥ पलमर्हति । तदर्हतीतियत् ॥

पल्यङ्कः । पुं० पर्यङ्के ॥ मञ्चे ॥ अध्याम ॥ पर्यस्तिकायाम् ॥ परितोऽञ्चति । अचिगतौ । घञ् । परिस्थयोर्लोऽलोपे रितिवालत्वम् ॥

पल्ययनम् । पुं० पर्याणे । पलानइति भाषा० ॥ इ० है० च० ॥ यस्माद्लालिकापल्ययनमिति० त्रि० शे० ॥

पल्लः । पुं० स्थूलकुसूलके । पालुइति मरा इ० च० गौ० भा० ॥

पल्लवः । पुं० । न० । किसलये । नवपत्रे । प्रवाले ॥ पर्वपत्रादिसङ्गापि शाखाया : पल्लवोमतः इतिकोशान्तरम् ॥ पल्लते । सं० क्विप् । लूयते । लूञ्० । ऋदोरप् । पल्चासौलवश्च ॥ विटपे ॥ विस्तरे ॥ चञ्चले ॥ शृङ्गारे ॥ अलक्तरागे ॥ पिङ्गे ॥

पल्लवकः । पुं० वेश्याधवे ॥ मत्स्यविशेषे ॥

पल्लवद्रुः । पुं० अशोकवृक्षे ॥

पल्लवाङ्कुरः । पुं० तोक्मे । यौगिकप० इ० भा० ॥

पल्लवाधारः । पुं० शाखायाम् ॥

पल्लविकः । त्रि० कामुके ॥

पलायित : । त्रि॰ नष्टे ॥ गृहीतदिशि । तिरोहिते । पलायनविशिष्टे ॥ इ॰ हे॰ ॥

पलाल : । पुं॰ । न॰ । निष्फलेतृणादिकाण्डे । सस्यशूकधान्यनाले ॥ पलति पल्यतेवा । पलगतौ । तमिविशिविडिमृणिकुलिकपिपलिमञ्चिभ्य : कालन् ॥ पलमलतिवा । अ-ल॰ । कर्मण्यण् ॥

पलालदोहद : । पुं॰ आम्रवृक्षे ॥ इति शब्दमाला ॥

पलालिनम् । न॰ महत्पलालंपलाली तद्वति ॥ मत्वर्थे॰ पामादित्वात्नः । शाकीपलालीदद्रू्णांह्रस्वत्वञ्च ॥

पलाली । पुं॰ महत्पलाले ॥

पलाश : । पुं॰ शट्याम् । राक्षसे । मगधदेशे ॥ हरिते ॥ किंशुके । पर्णे । वातपोथे । याज्ञिके । ढाक॰ इ॰ भा॰ ॥ पलाशोदीपनोवृष्य : सरोष्णोव्रणगुल्मजित् । कषाय : कटुकस्तिक्त : स्निग्धोगुदजरोगजित् ॥ भग्नसन्धानकृद्दोषग्रहण्यर्श : क्रमीन्हरेत् । तत्पुष्पंस्वादुपाकेतुकटुतिक्तंकषायकम् ॥वातलंकफपित्तास्रकृच्छ्रजिद्ग्राहिशीतलम् । तृट्दाहशमनंवातरक्तकुष्ठहरंपरम् ॥ फलंलघूष्णंमेहार्श : क्रिमिवातकफापहम् । विपाकेकटुकंरूक्षंकुष्ठगुल्मोदरप्रणुत् । न॰ । कदने । पर्णे । छदे । पत्रा॰ इ॰ भा॰ ॥ पलाशपत्रे ॥ शासने । परिभाषणे ॥ त्रि॰ । हरिद्वर्णविशिष्टे ॥ निर्दये ॥ पलाशस्यपत्रस्यायम् । अण् । संज्ञापूर्वकत्वादृद्ध्यभाव : ॥ यद्वा । पलंमांसं॰ अश्नाति । अश॰ । कर्मण्यण् ॥ पलेमांसेआशायस्यवा ॥

पलाशक : । पुं शट्याम् । किंशुकवृक्षे ॥

पलाशपर्णी । स्त्री॰ अश्वगन्धायाम् ॥

पलाशसार : । पुं॰ शाकद्रुमे ॥

पलाशाद्य : । पुं॰ नाडीहिङ्गुनि ॥

पलाशाख्य : । पुं॰ नाडीहिंगुनि ।

पलाशान्ता । स्त्री॰ गन्धपत्रायाम् ॥

पलाशी । पुं॰ क्षपमाचे ॥ पलाशानिसन्त्यस्य । अतइनि : ॥ राक्षसे ॥ क्षीरिवृक्षे ॥

पलाशी । स्त्री॰ लताविशेषे । पत्रवल्ल्याम् । चञ्चपल्याम् ॥ शट्याम् ॥ काश्मीरेगन्धपलाशीतिप्रसिद्धे । कर्चूरप्रभेदे ॥

पलिक्नी । स्त्री॰ इषायाम् ॥ पलितमस्त्यस्या : । अर्॰ अच् । असितपलितयोर्न । छन्दसिक्नमेके॰ इत्यत्रकोतिर्भाषायामपिअनयोस्तकारस्यस्थानेक्नइत्ययमादेशोभवति । नान्त्वान्ङीप् ॥ गर्भिण्यांगवि ॥

पलिघ : । पुं॰ काचकलसे ॥ घटे ॥ प्राकारगोपुरे ॥ परिहन्यनस्॰ परिहन्यतेऽनेनवा । हन॰ । घरौघइत्यप्

चादेशश्च ।

पलितम् । न० केशपाके । जरसाकेशानांशौक्ल्ये ॥ फलतिफलनंवा । फलनिष्पत्तौ । ञिफलाविशरणे । नपुंसकेभावेक्तः । लोहपलितावितिसाधु ॥ फलेरितजादेश्चपो वा । शैलजे ॥ तापे ॥ कर्दमे ॥ केशपाशे । केशशुक्लताहेतौरोगे ॥ स-न्निदानं यथा । क्रोधशोकश्रमकृतःशरीरोष्माशिरोगतः । पित्तञ्चकेशान्पचतिपलितंतेनजायत इतिमाधव : । अस्यचिकित्सा यथा । लोहचूर्णंसमायुक्तंदशोर्द्धस्तुतमम्बत : । धात्रीफलत्रयंपथ्यं हेतकेंविभीतकम् ॥ पिष्टालौहमयेभाण्डेस्थापयेन्नि शिवासयेत् । लेपोऽयमचिराद्धन्तिपलितंनैवसंशय : ॥ दुग्धाम्रमज्जक-र्षिथ ॥ काश्मर्यामूलमादीसहचरकुसुमंकेतकस्याभिमूलंलौहंचूर्णंसभृङ्गंत्रिफलपलयुतंतैलमेभि:पचेद्यः । कृत्वालौहस्यभाण्डेक्षितितलनिहितंमासमेकंचकेशा:काशप्रकाशाअपिमधुपनिभा अस्ययोगाद्भवन्ति । त्रिफलानीलिकापत्रं भृङ्गराजोऽयसोरज । अवीमूत्रेणसंपिष्टं लेपात्कृष्णीकरंपरमिति भावप्रकाश : ॥

पलिता । स्त्री० वृद्धायाम् ॥ असितपलितयोर्नेति० प्रतिषेधात्ङीप् तकारस्यनकारादेशश्चन ॥

पलौदनम् । न० मांसौदने । पलाव० इ० भा० ॥ पलस्यौदनस्य चनयोः समाहार : ॥

पल्ल : । त्रि० मांसभोजिनि ॥ पलम त्तीति । तदत्तीत्यर्थे ॥

पल्यङ्क : । पुं० पर्यङ्के ॥ मञ्चे । इण्याम् । पर्यस्तिकायाम् ॥ परितोऽञ्चते । अञ्चिगतौ । घञ् । परेश्चघाङ्-योरितिवालत्वम् ॥

पल्ययनम् । पुं० पर्याणे । पलानइति भाषा० ॥ इ०डे० च० ॥ पल्यादन्ता लिकाल्ययनमिति० त्रि० शि० ॥

पल्ल : । पुं० स्थूलकुसूलके । पालुइति सरा इ० च० गौ० भा० ॥

पल्लव : । पुं० । न० । किसलये । नवपत्रे । प्रवाले ॥ पर्वमरुदादित्वाति शाखाया : पल्लवोऽस्त : इतिपीया स्तरम् ॥ पल्लते । सं० क्षिप् । लूयते । लूञ् । अदोरम् । पल्लवासी लवश्च ॥ विटपे ॥ विस्तरे ॥ चञ्चले ॥ शृङ्गारे ॥ अलक्तरागे ॥ पिङ्गे ॥

पल्लवक : । पुं० वेश्याधवे ॥ मत्स्यविशेषे ॥

पल्लवद्रु : । पुं० अशोकवृक्षे ॥

पल्लवाङ्कुर । पुं० तोकमे । मौपर० इ० मा० ॥

पल्लवाधार : । पुं० शाखायाम् ॥

पल्लविक : । त्रि० कामुके ॥

पल्लवितम् । त्रि० लाक्षारक्ते ॥ सपल्लवे ॥ तते । विस्तृते ॥ पल्लवा : सञ्जाताऽस्य । सा० इतच् ॥

पल्लवी । पुं० द्रुमे ॥

पल्लि : । स्त्री० क्षुद्रग्रामे ॥ कुड्याम् ॥ कुटीसमूहे ॥

पल्लिका । स्त्री० गृहगोधिकायाम् ॥

पल्लिवाह : । पुं० तृणविशेषे ॥ पल्लिवा होदीर्घलग्ना : सुगन्धताम्रवर्णक : । मदृढ : शाकपत्रादि : पशूनांमध लप्रद : ॥

पल्ली । स्त्री० अल्पग्रामे ॥ कुटिन्याम् ॥ दक्षिणदेशप्रसिद्धे नगरविशेषे ॥ कुंड्यमस्त्ये । विशल्यरायाम् । गृहगोधिकायाम् । छायकी इति० क्षिप कली०इतिच०भा० ॥ अस्याःपतन फलमुक्तंज्योतिश्शास्त्रे । यथा । निप तति यदि पल्लीदक्षिणाङ्गेनराणामुग्र जनधनवियोगोलाभदावामभागे । उरसिशिरसिपृष्ठेकण्ठदेशेचराज्यंक रचरणहृदिस्थासर्वसौख्यंददातीति ॥ द्विविधोपरस्या : शब्दफलं यथा । विप्रं ब्राह्मणिकार्यसिद्धिरतुलाम- क्षेतुलाग्निभयम् । याम्यामग्निभयंसुर द्विपिषाजिताभ : समुद्राग्नये । वा यव्यांयरवस्वगन्धसलिलंदिव्याङ्गना चोत्तरे ऐशान्यांसरवंधुयंनिगदितं दिग्लक्षणंखञ्जनेयज्ञेयंञ्जे पीरतेपि तदितिच ॥

पल्वलम् । न० क्षुद्रसरसि । वेशन्ते । इत्यमरा० इ० भा० ॥ अल्पंसर : पल्वलंख्यातमन्द्रर्जगेरवौ । नसि हतिजलंकिञ्चित्तस्य. वारिपाल्व लम् ॥ पाल्वलंगुर्वभिष्यन्दिविष्टम्भि दोषलंपरम् ॥ पवतिपस्यसेवा । प नगतौ । सानसिरूर्णसिपर्णसितण्ड लाङ्कुषपाल्वलसल्वलधिषुणय्रशि- ल्या : इतिवलच् । यदा । पिधन्त्य स्मिन् । पापानि अस्मात्पानसीस्या दिनैवपल्वघुगायनोह्रस्वत्वञ्च ।

पल्वलावास : । पुं० कूर्मे ॥

पव : । पुं० निष्पावे । धान्यादीनांनि स्तुषीकरणे । वायौ । पवनम् । पूञ्० । ऋदोरप् ॥ न० । गोमये इति श० चं० ॥

पवन : । पुं० वायौ । भवति ॥ पुना तिपवतेवा । बहुलमन्यत्रापीतियु च् ॥ पवनस्यपावयितृत्वादिगवतांवा मध्येभगवतोविभूति : । सप्तधाच पवना यथा । भूवायुरावहइहप्रवह स्तदृर्ध्व : स्यादुद्वहस्तदनुसंवहसंज्ञक श्च । अन्य : परीदिसुवह : परिपूर्व कोस्मात्परा : परावहइतिपवना : प्रसिद्धाइतिसिद्धान्तशिरोमणि : ॥ भावमध्यार्ग्नौ ॥ निष्पावे । प्रयासे सूर्पादिनाधान्यस्योत्तुषपणेमनिस्तु

पोकरणे ॥ खातिनखने ॥ लम्बा दिधिकले ॥ ।S। मध्यगुरौचतुष्का ले ॥ ।S न० । आपाकि । कुम्भ कारस्यामघटादीनां पाकस्थाने । पावाइतिभा० ॥ जले । त्रि० । पविधि : प्रवते ॥ पूञ् । ल्युट्

पवनविजय : । पुं० गरुडोक्तशुभाशुभ सूचकोच्छ्वासवायुजयोपायकेग्रन्थवि- शेषे ॥

पवनव्याधि : । पुं० श्रीकृष्णसखिषे । उद्धवे ॥ वायुरोगे ॥

पवनाशन : । पुं० हनूमति ॥ अग्नौ ॥ पवनस्यात्मज : ॥

पवनाल: । पुं० तूर्णाह्वे । देवधान्ये । जुमूहरी इतिख्यात० इतिभा०

पवनाश । पुं० सर्पे ॥

पवनाशन : । पुं० सर्पे ॥ पवनोऽशनं यस्य ॥

पवनाशनाश : । पुं० गरुडे ॥ मयूरे

पवनेष्ट : । पुं० महानिम्बे ॥ निम्बे

पवनोम्बुजम् । न० परूषफले ॥

पवमान : । पुं० वायौ ॥ पवते । पूङ् ॥ पूङ्यजो:शानन् । आगमक् ॥ स्तोत्रविशेषेषु ॥ ज्योतिष्टोमेबहिष्पव मानस्तोत्राश्रितगीतकार्यैस्त्रिभिर्भज मानाग्नि कर्मक्रियते तानिपवमान पदव्याख्यानिस्तोत्राणीत्यर्थ : ॥ नि र्मथ्याग्नौ ॥ सचगार्हपत्याग्नि : । यथा । यत्रय पवमानस्तु नि-

र्मथ्योग्नि : सउच्यते । सचवैगार्ह पत्योग्नि : प्रथमोनन्याय:स्मृत : इ तिमत्स्यपुराणम् ॥

पवनात्मज : । पुं० हव्यवाहने ॥ य- था । पवमानात्मजोह्यग्निर्हव्यवाह नउच्यते ॥

पवारुक : । पुं० अश्मनि । पाषाणे ।

पवि : । पुं० कुलिशे , वज्रे ॥ पुना ति । क्षीरस्वामिपवित्रवज्रोक्तः पुनाति रचइ : ॥

पवित : । त्रि० पवित्रिते , पूते ॥ पू यतेस्म । पूङ् । क्त:पूङश्चेतीड्वि धानात् । गुणाभावादेशौ ॥ न० । म- रीचे ॥

पविता । त्रि० पवित्रताकारके ॥ पुना ति । पूञ्० । तृच् ॥

पवित्रम् । न० वर्षणे ॥ कुशे ॥ ताम्रे ॥ पयसि । जले ॥ अर्घोपकरणे ॥ यज्ञोपवीते ॥ घृते ॥ मधुनि ॥ पार्वणश्राद्धादावर्घार्थे होमादावाज्य संस्काराद्यर्थंचसायनिर्गर्भकुशद्वय वेष्टितप्रादेशमात्रद्रव्ये ॥ यथा । अनन्तर्गर्भिणं साग्रं कौशंद्विदलमे वच । प्रादेशमात्रविज्ञेयं पवित्रंयत्र कुत्रचिदिति ॥ पुं० । तिलवृक्षे ॥ पुत्रजीववृक्षे ॥ त्रि० व्रतादिना शुद्धे । प्रयते । पूते ॥ शुद्धिजनके । मेध्ये ॥ पावने । शुद्धिकरे ॥ पु- नाति । पूञ्० । कर्तरिचर्षिदेव

तयोरितीन : ॥ यद्वा । पवतेपुना तिवा । पू ङ् । पूञ्॰वा । अशि चोदिभ्यइत्रौचौ ॥

पवित्रकः । पुं॰ अश्वत्थे ॥ उदुम्बरे ॥ कुशे ॥ मदनके ॥ न॰ । शणसूत्र जाले ॥ पवित्रमुपवीतम्तद्वदिव । दूर्वेप्रतिकृताविति कन् ॥ पवित्रा द्विपरीतलक्षणयासंज्ञायांकोवा । मनन्यितुपवित्रकमितिस्मृतिः ॥ जानूरुनाभिमानान्तंप्रतिमासुपवित्र कम् । इत्यग्निपुराणम् ॥

पवित्रधान्यम् । न॰ यवे ॥ इ॰ रा॰ नि॰ ॥

पवित्रा । स्त्री॰ नदीविशेषे ॥ तुल स्याम् ॥ अश्वत्थीवृक्षे ॥ हरिद्राया म् ॥

पवित्रारोपणम् । न॰ श्रीकृष्णसंप्रदान कोपवीतदानरूपोत्सवविशेषे ॥ यथा । श्रावणस्यसितेपक्षेद्वादश्यांवैष्णवै र्मुदा । कर्तव्यः कृष्णदेवस्यपवि त्रारोपणोत्सवः ॥ श्रीकृष्णदेवस्ये त्युपलक्षणमन्यदेवतानामपि ॥

पवित्रारोहणम् । न॰ पवित्रारोपणे ॥ यथा । आषाढशुक्लपक्षस्याष्टमी श्रावणस्यच । पवित्रारोहणंकुर्या द्देव्याः प्रीतिकरंपरम् ॥ दुर्गाम न्त्रगणमन्त्रं यद्दुर्गाबीजेनभैरव, वैष्ण वीसंचमन्त्रे गणपवित्रारोहणं चरेत् ॥ विशेषात्श्रावणारम्यदेव्याः कुर्यात्

पवित्रकम् । सर्वेषामपिदेवानांपवि त्रारोहणंचरेत् ॥

पवित्राष्टकम् । न॰ स्थाण्वादिषु ॥ स्था णुस्वर्णाक्षगोकर्णभद्रकर्णमहाबलाः वस्त्रापदाविमुक्ताख्यरुद्रकोट्यः खम ण्डले ॥ आकाशतत्त्वे एतत्पवित्रा ष्टकमिति मृगेन्द्रसंहिता ।

पवित्रितः । त्रि॰ पवित्रे । प्रयते । पूते । शुचौ । शुद्धे ॥ पवित्रंसञ्जात मस्य । ता॰ इतच् ॥

पशव्यः । त्रि॰ पशूपभोग्यबालतृणादि समृद्धदेशे ॥ पशुभ्योहितमित्यर्थेय त् ॥

पशु । अ॰ दर्शने ॥ परमदर्शने ॥ स- म्यगर्थे ॥ पशुमन्यमानाः ॥

पशुः । पुं॰ मृगादौ । सिंहव्याघ्रादौ । तिर्यगादिसर्वप्राणिषु ॥ अस्यल क्षणम् । लोमवल्लाङ्गूलवत्त्वम् ॥ इ॰ भा॰ रत्नेगणादः । ग्राम्यारण्यप्रभेदे नचतुर्दशविधाःपशवोभवन्ति । यथा रूपे ठीनसिः । गौरजमश्वोऽश्वतर तरोगर्दभोमनुष्यश्चेति सप्तग्राम्याः पशवः । महिषवानरर्क्षसरीसृपरुरु पृषतमृगाश्चेतिसप्तारण्याःपशवइति दुर्गासिंहवतत्त्वम् ॥ देवाङ्गे । छागे ॥ छागादौपशुपदप्रयोगसाधकत्वपाश्व उग्रोत्तावर्दिवासिपश्छागोवायदिवाह वःपशुस्थानेनियुक्तानांपशुशब्दोभि धीते ॥ इतिबलिदानप्रकरणे विधि

तत्त्वम् ॥ अवैधपशुहननेदोषो यथा गारुड़े । वसेत्सनरकेघोरेदिनानि पशुरोमभि : । सम्मितानिदुराचारोयोहन्त्यविधिनापशून् ॥ इति ॥ प्रमथे । महादेवगणप्रभेदे ॥ स्वर्गादिकामेसंसारपरवशेनरे ॥ घृणाद्यष्टपाशबद्धेप्राणिनि ॥ पाशायथा घृणाशंकाभयंलज्जाजुगुप्साचेतिपञ्चमी । कुलंशीलंतथाजातिरष्टौपाशाः प्रकीर्तिताः ॥ पाशबद्धः पशु प्रोक्तः पाशमुक्त : सदाशिवः इति ॥ ज्ञानशून्ये जने ॥ यथा । आहारनिद्राभयमैथुनानिसमानमेतत् पशुभिर्नराणाम् । ज्ञानंनराणामधिकोविशेषोज्ञानेनहीना : पशुभि: समाना इति ॥ गवादौ ॥ देवे ॥ प्राणिमात्रे ॥ यज्ञे ॥ यज्ञोदुम्बरे ॥ साधकानांभावत्रयाद्यप्रथमेभावे ॥ तस्य निर्णयोयथा । नित्यश्राद्धं तथासन्ध्यावन्दनं पितृतर्पणम् । देवतादर्शनंपीठदर्शनंतीर्थदर्शनम् ॥ गुरोराज्ञापालनञ्चदेवतानिश्चयपूजनम् । पशुभावस्थितोमर्त्त्योमहासिद्धिं लभेद्ध्रुवम् ॥ चापिच । पत्रं पुष्पं फलं तोयंस्वयमेवाहरेत्पशु: । नशूद्रदर्शनंकुर्यान्मनसानस्त्रियंस्मरेत् ॥ आदौभावंपशोःकृत्वापश्चात्कुर्यादवश्यकम् । वीरभावं महाभावं सर्वभावोत्तमोत्तमम् ॥ तत्पश्चादतिसौन्दर्यंदिव्यभावंमहाफलमिति रुद्रयामले उत्तरखण्डम् ॥ दिव्यस्तुदेवताप्रायःशुद्धान्तःकरण: सदा । द्वन्द्वातीतोवीतराग : सर्वभूतसम : क्षमी । तस्यकालो यथा । आदौदशमर्दंडेनपशुभाव मथापिवा । इति रुद्रयामले उत्तरखण्डम् ॥ जन्ममात्रं पशुभावंवर्षषोडशकावधिइतियामलेश्वरे ५१ पटल : । पशुभावकर्त्तव्याकर्त्तव्यगर्भतत्त्वाधनिन्दा मात्रुद्रयामले । पशुभावरतायेचवै रतं पशुरूपिण: । रात्रौयत्नसमंयत्नमस्य नैवजपेत्तत्कचित् । संशयीवलिदानेच तन्त्रेचसंशय: सदा ॥ मन्त्रे चाक्षरबुद्धिश्चमनिप्रज्ञोगुरौसदा ॥ प्रतिमासु शिलाबुद्धिर्भेदबोदेवरे पुनः । निरामिषेषदेवेशिदेवतायाः प्रपूजनम् ॥ पञ्चाङ्गेन तथा स्नानंप्रत्यहं देहताडनम् । सर्वथाद्यैपनिन्दात्तुयःकुर्याद्वमहेश्वरि ॥ सपवशुभावेनचाधम: परिकीर्तित: ॥ इति रुद्रयामले उत्तरखण्डे ६ पटल : ॥ रात्रौनैव यजेद्देवीं संध्यायां वापराह्णके । ऋतुकालंविना देवि रमणं परिवर्जयेत् ॥ सांसारिकं महेशानित्यजेत् पञ्चपर्वसु । यदन्यद्वै दविहितं कुर्यान्नियमतत्पर : । इतिनित्यातन्त्रे प्रथमपटल : । (८८) ॥ संसा

यैर्गी ॥ यथा । चैतन्यंदृक्क्रियारू
पंतदस्त्यात्मनिसर्वदा । सर्वतश्चय
तोमुक्तौश्रूयतेसर्वतोमुखम् ॥ सद
प्यभासमानत्वात् तन्निरुद्धं प्रतीयते
। बद्धोनाशुतवीर्यस्यसौतएवविमो
चणात् ॥ अस्यार्थः । ज्ञानक्रिया
त्मकंचैतन्यं तदात्मन्यस्ति नतु
शरीरसमवेतमितिचार्वाकनिराकर
णेशास्त्रेप्रतिपादितम् । तच्चसर्वदैवा
स्तिनतुमुक्तावेवमुक्तौतुसं विश्वभा-
वो यथा । वैशेषिकैरिष्टस्तथाविधा
यामौरूपायामुक्तौ र्ीराकृतत्वात् ।
यतोमुक्तौमुक्तात्मनांसर्वतोमुखस्यचै
तन्यस्यश्रवणात् । नचतेषांतदानी
मेवतदुत्पद्यतेइतिवाच्यम् । तदुत्प
त्तेःसत्कार्यवादेप्रतिपादितत्वात् ।
अथमुक्तावेवतथाविधचैतन्यश्रुतेः
पूर्वंचतदनुपलम्भादन्वयव्यतिरेका
भ्यांसंसारावस्थायांसर्वतोमुखत्वं
चैतन्यस्यकुतइत्याशङ्कानिरासायाह
। सदपीतिसत्यमनुपलम्भःसंसाराव
स्थायांतथाविधस्यचैतन्यस्यसत्वन्यथा
सिद्धः । व्यञ्जकाभावकृतोह्ययोनुप
लम्भःसनाभावसाधकोऽपितुअसति
व्यञ्जकेयथायमनुपलम्भःसव्यञ्जका
भावकृतःअतएनाऽसत्वसाधयति ।
तच्चसर्वतोमुखत्वंसदपियस्मान्नप्रथते
ततः केनापिप्रतिबद्धमित्यवसीय
ते । यस्मादसौरनावृतनिजसाम

र्थ्यंस्वपुरामुक्तःसचात्मावश्यः इति
॥ पश्यतिसर्वमविशेषेण । दृशिर्०
। अर्तिदृशिकम्यमिपशिवाधामृजि
पशितुकपुक्दीर्घह्रस्वारास्वेत्युः
पशिरादेशश्च ॥ पशवश्चग्राम्याारण्या
वेदस्मृत्यागमविहितकर्मसाधनभू
ताः । नहितान्विनायज्ञाद्यनुष्ठा
नम्यज्ञार्थमेवचतेषांसृष्टिः । तत्र
ग्राम्याअजादयोगवयादयस्त्वारण्या
इतिभेदः ॥

पशुक्रिया । स्त्री० मैथुने ॥

पशुजातिः । स्त्री० पशुशब्दवाच्ये ॥
सिंहाद्यारण्याद्याग्रामाद्यायेवज
न्तवः । तेसर्वेग्रास्त्रदृष्ट्याच प्रोक्ता
हिपशुजातयः ॥

पशुपतिः । पुं० चन्द्रमौलौ । शिवे ॥
पशोर्हपस्यपतिः ॥ पालयामिम
मृत्युस्मात् यज्ञामिचयदृच्छया ।
तेषाञ्चपतिरेवाहं तस्मात्पशुपतिः
स्मृतः ॥ पशूनांजीवानांसुरनरति
रश्चांपतिरितिवा । यथा । ब्रह्माद्यास्था
वरान्ताश्चपशवः परिकीर्तिताः ।
तेषांपतिर्महादेवःस्मृतः पशुपतिः
श्रुतौ ॥ हुताशने ॥ यजमानमूर्त्तौ

पशुपल्वलम् । न० कैवर्तीमुस्तके ॥

पशुपालः । पुं० हत्यर्थतयाक्रामसेपा
दिपोषके ॥

पशुपाशः । पुं० पुत्रकलत्रादिषु ॥ चू
णालज्जाद्यष्टसु । पशूनांपाशोहृत्या

दि : । घृणाशङ्काभयंलज्जाजुगुप्सा चेतिपञ्चमी । कुलंशीलंतथाजाति रष्टौपाशा : प्रकीर्त्तिता : ॥ षद्द शंनमहाकूपेपतिता : पशव : प्रिये । परमार्थंनजानन्तिपशुपाशनियन्त्रि ता इतिकुलार्णवे १ उल्लासे ॥

पशुपाशक : । पुं॰ रतिबन्धविशेषे ॥ यथा । स्त्रियमानतपूर्व्वाङ्गीस्वपादान्त पद्द्वयम् । ऊर्द्धांशेनरमेत्कामीबन्धोयं पशुपाशक : ॥

पशुप्रेरणम् । न॰ गवादीनांचालने । हस्वी । हांकना॰ इ॰ भा॰ । पशूनांप्रेरणम् ॥

पशुमोहनिका । स्त्री॰ कटुकीलतायाम्

पशुरज्जु : । स्त्री॰ अश्वादिबन्धनरज्जौ । दामन्याम् ॥ पशुबन्धनीरज्जु: ॥ शाकपार्थिवादि : ॥

पशुराज : । पुं॰ सिंहे ॥ पशूनांराजा टच् ॥

पशुवृत्ति : । त्रि॰ अतिवत्सले ॥

पशुहरीतकी । स्त्री॰ आम्रातकफले ॥

पश्चात् । अ॰ प्रतीच्याम् ॥ चरमे ॥ अधिकारे ॥ पृष्ठभागे ॥ अपरस्मिन्॰ अपरस्मात्॰ अपरोवा । वसत्यागतोरमणीयवा । पश्चादितिसूत्रेणात्र परस्यपश्चभाव : आतिश्चप्रत्ययोऽ स्तातेर्विषये ॥

पश्चात्ताप : । पुं॰ अनुतापे । विप्रतीसारे । अनुशोचने । पछतावा॰ इ॰ भा॰ ॥ पश्चात्तपनम् । तपसंतापे । घञ् ॥

पश्चार्द्ध : । त्रि॰ अपरार्द्धे । शेषार्द्धे ॥ अपरस्यासानर्द्धंश्च । अपरस्यार्द्धेपश्चभावोवक्तव्य : ॥

पश्चिम : । त्रि॰ चरमे । अन्ते ॥ पश्चाद्भव : । अग्रादिपश्चाड्डिमच् ॥ पश्चिम॰ इ॰ प्रसिद्धेदेशे ॥

पश्चिमक्रतु : । पुं॰ अन्त्येष्ट्याम् ॥

पश्चिमरात्रि : । स्त्री॰ अपररात्रे ॥ पश्चिमाचासौरात्रिश्च । विशेषणास मास : ॥

पश्चिमा । स्त्री॰ अस्ताचलावच्छिन्नदिशि । प्रतीच्याम् । वारुण्याम् ॥ तद्दिग्भववायुर्गुणा यथा । पश्चिमोमारुतस्तीक्ष्ण : कफमेदविशोषण : । सद्य : प्राणकरोदुष्ट : शोषकारीशरीरिणाम् इ॰ रा॰ नि॰ ॥ अपिच । पश्चिमोनिबपुर्बलारोग्यविवर्धन: । आशय : शोषण : स्थैर्यरोचनो विशदोलघु: । अपांलघुत्त्ववैशद्यशैत्य वैमल्यकारक: । सर्वद्रव्येष्वभिव्याप्त: प्रभावरसवीर्यकृत् । प्राणसंरोपणस्त्व चोदाहशोषतृषापह इ॰ रा॰ व॰ ॥

पश्य । अ॰ विस्मये । प्रशंसायाम् ॥

पश्यन् । त्रि॰ ईक्षणकर्त्तरि । पश्यति । दृशिर्॰ । लट : शतृ ॥

पश्यत । अ॰ प्रशंसायाम् ॥ विस्मये ।

पश्यतोहर : । त्रि॰ चोरे ॥ यथा ।

य : पश्यतोऽहरेदर्थं सचौर : पश्यतो हर: ॥ पश्यन्तमनादृत्यहरति । हृञ् । अच् । षष्ठीचानादरे॰ इतिषष्ठी । वाग्दिक्पश्यद्भ्योयुक्तिदण्डहरे ष्विति॰ षष्ठ्याअलुक् ॥

पश्यन्ती । स्त्री॰ मूलाधारोत्थितहृदयगतनादरूपवर्णे ॥ यथा । मूलाधारात्प्रथममुदितोयस्तुतार : पराख्य : पश्चात्पश्यन्त्यथहृदयगोबुद्धियुङ्मध्यमाख्य : । इत्यलङ्कारकौस्तुभ : ॥

पश्वाचार : । पुं॰ आचारविशेषे ॥ यथा । वेदोक्तेनयजेद्देवींकामसंकल्पपूर्वकम् । सपश्वैदिकाचार : पश्वाचार:सउच्यते ॥ इत्याचारतन्त्रम् ॥

पष्ठवाट् । त्रि॰ युगपार्श्वगे । दमनकालेस्कन्धारोपितकाष्ठभारे ॥ पष्ठंपृष्ठंवावर्षंवहति । वह॰ । वहश्चेतिण्वि : । पृषोदरादि : ॥

पष्ठौही । स्त्री॰ बालगर्भिण्यांगवि ॥ पष्ठंवहति । ण्वि: । वाहऊठितिङीप् पृषोदरादित्वाद्ब्लोप : ।

पस्त्यम् । न॰ निशान्ते । सदने । गृहे॥ अपस्त्यायति । स्त्यैशब्दसङ्घातयो: । आतश्चोपसर्गेइतिक: । पृ॰ ॥

पस्पश : । पुं॰ शास्त्रारम्भासमर्थकेउपोद्घातसन्दर्भग्रन्थे ॥

पस्पशा । स्त्री॰ महाभाष्यस्यादिमाह्निके ॥ स्पशबाधनस्पर्शनयो : । यङन्तात्पचाद्यच् । अ

जाद्यतष्टाप् । दीर्घोकितइत्यभ्यासस्यदीर्घस्तुनभवति । संज्ञापूर्वकविधेरनित्यत्वादित्याहु : ॥

पह्नव: । पुं॰ श्मश्रुधारिम्लेच्छजातिविशेषे ॥ पारदामुक्तकेशाश्चपह्लवा: श्मश्रुधारिण इतिहरिवंश : ॥

पह्निका । स्त्री॰ कत्तृणे । वारिपर्ण्याम् ॥

पा । स्त्री॰ रक्षणे ॥ पाने ॥ पूते ॥ पूजिते ॥ त्रि॰ पातरि ॥ पामम् । पा॰ । सं॰ । क्विप् ॥

पांशवम् । न॰ लवणविशेषे । रोमके । औद्भिद्ये । जयरजे । औषरे । देश इति भा॰ ॥

पांशु : । पुं॰ धूली ॥ सस्यार्थंचिरसंचितगोमये ॥ पर्पटे ॥ कर्पूरविशेषे ॥ न॰ हस्वमज्ञरे ॥ स्त्री॰ । नदीभेदे ॥ पंशति । पशिनाशने । अर्जिदृशिकम्यमिपशिबाधामित्यादिना॰ साधु : ॥

पांशुका । स्त्री॰ केतक्याम् ॥ रजस्वलायाम् ॥ इ॰ शब्दाम्बुधि : ॥

पांशुकासीसम् । न॰ कासीसे इ॰रा॰॥

पांशुकुली । स्त्री॰ रथ्यायाम् ॥ इ॰ हारावली ॥

पांशुकूलम् । न॰ अनामपट्टोलिकायाम् ॥ यथा । शासनंधर्मकीर्त्ते:स्यात् सकुलि : शूद्रशासनम् । पट्टोलिकाकृतकीलापांशुकूलंनकस्यचिदिति

त्रिकाण्डशेष: ॥

पांशुचत्त्वर: । पुं॰ घनोपले ॥

पांशुचन्दन : । पुं॰ शिवे ॥ पांशुचन्दनमिवयस्य ॥

पांशुचामर : । पुं॰ दूर्वाञ्चिततटीभुवि ॥ वस्त्रापके ॥ प्रशंसायाम् ॥ पुरोटी ॥ धूलिगुच्छके । पटवासे ॥

पांशुजम् । न॰ पाक्यलवणे । औद्भिदे ॥

पांशुपत्रम् । न॰ वास्तूके ॥

पांशुमर्य्याद : । पुं॰ मर्य्यादे । मित्तपापका द्र॰ भा॰ ॥

पांशुमर्द्दन: । पुं॰ केदारे ॥

पांशुर : । पुं॰ दंशके । डांस॰द्र॰भा॰ ॥ पीठसर्पिणि । खञ्जे ॥ पांशुरस्त्यस्मिन्वा । नगपांशुपाण्डुभ्यश्चेति र : ॥

पांशुरागिणी । स्त्री॰ महामेदायाम् ॥

पांशुल : । पुं॰ पुंश्चलि ॥ शम्भो : खट्वाङ्गे ॥ हरे ॥ मालिनि ॥ पूतिके । करञ्जविशेषे ॥ त्रि॰ पांशुयुते ॥ पांशु॰ अस्त्यस्यपामादित्वात्ल । सिध्मादित्वाल्लच् ॥

पांशुलवणम् । न॰ औद्भिदे । पांशवे । वसुके ॥ औद्भिदं पांशुलवणंयज्जातंभूमित : स्वयम् । क्षारंगुरुकटु स्निग्धं शूलवातनाशनम् ॥

पांशुला । स्त्री॰ असत्याम् ॥ भुवि ॥ पांशुपापमस्त्यस्या: । नगपांशुपाण्डुभ्यश्चेति र : । कपि॰ । ल : ॥ सिध्मादित्वाल्लज्वा ॥ पांशुलातिवा । आतोनुपेतिक: ॥ केतक्याम् ॥ रजस्वलायाम् ॥ द्र॰ रा॰ नि॰ ॥

पांसन : । त्रि॰ दूषके । दोषोत्पादके

पांसु : । पुं॰ रजसि । धूलौ ॥ चिरसंचितगोमये । खात॰ द्र॰ भा॰ ॥ पंसयति । पसिनाशने । अर्जिदृशि कृतिसाधु : ॥

पांसुल : । त्रि॰ रजस्वले ॥ पांसुरस्त्यस्य । सि॰ लच् ॥

पाक: । पुं॰ परिणतौ ॥ शिशौ ॥ केशधवलतायाम्(?) ॥ जठराग्निना आहारस्यपचने ॥ पचायाम् । स्थाल्याहौपचने ॥ स्थालीमार्जनाद्योदन परीक्षान्तोव्यापारनिचय : पाक : इतिस्मृति : ॥ भर्जनंतलनंस्वेद : पचनंक्वथितंतथा । तान्दूरंपुटपाकश्चपाक : सप्तविधोमत : ॥ नित्यंनूतनभाण्डेनकर्त्तव्य : पाकएवच । अथवापक्षपर्य्यन्तं ततस्त्याज्यमनीषिभि : ॥ दैत्यविशेषेइन्द्रभ्रातरि ॥ पचनम् । डुपचष्॰ । घञ् ॥ पच्यते,परिणम्यतेऽनेनवा । करणेघञ् । पातिरक्षतिवा । भारवणे पापानेवा । अर्भकपृथुक पाकावयसीतिकन्प्रत्ययान्तोनिपातित : । द्र॰ पाभीक्षामावलीतिकन्वा ॥

पाकक्लाथ्या : । पुं॰ पानीयामलके ॥

क्षाफलपाके ॥

पाकक्ष्णफल : । पुं॰ पाकक्षणे ॥

पाकजम् । न॰ काचलवणे ॥ परिया मयूखे ॥ त्रि॰ । पाकाज्जाते ॥ य-थारूपादिचतुष्टयंपृथिव्यांपाकजम नित्यञ्च । अन्यत्रापाकजंनित्यमनि त्यञ्च । नित्यगतंनित्यमनित्यगतम नित्यम् । पाकस्तेज : संयोग : तेन पूर्वरूपंनश्यतिरूपान्तरमुत्पद्यते इ-त्यर्थः । तच्चपरमाणुष्वेवपाकोनद्व्यणुकादौ,आपाकनिक्षिप्ते घटेपर माणुरूपान्तरोत्पत्तौश्यामघटना शेपुनर्द्व्यणुकादिक्रमेणरक्तघटोत्प त्तिः । तत्रचपरमाणवःसमवायिकार णम् । तेज : संयोगोऽसमवायिकार णम् । अदृष्टादिर्निमित्तकारणम् द्व्यणुकादिरूपंपरमाणुरूपमसमवा यिकारणमितिपीलुपाकवादिनोवै शेषिका : । पूर्वघटस्यनाशंविनैवा वयविन्यवयवेषुपरमाणुपर्यन्तेषुगु णद्रूपांतरोत्पत्तिरिति । पिठरपाकवा दिनोनैयायिका : । अतएवपार्थिव परमाणुरूपादिकमनित्यमित्यर्थः । अन्यत्रजलादावित्यर्थ : इतितर्कदी पिका ॥

पाकपुटी । स्त्री॰ कुम्भशालायाम् । भाषा इ॰ भा॰ ॥ इ॰ हेमचन्द्रः ॥

पाकफल: । पुं॰ पानीयामलके ॥

पाकमत्स्य : । पुं॰ मत्स्यनिर्मितव्यञ्जनविशेषे । मत्स्य

ले ॥

पाकयज्ञ: । पुं॰ ब्रह्मयज्ञादन्येषुपंचमहा यज्ञान्तर्गतेषुवैश्वदेवहोमबलिकर्म नित्यश्राद्धाऽतिथिभोजनात्मकेषुचतु र्षु ॥ स्वर्गापवर्गयो : सिद्धिं पाकय ज्ञैःप्रयच्छति इतिफलंसमुचितस्य । प्रत्येकफलमुक्तं हारीतेनयद्देवेभ्योजु होतिदेवलोकंतेनजयतियत्पितृभ्यो ददातिपितृलोकंतेनजयति॰यत्स्वा ध्यायमधीतेऋषिलोकंतेनजयति य द्भूतेभ्योबलिंहरतिभूतलोकंतेनजय तीति ॥ धन्यंयशस्यमायुष्यं स्वर्ग्य स्वातिथिपूजनम् इतिमनु : ॥ अ-क्षाभ्रादीनामविभक्तानामपिसंस्थानांमुख्यं नैकेनैवपाकयज्ञा : क-र्त्तव्या : । यदाहु : । एकपाकेनिव सतांपितृदेवद्विजार्चनम् । एकंभवे द्विभक्तानांतदेवस्याद्गृहेगृहे इति एकपाकेनिवसतामित्युपक्रम्यसंस्थानामित्यभिधानाद्विभक्तानामिति द्रव्यपार्थक्यपरं ॥ अष्टकादिषु ॥ वृ षोत्सर्गगृहप्रतिष्ठादीनांहोमे । अक होमादिकर्मणि ॥

पाकयज्ञिय : । पुं॰ पाकयज्ञकर्त्तरि ॥

पाकरञ्जनम् । न॰ तेजपत्रे ॥

पाकल : । पुं॰ कुञ्जरज्वरे ॥ बोधनद्रव्ये ॥ अग्नौ ॥ वह्नौ ॥ पाकंलाति । ला॰ । आतोऽनुपसर्गेक : ॥ न॰ । कुष्ठौषधौ ॥ त्रि॰ । नगादिपाकाया

रिणि ॥

पाकली । स्त्री० कर्कट्यां ॥

पाकशाला । स्त्री० महानसे । रसयस्थास् । रसोई० इ० भा० ॥ आग्निकोणेस्था : कर्त्तव्यतोक्ता । प्राच्यां दिशिस्नानगृहमाग्नेय्यां पचनालयम् । शयनंयाम्यदिग्भागेनैऋर्त्यांश स्त्रमन्दिरम् ॥ प्रतीच्यांभोजनगृहं वायुभागेसभागृहम् । भाण्डारसदनंसौम्ये त्वैशान्यां देवतालयमिति पीयूषधारायांकश्यप : ॥

पाकशासन : । पुं० इन्द्रे ॥ पाकस्यदमनात् : शासन : । शासयति । शास्० । णिजन्त, नं० ल्यु० ॥

पाकशासनि : । पुं० इन्द्रात्मजे । जयन्ते ॥ पाकशासनस्यापत्यम् अत इञ् ॥

पाकशुक्ला । स्त्री० कमलस्याम् ॥

पाकस्थानम् । न० महानसे ॥ पाकस्य स्थानम् ॥

पाकस्थाली । स्त्री० रन्धनपात्रे ॥ पाकस्यस्थाली ॥

पाका । स्त्री० बालिकायाम् ॥ अजा० टाप् ॥

पाकाभिमुख: । त्रि० सिद्ध्युन्मुखे ॥

पाकारि : । पुं० श्वेतकाञ्चने ॥

पाकिमम् । त्रि० पक्तिमे ॥ पाकेननिर्वृत्तम् । भावप्रत्ययान्तादिमप् ॥

पाकिमा । पुं० पाकतायाम् ॥ पाकस्य भाव : । इमनिच् ॥

पाकुक : । पुं० सूपकारे ॥ पचति । डुपचष्० । पचिनशोर्घुकन्कनुसौ चेतिसाधु : ॥

पाक्यम् । न० बिड्लवणे । खारीलूण इ० भा० ॥ पुं० यवक्षारे ॥ त्रि० । पक्तव्ये ॥ पच्यते । डुपचष्० । चजोःकुघिण्ण्यतोः ॥ चजोरितिकुत्वम् । पाकेसाधुवा । तत्रसाधुरितियत् ॥

पाक्षिक : । त्रि० पक्षघातिनि ॥ पक्षिघातके । शाकुनिके ॥ पक्षेपक्षिणं हन्ति । ठक् ॥ पक्षिणोहन्ति । पक्षिमत्स्यमृगान्हन्तीतिठक् ॥ पक्षभवे ॥

पाखण्ड : । पुं० पाषण्डे । सर्वलिङ्गिनि ॥ पाखण्डयति । खडिभेदने । पचाद्यच् ॥ यथा । पालनाच्चत्रयीधर्म : पाशब्देनिगद्यते । तंखण्डयन्तितेयस्मात्पाखण्डास्तेनहेतुना ॥ नानाव्रतधरानानावेषा : पाखण्डिनोमता : ॥ पयांवाङ्मात्रेणाप्यर्चनंनिषिद्धम् । यथाहमनु : । पाखण्डिनोविकर्मस्थान्वैडालव्रतिकान्शठान् । हैतुकान्वकवृत्तींश्चवाङ्मात्रेणापिनार्चयेदिति ॥ ( क ) ॥ निशामुखेषुखद्योता स्तमभान्ति नोग्रहा : । यथापापेनपाखण्डा न हिवेदा : कलौयुगे ॥ इतिभागवतम् ॥

पागल : । पुं० उन्मत्ते । वातुले ॥ य

थे । पञ्चलोहिन्योगुञ्जा : परिमाणस्य । तद्दिसार्थेतिसमासेतद्दस्यपरिमाण मितिठञ् । अस्यादृद्धिपुंवद्भावाल्लो हिनीशब्दस्य कारककारयोर्निवृत्तिः॥

पाञ्चशब्दिकम् । न० पञ्चप्रकारवाद्ये ॥ यथा । चम्मजंचर्मजंचैवतन्त्रजंकांस्य जंतथा । फुत्कृतश्चेतिमुनिभि : क थितंपाञ्चशब्दिकमितिस्कान्दे रेवा खण्डम् ॥

पाञ्चार्थिक : । पाशुपते ॥ इ० चि० ॥

पांचाल : । पुं० पांचालानांराज्ञि ॥ प च्चियसमानशब्दादित्वपत्यवत्प्रत्य य : ॥ पंचाला : पुं०बहुत्वे ॥ चि० । पचालदेशोऽपि ॥

पांचालिका । स्त्री० वस्त्रदन्तादिनिर्मि तपुत्रिकायाम् । शालभञ्ज्याम् ॥ पंचालदेशेभवा । जनपदतदवध्योरि तिवुञ् ॥

पांचालनगरम् । न० } म्लेच्छपुषार कावार इति ख्यातपत्तने॥
पांचालपुरम् । न० }

पांचाली । स्त्री० द्रौपद्याम् ॥ पुत्रिका याम् । पुत्तली० इति० भा० ॥ कोमलाल्पसमस्तनुप्रासघटकवृत्तिभे दे ॥ भागध्याम् । पिप्पल्याम् ॥

पाट् । अ० सम्बोधने ॥ पाटयति । प टगतौ । णिजन्त : क्विप् ॥

पाटक : । पुं० रोधसि ॥ ग्रामैकदेशे ॥ प्रपातादिपातके । अक्षादिपातने ॥ वाद्यप्रभेदे ॥ महाकिष्कौ ॥ मूलद्र व्यापचये ॥ कटकान्तरे ॥ पटति । पट० । ण्वुल् ॥

पाटच्चर : । पुं० चौरे ॥ पाटयंश्चरति । चर० । पचाद्यच् । पृषोदरादि : ॥

पाटनम् । न० छेदने । फाड़ना इ०भा०

पाटल :। पुं० आशुधान्ये । पश्चिकादौ ॥ श्वेतरक्तवर्णे । गुलाबीरङ्ग० इ० यावनीय० भा० ॥ न० । पाटलापु ष्पे ॥ कुङ्कुमे ॥ पाटल्यवयवे ॥ पा टलीविकारे ॥ त्रि० श्वेतरक्तवर्णयु क्ते ॥ पाटलोवर्णोऽस्यास्ति । अच् ॥ पाटयति । पट० । बाहुलकाद्वृषादित्वा त्कल : ॥ पाटल्याअवयवोविकारो वा । बिल्वाद्यण् ॥ पाटलाया : पुष्प मपाटलम् । अनुदात्तादेश्चाञ : पुष्पमूलेषुबहुलमितिबहुलग्रहणात् तस्यलुप् ॥

पाटलद्रुम : । पुं० पुन्नागवृक्षे ॥

पाटला । स्त्री० पाडल इ० भा० पुष्प वृक्षे । अमोघायाम् । कापस्थाल्या म् । फलेरुहायाम् । पारुल इ०गौ० भा० ॥ पाटलातुवरातिक्ताऽनुष्णा दोषत्रयापहा । अरुचिश्वासशोथा स्रच्छर्दिहिक्कातृषाहरी ॥ पुष्पंकषा यंमधुरंहिमंहृद्यंकफास्रनुत् । पित्ता तीसारहृल्लघुमन्त्रंहिक्कास्रपित्तनुत् ॥ पाटंलाति । ला० । क : ॥ पाट लवर्णायांगवि ॥ अनुदात्तत्वाभावा

न्नुडीप् ॥

पाटलापुष्पसन्निभम् । न० पद्मकाष्ठे ॥

पाटलिः । पुं० स्त्री० पाटलायाम् ॥ मुष्ककद्रुमे ॥ पाटि । पा० क्षिप् । टलति । टलयै क्लब्ये । सर्वधातुभ्य इन् । पाथाऽसौटलिश्च ॥

पाटलिपुत्रम् । न० पाटलिपुत्रके ॥ यथ्यसुदर्शनाभिधसराजः पुत्राणांरा त्नविद्याधिगमायकलौमरवं लोकेष्ट इस्यासिसहग्रीनविप्य धर्मणाय मत-न्तहितोपदेशाद्वयोर्धारयिता ॥

पाटलिपुत्रकम् । न० पटना० इ० प्र० नगरवि० । कुसुमपुरे ॥

पाटली । स्त्री० मुष्ककवृक्षे । काटमी-वृक्षे ॥ पाटलायाम् ॥

पाटवम् । न० पटुत्वे । पटिमनि ॥ पटोर्भावः । इगन्ताच्चलघुपूर्वादि-त्यण् ॥ आरोग्ये ॥

पाटविकः । त्रि० धूर्ते । पटौ । इ-ति ॥ पाटवयति । मत्वर्थीयठम् ॥

पाटहिका । स्त्री० गुञ्जायाम् ॥ इति० हारावली ॥

पाटिमः । त्रि० दारिते । भिन्ने ॥

पाटी स्त्री० बलायाम् ॥ अनुक्रमे । परिपाट्याम् ॥ यथा । पाटींसदृग्गणित स्येति ॥

पाटीरः । पुं० मूलके ॥ केदारे ॥ वे-णुसारे ॥ वारिदे ॥ तितऊौ ॥ वङ्गे ॥ धातिके ॥ चन्दने ॥ यथा । पाटीरतत्वपटीयान्कः परिपाटी मिमामुरीकर्तुम् । यत्पिंषताम-पिनृणांपिष्टोपितनोषिपरिमलैः पुष्टिम् ॥ पटीरएव । स्वार्थिकोण् ॥

पाठ्यम् । न० पट्टशाये ॥ पाठ्यथाक त्तुमधुरंदुग्धं रंगुस्तमाकिच ॥

पाठः । पुं० पठने । ब्रह्मयज्ञे । शि-ष्याणामध्यापने ॥ विधिमावेदस्या भ्यसने ॥ यथा । आदौचप्रणवंज-प्त्वास्तोत्रंवासंहितांपठेत् । अन्ते चप्रणवंदद्यादित्युवाचादिपूरुषः ॥ सर्वत्रपाठे विज्ञेयोह्यन्यथाविफलंभवे त् ॥ मुखेनानन्वचित्ते नपठितव्यं प्रयत्नतः । नकार्यासन्नमनसाकार्ये स्तोत्रस्यवाचनमिति शाक्तिकाः ॥ अपिच ॥ वाचारेस्थापयित्वातुपुस्तं वाचयेत्सुधीः । हस्तसंस्थापनादेव यस्मादल्पफलंलभेत् । स्वयंचलिखि तंयत्तु लितिनालिखितंनयत् । अब्रा ह्मणेनलिखितंतच्चापिविफलंभवेदि ति चण्डीस्तोत्रादिपाठेपुविधिरेष-निरूपितः ॥ पठस्स०पाठनंवा । पठ० । भावेघञ् ॥

पाठकः । त्रि० उपाध्याये ॥ धर्मभाण के । धर्मकथके ॥ पठति । पठ० । ण्वुल् ॥ अध्येतरि ॥

पाठक्रमः । पुं० पदार्थबोधकवाक्या-नांक्रमे ॥ यस्माद्यत्पदार्थानांक्रमस्या श्रीयते । येनक्रमेणवाक्यानिपठिता

यस्तुदेव्यागृहेनित्यंविद्यादानंप्रवर्त्तयेत् । सभवेत्सर्व्वलोकानांपूज्य : पूजापदंवलेदितिपुराणान्तरम् ॥

पाठशालिनी । स्त्री॰ पाठमञ्जर्याम् ॥

पाठा । लताविशेषे । अम्बष्ठायाम् । वनतिक्तिकायाम् । तिक्तपुष्पायाम् ॥ अस्यागुणायथा । पाठोष्णाकटुका तीक्ष्णावातश्लेष्महरीलघु : । हन्ति शूलज्वरच्छर्दिकुष्ठातीसारहृद्रुज : ॥ दाहकण्डूविषश्वासकृमिगुल्मगरव्रणान् । इ॰ भावप्रकाश : ॥ अम्ब ष्ठासकषायाम्लाकफकण्ठरुजापहा । वातामयबलासघ्नीरुचिकृद्दीपनीपरा ॥ इ॰ रा॰ नि॰ ॥ अस्याःशाकप्रकारस्तु । पाठाशाकंगलरविच्छिन्नि ध्यतक्रे धस्थितं प्रात : कालिङ्गरमस हितैतप्ततैलेविपाच्यम् । चूर्णलिप्तं लवणसहितंमारिचंतन्नव्यं सर्वे भ्यस्तद्भवतिरुचिदंव्यञ्जनेभ्य : प्रभूतम् ॥ पठ्यते । पठ॰ । कर्मणिघञ् । अजादित्वात्टाप् ॥

पाठिका । स्त्री॰ पाठायाम् । पटाङ्क॰ इ॰ प॰ मा॰ ॥

पाठित : । त्रि॰ अध्यापिते ॥ यथा । माताशत्रु: पितावैरीबालोयेननपाठित : । नशोभतेसभामध्ये हंसमध्ये वकोयथेति ॥

पाठी । पुं॰ चित्रकवृक्षे ॥ यथा त्रि॰ । पाठविशिष्टे पाठोम्यास्तीति । अतइनिठनावितीनि: ॥

पाठीकुठः । पुं॰ चित्रकवृक्षे ॥

पाठीन : । पुं॰ बोयाली॰ इ॰ गौ॰ भा॰ प्रसिद्धेमत्स्ये । सहस्रदंष्ट्रे । बोदाले ॥ गुणायथा । पाठीन: श्लेष्मलोवल्योनिद्रालु : पिशिताशन : । दूषयेद्रुधिरंपित्तं कुष्ठरोगंकरोतिच ॥ ‡*‡ ॥ पाठीन : खण्डित : शस्त्रैर्वेसवारसमन्वित : । कटुतैले नसम्भृष्टोहिङ्गुतक्रेणयोजित : ॥ पाठीन : कफकृद्वल्योनिद्रालुर्मांस-,नाशन : । मांसाशीवातरक्ताख्यकारकोरेतसस्तथा ॥ पाठिंपृष्ठंनमयति । णमुप्रह्वत्वे । णिच् । अन्येभ्योऽपि दृश्यन्त इति उ: । अन्येषामपीतिदीर्घ : ॥ या ठवी ॥ गुग्गुलुद्रुमे ॥

पाठ्य : । त्रि॰ अध्यापनीये । पाठनीये ॥

पाण : । पुं॰ पाणौ ॥ इतिशब्दचन्द्रिका ॥

पाणविक : । त्रि॰ पणवस्यवादके ॥

पाणि: । पुं॰ पञ्चशाखे ॥ शये । करे । हस्ते ॥ पणायन्तिव्यवहरन्त्यनेन । पण॰ । अशिपणाय्योरुडायलुकौचेतीण् आयप्रत्ययस्यलुक्च ॥ कुलिकवृक्षे ॥ स्त्री॰ । पण्यवीथ्याम् । हट्टे

पाणिकम् । न॰ पणेनक्रीते ॥ असमासेनिष्कादिभ्यइतिठक् ॥

पाणिगृहीती । स्त्री॰ पत्न्याम् । वि-

धर्मेणोढायाम् ॥ अग्निसाक्षिकत-यापाणिः गृहीतोयस्याः । पाणि गृहीतीभार्यायामितिङीष् । क्वचित्तु स्वादिनापाणिर्गृहीतोयस्यादास्या-दिः सातुपाणिगृहीता ॥

पाणिग्रहणम् । न० विवाहे ॥

पाणिग्राहः । पुं० भर्त्तरि । पत्यौ ॥ पाणिंगृह्णाति । ग्रह० । अण् ॥

पाणिघः । पुं० पाणिवादे । मृदङ्गादि वादके ॥ पाणिंपाणिनावाहन्तीति विग्रहेपाणिघताडघौशिल्पिसंज्ञाने नपाणावुपपदेहन्तेष्टक्टिलोपोघत्व-ञ्चनिपात्यते ॥

पाणिघातः । पुं० पाणिनाहनने ॥

पाणिजः । पुं० नखे ॥

पाणितलम् । न० कर्षपरिमाणे । तो लकद्वये ॥ हस्ताधोभागे ॥

पाणिनः । पुं० पाणिनिमुनौ ॥ इति त्रिकाण्डशेषः ॥ पणनम् पण० । घञर्थेकविधानमितिपणेःक. पणो ऽस्यास्ति० इ० पणीतस्यगोत्रापत्यम् । अण् । गाथिविदथिकेशिगणिपणि-नश्चेत्यऽणिपरेटिलोपोन ॥

पाणिनिः । पुं० दाक्षीपुत्रे । शालङ्कि नि । व्याकरणसूत्रकारेमुनौ ॥ पणि नोयुवापत्यम् । इञ् ॥

पाणिनीयम् । न० पाणिनिप्रोक्तेव्याक रणे ॥ प्रमाणभूतआचार्योदर्भपवि-त्रपाणिः शुचावकाशे प्राङ्मुख उपविश्यमहतायत्नेनसूत्राणिप्रण यतिस्मतत्राशक्यं वर्णेनाप्यनर्थकेन-भवितुमिति महाभाष्यम् ॥ पाणि निनाप्रोक्तम् ॥ उपज्ञातंवा । वृद्धा-च्छः ॥ त्रि० तदध्येतृवेदितृषु ॥ पाणिनीयमधीतेवेदवा । प्रोक्ताल्लु गित्यणोलुक् । तेनस्त्रियाम्पाणिनी या०ब्राह्मणीवन्नङीप् ॥

पाणिन्धमः । त्रि० अन्धकारादावाहता धूनि ॥ तत्रपिशाचसोधायस्वोऽस्मि न्नितिविग्रहेऽसम्यग्ध्मेत्यस्मदपाणि-न्धमार्थेतिखश् । मुम् ॥

पाणिन्धयः । त्रि० पाणिद्वारापानक-र्त्तरि ॥

पाणिपीडनम् । न० विवाहे ॥ पाणेः पीडनमुपग्रहणम् । कृद्योगाचषष्ठीस मस्यतइतिवाच्यम् ॥

पाणिभुक् । पुं० उदुम्बरवृक्षे ॥ त्रि० । पाणिभाजनकभोक्तरि ॥

पाणिमर्दः । पुं० करमर्दके ॥ पाणिं मृद्गाति । मृदमर्दे । कर्मण्यण् ॥

पाणिमुक्तम् । न० अस्त्रे ॥ इतिहला-युधः ॥

पाणिरुहः । पुं० नखे ॥

पाणिवादः । त्रि० मृदङ्गादिवादके ॥ पाणिवादयति । यदेण्यन्तादण् ॥

पाणिवादकः । त्रि० पाणिवादे ॥ इ० है० च० ॥

पाणिसर्ग्या । स्त्री० रज्जौ ॥ पाणिभ्यां

सृज्यते । स्तनविसर्गे । पाणीसृज्येण्ड
-दितिवचनात् । चकोरिति कुत्सम् ॥
पाणीतलम् । न० पाणितले ॥ निडा-
लपट्कर्पौचपाणीतलमुदुम्बरमिति
शब्दमाला ॥
पाणीकरणम् । न० विवाहे ॥ इति०
। जटाधर : ॥
पाण्डर : । पुं० शुक्लवर्णे ॥ मरुवके ॥
न० कुन्दपुष्पे ॥ गैरिके ॥ त्रि० तद्वे
, तद्वर्णवति ॥
पाण्डरपुष्पिका । स्त्री० शीतलावृक्षे ॥
पाण्डव : । पुं० युधिष्ठिरादिपञ्चसु ॥
पाण्डोरपत्यम् । अण् ॥
पाण्डवाभील : । पुं० श्रीकृष्णे ॥
पाण्डवायन : । पुं० श्रीकृष्णे ॥ पाण्ड
वानामयन : ॥
पाण्डवेय : । पुं० अभिमन्युसुते । परी
क्षितन्नृपे ॥
पाण्डित्यम् । न० पण्डितधर्मकर्मणोः
॥ वेदागमतात्पर्याभिज्ञत्वे । यदिती
यवस्तुविचारचातुर्यपरिनिष्पन्ने बुद्धि
पी ॥ पण्डेतिबुद्धे र्नामैतत्सञ्जाता
यस्मात्स : । सपण्डितस्तस्यका-
र्म पांडित्यं श्रुतिसम्मतम् ॥ पण्डि
तस्यभाव : । वर्णदृढादिभ्य : ष्य-
ञ् इतिष्यञ् ॥
पाण्डु : । पुं० नृपतिविशेषे । कुन्तीप
तौ । युधिष्ठिरादीनांजनके ॥ सिते
वर्णे ॥ श्वेतहस्तिनि ॥ पतुदाख्यप-
क्षिविशेषे ॥ यथा पांडुस्तुद्विविधोज्ञे
यश्चित्रपक्ष : कलध्वनि: । द्वितीयो
धवल:प्रोक्त: सकपोतस्फुटध्वनि: ॥
चित्रपक्ष : कफहरो वातघ्नोग्रहणी
प्रणुत् । धवल : पांडुसदृशोरक्तपि
त्तहरोहिम : ॥ रसेपाकेचमधुर :
सद्यःप्रीवातशांतिकृत् ॥ [illegible]॥
पाण्डुरफलीक्षुपे ॥ पटोले ॥ शुक्लपी
तमिश्रितवर्णे । हरिणे । पाण्डुरे ॥
सितपीतसमायुक्त : पाण्डुवर्ण : प्र
कीर्तित: । भेदोपिहृश्यते यथा । पा
ण्डुरस्तुरक्तपीतभागोऽल्पचन्द्रवत्
। पाण्डुस्तुपीतभागार्द्ध:केतकीधूलि
सन्निभ : ॥ रोगविशेषे ॥ तस्यौषधं
यथा । लौहचूर्णंतक्रपीतंपाण्डुरोग
हरंभवेत् ॥ १ ॥ अपिच । समस्तं
गवांमूत्रेभावितंचायसोरज : । पा-
ण्डुरोगप्रशान्त्यर्थंपयसाप्रपिबेन्नर :
॥ २ ॥ गोमूत्रसिद्धं मण्डूरचूर्णंसद्य-
स्समन्वित : । पाण्डुरोग:क्षयंयातिप
क्षिप्तलसदारुकम् ॥ ३ ॥ अयोमलं
सुसंतप्तं भूयोगोमूत्रसाधितम् । म-
धुसर्पिर्युतंलीढ्वा पाण्डुरोगीसुखीभ
वेत् ॥ ४ ॥ पुनर्नवात्रिवृद्व्योपवि-
डङ्गंदारुचित्रकम् । कुष्ठं हरिद्रे त्रि
फलादन्तीचव्यंकलिङ्गकम् ॥ ५ ॥
कटुकापिप्पलीमूलमुस्तशृङ्गीचकार
वी । यवानीकट्फलञ्चेतिपृथक्प
लमितंमतमिति ॥ त्रि० । तद्वति ॥

पाण्डु : । स्त्री॰ माषपर्ण्याम् । माषा
णी द्र॰ गौ॰ भा॰ ॥ खरुसंयोगोप-
धान्नेति नङीष् ॥

पाण्डुक: । पुं॰ शालिविशेषे ॥ पाण्डुरो
गे ॥ पांडुन्दपे ॥ पांडुवर्णे ॥

पांडुकण्टक : । पुं॰ अपामार्गे ॥ पांडू
नि कण्टकान्यस्य ॥

पांडुकम्बल : । पुं॰ श्वेतप्रावारे । श्वे
तकम्बले ॥ राजास्तरणवर्णकम्बले ॥
पांडुवर्णकम्बल । पांडुवासौकम्ब
लश्चेति वा । ग्रावभेदे ॥

पांडुकम्बली । पुं॰ पांडुवर्णकम्बलाच्छ
न्नेरथे ॥ पांडुकम्बलेनपरिवृतोरथ:
। पांडुकम्बलादिभिरितीनि: ॥ त्रि॰
। पांडुकम्बलयुक्ते ॥ मत्वर्थीयइनि: ॥

पांडुतरु : । पुं॰ धवद्रुमे ॥

पांडुनाग : । पुं॰ पुन्नागवृक्षे ॥ श्वेत
गजनागयो: ॥

पांडुपत्री । स्त्री॰ क्रौन्त्याख्यौषधौ । रे
णुकायाम् ॥

पांडुपत्रम् । न॰ परिपक्वपर्णे ॥

पांडुपुत्र : । पुं॰ पांडवे ॥

पाण्डुपृष्ठ : । त्रि॰ अलक्षणे । पांडुव
र्णपृष्ठयुक्ते ॥

पांडुफल : । पुं॰ पटोले ॥

पांडुफला । स्त्री॰ चिर्भिटायाम् ॥

पांडुभूम : । त्रि॰ पांडुवर्णभूमियुक्तदे
शे ॥ पांडुभूमिरस्मिन् । सङ्ख्योदय
पांडुसङ्ख्यायाभूमेरजिष्यते ॥

पांडुमृत् । स्त्री॰ पांडुभूमौ ॥ खटिका-
याम् ॥

पाण्डुर : । पुं॰ श्वेतपीतमिश्रितवर्णे
॥ दूर्वाकुते ॥ श्वित्ररोगे ॥ कामला
रोगे ॥ त्रि॰ तद्वति ॥ न॰ मरुवके
॥ पांडु:शुक्लोवर्णोऽस्यस्यास्मिन्वा
। नगपांशुपांडुभ्यश्चेति र: ॥

पांडुरद्रुम : । पुं॰ कुटजे ॥

पांडुरपृष्ठ : । त्रि॰ लक्षणहीने ॥ द्र॰
हे॰ ॥ पाण्डुरवर्णपृष्ठयुक्ते ॥

पांडुरफली । स्त्री॰ क्षुद्रक्षुपविशेषे ।
धूसरायाम् ॥

पांडुरा । स्त्री॰ माषपर्ण्याम् ॥ पांडुरव
र्णायां ॥

पांडुराग : । पुं॰ मदनकवृक्षे ॥ त्रि॰
। पांडुवर्णयुक्ते ॥

पांडुरेखु : । पुं॰ श्वेतेक्षौ ॥

पांडुलेख : । पुं॰ प्रथमलिखिते । म-
सौदा॰ इ॰ भा॰ पाडुलिपौ ॥ य
था । पांडुलेखेनफलकेभूमौवाप्रथमं
लिखेत् । न्यूनाधिकन्तुसंशोध्यपश्चा
त्पत्रेनिवेशयेदिति व्यवहारतत्त्वे-
व्यास : ॥

पांडुलोमा । त्रि॰ पाण्डुवर्णलोमभि
र्युक्ते ॥

पांडुलोमशा । स्त्री॰ माषपर्ण्याम् ॥

पांडुलोमा । स्त्री॰ माषपर्ण्याम् । मा
षाणी॰ द्र॰ गौ॰ भा॰ ॥

पांडुशर्करा । स्त्री॰ रोगविशेषे ॥ यथा

। पिष्टवेसालतीम् लंघोग्रकालेसमाहृतम् । साधितंछागदुग्धेनपीतंशर्करयान्वितम् ॥ हरेन्म् प्रनिरोधस्य हरेद्वैपांडुशर्कराम् ॥

पांडुशर्मिला । स्त्री० द्रौपद्याम् ॥

पांडुसोपाकः । पुं० चण्डालेनवैदेह्यां जनितेत्वक्सारव्यवहारजीविन्यन्त्यजान्तरे ॥

पांडूकः । पुं० शालिविशेषे ॥ पांडूनांजनपदानांराजनि ॥

पाण्ड्यः । पुं० पाण्डोराष्ट्रे । देशविशेषे ॥ यथा । काम्बोजादक्षभागेतु इन्द्रप्रस्थाच्चपश्चिमे । पाण्ड्यदेशोमहेशानिमहाशूरत्वकारकइति ॥ पाण्डोरपत्यम् राजावा । पाण्डोर्ड्यण् । टिलोपः ॥

पाण्यः । त्रि० स्तुत्ये । स्तवनीये ॥ पण० । यत् ॥

पाण्याश्वः । पुं० ब्राह्मणे ॥ पाथिराश्वमस्य । पाण्याश्वोहिद्विजःस्मृतः ॥

पातः । पुं० निपातने ॥ पतने ॥ राहौ ॥ पक्षमपक्षयोर्मासयोर्गर्भस्रपतने ॥ पतनम् । पत्लृ० । घञ् ॥ नक्षीभावे ॥ त्रि० पाते ॥

पातकम् । न० नरकसाधने । पापे । अंहसि । दुरिते ॥ तच्चशुष्कार्द्रभेदाद्द्विविधम् । अकामात्पातकंशुष्कं कामादार्द्रमुदाहृतमित्युक्तेः ॥ पातयतिअधोगमयतियत्तत् ॥ तत्तु नवविधम् । यथा । अतिपातकम् १ महापातकम् २ अनुपातकम् ३ उपपातकम् ४ सङ्करीकरणम् ५ अपात्रीकरणम् ६ जातिभ्रंशकरणम् ७ मलावहम् ८ प्रकीर्णकम् ९ इतिभेदात् ॥

पातकी । त्रि० पापिनि ॥ पातकमस्याऽस्ति । अतइनिठनावितीनिः ॥

पातङ्गिः । पुं० शनैश्चरग्रहे ॥ पतङ्गस्याऽपत्यम् । अतइञ् ॥

पातञ्जलम् । न० व्याकरणभाष्ये । महाभाष्ये । (क) । पतञ्जलिमुनिप्रणीतपादचतुष्टयात्मकयोगकांडनिरूपकदर्शनशास्त्रविशेषे ॥ तत्रप्रथमेपादे अथयोगानुशासनमितियोगशास्त्रारम्भं प्रतिज्ञायविधाययोगश्चित्तवृत्तिनिरोधइत्यादिनायोगलक्षणमभिधायसमाधिंसप्रपञ्चं निरदिक्षद्भगवान्पतञ्जलिः ॥ १ ॥ द्वितीये । तपःस्वाध्यायेश्वरप्रणिधानानिक्रियायोगइत्यादिनाव्युत्थितचित्तस्यक्रियायोगंयमादीनिपञ्चबहिरङ्गानिसाधनानि ॥ २ ॥ तृतीये । देशबन्धश्चित्तस्यधारणेत्यादिनाधारणाध्यानसमाधित्रयमन्तरङ्गंसंयमपदवाच्यंतत्रावान्तरफलंविभूतिजातम् ॥ ३ ॥ चतुर्थे । जन्मौषधिमन्त्रतपःसमाधिजाःसिद्धयइत्यादिनासिद्धिप्रपञ्चनपुरस्सरपरमप्रयोजनंकैवल्यम् ॥ ४ ॥

प्रधानादीनिपञ्चविंशतितत्त्वानिसा ञ्ज्ञोतान्येवापि। षड्विंशस्तुपरमे श्वरोऽधिक : ॥ इतिसर्वदर्शनसंग्र ह : ॥

पातङ्गधा । स्त्री० वन्ध्याकर्कोट्याम् ॥

पातनम् । न० अधोनयने ॥

पातनिका । स्त्री० पीठिकायाम् ॥

पातालम् । न० अधोभुवने । रसातले । नागलोके ॥ तानिचसप्त । यथा। अतल वितल सुतल रसातल तला तल महातल पातालान्यधोधोविद्य मानानिसामान्यत : पातालशब्द-वाच्यानिभवन्ति ॥ विवरे ॥ वडवा नले ॥ लग्नाच्चतुर्थभवने ॥ पतन्त्यत्र पापात् । पतृल० । पतिचण्डिभ्या मालञ् । पातम् चलतिपातमाला तिवा ॥ पुं० । औषधपाकार्थयन्त्रविशे षे । यथा । कर्द्धमापस्तलेवह्निर्मध्ये तुरससंयुत : । पातालयन्त्रमेतद्धि शोधयेत्सूतकादिकम् ॥

पातालगरुडी । स्त्री० लताविशेषे । वत्सादन्याम् ।सोमवल्ल्याम् । ति क्ताङ्गायाम् । गारुडयाम् । छिरि-हटा० इ० भा० ॥ छिलिहिण्ड ॥ छिलिहिण्डोमहामूल: पातालगरु डाह्वय : । छिलिहिण्ड : परंवृष्यः कफघ्न : पवनापह : ॥

पातालनिलय : । पुं० दैत्ये ॥ सर्पे ॥ त्रि० पातालवासिनि ॥ पातालंनि लयोयस्य ॥

पातालयन्त्रम् । न० औषधपाकार्थयन्त्र विशेषे । पाताले ॥

पातालौकाः । पुं० दैत्ये ॥ त्रि० पाता लवासिनि ॥ पातालेचोकआश्रितो यस्य स : ॥

पाति : । पुं० प्रभौ । भर्त्तरि । स्वामि नि । ॥ पाति । पा० । पातेरतिः ॥

पातिक : । पुं० शिशुमारे ॥

पातित : । त्रि० भ्रंशिते ॥

पातिली । स्त्री० वागुरायाम् ॥ नार्या म् ॥ मृत्पात्रविशेषे ।पातिल्० इ० गौ० भा० प्र० । पतीली० इ० दे० भा० प्र० ॥ इ० मे० ॥

पातुक : । पुं० प्रपाते ॥ जलहस्तिनि ॥ त्रि० पतयालौ । पतनशीले ॥ प तति । पतृल० । लषपतपदस्थाभू-वृषहनकमगमशृभ्यउकञ् ॥

पाता । पुं० कठेरके । गन्धपत्रे । वायु इ० इति० भा० ॥ रक्षितरि । पा-नशीले इतिकश्चित् ॥

पात्र : । पुं० न० भाजने । याज्ञ्येस्रु वादौ॥ स्रुवादिकन्तुयत्रादीयात्रमि त्यभिधीयते ॥ राजमन्त्रिणि ॥ कूल योर्मध्ये । तीरद्वयान्तरे । पारावार मध्यभागे ॥ पर्णे ॥ यज्ञभाण्डे ॥ नाट्यानुकर्त्तरि । आढकपरिमाणे ॥ इतिवैद्यकपरिभाषा ॥ दानपात्रे । विद्यातपोयुक्ते । रक्षके । नदिय

थाकिंवत्तयातपमावापिपात्रता । य
त्रवृत्तोऽस्मैचोमैतत्त्रिपात्रंप्रवीर्त्तित
म् ॥ रत्नकोऽपि : । यतोविद्यातपो
भ्यामात्मनोदातुश्चपालनचमएवप्र-
तिग्रहणीयादितिशास्त्रम् ॥ विद्यायु
क्तोधर्मशील : प्रशान्त : चान्तोदा-
न्त : सत्यवादीकृतज्ञ : । वृत्तिग्ला
नोगोहितोगोशरण्योदातायज्ज्वाब्रा
ह्मण : पात्रमाहु : ॥ जनार्द्दने ॥
पतनात्त्रायतेयस्मात्तस्मात्पात्रं-
जनार्द्दन : ॥ पिबतिधर्मेणानया ।
पान्त्यस्माद्वा । पाति । पायतेवाधौ-
यतेऽनेनवा । पाधाने । पारचणेवा
सर्वधातुभ्यष्ट्रन्निति ष्ट्रन् । दादिभ्यश्छ
न्दसीतिननृवा ॥
पात्रट : । पुं० पार्पटके । कर्प्परे ॥ त्रि०
कृशे ॥
पात्रटीर : । पुं० सुकृद्व्यापारसन्निवि
। अपव्यापारसन्निधि ॥ लोहकांस्य
रजतपात्रे ॥ सिङ्घाणे ॥ पावके ।
हुताशे ॥ पिङ्गाशे ॥ वायसे ।
काके ॥
पात्रसंस्कार : । पुं० पुरोटी । पत्रभ-
ङ्कारे । रायमाटी० इ० गौ० भा०
। भात्रगभृती ॥
पात्रिकम् । न० पात्रपरिमितशौच्याद्दि
वापयोग्यचेत्रे ॥ पात्रस्यवाप : ।
पात्रात्ष्ठन् ॥
पात्रियी । स्त्री० चे पमत्स्यौ ॥ पित्वा
तृङ्गीष् ॥
पात्रिय : । त्रि० पात्र्ये ॥ पात्रमर्हति
। पात्राद्घंश्च ॥
पात्री । स्त्री० अमत्रे । पात्रे ॥ पियन्त्य
ऽनया । पा० ष्ट्रन् । ङीष् ॥
पात्रीयम् । न० यज्ञपात्रे ॥
पात्रीर : । पुं० श० यज्ञद्रव्ये ॥ पत्रे
इतिकश्चित् ॥
पात्रेसमित : । त्रि० भोजनसमयएव
सङ्गतेनतुकार्ये ॥ सपात्रेसमितो
न्यत्रभोजनाग्निसितोमय : ॥ पात्रेस
मितादयश्चेतिसप्तम्याअलुक्समास
श्चनिपात्यते ॥ पापिविशेषे ॥ यथा
मिथ्याविनयेपापय : परंशंसतिस्व
यम् । सपात्रेसमितोऽयस्मादिति-
शब्दमाला ॥
पात्रोपकरणम् । न० भूषभूषणे ॥
पात्र्य : । त्रि० पात्रिये ॥ पात्रमर्हति ।
पात्राद्घंश्चेतियत् ॥
पात्त्वम् । न० पापितातरि ॥ सर्वेषा
मेवमान्यानांपरंपात्त्वमहेश्वर : । प-
तन्त्रायतेयस्मात्तस्मात्पात्त्वगरकार्थिषा
न् ॥
पात्त्वता । स्त्री० पात्त्वे ॥
पाथ : । न० पानीये । जले । उदके ॥
पाति । पारचणे । सर्वधातुभ्योऽसु
न्निध्यसुन् । उदकेथुट्चेत्यसुन:थुट्
॥ मते । भात० इ०भा० ॥ यन्नेचे
त्यसुनथुट्श्च ॥

पाथि : । पुं॰ अब्धौ । समुद्रे । वह्नौ ॥ चक्षुषि ॥ पिबति । पा॰ । पिब तेस्थु गितीसिन् ॥

पाथेय : । त्रि॰ पथिव्ययोपयोगिनि । शम्बले ॥ पथिसाधु : । पंथ्यतिथि पसति खपतेर्ढञ् ॥ कन्याराशौ ॥

पाथोजम् । न॰ वामले ॥ पाथसिजा- तम् । जनी॰ । सप्तम्यांजनेर्ड : ॥

पाथोद : । पुं॰ मेघे ॥ पाथोददाति । डु दाञ् । आतोनुपेतिक : ॥

पाथोधर: । पुं॰ मेघे ॥ पाथसोधर: ॥

पाथोधि : । पुं॰ समुद्रे । ॥ पाथांसि धीयन्तेऽस्मिन् । कर्मण्यधिकरणेचे तिधाञ : कि : ॥

पाथोनिधि : । पुं॰ समुद्रे । पयःपारे ॥ पाथसांनिधि : ॥ पाथांसिनिधी यन्तेऽत्र । पाथोधिवद्दाञ:कि: ॥

पाद्—द् । पुं॰ चरणे । पादे ॥

पाद : । पुं॰ वृक्षे । मूले । तुरीयांशे । श्लोकादिचतुर्थभागे ॥ शैलप्रत्यन्तप र्वते पादै: समीपेक्षुद्रपर्वते ॥ चर णे । अङ्घ्रौ ॥ अस्यलक्षणं यथा । श्वेतौ दन्तौ मृदुतलौ कमलोदराभौ- श्लिष्टाङ्गुलौ रुचिरताम्रनखौ सुपार्ष्णी । उष्णौ शिराविरहितौ घनिगूढगुल्फौ कूर्मोन्नतौ च चरणौ मनुजेश्वरस्ये ति ॥ अस्याशुभलक्षणानि यथा । सूर्पाकारविरूक्षपाण्डुरनखौ वक्रौ शि रासन्ततौ संशुष्कौ विरलाङ्गुलौ च चर णौ दारिद्र्यदुःखप्रदौ । मार्गायो- त्कटकौ कषायसदृशौ वंशस्य विच्छे ददौ वध्याय परिपक्वमृद्युतितलौ पीतावगम्यारताविति ॥ विरूक्षाव स्निग्धौ । पांडुरनखौ॰ पांडुराशु भ्राभा नखायया: । वक्राव स्पष्टौ टौ वा । उत्कटौ मध्यादुन्नतौ मार्गा य मधुनिरतौ भवत: । कषायसदृशौ कृष्णलोहितौ ॥ मयूखे । वर्त्मे । किरणे । वृक्षपादे । श्लोकस्यतुर्यां शे । पद्यतेऽसौ । पदगतौ । पदरु जविशस्पृशोघञ् ॥ पद्यतेगम्यतेऽने नवा । हलश्चेतिकरणे घञ् ॥

पादकटक : पुं॰ नूपुरे । हंसके । शब्दरहितपादभूषणे ॥ पादस्यक टक : ॥

पादकृच्छ्र: । पुं॰ व्रतविशेषे । यथा । एक भक्तेन नक्तेन तथैवायाचितेन च । उप वासेन चैकेन पादकृच्छ्रउदाहृत : ॥ इति मार्क॰ १०२ अध्याय : ॥

पादगण्डिर: पुं॰ पादरोगविशेषे । श्ली पदे । गोड॰ इ॰ गोड भा॰ ॥

पादग्रहणम् । न॰ अभिवादने । नामो च्चारणपूर्वकसंस्कृत प्रयोगेण नमस्का रे ॥ पादयोर्ग्रहणं स्पर्श: ॥ व्यत्यस्त पाणिना कार्यमुपसङ्ग्रहणंगुरो: । सव्येन सव्य: स्प्रष्टव्यो दक्षिणेन च द क्षिण : ॥

पादचतुर : । पुं॰ छागे । मेकसे ॥

पिप्पले ॥ अश्वत्थे । करवे ॥
परदोषैकप्रवक्तृपरूषे ॥ द्र० मे० ॥
पादचत्वरः । पुं० पादचतुरे ॥ द्र० हेमचन्द्रः ॥
पादचारी । पुं० पादातौ । लि० पद्भ्यां गमनशीले ॥
पादजः । पुं० शूद्रे ॥ पद्भ्यांजातः । जनी० डः ॥
पादत्राणम् । न० पादुकायाम् ॥
पाददहुः । पुं० विचर्चिकायाम् ॥
पादनिकेतः । पुं० चरणपीठे ॥ पाद योर्निकेतः आश्रयः ॥
पादपः । पुं० । द्री । वृक्षे ॥ पादैः पिबति । पा० सुपीतियोगविभागात्कः ॥ पादपीठे ॥
पादपखण्डः । पुं० वृक्षसमूहे ॥ पाद पानांसमूहः । वृक्षादिभ्यः खण्डः
पादपरुहा । स्त्री० वन्दायाम् ॥
पादपा । स्त्री० पादुकायाम् ॥
पादपाशः । पुं० दामाञ्चने । अश्व पादरज्जौ ॥
पादपाशी । स्त्री० शृङ्खलायाम् । पै रजौसकली द्र० भा० । खड्का- याम् । खड्वा द्र० भा० ॥
पादपीठः । पुं० न० पादासने । पादस्थापनपीठे । पादनिकेते ॥ द्र० हे० च० ॥ यथा । अस्पृष्टचरणाद्य स्वचूडामणिमरीचिभिः । नीराज यन्निभूपाला:पादपीठान्तभूतलमि तिश्रीहर्षमिश्रः ॥
पादपीठिका । स्त्री० नापितादिशिल्पे ॥
पादपोत्पलः । पुं० कर्णिकारे ॥ पाद पैउत्पलमुत्तदाकारंपुष्पमस्य ॥
पादवलयः । पुं० हंसके । पादकटके ॥
पादवल्मीकम् । न० श्लीपदे ॥
पादमूलम् । न० चरणाधोभागे । गो- हिरे ॥
पादरक्षणम् । न० पादुकायाम् ॥
पादरज्जुः । स्त्री० पार्याम् । हस्तिपा दबन्धनगुणे ॥ चरणबन्धनदामसाचे ॥
पादरथी । स्त्री० पादुकायाम् ॥
पादरोहणः । पुं० वटवृक्षे ॥
पादविकः । पुं० पथिके ॥ पदवींधाव ति । मायोसरपदेख्यादिनाठक् ॥
पादविरजा । स्त्री० पादुकायाम् ॥
पादविहरणम् । न० पादक्षेपे ॥
पादशः । अ० पादम् पादमित्यर्थे ॥
पादशैलः । पुं० प्रत्यन्तपर्वते ॥
पादशोथः । पुं० पादगतशोथे ॥ यथा । अनन्योपद्रवकृतः शोथः पादस मुत्थितः । पुरुषंहन्तिनारींतुमुख जोगुह्यजोद्वयम् इति माधवः ॥
पादस्फोटः । पुं० विपादिकायाम् । विवाइ० द्र० भा० । स्फुटति । स्फुट० । घञ् । पादस्यस्फोटः ॥ पादौस्फोटयतिवा । कर्मण्यण् ॥
पादाकुलकम् । न० मात्रावृत्तविशेषे ॥ यथा । अचरगुरुलघुनियमविरहितं

भुजगराजपिङ्गलपरिभणितम् । भव तिसुगुम्फितपोडशकलकं वाणीभूषा पादाकुलकम् ॥ यथा । मलयपवन हतकुसुमपराग : परभृतनिभृतरवि तघनभाग : । चिरतरसञ्चितमान दुरन्त : कस्यमसुरं सुपनयति वस न्त : ॥

पादायम् । न० प्रपदे । पादस्याग्रम् ॥

पादाङ्गदम् । न० नूपुरे । पादस्याङ्गदमिव ॥ यद्वा । पादएवाङ्गम् । पादाङ्गंद्यति । द्यो० । दायतिवा । दे म० । दयते । देङ् पालनेवा । आतइतिवा : ॥

पादात् । पुं० पादाती ॥

पादातम् । न० पत्तिसंहतौ । पदाती नांसमूह : । भिक्षादित्वादण् ॥ पुं० । पादाती । पादाभ्यामतति । अत० । पचाद्यच् ॥

पादाति : । पुं० पत्तौ । पादातिके ॥

पादातिक : । पुं० पादातौ । पादातिरेव । विनयादित्वात्स्वार्थेठक् ॥ पादाभ्यामततीति अत० । बाहुलकात्तूक्कोवा ॥

पादाभ्यासयमकम् । न० चित्रकाव्यभेदे ॥ यथा । आपदिव्यापूतनयास्थायायुधिरेन्दपा : । आपदिव्या पूतनयाविश्वमनतायथेतिमाघका व्य१८ सर्गे ६० श्लोक : ॥ व्यपाराजान : । आपदिव्यसनेऽपि । व्या-

पूतनयाप्रवृत्तिनीतिकाएवसन्त : न तुव्यापदहृत्वेतिभाव : । पूतनया सेनयासाधनेन । वाक्यान्तरस्थस्यापिपूतनाशब्दस्यमत्रान्वयस्तिर्नेसोढव्य : । तथावेनप्रकारेणयुधिरेसम्प्रष्टः । यथा दिव्याजनताग्रन्तरिक्ष वर्त्तिसिद्धविद्याधरसङ्घोविस्मयमाप । युमानुषयुद्धं चक्षुरित्यर्थ : ॥

पादारक : । पुं० पोर्लिदे । नौकावयवविशेषे ॥

पादार्घ्यम् । न० पादप्रदाने ॥

पादालिन्द : । पुं० नौकायां ॥

पादावर्त्त : । पुं० अरघट्टके । रहंट० इ० भा० ॥

पादाविक : । पुं० पादातौ ॥ पादाभ्यामवति । अवरवगादौ । वा० दूक : ॥ यद्वा । पादेनावीरक्षणम् । तदस्यितु ष्ठ० इतिठक् ॥

पादासनम् । न० पादपीठे ॥

पादी । पुं० पादविशिष्ट कुम्भीरादिजलजन्तुषु । तैयथा । कुम्भीर कूर्मनक्राश्वगोधाजकरकड्कटा : । घंटक: शिशुमारश्वत्याद्य:पादिन:स्मृता: । पादिनो विषयेतेनुकोपस्थानां गुणै : समा : ॥ चतुर्थांशभागिनि । यथा । सर्वेषामर्द्धिनोमुख्यास्तदर्द्धेनार्द्धिनोऽपरे । तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्चपादिन : । त्रि० । पादविशिष्टे ॥

पादुक: । त्रि० गमनशीले ॥
पादुका । स्त्री० पादत्राणे । चर्मादिनिर्मितपादाच्छादने । उपानहि ॥ पादूरेव । स्वार्थेक: ॥
पादुकाकार: । पुं० चर्मकारे ॥ पादुकां करोति । कुकृञ्० । कर्मण्यण् ॥
पादुकाकृत् । पुं० चर्मकारे ॥
पादू: । स्त्री० पादुकायाम् ॥ पद्यतेऽनेनया । पद० । णित्कसिपद्यर्ते रित्यू: ॥
पादूकृत् । पुं० चर्मकारे ॥ पादूं करोति । कृञ्० । क्विप् । तुक् ॥
पादोदकम् । न० चरणधौतजले ॥ चरणामृते ॥ यथा । हरिरूपमुखेनाम नैवेद्यमुदरे हरे: । पादोदकश्च निर्माल्यं मस्तके यस्य सोऽच्युत: ॥ नैवेद्यमन्नं तुलसीविमिश्रं विशेषत: पादजलेन विष्णो: । योऽश्नाति नित्यं प्रयतो मुरारे: प्राप्नोति सुर्प्रे मयुतांसभक्तिमितिपाद्मोत्तरखण्डे १०० अध्याय: । अपि दन्तमेव । स्पर्शा हन्ति यदङ्घ्रिसङ्गितुलसीत्येव पादोदकं नैवेद्यं बहुसत्यपानदुरितं सुर्वेन्नासङ्गमम् । भक्त्याधीनमतिस्थितिर्हरिमितत्मङ्गति: सद्गजांशालग्रामशिलादिमूर्तिसहितांजानन्ति कैर्वैर्हरिरिति ॥ श्रीनृसिंहपुराणे गंगाप्रयागगयनैमिषपुष्करादिपुण्यानि यानि कुरुजाङ्गलयामुनानि । कालेनतीर्थसलिलानिपुनन्तिपापं-
पादोदकंभगवत:प्रपुनातिसद्य इति पीवेपादोदकेविष्णोर्येद्विप्राणैर्विमुच्यते । इत्यायमभटानुसर्वान्वैष्णवंलो कमाप्नुयात् ॥
पाद्धतम् । न० पद्धतिसमूहे ॥ भि० । अण्० ॥
पाद्म: । पुं० वेधसि ॥ न० । पद्मपुराणे ॥
पाद्यम् । न० पादार्थवारिणि । पादप्रक्षालनार्थजले ॥ पाद्यपात्रलक्षणं यथा । षडङ्गुलप्रविस्तारसुत्सेधञ्चतुरङ्गुलम् । श्रीसमेकाङ्गुलंकुर्यान्नासिकांचतुरङ्गुलाम् ॥ पृष्ठे पादसमायुक्तांचतुरङ्गुलमानत: । पाद्यपात्रमितिख्यातंसर्वदेवप्रपूजने इति ॥ पादार्थमुदकम् । पादार्घाभ्यांचेति यत् ॥
पान: । पुं० नि:श्वासे ॥ शौण्डिकाख्ये । शुण्डायाम् ।। खड्गादे: संस्कारविशेषे । पायन० इ० भा० ॥
पानम् । न० पीतौ । द्रवद्रव्यस्यगला धोनयने । पीना० इ० भा० भावे ॥ रक्षणे ॥ शौण्डिकालये ॥ पिबन्त्यन । पायामि । अधिकरणेल्युट् ॥ पेयेजलादौ ॥ पीयते यत्तत् । कृत्यल्युटोबहुलमितिकर्मणिल्युट् ॥
पानकम् । न० पञ्चापानारसवत्० इ० भा० प्र० पेयपदार्थे ॥ तत्रामफलपानकम् ॥ यथा । आमलमामंजल-

खिन्नं मर्दितं दृढपाणिना । सिता-
शीताम्बुसंयुक्तं कर्पूरमरिचान्वितम् ॥
प्रपानकमिदं श्रेष्ठं भीमसेनेननिर्मि
तम् । सद्योरुचिकरं बल्यं शीघ्रमिन्द्रि
यतर्पणम् ॥ अपक्वाम्ररसोद्भूतपान
कं वातनाशनम् । कफपित्तकरं कि-
ञ्चित्प्रष्ठं यद्विसेवितम् ॥ पक्वाम्र
स्य तु । सुपक्वमाम्रस्य फलं सुमुष्टिना
सम्मर्दितं शर्करया समन्वितम् । एला
लवङ्गार्द्रकनासया सितं वर्षान्वितं
कस्तूररोचकं भवेत् ॥ पानकं चाम्र-
सम्भूतं स्वाद्वम्लं गुरुपित्तजित् । सुहृ
द्यं श्रेष्ठमवलव्यं वर्ण्यं रुच्यं रुचिप्रद-
म् ॥ -( ००‡०० )- ॥ चिञ्चिकाया
स्पानकं यथा । चिञ्चिकायाः फलं
पक्वं मर्दितं वारिणा दृढम् । शर्करा
मरिचोन्मिश्रं लवङ्गेन्दुसुवासितम् ॥
चिञ्चिकाफलसम्भूतं पानकं वातनाश
नम् । पित्तश्लेष्मकरं किञ्चित्सुरुच्यं
वह्निबोधनम् ॥ निम्बूफलपानकं
यथा । भागैकं निम्बुकं तोयं षड्भा-
गं शर्करोदकम् । लवङ्गमरिचोन्मिश्रं
पानकं पानकोत्तमम् ॥ निम्बूफल-
भवं पानमत्यम्लं वातनाशनम् । व-
ह्निदीपिकरं रुच्यं समस्ताहारपाचक
म् ॥ ( ०० ) ॥ धान्याकपानकं यथा
। शिलायां साधु सम्पिष्टं धान्याकं व-
स्त्रगालितम् । शर्करोदकसंयुक्तं कर्पू
रादिसुसंस्कृतम् ॥ नवीनेमृन्मयेपा-
चे स्थितं पित्तहरं परम् ॥०॥ जम्ब्वाः
पानकं यथा । जम्बूफलं स्थूलतरं सु
पक्वं सम्मर्दितं शर्करयाम्बुनालम् ।
। सुवासितं वेलसभृङ्गमनैरुचिं विधत्ते
विरुचौ जनानाम् ॥ जम्बूफलभवं
रुच्यं पानकं कफनाशनम् । कषायं
वातलत्सोष्णं स्वाद्वम्लं याश्चर्यपरम् ॥
बीजपूरपानकम् । मातुलुङ्गरसेयो-
ज्यं निस्तुषं शार्करं जलम् । कर्पूरमरि
चोन्मिश्रं पानकं स्यादिदं वरम् । मातु
लुङ्गभवं पानं शूलनाशविनाशनम् ।
श्वासिकासेऽरुचौ वातपित्तश्लेष्मसु पूजि
तम् ॥ हिमखिरण्यन्तु । शर्करानालिकी
लघुबीजपूररसयुतम् । पटपूतंभ-
वेद्धेमखिरण्यमामपानकम् ॥ पानकं
हिमखिरण्यं रुच्यं श्रव्यं बलप्रदम् । सु
स्निग्धं वातहृत्कुम्भं किञ्चित्श्लेष्मकरं
गुरु ॥ करमर्दपानकं यथा । लवङ्गार्द्र
कसंयुक्तं सुपिष्टं वारिणा युतम् । क
रमर्दफलैर्मर्दैः सप्तभागसितान्वितम्
॥ वातहृद्रुचिदं भव्यं हृद्यमत्यन्तरं स्म-
तम् । रक्तपित्तकरं श्लेष्मामाकण्ठ्यं
कारमर्दितम् ॥ नारङ्गपानकं यथा ।
सुपक्वनारङ्गफलं निपीडितं संयोजि
तं शर्करया विशुभ्रया । सदार्द्रकंचे-
न्दुकणेन वासितम् पानं ह्यया कि
नसं सुखदायकम् ॥ नारङ्गफलसम्भू
तं पानकं वातनाशनम् । मधुरं विश-
दं रुच्यं सुस्निग्धं पित्तहृद्दृढम् ॥ ०॥

चारस्यतु । चारस्चफलजं सशर्कर मर्दितशिशिरवारिणाद्दढम् । ऐल - माद्र्रकयुतेनसुवासंभक्तासिक्थमिति तंकृतवासम् ॥ चारस्यफलजंपानं- गुरुविष्यं रुचिप्रदम् । कफपित्तहरं- वृंहणंमधुरपाकिच ॥ पनसक्षीरचु कादिद्राक्षादाड़िमकंतथा । एषांसं सम्भवभिन्नं पानकंक्रियतेबुधैः ॥ ए यमम्लस्यपुष्पस्य फलस्याम्लस्यधात- घा । शर्करामरिचोन्मिश्रंरसंस्यात् पानकंवरम् । एवंहिपानकंकार्यं- सुधियासुहृयत्कृतम् । गुणाढ्यानु सारेणज्ञातव्याः पानकेगुणा ॥

पानगोष्ठिका । स्त्री० आपाने । सम्भूयपिबन्तियत्र० अस्मिन्स्थाने ॥ पानस्यगोष्ठी । स्वार्थेकः ॥

पानगोष्ठी । स्त्री० पानगोष्ठिकायाम् ॥

पानपात्रम् । न० मद्यपानपात्रे । चप कि ॥ अस्यपरिमाणाद्युशकुलसारे- । नयनाग्निवाणसहाकर्षैस्तुपरमेश्वरि । पैतुपात्रं प्रकर्त्तव्यमित्थंशकुल साधने ॥ तृतीयाधिकपात्रन्तुनकर्त्तव्यंचसाधकैरिति ॥ कार्येलौकिकतोलकमित्यर्थः ॥ तदुक्तकुलोत्तमे । गुञ्जाद्वादशमाषः स्यात्तदष्टौकर्षउच्यतइति ॥ पानस्यपानायवा पात्रम् ॥

पानवणिक् । पुं० शौण्डिके ॥ पानेन उपलक्षितो वणिक् ॥

पानभाजनम् । न० पानपात्रे । कंसि । कटोरा० इ० भाषा ॥ पीयते० पानम् । क्षीरादि । भापाने । ल्युट् । पानस्यभाजनम् ॥

पानसम् । न० पनसभवमद्ये ॥ त्रि० पनससम्बन्धिनि । पनसस्येदम् । अण् ॥

पानात्यय : । पुं० मदात्ययरोगे ॥

पानिलम् । न० पानपात्रे ॥

पानीयम् । त्रि० पातव्ये । पेये ॥ रक्षणीये ॥ यथा । पानीयंपानीयंभरस्वियसर्त्त्वयानीसमिति । अस्यार्थः । पानीयंजलंशरद्दिपानीयम्पानार्हम्भवतिनिर्मलत्वात्त्रिदोषघ्नत्वात्तृविशेषत : पित्तोपशान्तित्वात् । वसन्ते पुनस्तदेवपानीयंरक्षणीयमल्पंदेयमितिभाव : । पारक्षणे ॥ न० उदके । जले । सलिले ॥ अस्य गुणायथा । पानीयंश्रमनाशनंक्लमहरंमूर्च्छापिपासापहंतन्द्राछर्दिविनाशनंबलकरंनिद्राहरंतर्पणम् । हृद्यंगुप्तरसंह्यजीर्णशमनंनित्यंहितं शीतलंलघ्वच्छंरसकारणंनिगदितंपीयूषवज्जीवनम् ॥ तद्भेदास्तु । पानीयमुनिभिःप्रोक्तंदिव्यंभौममितिद्विधा । दिव्यञ्चतुर्विधंप्रोक्तंधाराजंकारकाभवम् ॥ तौषारञ्चतथाहैमंतेषुधारंगुणाधिकम् ॥ भौममम्भोनिगदितंप्रथमंत्रिविधंबुधैः ॥ जाङ्गलं

परमान्नपैतस : साधारणंक्रमात् ॥ अनार्त्तं यंप्रमुक्तन्तिवारिवारिधरास्तु यत् । तत्‌चिदोषायसर्वेषांदेहिनां- परिकीर्तितम् ॥ नादेयमौद्भिदंचैव नैर्झरंसारसंतथा । ताड़ागञ्चतथा- वाप्यंकौपंचौण्डाख्यपाल्वलम् ॥ वि- किरञ्चैवकैदारंवार्यष्टधापिकीर्त्ति तम् । भौमान्येतानिवारीणि ज्ञात व्यानिविचक्षणै : ॥ भुक्त्वादौसलि लंपीतंकाश्यंमन्दाग्निदोषकृत् । म ध्येऽग्निदीपनंश्रेष्ठंमान्तेस्थौल्यक फप्रदम् ॥ पानीयंप्राणिनः प्राणाः पानीयंपावनंमतम् ।पानीयस्यप्रदा नेनतृप्तिर्भवतिशाश्वती ॥ पीयते । पापाने । अनीयर् ॥ पायतेवा । पै शोषणे । अनीयर् ॥

पानीयलगड़ुलीय : । पुं० लगड़ुलीय प्रभेदे । काष्ठटे ॥

पानीयनकुल : । पुं० उद्रे । जलमार्जा रे ॥

पानीयपृष्ठज: । पुं० कुम्भ्याम् ॥

पानीयफलम् । न० मखान्ने ।मखाना इतिभाषा० ॥ शृङ्गाटके । सिंघाडा इ० भा० ॥

पानीयमूलम् । न० कुम्भ्याम् । सोमरा ज्यां ॥

पानीयमूलकम् । न० सोमराज्याम् ॥

पानीयवर्षिका । स्त्री० वालुकायाम् ॥

पानीयशाला । स्त्री० प्रपायाम् ॥पानी यसशाला ॥ जलावस्थानगृहे ॥

पानीयशालिका । स्त्री० प्रपायाम् ॥ स्वार्थेकन् ॥

पानीयामलकम् । न० प्राचीनामलके ॥ प्राचीनामलकंलोकेपानीयामल- कंस्मृतम् ॥

पानीयालु : । पुं० जलालौ । पनिया लु० इ० भा० ॥

पानीयाश्चा । स्त्री० वल्वजायाम् ॥

पान्थ : । त्रि० पथिके ॥ पन्थानंनित्यं गच्छति । पन्थोणनित्यम् । इ० प- न्थादेशोणप्रत्ययश्च ॥ स्त्री० । पान्था

पापम् । न० अधर्मे । अनर्थानुबन्धिनि । किल्बिषे । वृजिने । एनसि । दु- रिते ॥ निषिद्धकर्मानुष्ठानविहित कर्माऽननुष्ठानाभ्यांपापोत्पत्तिंसवि शेषमाहश्रीसदाशिव : । अनुष्ठानं- निषिद्धस्यत्यागोविहितकर्मण : । नृणांजनयत : पापंक्लेशोकामय- प्रदम् ॥ स्वानिष्टमात्रजननात्परा- निष्टोपपादनात् । तदेवपापंद्विविधं जानीहिकुलनायिके ॥ परानिष्टक- रात्पापान्मुच्यतेराजशासनात् । अ न्यस्मान्मुच्यतेमर्त्य : प्रायश्चित्तास माधिना ॥ प्रायश्चित्ताश्रयादण्डैर्न- पूतायेक्लतांहस : । नरकान्नतेनिव- र्त्तन्तेइहामुत्रविगर्हिता इति श्री महानिर्वाणतन्त्रम् ॥ तद्दशविधंय- था । प्राणाभिपातनंस्तैन्यंपरदार

पामघ्नी । स्त्री० कटुकायाम् ॥ इति० राजनिर्घण्टः ॥

पाम । न० विचर्चिकायाम् । कच्छ्वाम् ॥ पायत्यङ्गम् । पैशोमये । मनिन् ॥ पायतेदेहोऽस्माद्वा । पामनि । पि क्षतिदेहेवा ॥

पामन : । त्रि० कच्छुरे । पामरोगवि शिष्टे । विचर्चिकायुक्ते ॥ पामाऽ- स्यास्ति । पामादित्वान्न : ॥

पामर : । त्रि० खले ॥ नीचे ॥ मूर्खे ॥ पामानंराति । रा० । आतइतिक : ॥ यथा । पाधर्म : स्वसेवेन । स्वच्छ् प्राणत्यागी । पुंसीतिच : ॥

पामरोद्वारा । स्त्री० गुडूच्याम् ॥

पामवान् । त्रि० पामने ॥ अस्त्यर्थेमतु प् ॥

पामा । स्त्री० विचर्चिकायाम् ॥ कच्छ्वा म् । खर्ज्वाम् ॥ अस्याऔषधं यथा । हरिद्राहरितालस्तुदूर्वागोमूत्रसैन्ध वम् । अयंलेपोहन्तिदद्रुंपामानंवेग रंतथा ॥ अपिच । माहिषंनवनीतं चसिन्दूरसमरीचकम् । पामाविलि पितानश्येद्दद्रुलापिहपथुज ॥ अन्य च ॥ मरिचंनिशतंकुष्ठं हरितालंमन शिला । देवदारुहरिद्रे द्वे कुष्ठंमां सीतिचन्दनम् ॥ विशालाकरवीरस्य चार्कक्षीरंसकृत्फलम् । एषांचकार षिकोभागोविषस्यार्द्धपलंभवेत् ॥ प्र स्थंकटुकतैलस्यगोमूत्रेस्तुगुणेपचेत् । मृत्पात्रेलोहपात्रेवाशनैर्मृद्वग्निनाप चेत् ॥ पामाविचर्चिकाचैव दद्रुवि- स्फोटकानिच । अभ्यङ्गेनप्रणश्यन्ति कोमलत्वञ्चजायते ॥ प्रसूतान्यपिश्वि त्राणितैलेनानेनम्रक्षणात् । चिरो- त्थितमपिश्वित्रं विवर्णंतत्प्रणाश्यती- ह्विति गारुडे १६५ अध्याय : ॥ पा- यत्यङ्गम् । पै० । मनिन् ॥ मनन्नति नङीप् । डाबुभाभ्यामितिडाप् ॥

पामारि : । पुं० गन्धके ॥

पायस : । पुं० न० क्षीरतण्डुलमिश्रे । परमान्ने ॥ अतप्तखण्डुलाधौताः परिभृष्टाघृतेनच । खण्डयुक्तेनदु- ग्धेनपाचिता : पायसोभवेत् ॥ पा यस : कफकृद्बल्योविष्टम्भीमधुरोगु रु : ॥ अपिच । पायसंदुर्जरंबल्यं - धातुपुष्टिविवर्द्धनम् । विष्टम्भजन- नंहन्तिरक्तपित्ताग्निमारुतम् ॥ श्री वासे । सरलद्रवेटारपिमृद्घृतिभा० ॥ पयएव । प्रज्ञाद्यण् ॥ पयसोवि- कारोवा । तस्यविकारइत्यण् ॥ प- यसिसंस्कृतोवा । संस्कृतंभक्षा० इ त्यण् ॥

पायिक : । पुं० पदातिके । पायक इ तिभाषा ॥ इति शब्दरत्नावली ॥

पायित : । त्रि० पानङ्कारिते ॥ पिवती त्यन्तात्कर्मणिक्त : । शाच्छासाह्वा व्यावेपांयुगित्तियुगागम : ॥

पायुः । पुं० मलद्वारे । अपाने । गुदे ॥

अवागतिरपानश्चपायुरध्यात्मसुच्यते । अधिभूतविसर्गश्चमित्रस्तत्राधिदैवतम् ॥ पायतिशोषयतितैलमितिपायु : ॥ पे० । छवापाजीत्युण् । चातोयुक् ॥ यद्वा पातिमलनिस्सारणेन। पारश्णे पिवतिवस्त्यौषधंवा । मापाने । प्राग्वत् ॥ त्रि० रचके ॥

पाय्यम् । न० परिमाणे । यौतवे ॥मीयतेऽनेन । माङ्माने । पाय्यसान्नाय्येतिनिपातनात्ण्यत् धात्वादे: प-कारादेशोयुगागमश्च ॥ अधे ॥ त्रि० । निन्दनीये ॥

पारम् । न० परतटे । नदीलङ्घनात्मध्यतीरे ॥ पुं० । न० प्राप्तौ ॥पारयति। पारतीरकर्मसमाप्तौ ॥पचाद्यच् ॥समाप्तौ॥पुं०। पारदेपीतिकश्चित् ॥

पारकुलीन : । त्रि० परकुलेसाधौ ॥ प्रति०खञ् ॥

पारक्य : । त्रि० परकीये ॥ यथा । यस्मात्मातंस्वशाखायांपारक्यमविरोधियत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्म्मवत् इति ॥ पुं० । परलोकहितकर्मणि । यथा । पादिनतस्यपारक्यं कुर्यात्सद्व्ययमात्मवान् । अर्द्धेनचात्मभरणं नित्यनैमित्तिकंतथा ॥ पादञ्चार्द्धं मर्थस्यमूलभूतविवर्द्धयेत् । एवमाचरत : पुंसोह्यर्थ . साफल्यमृच्छतीतिमार्कण्डेयपुराणम् ॥

पारग : । त्रि० । पारगामिनि ॥पारङ्गच्छति । गम्लृ० । अन्तात्यन्ताध्वदूरपारसर्वेत्यादिनागमेर्ड : प्रत्यय : ॥

पारगत : । पुं० जिने ॥ त्रि० । पारगे ॥

पारच् । न० सुवर्णे ॥ पारयति । पार० । पारयतेरजि : ॥

पारजायिक : । पुं० पारदारिके ॥ इतिमहाभारते राजधर्म : ॥

पारटीट : । पुं० । पश्मनि ॥

पारण: । पुं० मेघे ॥ न० । पारणायाम् ॥ यथा । पारणंपावनंपुंसां सर्वपापप्रणाशनम् । उपवासाद्भूतस्वफलदंशुभिकारणम् ॥ सर्वेष्वेवोपवासेषु दिवापारणमिष्यते । अन्यथाफलहानि : स्याद्दतेधारणपारणम् ॥ नरात्रौपारणंकुर्याद्दते वैरोहिणीव्रतात् । निशायांपारणं कुर्याद्वर्जयित्वामहानिशाम् ॥ पूर्वाह्णेपारणंशस्तं कृत्वाविप्रसुरार्चनम् । सर्वेषांसम्मतंकुर्याद्दतेवैरोहिणीव्रतमितिब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८ अध्याय : ॥ जन्माष्टमीव्रतेपारणाकालस्तु । अष्टम्यामथरोहिण्यां नकुर्यात्पारणंक्वचित् । हन्यात् पुराकृतंकर्म उपवासार्जितंफलम् ॥ तिथिरष्टगुणंहन्तिनक्षत्रञ्चचतुर्गुणम् । तस्मात्प्रयत्नत : कुर्या

मयापिच । चौरिपापानिकायेनस
र्वत : परिवर्ज्जयेत् ॥ असत्प्रलापं
पारुष्यं पैशुन्यमनृतंतथा । चत्वारि
वाचाराजेन्द्रनजल्पे तनचिन्तयेत् ॥
अनभिध्यापरस्वे पुसर्वसत्त्वे पुसौहृ-
दम् । कर्मणांफलमस्तीतिचिविधंम
नसाचरेत् ॥ अपिच । अदत्तानामु
पादानंहिंसाचैवाविधानतः । परदा
रोपसेवाचकायिकंचिविधंस्मृतम् ॥
पारुष्यमनृतञ्चैवपैशुन्यं चापिसर्व-
श : । असम्बद्धप्रलापश्चवाङ्मयंस्या-
च्चतुर्विधम् ॥ परद्रव्येष्वभिध्यानंम
नसानिष्टचिंतनम् । वितथाभिनि-
वेशश्चचिविधंकर्ममानसम् । त्रि० ।
अधर्मिणि । शास्त्रप्रतिषिद्धकारिणि
॥ यथा । कथापिखलुपापानामल-
मश्रेयसेभवेदिति ॥ क्रूरे । परद्रो
हादिकरे ॥ ॥ पापमस्मादात्मानम् ।
पापजणी । पापीविपिश्च : प : ॥
पापमस्यास्तिआ । अर्शआद्यच् ॥
पापंचिन्तयतेचैवब्रवीतिचकरोतिच
। तस्याधर्मेनिविष्टस्य गुणानश्यन्ति-
साधव : ॥ धर्मनिष्ठ : प्रशान्तात्मा
कार्ययोगवश : सदा । नाधर्मे कुरु
तेबुद्धिं नचपापेप्रवर्त्तते ॥ धर्मनि
ष्ठोधर्मे निरतसंस्त : । कार्ययोगव-
श : कार्याधायतत्पर : ॥
पापकम् । न० दुरदृष्टे । पाप्मनि ।
पापे ॥

पापकर्त्तु कयोग : । पुं० यात्रायोगवि
शेषे ॥ यथा । दुर्बलोयदिमार्गेशोनि
वसेत्पापमध्यग : । पापकर्त्तु कयो
गोयंयातु : पत्नींनिहन्तिवै ॥
पापकर्म्मा । त्रि० पापाचारे ॥ नचिरं
पापकर्माण: क्रूरालोकजुगुप्सिता:
। ऐश्वर्यंप्राप्यतिष्ठन्ति सुशीर्णमूला-
इवद्रुमा : ॥ पापंकर्म्म यस्य स : ॥
पापकृत् । त्रि० पापकारिणि ॥ पापं-
कृतवानितिविग्रहेसुकर्म पापमन्त्र-
पुण्येषुकृञ इतिक्विप् ॥
पापकृत्तम : । त्रि० अतिशयपापका-
रिणि ॥
पापगण: । पुं० पक्षमासस्याष्टमप्रभेदे ॥
पापग्रह : । पुं० क्षीणचन्द्रादौ ॥ य-
था । क्षीणेन्दु : कुजोराहु : शनि
र्केतुस्तथैवच: । रवि:पापाभवन्त्ये
तेशुभाख्यान्ये प्रकीर्त्तिता: ॥ जन्म
राश्यपेक्षयाषष्ठादिस्थानस्था: पा-
पाश्चापिशुभाभवन्ति । यथा । केतूप
ग्रहभौममन्दगतय : षष्ठत्रिसंस्था :
शुभाश्चन्द्रार्कावपितत्त्वतोचदशमौ
चन्द्र : पुन : सप्तम : । जीव : स
प्त नवद्विपञ्चमगतोयुग्मेपुसोमात्म
ज : शुक्र: षड्दशसप्तवर्जितगृहे
ष्वेंऽष्य पान्ते शुभाइति ॥
पापघ्न : । पुं० तिले ॥ त्रि० पापना-
शके ॥
पापचेलिका । स्त्री० पाठायाम् ।

पाठायाम् ॥

पापचेली । स्त्री० प्राचीनायाम् ॥ अम्बष्ठायाम् । पाठायाम् ॥ पापेचलति । चलविलसने, पचाद्यच् गौरादित्वात् ङीष् ॥ पचेर्यङन्तादचिपापचीतिपापचोवायु: । तमीरयतिवा । अण् ॥

पापपति : । पुं० जारे । उपपतौ ॥

पापपुरुष : । पुं० पापमयाङ्गनरे ॥ तत्पोक्त: पाद्मे क्रियायोगसारे । ब्रह्महत्याशिरस्कं च पापपुरुष : स्मृत : समारंभचराचरम् । सर्वेषामादिमनार्थीयसृष्टवान्पापपूरुषम् ॥ द्विजातिहत्यामूर्द्धानंमदिरापानलोचनम् । सुवर्णस्तेयवदनं गुरुतल्पगकर्णश्रुतिम् ॥ स्त्रीहत्यानासिकावक्त्रं गोहत्यादोमधाहुकम् । न्यासापहरणग्रीवंभ्रूणहत्यागलंतथा ॥ परस्त्रीगतिमुक्तालंसुहृल्लोकवधोदरम् । शरणागतहत्यादिनाभिं गर्भकथाकटिम् ॥ गुरुनिन्दासक्थिभागकन्याविक्रयशिफसम् । विश्वासवाक्यकथनपायुंपितृवधाङ्घ्रिकम् ॥ उपपातकरोमाणंमहाकायंभयङ्करम् । छायायर्पीपिङ्गनेत्रं स्वाश्रयात्यन्तदुःखदमिति ॥

पापफलम् । न० रोगे ॥ कर्मविपाके ॥

पापमुक्त : । त्रि० निष्पापे ॥

पापयोनि : । पुं० खले ॥ तिरश्चि ॥

पापरोग : । पुं० मसूरीरोगे ॥ अष्टौपापरोगा : । तेच । उन्माद : । त्वग्दोष : । राजयक्ष्मा । श्वास: । मधुमेह : । भगन्दर : । महोदर : । अश्मरी । इति ॥

पापरोगी । त्रि० कुष्ठिनि ॥ क्षयरोगिणि ॥ पापरोगाणामष्टविधत्वादष्टौपापरोगिणोभवन्ति ॥

पापर्द्धि : । पुं० मृगयायाम् ॥ बृ०ह०

पापल : । त्रि० पापप्रापके ॥

पापशमन : । त्रि० पापनाशके ॥

पापशमनी । स्त्री० शमीवृक्षे ॥ पापनाशिकायाम् ॥

पापात्मा । पुं० अधर्मशीले । पापाशये । पापिनि ॥

पापिष्ठा । स्त्री० वर्णवृत्तविशेषे ॥ आदौकार्यंयलक्षितंज्ञात्वाविप्रंगुरुसहितम् । तद्वृत्तं पिङ्गलभणितंपापिष्ठेतिप्रथयहितम् ॥ यथा । भामंभामंभुवनतलंदर्शन्दर्शंजगदखिलम् । भूयोभूय: परिमुषितम् विष्णोर्नामप्रवहितम् ॥

पापी । त्रि० पापयुक्ते ॥

पाप्मा । पुं० पापे ॥ त्रि० । तद्वति । आप्नोति । व्याप्नोतिलोकान् । आप्० । नामन्सीमन्व्योमन्निति० निपातित: ॥ पातिपिबतिवा । पा० । नामन्निति० मनिन्० धातो : पुगागमश्चनिपातनात् ॥

पामघ्न : । पुं० गन्धके ॥

पामघ्नी । स्त्री० कटुकायाम् ॥ इति० राजनिर्घण्टः ॥

पाम । न० विचर्चिकायाम् । कच्छ्वाम् ॥ पायस्यङ्गम् । पैशोषत्वे । मनिन् ॥ पायलेदेहोऽस्माद्वा । पारयवी । पिवतिदेवेवा ॥

पामन : । त्रि० कच्छुरे । पामरोगविशिष्टे । विचर्चिकायुक्ते ॥ पामाऽस्यास्ति । पामादित्वान्नः ॥

पामर : । त्रि० खले ॥ नीचे ॥ मूर्खे ॥ पामानंराति । रा० । आतइतिकः ॥ यद्वा । पाधर्मः म्रयतेयेन । मृङ् प्राणत्यागे । पुंसीतिघः ॥

पामरोद्धारा । स्त्री० गुडूच्याम् ॥

पामवान् । त्रि० पामने ॥ अस्त्यर्थेमतुप् ॥

पामा । स्त्री० विचर्चिकायाम् ॥ कच्छ्वाम् । खर्ज्वाम् ॥ अस्याऔषध यथा । हरिद्राहरितालश्चदूर्वागोमूत्रसैन्धवम् । अर्यलेपोहन्तिदद्रुंपामानंवेगरंतथा ॥ अपिच । साहिफेननवनीतं चासिन्दूरश्चमरीचकम् । पामाविनिपितानश्चेचकुलापिष्टपथुक ॥ अन्यच्च ॥ मरिचंचिनतकुष्ठंहरितालंमनशिला । देवदारुहरिद्रे द्वे कुष्ठंमांसीतिचन्दनम् ॥ विशालाकरवीरश्च अर्कक्षीरंसकृत्फलम् । एषाचकारषिकोभागोविषस्यार्द्धपलंभवेत् ॥ प्रस्थंकटुकतैलस्यगोमूत्रेशुगुणेपचेत् । मृत्पात्रेलौहपात्रेवाशनैर्मृद्वग्निनापचेत् ॥ पामाविचर्चिकाश्चैव दद्रुविस्फोटकानिच । अभ्यङ्गेनप्रणश्यन्ति कोमलत्वञ्चजायते ॥ प्रसूतान्यपिश्वित्राणितैलेनानेनमक्षणात् । चिरोत्थितमपिश्वित्रं विवर्णतत्क्षयाभवेदिति गारुडे १९४ अध्यायः ॥ पायत्यङ्गम् । पैं० । मनिन् ॥ मनइति ङीप् । डाबुभाभ्यामितिडाप् ॥

पामारिः । पुं० गन्धके ॥

पायस : । पुं० न० क्षीरतण्डुलमिश्रे । परमान्ने ॥ अतप्ततण्डुलाधौता: परिमृष्टाघृतेनच । खण्डयुक्ते नदुग्धेनपाचिता: पायसीभवेत् ॥ पायस : कफकृद्बल्योविष्टम्भीमधुरोगुरु: ॥ अपिच । पायसंदुर्जरंबल्यं धातुपुष्टिविवर्द्धनम् । विष्टम्भजननंहन्तिरक्तपित्ताग्निमारुतम् ॥ श्रीवासे । सरलद्रवेटारपिनूइति भा० ॥ पयस्य । प्रज्ञाद्यण् ॥ पयसोविकारोवा । तस्यविकारइत्यण् ॥ पयसिसंस्कृतोवा । संस्कृतंभक्षा० इत्यण् ॥

पायिक : । पुं० पदातिके । पायक इतिभाषा ॥ इति शब्दरत्नावली ॥

पायित:। त्रि० पानङ्कारिते ॥ पिवतेर्ण्यन्तात्कर्तरिक्त: । शाच्छासाह्वाव्यावेपांयुगितियुगागमः ॥

पायु: । पुं० मलद्वारे । अपाने । गुदे ॥

अवाग्गतिरपानश्चपायुरध्यात्ममुच्यते । अधिभूतंविसर्गश्चमित्रस्तत्राधिदैवतम् ॥ पायतिशोषयतितैलमितिपायु: ॥ पै० । कृवापाजीत्युण् । आतोयुक् ॥ यद्वा पातिमलनिस्सारणेन । पारक्यो पिबतिवस्त्रौषधंवा । पापाणे । प्राग्वत् ॥ त्रि० रक्षके ॥

पाय्यम् । न० परिमाणे । यौतवे ॥ मीयतेऽनेन । माङ्माने । पाय्यसान्नाय्येतिनिपातनात्ण्यत्धात्वादे: पकारादेशोयुगागमश्च ॥ जले ॥ त्रि० । निन्दनीये ॥

पारम् । न० परतटे । नदीसमुद्रादेरन्यतीरे ॥ पुं० । न० प्रान्ते ॥ पारयति । पारतीरकर्मसमाप्तौ ॥ पचाद्यच् ॥ समाप्तौ ॥ पुं० । पारदेपीतिकश्चित् ।

पारकुलीन: । त्रि० परकुलेसाधौ ॥ प्रति०खञ् ॥

पारक्य: । त्रि० परकीये ॥ यथा । यन्नाश्नातंस्वशास्त्रार्थंपारक्यमविरोधियत् । विहक्रिसदनुष्ठेयमग्निहोत्रादिकर्मवत् इति ॥ पुं० । परलोकहितकर्मणि । यथा । यादिनतस्यपारक्यं कुर्यात्सस्वयमात्मवान् । अर्द्धेनचात्मभरणं नित्यनैमित्तिकंतथा ॥ पादञ्चार्द्धमर्थस्यमूलभूतंविवर्द्धयेत् । एवमाचरत: पुत्रोऽर्थ: साफल्यमृच्छतीतिमार्कण्डेयपुराणम् ॥

पारग: । त्रि० । पारगामिनि ॥ पारङ्गच्छति । गम्ल० । अन्तात्यन्ताध्वदूरपारसर्वानन्तेषुडइत्यादिनागमेर्ड: प्रत्यय: ॥

पारगत: । पुं० जिने ॥ त्रि० । पारगे ॥

पारक्ष् । न० सुवर्णे ॥ पारयति । पार० । पारयतेरजि: ॥

पारजायिक: । पुं० पारदारिके ॥ इतिमहाभारते राजधर्म: ॥

पारटीट: । पुं० । अश्मनि ॥

पारण: । पुं० मेघे ॥ न० । पारणायाम् ॥ यथा । पारणंपावनंपुंसां सर्वपापप्रणाशनम् । उपवासाङ्गभूतञ्चफलदंशुभकारणम् ॥ सर्वेष्वेवोपवासेषु दिवापारणमिष्यते । अन्यथाफलहानि: स्याद्व्रतेधारणपारणम् ॥ नरात्रौपारणंकुर्याद्दृते वैरोहिणीव्रतात् । निशायांपारणं कुर्याद्वर्जयित्वामहानिशाम् ॥ पूर्वाह्णेपारणंशस्तं कृत्वाविप्रसुरार्चनम् । सर्वेषांसम्मतंकुर्याद्दृतेवैरोहिणी व्रतमितिब्रह्मवैवर्त्ते श्रीकृष्णजन्मखंडे ८ अध्याय: ॥ जन्माष्टमीव्रतेपारणकालस्तु । अष्टम्यामथरोहिण्यां नकुर्यात्पारणंक्वचित् । हन्यात् पुराकृतंकर्म उपवासार्जितंफलम् ॥ तिथिरष्टगुणंहन्तिनक्षत्रञ्चचतुर्गुणम् । तस्मात्प्रयत्नत: कुर्या

त् तिथिभान्ते चपारणम् ॥ अथो
भयवियोगेपारणमुत्तम् । यदासार्द्ध
प्रहरनिशाभ्यन्तरेएकस्यैववियोगस्त
दैकतरवियोगेपिपारणम् । तथाच
नारदीये । तिथिनक्षत्रसंयोगेउप
वासोयदाभवेत् । पारणन्तुनकर्त्त
व्यं यावन्नैकस्यसंक्षय : ॥ संयोगि
कोन्नतेप्राप्ते यद्यप्येकोवियुज्यते । त
त्रैवपारणं कुर्यादेवंवेदविदोविदु :
॥ यदैकस्यापि । सार्द्धप्रहरनिशाभ्य
न्तरेनवियोगस्तदातयोरवियोगेपिप्रा
तरुत्सवान्ते पारणमुक्तिथ्यन्तेचोत्स
वान्ते वाव्रतीकुर्वीतपारणमित्युक्त
रिति ॥

पारणा । स्त्री० । उपवासोत्तरदिने-
विहितकालेविहितभोजने ॥

पारसः । पुं० । पारदे । पारा० इ०
भा० ॥ पारंतनोति । तनु० ।
अन्येभ्यो० ड : ॥

पारतन्त्र्यम् । न० । पराधीने । परत
न्त्रतायाम् । पराधीनविषयतायाञ्चस्त्रि

पारत्रिकम् त्रि० । परलोकभवे ॥

पारदः । पुं० रसराजे । रसेन्द्रे । महार
से । चपले । रसे । सूते । यथा । पा
रदस्तुमनाक्पाण्डु : सूतस्तुरहितो
मलात् । पारदस्तुमनाक्शीत : स
र्वेतुल्यगुणा : स्मृता : ॥ इतिगव्दा
र्णव :॥ तस्योत्पत्त्यादयोयथा ।
गिरात्प्रच्युतंरेत : पतितंधर-



णीतले । तद्देहसारजातत्वाच्छुक्ल
मच्छम भूच्चतत् ॥ क्षेत्रभेदेन वि
ज्ञेयंशिववीर्यंचतुर्विधम् । श्वेतंरक्तं
तथापीतंकृष्णंतत्तुभवेत्क्रमात् ॥
ब्राह्मण : क्षत्रियोवैश्य : शूद्रस्तुख
लुजातित : । श्वेतंशस्तंरुजांनाशे.
रक्तंकिलरसायने ॥ धातुवादेतुतत्
पीतंखेगतौकृष्णमेवच ॥ पारद : ष
ड्रस : स्निग्धस्त्रिदोषघ्नोरसायन : ।
योगवाहीमहावृष्य : सदादृष्टिबल
प्रद : ॥ सर्वामयहर : प्रोक्तोविशेषा
त्सर्वकुष्ठनुत् । स्वस्थोरसोभवेद्ब्र
ह्मामूर्च्छितोजनार्दन : ॥ रञ्जित :
क्रामितश्चापिसाक्षाद्देवोमहेश्वर : ॥
मूर्च्छित्वाहरतिरुजंबन्धनमनुभूय-
खेगतिंकुरुते । अजरीकरोतिहिस्त-
त : कोन्य : करुणाकर : सूतात् ॥ रसास्त
ते । यस्ययोगस्ययोयोगस्तैनैवसदृशो
जित : । रसेन्द्रोहन्तितंरोगंनरकुञ्जर-
वाजिनाम् ॥ तस्यदोषायथा । मलं
विषंवह्निगिरित्वचापलंनैसर्गिकंदोष
मुशन्तिपारदे । उपाधिजौद्वौत्रपुना
गयोगजौदोषौरसेन्द्रेकथितौमुनी
श्वरै : ॥ मलेनमूर्च्छामरणंविषेणदा
होग्निनाकष्टतर : शरीरे । देहस्यजा
ड्यङ्गिरिणास्यदाशुचाञ्चल्यतोवीर्य
हतिश्चपुंसाम् ॥ वङ्गेनकुष्ठंभुजगेन
षण्डोभवेदतोसौपरिशोधनीय : ।
वह्निर्विषंमलञ्चेतिमुख्या दोषास्त

योरसे । एतेकुर्वन्तिसन्तापंस्फूर्त्तिंमू
र्च्छांन्ह्णांक्रमात् । अन्येपिकथिता
दोषाभिषग्भिः पारदेयदि । तथा
पित्तित्रयोद्दोषाहरणीयाविशेषतः ॥
संस्कारहीनं खलुसूतराजंयः सेव
तेतस्यकरोतिबाधाम् । देहस्यनाशं
विदधातिमूनंकष्टांश्चरोगाञ्जनयेन्न
राणाम् ॥ मल्लवशब्दवाच्येखेचरा
तिविशेषे ॥ त्रि॰ पारदातरि ॥ पा
रंददाति । ददाति॰ । आतोनुपे-
तिकः ॥ पारदस्यमारितस्यमूर्च्छितर
स्यगुणाश्चयथा । पारदः क्रमिकुष्ठघ्नो
नयदोष्टदृदः सरः । सप्य्चक्षम
क्षायीर्यीयोगवाहीजराहरः ॥ स्थ-
व्योजीरूपदोहष्योह्वविकाशातुवर्द्धनः
। षड्रसलाघनः शुरः खेचरः सि
द्धिदः परः ॥ पारदःसकलरोगहा
स्मृतः पड्सोनिखिलयोगवाहकः
। पञ्चभूतमयएषकीर्त्तितस्तेनतद्
गुणगणैर्विराजते ॥ अथास्यशोधन
विधिः । तत्रस्वेदनम् । नानाधान्यै
र्यथाप्राप्तैस्तुषवर्ज्जैर्राग्वितैः । स्था-
ण्डं पूरितंरक्षेद्यावदम्लत्वमाप्नुयात् ।
तन्मध्ये भृङ्गराजमुण्डीविष्णुक्रान्ता
पुनर्नवा । मोनाक्षीचैवसर्पाक्षीसह
देवीशतावरी । त्रिफलागिरिकर्णी
च हंसपादीचचित्रकम् । समूलं
कुट्टयित्वातुयथालाभविनिःक्षिपेत्
। पूर्वाम्लभाण्डमध्ये तु धान्याम्लक
मिदंस्मृतम् । स्वेदनादिषुसर्वत्र
रसराजस्ययोजयेत् ॥ विष्णुक्रा
न्तागिरिकर्णीच अपराजितैश्चवे त
नीलपुष्पभेदात् ॥ अथस्वमारनालं
वालद्भावेप्रयोजयेत् । तदभावे ।
धान्याम्लाभावे । त्र्यूषणं लवणं रा
जीरकमीत्रिफलार्द्रकम् । मह
बलानागबलामेघनादः पुनर्नवा ॥
मेषशृङ्गीचित्रकस्तुलवसारंसमंसमम्
। एतत्समस्तंव्यस्तं वाप्यम्ले नैव
पेषयेत् ॥ प्रलिम्पेत्तेनवस्त्रेणवस्त्र
मङ्गुलमात्रकम् । तन्मध्ये निःक्षि
पेत्सूतंबध्वातत्त्रिदिनंपचेत् ॥ दो
लायन्त्रेऽम्लसंयुक्तेनायतेस्वेदितो
रस ः । मेषशृङ्गीमेढाशृङ्गी । तद-
लाभे कर्कटशृङ्गीपाह्या ॥ नवसारम्
नौसादर । अन्यच्च । मूलवान्नज-
सिन्धूत्थत्र्यूषणार्द्रकराजिकाः ।
रसस्यषोडशांशेनद्रव्यंयुञ्ज्यात्पृथक्-
पृथक् ॥ द्रव्येष्वनुक्तमानेषुमतेमा-
नमिदंबुधैः । पटाहतेषुचैतेषुसूतं
प्रक्षिप्यकाञ्जिके ॥ स्वेदयेद्दिनमेक
मन्दोलायन्त्रे षष्ठुजिमात । स्वेदात्ती
व्रोभवेत्सूतोमर्दनाच्चसुनिर्मलः ॥
मृजकं सुरद्व । अनलश्चित्रकम् । त्र्यू
षणं त्रिकटु । राजिकाराइ ॥ + ॥
अथ मर्दनम् । इष्टका चूर्णं चूर्णा-
भ्यामादौ मर्द्योरसस्ततः । दध्नागु
डेनसिन्धूत्थराजिकागृहधूमकैः ॥

चान्यच्च । कुमारिका चित्रकरक्तस
र्षपै : कृतै : कषायै र्बृहती विमि-
श्रितै : । फलत्रिकेणापि तमर्दितोर
सोदिनत्रयं सर्वमलैर्विमुच्यते ॥ +
अथमूर्च्छनम् । त्र्यूषणं त्रिफलावन्
ध्याकन्दै : सुद्राह्वयान्वितै : । चित्र
कोर्णामिश्राच्चारकन्याकांचनकद्रवै-
॥ सूतंकृतेनयूषेणवारान्सप्ताभिमूर्च्छ
येत् । इत्थं सम्मूर्च्छित : सूतस्त्य-
जेत्सप्तापिकञ्चुकान् ॥ वन्ध्याक-
न्दबांभाखखसाकन्द । सुद्राह्वयम्०
कोटीकाटै आ०वडीकटैया । ऊर्णा
ऊर्णाभिदका । निशाहरिद्रा । क्षारो
यवक्षार : । कन्याकुमारी । चक्रीऽ
र्षीवचरस : । कनकोधत्तूरपत्ररस :
अथोर्ध्वपातनम् । मयूरग्रीवताप्या-
भ्यामष्टपिष्टीकृतस्यच । यन्त्रे विद्या
धरेशुर्यादूर्ध्वसिन्दूरस्योर्ध्वपातनम् ॥ सूत
स्स्यादूर्ध्वपातितसर्वदोषविवर्जितः
। मयूरग्रीवातुतिया । ताप्यं सुवर्ण
माक्षी । नष्टपिष्टीकृतस्यकुमारिकाद्र-
वयोगेनतावन्मर्दनंकर्तव्यं यावत्पा
रद : पृथङ्नदृश्यते । विद्याधरेयन्त्रे
डमरुयन्त्रे ॥ अथाध : पातनम् । त्रि
फलाशिग्रुशिखिभिर्लवणासुरिसंयु
तै. । नष्टपिष्टरसंकृत्वालेपयेदूर्ध्व भा
जनम् ॥ ततोदीप्तैरधःपातमुपलैस्त
स्यकारयेत् , यन्त्रे भूधरसञ्ज्ञेतुतत.
सूतो विशुद्ध्यति ॥ स्वेदनादिनि-



याभिस्तुशोधितोऽसौयदाभवेत् । त
दाकार्याणिकुरुतेप्रयोज्य : सर्वकर्म
सु ॥ + ॥ अथ मुख्य दोष हरशो
धनविधि : । एरुकन्याहरतिमलं-
त्रिफलाग्निं चित्रकोविषंहन्ति ।
तस्मादेभिर्मिश्रैर्वारान् सम्मूर्च्छ-
येत्सप्त ॥ ०( ०+० )० ॥ अथ
सर्वदोषहर : संक्षिप्त : शोधनवि
धि : । कुमारिकाचित्रकरक्तस-
र्षपैः कृतैःकषायैर्बृहतीविमिश्रितैः
। फलत्रिकेणापिविमर्दितोरसोदिन
त्रयंसर्वमलैर्विमुच्यते ॥ एवं कदर्थि-
त : सूत : षण्ढोभवतिनिश्चितम् ।
वन्हीवधीकषायेणस्वेदित : सवली
भवेत् ॥ सर्पाक्षीचिञ्चकावन्ध्या भृ
ङ्गाग्न्दै : स्वेदितो वली । तत: सपा
वकाद्रावै.छिन्न : स्यादितिदीप्तवा
न् । सर्पाक्षीनागफणी । चिञ्चिका
अम्ली । वन्ध्यावांभाखखसा । भृङ्गो
भृङ्गराज : । पञ्चीमुसा । पावका-
श्चित्रक : ॥ + ॥ अथरसस्यमारण-
विधिः । धूमसाररसंतोरीगन्धकं-
नवसादरम् । यामैकंमर्दयेदम्लैर्भा
गंकृत्वासमंसमम् ॥ काचकूप्यांवि-
नि : क्षिप्यतास्यमृद्स्नमुद्रया । वि
लिप्यपरितोवस्त्रे मुद्रांदत्वाविशोष-
येत् ॥ अधः सच्छिद्रपिठरीमध्ये कू
पीन्निवेशयेत् । पिठरींवालुकापूरै
र्भृत्वाचाकूपिकागलम् ॥ निवेश्यचु

तुल्यांतद्धोवह्निंकुर्य्याच्छनैःशनैः। तस्मादप्यधिकंकिञ्चित्पावकंज्वालयेत्क्रमात् । एवंयाद्दशभिर्यामैर्म्रियतेरसउत्तमः। स्फोटयेत्स्वाङ्गशीतंतमूर्द्ध्वगंगन्धकंत्यजेत् । अधःस्थंचमृतंसूतंगृह्णीयात्तत्तुमात्रया। यथोचितानुपानेनसर्वकर्मसुयोजयेत् ॥ अथान्यः प्रकारः। अपामार्गस्यबीजानांमूषायुग्मं प्रकल्पयेत् । ततसंपुटेक्षिपेत्सूतंमलपूदुग्धमिश्रितम् ॥ मलपूः काष्ठोदुम्बरिका ॥ द्रोणपुष्पीप्रसूनानि विडङ्गमरिचैस्तथा। एतच्चूर्णंमधश्चोर्द्ध्वं दत्त्वामुद्रांप्रदापयेत् । तद्गोलमाधमेत्सम्यक्मृन्मूषासंपुटेसुधीः। मुद्रांदत्त्वाशोषयित्वाततोगजपुटेपचेत् ॥ एकेनैवपुटेनैवंसूतकंभस्मजायते। तत्प्रयोज्यंयथास्थानेयथामात्रंयथाविधि॥ † ॥ --( ४४ )-- ॥ अथान्यः प्रकारः ॥ काष्ठोदुम्बरिकादुग्धैरसंकिञ्चिद्विमर्दयेत् । तद्दुग्धघृष्टहिङ्गोश्चमूषायुग्मंप्रकल्पयेत् ॥ क्षिप्त्वाततसंपुटेसूतंतत्रमुद्रांप्रदापयेत् । धृत्वातद्गोलकंप्राज्ञोमृन्मूषासंपुटेधिके ॥ पचेद्गजपुटेनैवसूतकंयातिभस्मताम् ॥ अन्यः प्रकारोपि। नागवल्लीरसैर्घृष्टः कर्कोटीकन्दगर्भितः। मृन्मूषासंपुटेपक्वः सूतोयात्येवभस्मतामिति भावप्रकाशः॥

पारदण्डः। पुं० देशविशेषे। सतुओड्रदेशैकभागइतिकेचित् ॥

पारदर्शी। त्रि० पारद्रष्टरि ॥ पारंद्रष्टुंशीलंयस्य। णिनिः ॥

पारदारिकः। पुं० परदाररते। परस्त्रीगामिनि ॥ यः परस्त्रीषुनिरतस्तस्यश्रीर्यातिकुतोयशः। सचनिन्द्यः पापयुक्तः शश्वत्सर्वसभासुच ॥ परदारान्गच्छति। गच्छतीपरदारादिभ्यइतिठक् ॥

पारदार्य्यम्। न० परदारगमने ॥

पारदृश्वा। त्रि० पारद्रष्टरि ॥ पारस्यान्तंदृष्टवान् ॥ दृशेःक्वनिप् ॥

पारमार्थिकः। त्रि० परमार्थयुक्ते। मुख्ये ॥ परमार्थादागतः। ठञ् ॥

पारमेष्ठ्यम्। न० ब्रह्मपदे ॥

पारम्पर्य्यम्। न० आम्नाये। कुलकर्मे ॥ यस्मिन्देशेयआचारः पारम्पर्यक्रमागतः। तत्तदाम्नायमन्यैस्तथर्मस्तत्रवर्ताद्दशः इतिविवादभंगार्णवः ॥ परम्परयाआगतः। तत्रआगतइत्यण्। चतुर्वर्णादित्वात्ष्यञ्। परम्पराशब्दात्स्वार्थेष्यञ्वा ॥

पारम्पर्योपदेशः। पुं० ऐतिह्ये। उपदेशःपरम्परायाम्। पारम्पर्येणउपदेशः। कर्मधारयोवा ॥

पारलौकिकः। त्रि० परलोकसम्बन्धिनि। पारलौकिककार्येषुप्रसुप्ताभृशनास्तिकाः। परलोकेभवः। अध्या

यतोन्यीवर्गे शीकामुकोधुलधुलार
व :। पारावताङ्घ्रिपिच्छश्वेतयोग
लरवश्चसइति ॥

पारावती । स्त्री० गोपगीते ॥ नदीप्र-
भेदे ॥ लवलीफले ॥

पारावार : । पुं० उदन्वति । समुद्रे ॥
न० तटद्वये ॥ पारमावश्योति । इञ्
। कर्मण्यण् ॥ पारावारावस्यसइति
वा । अर्शआद्यच् ॥

पारावारीण : । त्रि० पारावारगामिनि
। पारावारऋच्छति० । इत्याद्यर्थेषु ।
अ ।रपारादिपुरोतादिपरीतार्थे लि
ख : ॥

पाराशर : । पुं० द्वैपायने । व्यासे ॥ इ
तिशब्दरत्नावली ॥ पराशरस्यापत्य-
म् । ऋष्यण् ॥ न० । पराशरोक्त
भिक्षुसूत्रे ॥ उपपुराणविशेषे ॥ त्रि०
। पराशरसम्बन्धिनि ॥

पाराशरि : । पुं० वेदव्यासे ॥ पराशर-
स्यापत्यम् । अतइञ् ॥

पाराशरी । पुं० भिक्षौ । मस्करिणि ॥
पाराशर्यप्रोक्तं भिक्षुसूत्रमधीते ।
पाराशर्यशिलालिभ्यांभिक्षुनटसूत्रयो
रितिणिनि : ॥

पाराशर्य्य : । पुं० वेदव्यासे । बादरा
यणे ॥ पराशरस्यगोत्रापत्यम् । गर्गा
दित्वाद्यञ् ० इत्यनन्तरापत्ये पिगो
त्रत्वाध्यारोपात्प्रत्यय : ॥

पारिकाङ्क्षी । पुं० तपस्विनि ॥ परि
काङ्क्षितुंशीलमस्य । काङ्क्षिकाङ्
क्षायाम् । सुपीतिणिनि : । पृ० ॥
यद्वा । पारमस्यास्ति । इनि : । पा
रिब्रह्मज्ञानंकाङ्क्षति ॥ मस्करिणि
पु० हेमचन्द्र : ॥

पारिक्षित : । पुं० अश्वमेधयाजिनि ॥
परितोदुरितंक्षीयतेयेनसपरिक्षित्-
अश्वमेध : तद्याजी ॥ जनमेजये ॥

पारिघ : । पुं० वास्तुयागमण्डपनीये ॥
यथा । पूर्वादिषुचतुर्दिक्षुसप्तसप्ताऽत्र
लर्चित : । वायव्याग्नेयदिक्संस्थं-
पारिघन्तुनवाङ्गुलम् ॥ कुशिकानय
नात्सप्तभानिपूर्वस्यामघात:सप्त-
भानियाम्यायाम्चानुराधात : सप्त-
भानिपश्चिमायाम्धनिष्ठात : सप्त-
भान्युत्तरस्यांलिख्यानीतिसर्वत्रवाक्य-
शेष : । तत्र०वायव्याग्नेयदिशुपनि
बद्धरेखापारिघोदण्डस्त सर्वयानल
क्षयेदित्यर्थ : । तत्रयवनेश्वर : ।
प्राचीमुदग्द्वारिभिरश्वयायात्प्राग्-
द्वारिकैश्चोडुभिरप्युदीचीम् । तथैव
याम्यामपराश्रितैर्भैर्याम्याश्रितैश्चाप्य
परांप्रयायादिति ॥

पारिघातिक : । पुं० अधुरथे ॥

पारिजात : । पुं० मन्दारे । पारिभद्र-
तरौ ॥ सुरद्रुमे ॥ पारिधौजात :
॥ पारमस्यास्ति । अतइनि : । पा-
रिपारङ्गसंजातंजन्मास्यया ॥ पारि-
जातोपिष्णुपदा : पारिजातेतिवि-

स्वार्थेष्ण्यागमः ॥

पारिजातकः । पुं० सुरतरौ । मन्दारे । पारिजातात्स्वार्थेकः ॥

पारिणामिकः । पुं० परिणामात्मिके ॥

पारिणाय्यम् । न० परिणयलब्धधने ॥ यथा । मातुः पारिणाय्यं स्त्रियो विभजेरन्निति ॥

पारिणाह्यम् । त्रि० गृहोपकरणेशय्यासनकुण्डकटाहादौ । यथा । अर्थस्य सङ्ग्रहे चैनां व्यये चैव नियोजयेत् । शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य वेक्षणे ॥ इति मानवे ९ अध्यायः एनां पत्नीं ॥

पारितथ्या । स्त्री० पालमाख्यायाम् । सीमन्तस्थितायां स्वर्णादिपट्टिकायाम् । । मन्दीपिना० ह० भा० । सिन्दौ० ह० गौ० भा० । परितस्तथाभूता परितथा । चतुः० स्वार्थेष्यञ् ॥

पारितोषिकः । त्रि० प्रदेये । तुष्टिदाने ॥ परितोषजनकद्रव्ये ॥ परितोषेण लब्धम् । परितोषादागतं वा । शैषिकष्ठञ् ॥

पारिपन्थिकः । पुं० चौरे । पन्थानं वर्त्मयिष्वा व्याप्य वा तिष्ठति । परिपन्थं हन्ति वा । परिपन्थं च तिष्ठतीति ठक् ॥

पारिपात्रः । पुं० कुलाचलविशेषे । चित्रकूटे । मुरारौ ॥ इति हेमचं० ॥

पारिपात्रकः । पुं० पारियात्रपर्वते ॥

पारिपार्श्विकः । पुं० अनुगे ॥ पार्श्वे वर्त्तिनि । पार्श्वे इति परिपार्श्वम् । विभक्त्यर्थेऽव्ययीभावः । परिपार्श्वे च चरेति । परिमुखं चेति चकाराट्ठक् ॥ नट्याः पार्श्वस्थे ॥

पारिप्लवः । पुं० नानाविधोपाख्यानसमुदाये । अश्वमेधे कर्मविशेषाभिताप परिहारार्थं पुत्रादि हन्तावराज्ञेक्यासीत्थार्थकथने । मनुर्वैवस्वतो राजेत्यादिकासामित्यथा । तस्यां रात्रौ पारिप्लव माचक्षीतेति यथा । जलोपरिसञ्चारिणि पक्षिविशेषे । त्रि० । चञ्चले ॥ आकुले ॥ परिप्लवे । प्रज्ञादौ । अण् । प्रज्ञाद्यण् ॥

पारिभद्रः । पुं० मन्दारे । निम्बतरौ । पारिजातके । पारिजातमन्दार० इ० गौ० भा० ॥ पारिभद्रोऽनिलश्लेष्मशोथमेदः कृमिप्रणुत् ॥ तत्पुष्पं पित्तरोगघ्नं कर्णव्याधिविनाशनम् ॥ निम्बद्रुमे ॥ देवदारुणि ॥ पारमस्यास्ति । अतइनिः ॥ पारि पारङ्गतं भद्रमस्य ॥ परितोभद्रमस्मै तिवा । प्रज्ञादण् ॥

पारिभद्रकः । पुं० भद्रदारुणि । दूफिलिमे । देवदारुणि । निम्बवृक्षे ॥ न० । कुष्ठौषधौ ॥

पारिभाव्यम् । न० कुष्ठौषधौ व्याप्ये । पारिभाव्येसाधुः । तत्रसाधुरितियत् स्वार्थेऽण् । परिभुतोयभयंपुभयति भव्यंतस्येतिसाधुरितिस्वामी । परि

त्मादेशजिघ्यते । अनुशतिकादि: ॥
पारवत: । पुं॰ कपोते । पारावते ॥
पारशव: । पुं॰ निषादे ॥ यथा । यंब्रा
ह्मणस्तुशूद्रायांकामादुत्पादयेत्सुत
म् । सपारयन्नेवशवस्तस्मात्पारशव:
स्मृत: ॥ ब्राह्मणात्परिणीतशूद्रा-
सुते ॥ करणेनसमाचाऽस्यहसिर्त्रे-
यामनीषिभि: ॥ परस्त्रीतनये ॥ प
यसि । लोहे ॥ शस्त्रे ॥ परान्शृणा
ति । शृ॰ । भाङ्परयो: खनिशृ-
ण्यांडिश्चेत्यु: । परशुरेव । प्रज्ञाद्य
ण् ॥ परस्त्रियाअपत्यंवा । परस्त्री-
परशुश्चेति विदादिषुपाठात्प्रकृते:
परशुरादेशोऽञ्प्रत्यय: ॥ परशव्य-
स्यविकारे ॥ कांसीयपरशव्ययोर्यञ
लौलुक्चेत्यञ्यतोलुक्च ॥
पारश्वध: । पुं॰ परश्वधधारिणि ॥
पारश्वधिक: । पुं॰ कुठारधारिणि ।
पारश्वधे । परश्वधायुधे ॥ परश्वध:
प्रहरणमस्य । परश्वधाट्ठञ्च ॥
पारसिक: । पुं॰ देशान्तरे । पारसीके ॥
पारसी । स्त्री॰ पारसस्यभाषायाम् ॥
पारसदेशभवलेखनादिशिल्पे ॥ त
दारम्भदिनंयथा गणपतिमुहूर्ते ।
श्ये छाग्रे सामघापूर्वारेवतीभरणीद्व
ये । विशाखाद्रौत्तराषाढशतभेषाम
वासरे ॥ लग्ने स्थिरेसचेन्द्रेचपारसी
मारवीपठेत् । शूद्रस्तविशेष: ॥ द्वि
जस्यतदध्ययनाभावात् । योऽनधी-
त्यद्विजोवेदमन्यत्रकुरुतेश्रमम् । स-
जीवन्नेवशूद्रत्वमाशुगच्छतिसान्वय
इतिमनूक्ते: । यौशनसादिप्रोक्तमर्थ
शास्त्रमधीयानोयदिसान्वय: शूद्र-
त्वंप्राप्नोतितदापारस्यादिम्लेच्छभा-
षाध्ययनंकुर्वाण: सान्वयोम्लेच्छता
माप्नोतीतिकिंवाच्यम् ॥ अपशब्द-
त्वाच्चद्विजेननपारस्यादिकमध्येयम् ।
म्लेच्छोहवायदपशब्दइतिमहाभाष्या
त् । अपिच । ब्राह्मणेननापशब्दोव
क्तव्य: । भाष्यकारेणतदुच्चारणस्य
म्लेच्छतापादकत्वप्रतिपादनात् । म्ले
च्छामाभूमेत्यध्येयंव्याकरणमिति-
पस्पशाभाष्यम् ॥
पारसीक: । पुं॰ अश्वविशेषे । भाव-
दृशी । पराह्णे ॥ देशविशेषे । पार
सिके ॥ त्रि॰ । तद्देशोद्भवे ॥ पार-
सीकदेशविशेषभव: । कोपधाच्चे-
त्यण् ॥
पारसीकयवानी । स्त्री॰ खुरासानीअ
जवायन॰ इ॰ भा॰ प्र॰ द्रव्ये ।
पारसीकयवानीतुयवानीसदृशीगु
णै: । विशेषात्पाचनीरूक्षायाहि-
णीमादिनीगुरु: ॥
पारसीकवचा । स्त्री॰ खुरासानीवच॰
इ॰प्र॰ वस्तुनि ॥ पारसीकवचाशु
क्लाप्रोक्ताहैमवतीरिसा । हैमवत्यु
दितातद्वत्भूतंहन्तिविशेषत: ॥
पारस्कर: । पुं॰ देशविशेषे ॥ पारंस्क

सुखोभावे । जामिनी द्र० भा० ॥ यथा । साचित्वंपारिभाव्यस्वदानं ग्रहणमेवच । विभक्ताभ्रातरःकुर्युर्नाविभक्ताःपरस्परमितिदायभागः

पारिभाषिकम् । त्रि० आधुनिकसङ्केतेनार्थबोधकेपदे ॥

पारिमाण्डल्यम् । न० परमाणुसाधारणपरिमाणे ॥ परमाणुगुणविशेषे ॥

पारिमुखिकः । त्रि० सेवके ॥ अपपरीत्यव्ययीभावेपरिमुखंवर्त्तते । परिमुखंचेतिठक् । स्वामिमुखंवर्त्तयित्वाय : सेवकोवर्त्तते । सएवमुच्यते । यदातुसर्वतोभावेपरिशब्दःप्रादिसमासस्तदाव्ययीभावः स्वामिनोमुखंततस्तदेयोवर्त्ततेसोपीतिबोध्यः । एवंपारिपार्श्विकोप्यूह्यम् ॥

पारियात्रः । पुं० पारिपात्रगिरौ । चित्रकूटे ॥ परितोयात्राअस्यात्र । प्रज्ञादित्वात् स्वार्थेऽण् ॥ पर्वतविशेषे ॥

पारियात्रिकः । पुं० पारियात्रे ॥ स्वार्थेकन्

पारिरक्षकः । पुं० मस्करिणि । तापसे ॥

पारिबर्हः । पुं० न० विवाहकालादौ येवरवध्वोःप्रीतिदेये ॥

पारिशः । पुं० गर्दभाण्डे । कन्दराले । कपीतने । पलाशपीपलद्रुतिगजगण्ड० द्रुतिचर्मा० भा० प्र० दृष्टे ॥ पारिशोदुर्जरः स्निग्धः कृमिशुक्रकफप्रदः । फलेऽम्लमधुरोमूले कषायः स्वादुमज्जकः ॥

पारिषद : । पुं० सभ्ये ॥ शिवानुचरे ॥ परिषदिसभायांसाधुः परिषदोण्यइत्यचपरिषदइतियोगविभागाण्णः ॥ उदीच्यग्रामविशेषोप्यङ्गं ॥ परिषदिभवः । प्रस्थोत्तरपदपलद्यादिकोपधादण् ॥ त्रि० परिषत्सम्बन्धिनि परिषदइदम् । यथाधूर्जुपरिषदश्रलत्न् ॥

पारिषद्य : । पुं० सभ्ये । सभासदि । सामाजिके ॥ शिवानुचरे ॥ परिषदिसाधुः । परिजदसमवैतिवा । परिषदोण्यइतिण्यः ॥

पारिहारिकः । त्रि० परिहारकारक रि॥

पारिहार्य: । पुं० आवापकी । आटकीवलये । प्रकोष्ठाभरणे ॥ परिह्रियते । ह्रञ् । ऋहलोर्ण्यत् । परिहार्य एव । प्रज्ञादण् ॥ यद्वा । चतुर्वर्णादित्वात्स्वार्थेष्यञ् । न० परिहारत्वे ॥

पारी । स्त्री० पूरे । जलसमूहे ॥ कर्षूयाम् । सनालजलपात्रे । झारी इ० भा० ॥ दन्तिनः पादरज्जौ ॥ परागे ॥ पात्र्याम् । दोहनपात्रे ॥ पानपात्रे । पारयति० पार्यतेवा । पूपूर्त्तौ । चु० । पचाद्यच्चइन्वा । ङीप् ॥

पारीक्षित : । पुं० परीक्षितनृपे ॥ परी

चित्तनये । जनमेजये ॥ न० । परी
क्षितकथिते श्रीभागवते ॥
पारीणः । त्रि० पारगामिनि ॥ शैषि
कः खः ॥ पारङ्गामी । अवारपारे
तिखोवा ॥
पारीन्द्रः । पुं० सिंहे ॥ अजगरसर्पे ॥
पारीरणः । पुं० कमठे ॥ दण्डे ॥ पट-
मण्टके ॥
पारुः । पुं० वन्ही ॥ सूर्ये ॥ पिबति ।
पा० । बा० । पिबतेरपिद्धः ॥
पारुष्यः । पुं० गीष्पती । बृहस्पतौ ॥
न० । परुषत्वे । अप्रियाभिधाने ॥
प्रत्यनुकम्पनशीलत्वे ॥ दुर्वाक्ये
॥ संक्रन्दननमे ॥ पकथोनिष्ठुरभाषी
। तस्यभावः । ब्राह्मणादित्वात्ष्यञ्
॥ अनुकथि ॥
पारेरक्तः । पुं० खड्गे ॥ इतिशब्दमा-
ला ॥
पार्चगढः । पुं० पाणी ॥ इतिहाराव
ली ॥
पार्थः । पुं० पृथातनये । पृथयादेवप्र
सादलब्धे युधिष्ठिरादौ ॥ पृथायाअप
त्यम् । शिवाद्यण् ॥ अर्जुनद्रुमे ॥
राज्ञि ॥
पार्थक्यम् । न० पृथक्त्वे ॥ भावेष्यञ्॥
पार्थनगरम् । न० इन्द्रप्रस्थे ॥
पार्थवम् । न० पृथुतायाम् ॥
पार्थिवः । पुं० क्ष्मापति । नृपे । भूपे
॥ वत्सरविशेषे ॥ वहुशस्यानिवाय
न्तेसर्वदेशेसुलोचने । सौराष्ट्रेलाट
देशेचपार्थिवेनात्रसंशयः ॥ १८ ॥
शरावे ॥ न० । तगरपुष्पे ॥ त्रि०
पृथिवीसमवायिकारणके । भूमिवि
कारे । पृथिव्याविकृतौ ॥ पृथिव्या
ईश्वरः तत्रविदितोवा । सर्वभूमि
पृथिवीभ्यामणञौ । अधिपत्यमुपर्सन्ते
तस्येश्वरः तत्रविदितइतिवैष्यञ्
॥ पृथिव्याअयमितिप्रागुदीव्यतोथे-
ष्वर्थेषुपृथिव्याञाञावितिञाञौ ।
तेनजे । स्त्रियांपार्थिवा अपिपार्थि
वीतिबोध्यम् ॥ पृथिव्यानिमित्तंसं
योगउत्पातोवा । सर्वभूमीष्यञ् ॥
पार्थिवव्रतम् । न० राज्ञोव्रतविशेषे ॥
यथासर्वाणिभूतानिधराधारयतेसम
म् तथासर्वाणिभूतानिबिभ्रतः पा
र्थिवंव्रतम् ॥
पार्थिवी । स्त्री० सीतायाम् । जनक
जायाम् ॥ अञन्तत्वाट्टिड्ढिति ङीप्॥
पार्षदः । पुं० भक्तसित्कर्थ ॥ कौनाशि
। यमे ॥ राजयक्ष्मणि ॥ ललाटे ॥
नीपकेसरे । कदम्बकिञ्जल्के ॥ ग
दाम्बरे ॥ भव्यानि ॥
पार्याप्तिकः । त्रि० पर्याप्तवादिनि ॥
पर्याप्तमाह । ठक् ॥
पार्वणम् । न० श्राद्धविशेषे ॥ यथा ।
अमावास्यांयत्क्रियतेतत्पार्वणं सु
दाहृतम् । क्रियतेवापर्वणियत्तत्
पार्वणमितिस्थितिः॥पार्वणपदेनगोष्ठी

श्रावान्यपिरसूक्तोक्तेप्रोपार्वणविधिना विधानात् । यद्यपिपर्वणिभवमिति- व्युत्पत्तिस्तथापिदेवश्राद्धपूर्वकषट्पु रुषश्राद्धंपार्वणमितिबोध्यं सूत्रानुरो धात् ॥ पर्वकाष्ठ गिरि । पुं० स्वर्गाय शैले ॥शब्दचन्द्रिका ॥

पार्वत : । पुं० महानिम्बे । बकायन इतिदेशभाषा ॥ त्रि० पर्व तोत्पन्नफलादौ ॥ पर्वतोभव : । त्रि भाषामनुष्यइतिपर्यायेण ॥

पार्वती । स्त्री० अपर्णायाम् । दुर्गाया- म् । मृडान्याम् । गौर्याम् ॥ गो पालकान्यकायाम् ॥ सौराष्ट्रमृत्तिका याम् ॥ धातक्याम् ॥ सैंहल्याम् ॥ क्षुद्रपाषाणभेदायाम् ॥ जीवन्याम्- ॥ शल्लक्याम् ॥ द्रौपद्याम् ॥ पर्वतस्य इयम् । तस्येदमित्यण् । अपत्यार्थे तुअपत्यादित्यादिन्यायात् । ङीप्स- नुर्ध्वेतिनङीप् । मनुष्यजातिवाचि त्वाभावात् । क्वचिदपवादविषयेपु- रस्तर्गोभिनिविशत इतिवासमाश्रेय म् ॥

पार्वतीनन्दन : । पुं० स्कन्दे । कार्ति- केये ॥ पार्वत्यानन्दन : ॥

पार्वतीपति : । पुं० महादेवे ॥ पार्वत्या : पति : ॥

पार्वतीय : । पुं० अक्षोटे ॥ त्रि० गण विशेषे । पर्वतीयस्यायम् । शाला- दय । असमर्पणार्थोपफल्याधिको

नेतिनिषेध : ॥ यथा ॥ ततजन्यं रणोघोरंपार्वतीयैर्गणैरभूतइतिरघु ॥

पार्वतीयकुमार : । पुं० पार्वतीपुत्रे ॥

पार्वतेयम् । न० सौवीराञ्जने ॥ पुं० सुवर्चलायाम् । सूर्यावर्ते । कुल- कुलइतिप्र०शाके ॥

पार्श्व : । पुं० हस्तादिविशेषे ॥ न० । कक्षाऽधोभागे ॥ चक्रोपान्ते ॥ पर्शु गणे ॥ वञ्चिके ॥ पर्शूनांसमूह : । पार्श्वाणम् । सितसिद्धेतिपदत्वाद्गुणा भावाद्गोर्गुणेन ॥ यथा । स्पृश्यते । स्पृश० । स्पृशे : श्वणशुनौपृचेति- श्वण् णित्वाद्वृद्धि : ॥ कटिस्परिच- तुरङ्गुलिभागे ॥ यथा । मांसलैर्दृ- ढुभि : पार्श्वैर्दक्षिणावर्तरोमभि:। नराभूत्यधिपाज्ञेयास्तद्विपरीतै : सु- दु : खिताइति ॥

पार्श्वक : । त्रि० शाठ्येनविताऽन्वेषि- णि । कौस्तिके ॥ सुखस्याविभा- वन्नेपीपार्श्वक : सन्धिजीवकइ०- ह० ॥ अनृजुरुपाय : पार्श्वम् । तें- नार्थानन्विच्छति । पार्श्वेनान्विच्छ- तीतिकन्

पार्श्वग : । त्रि० समीपस्थेपुरुषादौ ॥ पार्श्वगत : । त्रि० समीपस्थे

पार्श्वत : । न० पार्श्वयोरित्यर्थे ॥ आद्यादिभ्यउपसङ्ख्यानमिति- तसि : ॥

पार्श्वतीय : । त्रि० पार्श्वतोजाता-

दी । मुखपार्श्वतसोर्लोमपंक्तीतिख्यः ॥
पार्श्वपरिवर्त्तनम् । न० भावप्रकाशिका-
टष्ट्यांश्रीहरे : पार्श्वपरिवर्त्तनोत्स-
वे ॥
पार्श्वभागः । पुं० पक्षभागे । पार्श्व-
स्यपार्श्वमेवभागः ॥
पार्श्वशूलः । पुं० न० शूलरोगविशे-
षे ॥ तस्यौषधयथा । शतपुष्पादेव-
दारुचालपर्णीवचागुरु । कुष्ठमांसी-
सैन्धवघ्नप्रलेपकंपुनर्नवा ॥ पानेन-
स्वेतयाभ्यङ्गेतैलमेतत्प्रदापयेत् । इ
'त्युक्तंपार्श्वशूलस्यगरुडमालोचनाध्या-
येतुइतिगारुडे १८८ अध्यायः ॥
पार्श्वस्थः । पुं० समीपस्थितनटे ॥
त्रि० पार्श्वस्थिते ॥ पर्यन्तस्थे ॥
पार्श्वास्थि । न० पर्शुकायाम् । कक्षा
धोभागस्थितेस्थ्नि ॥
पार्श्वोदरप्रियः । पुं० कर्कटे । इ०है० ।
पार्षती । स्त्री० द्रौपद्याम् ॥ सख्याम्
म् ॥ जीवन्त्याम् । गौर्याम् । इतिहे
मचन्द्रः ॥
पार्षदः । पुं० शिवानुचरे । त्रि०
सभ्ये । पर्षदिसाधुः । पर्षदोण्य-
इतिपाठेपर्षद्इतियोगविभागात्वः ॥
पार्षद्यः । पुं० शिवानुचरे । त्रि० स-
भ्ये ॥ पर्षदिसाधुः । पर्षदोण्यः०
इ० ण्यः ॥
पार्ष्णिः । पुं० पादमूले । पादपश्चाद्भा-
गे । गुल्फाधोभागे । एडी० इ०
भा० । जिगीषायाम् ॥ पुं० स्त्री०-
सैन्यपृष्ठे ॥ पादमूले ॥ पृष्ठे । स्त्री०
उन्मत्तस्त्रियाम् । कुम्भ्याम् ॥ पर्षं
त्रि० पृष्यतेऽनेनवा । पृषुसेचने ।
घृणिपृश्निपार्ष्णीतिसाधुः । स्पृश-
न्त्यनयावा । पूर्ववत्साधुः ॥
पार्ष्णिग्राहः । पुं० पृष्ठतः ग्रहे ।
जिगीषोः पृष्ठभागस्थितिमनुविशे-
षेराज्ञि । विजिगीषोररिंप्रतिनि-
र्यातस्य : पृष्ठवत्तोनुपतिर्देशाक्रम-
णाद्याचरतिसपार्ष्णिग्राहइत्यर्थः ॥
पार्ष्णिम्पश्चात्पदंगृह्णाति । कर्म-
ण्यण् । गजपार्श्वरक्षके ॥
पार्ष्णिकम् । न० पश्चाद्गतसेनायाम् ॥
पालः । पुं०गवादिपालके ॥ पुं० रा-
ज्ञि । पतद्ग्रहे । इ० हे० चं० ॥
पालकः । पुं० मुनिभेदे । चौटकारचके ॥
न० चित्रकवृक्षे ॥ त्रि० पालनक-
र्त्तरि ॥ पालयति । पालरक्षणे ।
ण्वुल् ॥
पालकाप्यः । पुं० मुनिविशेषे । करे-
णुभुवि । धन्वन्तरौ ॥ इतित्रिका-
ण्डशेषः ॥
पालकाव्यः । पुं० गजशास्त्रकृन्मह-
र्षिविशेषे ॥
पालघ्नः । पुं० जलजद्रव्यभेदे । छत्रा-
याम् ॥ पालंघ्नन्ति । यमनुष्ये-
तिटक् ॥
पालङ्कः । पुं० शल्लक्याम् ॥ पालङ्क्य०
इ० शाके ॥ पाल० इ०प्र०स्वर्गे ॥

टी । मुखपार्श्वतसोर्लोपश्चेतिक्तः ॥

पार्श्वपरिवर्त्तनम् । न० भाद्रशुक्लैकादश्यांश्रीहरेः पार्श्वपरिवर्त्तनोत्सवे ॥

पार्श्वभागः । पुं० पक्षभागे ॥ पार्श्वस्यपार्श्वमेवबाभागः ॥

पार्श्वशूलः । पुं० न० शूलरोगविशेषे ॥ तस्यौषधंयथा । गतपुष्पादेवदारुभाल्लपर्णीयवागुरु । कुष्ठमांसीसैन्धवस्वपलमेकंपुनर्नवा ॥ पानेनस्ये तथाभ्यङ्गेतैलमेतत्प्रदापयेत् । इहपक्षूलंपार्श्वशूलस्वगण्डमालांचनाशयेत्इतिगारुडे १८८ अध्यायः ॥

पार्श्वस्थः । पुं० समीपस्थितनटे ॥ त्रि० पार्श्वस्थिते ॥ पर्यन्तस्थे ॥

पार्श्वास्थि । न० पर्शुकायाम् । कक्षाधोभागस्थितेस्थ्नि ॥

पार्श्वोदरप्रियः । पुं० कर्कटे । इ०हे० ॥

पार्षती । स्त्री० द्रौपद्याम् ॥ सखक्याम् ॥ जीवन्त्याम् ॥ गौर्याम् । इतिहेमचन्द्रः ॥

पार्षदः । पुं० शिवानुचरे । त्रि० सभ्ये । पर्षदिसाधुः । पर्षदोण्यइतिपाठेपर्षदइतियोगविभागात्ः ॥

पार्षद्यः । पुं० शिवानुचरे । त्रि० सभ्ये ॥ पर्षदिसाधुः । पर्षदोण्य० इ० ण्यः ॥

पार्ष्णिः । पुं० पादमूले । पादपश्चाद्भागे । गुल्फाधोभागे । एडी० इ० भा० । जिगीषायाम् ॥ पुं० स्त्री० सैन्यपृष्ठे ॥ पादमूले ॥ पृष्ठे ॥ स्त्री० उन्मदस्त्रियाम् ॥ कुन्त्याम् ॥ पर्षति० पृष्यतेऽनेनवा । पृषुसेचने । घृणिपृश्निपार्ष्णीतिसाधुः । स्पृशमृत्यनयावा । पूर्ववत्साधुः ॥

पार्ष्णिग्राहः । पुं० पृष्ठतः शत्रौ । जिगीषोः पृष्ठभागस्थितेशत्रुविशेषेराज्ञि । विजिगीषोररिंप्रतिनिर्यातस्यः पृष्ठपश्चात्प्रतिरुद्धगमनायाचरतिसपार्ष्णिग्राहइत्यर्थः ॥ पार्ष्णिंपश्चात्पदंगृह्णाति । कर्मण्यण् । गजपार्श्वरक्षके ॥

पार्ष्णित्रम् । न० पश्चाद्रक्षकसेनायाम् ॥

पालः । पुं० गवादिपालके ॥ पुं० राज्ञि । पतद्ग्रहे । इ० हे० च० ॥

पालकः । पुं० मुनिभेदे । घोटकरक्षके । न० चित्रकवृक्षे ॥ त्रि० पालनकर्त्तरि ॥ पालयति । पालरक्षणे । ण्वुल् ॥

पालकाप्यः । पुं० मुनिविशेषे । करेणुभुवि । धन्वन्तरौ ॥ इतित्रिकाण्डशेषः ॥

पालकाव्यः । पुं० गजशास्त्रकारिमहर्षिविशेषे ॥

पालघ्नः । पुं० मलजनभेदे । छत्राकायाम् ॥ पालंचित्तंहन्ति । अमनुष्येतिटक् ॥

पालङ्कः । पुं० शल्लकाम् ॥ पालङ्क० इ० शाके ॥ वाज० इ० भा० खगे ॥

पालङ्की । स्त्री० कुन्दुरुनामगन्धद्रव्ये ॥ पालङ्क्‌०भा०प्र०श्रा० ॥

पालङ्क्यम् । न० पालङ्० इ० प्र० शाके । मधुरायाम् । चुरपत्रिकाया म् ॥ श्रस्यगुणा : । ईषत्कटुत्वंमधु रत्वम् पथ्यत्वं शीतलत्वम् रक्तपित्तह रत्वम् ग्राहित्वम्परमतर्पणत्वं ति० रात्र० नि० ॥

पालङ्क्या । स्त्री० । कुन्दुरौ । कुन्दुरुखो टीतिगौ०भा० ॥ पालङ्क्याकिपालङ्का यास्तुकाच्चाराछुरिकाचोरितच्छदा ॥ पालङ्क्यावातलाशीतश्लेष्मलाभेदि नीगुरुः । विष्टम्भिनीमदश्वासपित्तरक्त कविषापहा ॥ पालङ्क्यंदलिसंशाकं तिलतैलेविपाचितम् । धान्यद्रव्यसमा योगैर्हिङ्गुसैंधवसंयुतम् ॥ पालनम् । पाल० । सं० क्रिप् । पाल्यक्षाति । श्र क्षपदेलक्षणेन । अदन्तः । चप्रीयत् ।

पालनम् । न० रक्षणे ॥ यथा । नभा- र्यान्ताडयेत्क्वापिमातृवत्पालयेत्स दा । नत्यजेद्घोरकष्टे पियदिसाध्वी पतिव्रतेति श्रीमद्भागनिर्वाणतन्त्रम् ॥ पाल्यतेऽनेन । पाल० । करणाधिक रणयोश्चेतिल्युट् ॥ सद्यः प्रसूता या : गोदुग्धे ॥

पालनी । स्त्री० प्रतिष्ठापिकायाम् ॥

पालाश : । पुं० हरिद्वर्णे ॥ पलाशस्य पत्रस्यायम् । श्रण् ॥ पलाशदण्डा- दौ ॥ पलाशस्यविकार : । पलाशा

द्भ्योवेत्यञ् ॥ न० । तमालपत्रे । तेजपात० इ० भा ॥ त्रि० हरिद्वर्ण वति । पलाशवृक्षसम्बन्धिनि ॥

पालाशखण्ड : । पुं० मगधदेशे ॥ प- लाशसमूहे ॥

पालाशी । स्त्री० मत्स्यविशेषे ॥ यथा । पालाशिखण्डं तिलतैलयुक्तं वि- पाचितंसैन्धवकासमर्दैः । हिंग्वार्द्र धात्रीफलचूर्णपूर्णंनवंनवंरोचनमा- तनोति ॥ पालाशीवलदावृष्यावा तघ्नीपित्तहृत्सरा । गुर्वीकफकरीचो ष्णासद : शुक्रविवर्द्धिनीति ॥

पालि : । स्त्री० कर्णलताग्रे ॥ श्रश्रौ ॥ पङ्क्तौ ॥ श्रङ्के ॥ प्रभेदे ॥ छत्रादि देये ॥ पालयतिपाल्यतेवा । पाल० । ग्रन्त : । अचइः ॥ पाल्याम् ॥

पालिका । स्त्री० कुन्तलिकायाम् । द ध्यादिच्छेदन्याम् ॥ श्रश्रौ ॥ कर्णम ले ॥ पालयति । पाल० । ण्वुल् ॥

पालित : । त्रि० रक्षिते ॥

पालिन्द : । पुं० कुन्दुरुकै ॥ पालयति । पाल । वा० किन्दच् ॥

पालिन्दी । स्त्री० कृष्णत्रिवृतायाम् । श्यामायाम् ॥ गौरादित्वान्ङीष् ॥

पाली । स्त्री० यूकायाम् ॥ सम्मखुवो मिति ॥ प्रान्ते ॥ सेतौ ॥ कल्पित भोजने ॥ प्रशंसायाम् ॥ कर्णलत योः ॥ उत्सङ्गे ॥ श्रश्रौ ॥ चिह्ने ॥ वाम्याम् ॥ कृदिकारादितिङीष् ॥

श्रेयाम् ॥ श्वाल्याम् ॥

पाल्य : । त्रि० रक्षणीये ॥

पाल्वलम् । न० पल्वलोदके ॥ यथा । चल्वंसर : पल्वलंस्नायचचन्द्रचंगे-रवौ । मतिप्रतिजलांकिस्वितत्तत्वं धारिपाल्वलम् ॥ पाल्वलंवार्यभिष्य-न्दिगुरुस्वादुचिदोषकृत् ॥

पावक : । पुं० अष्टानांवसूनांमध्येम-गजविभूतिविशिष्टे ॥ वह्नौ ॥ स-दाचारे ॥ वह्निमन्थे ॥ चित्रके ॥ भल्लातके ॥ विडङ्गे ॥ शोधयितृ-नरे ॥ रक्तचित्रके ॥ कुसुम्भे ॥ वैद्युताग्नौ ॥ यथा । पावक : पव-मानश्चशुचिरग्निस्त्रयस्तथा : । निर्म-थ्य : पवमान : स्याद्वैद्युत : पावक : स्मृ त : ॥ यश्चासौतपतेसूर्य : शुचिर ग्निस्त्वसौस्मृ त : ॥ इतिकौर्मे१२ऽ ध्याय : ॥ पुनाति । पूञ्० । ण्वुल् ॥ पवित्रे० ॥

पावकारणि : । पुं० अग्निमन्थे ॥

पावकि : । पुं० कार्त्तिकेये ॥

पावन : । पुं० द्वैपायने । व्यासे ॥ पावके ॥ सभ्याग्नौ ॥ य : शीताप नोदनाद्यर्थंवह्नुपुप्रदेशेऽयपिविधीय तेसस्योग्नि : ॥ पीतभृङ्गराजे ॥ सिह्लके ॥ न० प्रायश्चित्ते । पापक्ष यकरे ॥ जले ॥ कृच्छ्रे ॥ गोमये ॥ रुद्राक्षे ॥ कुष्ठौषधौ ॥ चित्र के अध्यासे ॥ त्रि० ॥ पवित्रे

पूते । पावयितरि । पापक्षयकरे गङ्गास्नानगयनीजयादौ ॥ पावय ति । कर्त्तरिल्युट् ॥

पावनध्वनि : । पुं० शङ्खे ॥ पावनो ध्वनिर्यस्य ॥

पावनी । स्त्री० हरीतक्याम् ॥ तुल-स्याम् ॥ गवि ॥ गङ्गायाम् ॥

पावित : । त्रि० पवित्रीकृते ॥

पाश : । पुं० मृगपक्ष्यादिबन्धने ॥ के शादिपूर्व : सङ्घाते ॥ कर्णपूर्वक : शोभनार्थे ॥ छत्रादिपूर्वोनिन्दार्थे । बन्धनरज्ज्वौ । पाशकाले । देहेन्द्रि-यादिसंयोगवियोगलक्षणे० अनवर तजन्ममरणजरारोगाद्यनर्थव्राते ॥ अविद्यास्मितारागद्वेषाभिनिवेशेषु ॥ द्यूतादिषु ॥ यथा । घृणाशङ्का भयंलज्जा जुगुप्साचेतिपञ्चमी । कु-लंशीलंतथाजातिरष्टौपाशा : प्रकी र्त्तिता: ॥ पाश्यतेबध्यतेऽनेनवा । पश बन्धने । चु० । घञ् ० घोषा ॥

पाशक : । पुं० अक्षे । देवने । पासा० । इतिभा० ॥ पाशयति० पशयति-वा । पश० ॥ ण्वुल्० कुत्वम् ॥

पाशजालम् । न० प्राहल्लादौ ॥ प्राह तौगवलेकर्ममायाख्यंचतुर्विधम् । पाशजालंसमासेनधर्मानाम्नैवकी-र्त्तिता : ॥ आत्मनांसहजसामर्थ्य प्रतिबन्धकत्वात् पाशानांजालमिव जालम् ॥

पाशपाणि : । पुं॰ वरुणे । अप्पती ॥ पाश : पाणौयस्य ॥

पाशपालनम् । न॰ घासे ॥

पाशित : । त्रि॰ पाशयुक्ते । बद्धे ॥

पाशी । पुं॰ वरुणे । प्रचेतसि ॥ व्याधे ॥ यमे । त्रि॰ पाशधरे ॥ पाशोऽस्यास्ति । इनि : ॥

पाशीकृत : । त्रि॰ पाशबद्धे ॥

पाशुपत : । पुं॰ शिवभक्ताम् । एकाष्ठीले । वकपुष्पे ॥ पशुपत्यधिदैवते ॥ पशुपतिभक्ते ॥ पशुपतियाशास्त्रकपदार्थवेदवादिभिशेषे ॥ पशुपतेरयम्॰ तत्प्रियत्वात्तस्येदमित्यण् ॥ पशुपतिर्देवतास्यसा । सास्यदेवतेत्यर्थेऽपत्यपत्यादिभ्यादण् ॥

पाशुपतव्रतम् । न॰ पशुपतिदेवताकेऽयक्षिपुराणोक्तव्रतविशेषे ॥ यथापशुपतिर्नित्यं हस्तासर्वमिदंजगत् । न लिप्यतेपुन : सोमियोनित्यं व्रतमाचरेत् ॥

पाशुपतास्त्रम् । न॰ पशुपते: शूलास्त्रे ॥

पाशुपाल्यम् । न॰ वैश्यवृत्तिविशेषे । गोरक्ष्ये ॥ पशून्गोमहिष्यादीन्पालयति । पाल॰ । कर्मण्यण् । तस्यकर्म भावोवा । ष्यञ् ॥

पाश्चात्य : । त्रि॰ पश्चे । चरमे ॥ पश्चाद्भव : । दक्षिणापश्चात्पुरसस्त्यक् । पश्चिमदेशजाते ॥

पाश्चात्याकरसम्भवम् । न॰ रौमके । रामलवणे । सांभर॰ इ॰ भा॰ ॥

पाश्या । स्त्री॰ पाशवृन्दे ॥ पाशानांसमूह : । पाशादिभ्यीय : ॥

पाषक : । पुं॰ पादाभरणविशेषे । पायुली॰ गौड़॰ भा॰ ॥

पाषण्ड : । पुं॰ सौगतक्षपणकादौ । वेदविरोधिनि । वेदवाह्यरक्तपटमौण्ड्यादिव्रतचर्याशालिनि । सर्वलिङ्गिनि ॥ त्यजपाखण्डसंसर्गसङ्गंभजसतांसदा । पापंसनोतिसनतिवा । षणु दाने । षणसम्भक्तौवा । अमन्ताड्ड : । पृषोदरादि : ॥

पाषण्डक : । पुं॰ पाषण्डे ॥

पाषण्डी । पुं॰ पाषण्डे ॥ वेदवाह्यरक्तपटमौञ्ज्यादिव्रतचर्यापाखण्डम् । तदस्यास्ति । इनि : ॥ तस्मात्पाषण्डिभि : पापैरालापं स्पर्शनंत्यजेत् । विशेषत : क्रियाकालेयज्ञादौचापिदीक्षित : ॥ क्रियाहानिर्गृहेयस्यमासमेकंप्रजायते । तस्यावलोकनात्सूर्यंपश्येत्समतिमान्नर: ॥ किंपुनर्येस्तुसन्त्यक्तास्त्रयीसर्वात्मनाद्विज । पाषण्डभोजिभि : पापैर्वेदवादविरोधिभि : ॥ पाषण्डिनो विकर्मस्थान्वैडालव्रतिकान्शठान् । हैतुकान्वकवृत्तींश्चवाङ्मात्रेणापिनार्चयेत् ॥ दूरापास्तस्तुसंसर्ग : सहास्थावापिपापिभि : । पाषण्डिभिर्दुराचारैस्तस्मात्तान्परिवर्जयेत् ॥

॥ एतेनग्नास्तवाम्ब्यातादष्याशाङ्गो पघातकाः । एषांसम्पापशात्पुंसां दिनपुष्टं विनश्यतीत्यादिपाडोत्त रखण्डम् ॥

पाषाण : । पुं० प्रस्तरे । ग्रावणि । उपले ॥ पिनष्टि । पिष्लृसञ्चूर्णने । बाहुलकादानच् । पृ० । मूर्धन्य ' ष : । यद्वाश्मेनवापषवा धियर्थ्येच । इलर्थे तिषत्म् । चष ति । चण० । चच् । पाषघासौ अपद्य ॥

पाषाणदारक : । पुं० टङ्के । टांकी इतिभा० । पाषाणश्यदारक : ॥

पाषाणदारण : । पुं० टङ्के ॥ पाषाणो दार्यतेऽनेन । दृविदारणे । ग्यन्त : । ल्युट् ॥

पाषाणभेद : । पुं० अश्मभेदे ॥

पाषाणभेदन : । पुं० हाथाजुडी० इ० गौ० भा० प्रसिद्धे । तृणविषि । अश्मघ्ने । शिलाभेदे । पाषाणभे दइतिभाषा ॥ पाषाणभेदनोश्मघ्नो गिरिभिच्छिन्नयोजनी । अश्मभेदोपि भस्तिक्त : कषायोवस्तिशोधन : । भेदनोऽस्तिदोषार्शो गुल्मकृच्छ्राश्म हृद्रुज : । योनिरोगान् प्रमेहांश्च प्लीहशूलव्रणानिचंतिभावमिश्र : ॥

पाषाणभेदी । पुं० अश्मभेदे । पत्थर चूर० इतिभाषा ॥

पाषाणमाचिकम् । न० स्वर्णमाक्षिके ॥

पाषाणी । स्त्री० बटखरा० इ० प्र० चुद्रपाषाणे । पृषाकरायां ॥

पिक : । पुं० कोकिले । वनप्रिये ॥ अपिकायति । कैशब्दे । आतश्चो पसर्गेक : । वष्टिभागुरिरल्लोपमवा प्योरुपसर्गयो : ॥

पिकप्रिय : । पुं० आम्रे । पिकानां प्रिय : ॥

पिकप्रिया । स्त्री० महाजम्ब्वाम् ॥

पिकबन्धु : । पुं० आम्रवृक्षे ॥ पिकानांबन्धुरिव ॥

पिकराग : । पुं० आम्रवृक्षे ॥

पिकवल्लभ : । पुं० आम्रवृक्षे ॥ पिका नांवल्लभ : ॥

पिकाक्ष : । पुं० रोचन्यां ॥

पिकाङ्ग : । पुं० चमगादरे ॥

पिकानन्द : । पुं० वसन्तकाले ॥ पि कानामानन्दोयस्मिन् ॥

पिकी । स्त्री० कोकिलस्त्रियाम् । को किलायां ॥

पिकेक्षण : । त्रि० कोकिलचक्षुस्तुल्य चक्षुर्युक्ते ॥

पिकेक्षणा । स्त्री० कोकिलाक्षे ॥

पिक्क : । पुं० हस्तिशिशौ ॥ इ० शब्द माला ॥

पिङ्ग : । पुं० पिशङ्गवर्णे ॥ मूषिके ॥ न० । बलाके ॥ हरिताले ॥ त्रि० । पिङ्गलवर्णवति ॥ पिञ्ज ति । पिजिवर्णे । अच् । न्यङ्क्

क्रादिः ॥
पिङ्गकपिशा । स्त्री० तैलपायिकायाम् ॥
पिङ्गचक्षु : । पुं० कुम्भीरे ॥
पिङ्गजट : । पुं० शिवे ॥
पिङ्गतीर्थम् । न० तीर्थविशेषे ॥
पिङ्गल : । पुं० नागविशेषे ॥ रुद्रे ॥ चण्डांशो : पारिपार्श्विके ॥ निधिप्रभेदे ॥ कपौ ॥ अग्नौ ॥ मुनिविशेषे ॥ नकुले ॥ स्थावरविषविशेषे ॥ क्षुद्रोलूके ॥ वत्सरविशेषे ॥ देशभङ्गीयदुर्भिक्षसमासात् काथयास्यहम् । पिङ्गलेचारुपद्मा सिदुर्भिक्षंनर्मदातटे ॥ पिङ्गलनागाचार्यकृतप्राकृतच्छन्दोग्रन्थविशेषे ॥ नीलपीतमिश्रितवर्णे ॥ तत्पर्याया : यथा । कडार : कपिल : पिङ्ग : पिशङ्ग : कद्रु : । केचिद्वद्वयद्वयंपर्यायमाहु : अथ नीलपीत : कपिल : । रोचनाभ : पिशङ्ग : । कनकपिङ्गल : कद्रुः ॥ पिशङ्गोरोचनापांडु : कद्रु : कनकपिङ्गल : । इतिनासमाला ॥ पिङ्गोदीपशिखाभ : स्यात्पिशङ्ग : पद्मधूलिवत् । पीतनीलहरिद्रत : कडारस्त्वावक्रिवत् ॥ त्रि० । तद्वर्णविशिष्टे ॥ सन्ध्यातपवर्णवदा वर्णविशेष : कपिल : इत्यमिथ्या स्यातारयाहु : ॥ न० । पित्तले ॥ पिङ्गति । पिञ्जिवर्णे । वृषादित्वात्कलच् । न्यङ्क्वादित्वात् कुत्वम् ॥ यद्वा ॥ पिङ्गोवर्णोऽस्यास्ति । सिध्मादित्वात्लच् ॥ पिङ्गलोवर्णोऽस्यास्ति । अर्शआद्यच् ॥
पिङ्गललोहम् । न० पित्तले ॥ इ०रा० ॥
पिङ्गला । स्त्री० वामनाख्यदक्षिणदिग्गजस्यहस्तिन्याम् ॥ कुमुदस्यकरिण्याम् ॥ वेश्याविशेषे ॥ यथा । आशाहिपरमंदुःखं नैराश्यं परमं सुखम् । यथासंछिद्यकान्ताशांसुखंसुष्वापपिङ्गलेति श्रीभागवतम् । कर्णिकायाम् । पक्षिविशेषे । राजरीत्याम् ॥ शिंशपायाम् ॥ ज्योतिष्मत्याम् ॥ नाडीविशेषे ॥ दक्षिणाराडाध : स्याधनुर्वक्रा दक्षिणनासान्तंगतायानाडीसापिङ्गलेत्युच्यते ॥
पिङ्गलिका । स्त्री० बलाकायाम् ॥
पिङ्गसार : । पुं० हरितालि ॥ इ०रा० ॥
पिङ्गस्फटिक : । पुं० गोमेदमणौ ॥
पिङ्गा । स्त्री० गोरोचनायाम् ॥ हिङ्गुनालिकायाम् । रामठ्याम् ॥ चण्डिकायाम् । उमायाम् ॥ वंशरोचनायामिति रा० नि० ॥ हरिद्रायाम् । इति श० च० ॥
पिङ्गाक्ष : । पुं० शिवे ॥ त्रि० पिंगलनेत्रे ॥ पिङ्गेअक्षिणीयस्य । बहुव्रीहाविति षच् ॥
पिङ्गाश : । पुं० पल्लीपतौ ॥ मत्स्यवि

शिवे। पाङ्काश० द्र० गौ० भा० ॥ न० नाशवस्त्वे ॥

पिङ्गाशी। स्त्री० नालिकायाम् ॥ द्र० दे० चं० ॥ नौलिकायामिति मेदि निकारः ॥

पिङ्गास्यः। पुं० पिङ्गाशमत्स्ये ॥ त्रि० पिङ्गलवर्णमुखविशिष्टे ॥

पिङ्गी। स्त्री० शमीवृक्षे ॥

पिङ्गेक्षणः। पुं० शिवे ॥

पिङ्गोमजः। पुं० रत्ने: पाठान्तरे ॥

पिचण्डः। पुं० उदरे ॥ पशोरवयवे ॥ अपिचमत्यन्नम्। चमु। अम- नाद्य:। वष्टिभागुरिरल्लोपमवाप्यो रुपसर्गयो:॥ अपिचण्डशौनेन हेतुनावा। पण्डिकोपे। पुंसीति घोषा॥

पिचण्डिल:। त्रि० तुन्दिले॥ अति शयितंपिचण्डमुदरमस्य। तुन्दादि त्वादिलच्॥

पिचव्यः। पुं० कार्पासे॥ द्र०दे०॥

पिचिण्डः। पुं० पिचण्डार्थे॥ भ०॥

पिचिण्डिका। स्त्री० पिण्डिकायाम्। जङ्घापश्चिमभागे। पिंडली० इति भाषा०॥

पिचिण्डिल:। त्रि० तुन्दिले। वृश्चकुर्वी॥ अतिशयितंपिचिण्डमुदर मस्य। तुन्दादित्वादिलच्॥

पिचु:। पुं० निर्बीजकार्पासे। तुले। कुष्ठभेदे॥ कर्षे॥ असुरविशेषे॥ भैरवे॥ सस्यप्रभेदे॥ पिचति॥ पिचुमर्दने। मृ०कु:॥

पिचुक:। पुं० मदनवृक्षे। मयना० इति० गौड़भा०॥

पिचुतूल:। पुं० न० कार्पासतूले॥

पिचुमन्दः। पुं० निम्बद्रुमे॥ पिचुं कुष्ठविशेषंमन्दयति। मदिस्तुत्या दौ। णिच्। कर्मण्यण्॥

पिचुमर्दः। पुं० निम्बवृक्षे॥ पिचुंकु ष्ठभेदंमर्दयति। मृदक्षोदे। णिच्। कर्मण्यण्॥

पिचुल:। पुं० झावुकद्रुमे। झाउ० इतिभा०॥ द्रुमले। हिज्जले॥ जलवायसे॥ पिचुंतूलंलाति। ला० । आतोनुपेतिक:॥

पिच्चटम्। न० सीसके॥ रङ्गे। त्रपु- णि। रांग० द्र० भा०॥ पुं० नेत्र रोगे॥ पिच्चयति पिच्यतेवा। पिच्च कुट्टने। चत्। पिच्चटीकसे। अ- न्येभ्योपीतिड:॥ पिच्चयति। श- कादिभ्योऽटन्वा॥

पिच्छ:। पुं० लाङ्गूले। पुच्छे॥ न०। वर्हेशिखण्डे॥ चूडायाम्। पिच्छ तिपिच्छयतिवा। पिच्छकुट्टने। प चाद्यच्वा॥

पिच्छल:। त्रि० पशुदे॥

पिच्छलदला। स्त्री० वदरीवृक्षे॥

पिच्छवाण:। पुं० श्येनपक्षिणि॥

पिच्छा। स्त्री० पूगे॥ अट्टायाम्॥

कोषे ॥ मोचायाम् ॥ शाल्मलिवेष्टे ॥ भक्तसंभूतमण्डे । मांड० इ० भा० ॥ पक्षीश्वक्षपदामये ॥ पिच्छिले ॥ चोलिकायाम् ॥ क्रमिलालायाम् ॥ शिंशपावृक्षे ॥ इ० श० चं० । पिच्छयति । पिच्छबाधे । गुरोश्च हलः । टाप् । पिच्छतिपिच्छालेवा । अच्प्रत्ययः ॥ यद्वा । पतितुमिच्छति । पतसृ० । सन्नन्तः । प० अच् पृषोदरादिः ॥

पिच्छावान् । त्रि० पिच्छिले ॥ अस्त्यर्थेमतुप् ॥

पिच्छितिका । स्त्री० शिंशपायाम् ॥

पिच्छिल : । पुं० बहुवारके । श्लेष्मातकवृक्षे ॥ त्रि० विजिले । लालसीके । विजिलन्तुभक्तमण्डयुक्तमित्तिरायमुकुटःसरसव्यञ्जनादीतिभरतःसूपादीतिरमानाथः । स्निग्धसूपादीतिभानुदीक्षितः । यथा । तरुणंसर्षपशाकंनवौदनाभिपिच्छिलानिचदधीनि । अल्पव्ययेनसुन्दरिग्राम्यजनोमिष्टमश्नातीति ॥ मण्डयुक्तव्यञ्जनमितिनीलकण्ठः ॥ पिच्छाभक्तादिमण्डोस्यास्ति । पिच्छादित्वात्इलच् ।

पिच्छिलका । पुं० धन्वनवृक्षे ॥

पिच्छिलच्छदा । स्त्री० उपोदक्याम् ॥

पिच्छिलत्वक् । पुं० नागरङ्गवृक्षे । धन्वनवृक्षे ॥

पिच्छिलसार : । पुं० मोचरसे ॥

पिच्छिला । स्त्री० पोतिकायाम् । शिंशपायाम् । शाल्मलौ । सिन्धुविशेषे । कोकिलाक्षे । वृश्चिकालुपे । शूलीतृणे । अतस्याम् । कच्व्याम् ॥ शाल्मलिनिर्यास : पिच्छा । सास्त्यस्ति । पि० इलच् ।

पिच्छोदकम् । न० नैचमले ॥

पिञ्ज : । पुं० वधे ॥ पिञ्जनम् । पिजिहिंसायाम् । चु० । अच् । कर्पूरविशेषे । न० बले । त्रि० । व्याकुले । व्यये ।

पिञ्जट : । पुं० नेत्रमले । दूषिकायाम् ॥

पिञ्जनम् । न० कार्पासस्फोटनधनुषि । विहननं । तूलस्फोटनकार्मुके । पीजनइ० भा० ।

पिञ्जर : । पुं० अश्वविशेषे । पीतरक्तवर्णे ॥ न० पीतके । हरिताले ॥ स्वर्णे । नागकेशरे । पक्ष्यादिरोधगृहे । त्रि० पिञ्जिते । पीतवर्णे । पिञ्जनम् । पिजिहिंसायाम् । वर्णेवा । घञ् । निष्ठायामनिट्त्वचनाज्जत्वम् । पिञ्जंवर्णविशेषंरातिक : ।

पिञ्जरकम् । न० हरिताले ॥

पिञ्जल : । पुं० अत्यन्तव्याकुलसैन्ये । समुत्पिञ्जे । पिञ्जयति । पिञ्जतेवा । पिजि० । बाहुलकात्कलच् ॥ पिञ्जं जातिवा । आतङ्कातिक : ।

न० । कुशपत्रे ॥ हरिद्राभे ॥ हरिताभे ॥

पिञ्जली । स्त्री० कुशान्तरवेष्टितप्रादेशमात्रसाग्रकुशपत्रद्वये । पवित्रे ॥ यथा । अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च। प्रादेशमात्रं विज्ञेयं पवित्रं यत्रकुत्रचित् ॥ एतदेव हि पिञ्जल्या लक्षणं समुदाहृतमिति छन्दोगपरिशिष्टम् ॥

पिञ्जा । स्त्री० मूले ॥ हरिद्रायाम् ॥ हिंसायाम् ॥

पिञ्जानम् । न० स्वर्णे ॥ इतिराo-नि० ॥

पिञ्जिका । स्त्री० तूलनालिकायाम् । पांइज० इ०गौ०भाषा ॥ इ०भि० ॥

पिञ्जूलम् । न० कुशवर्त्याम् ॥ वर्त्तिकायाम् ॥ पिञ्जति । पिञ्जि० । स्वर्ज्जिपिञ्जादिभ्यऊरोलचाविति ऊलच् ॥

पिञ्जूषः । पुं० कर्णमले ॥ इ०हे० ॥

पिञ्जटः । पुं० नेत्रमले ॥

पिञ्जोला । स्त्री० पत्रकाहलायाम् ॥

पिटः । पुं० नलादिरचितभाण्डे । कण्डोलि । पेटीपिटार० इतिचभाषा । पेटति । पिटशब्दसङ्घातयोः । कर्त्तरि इगुपधेतिकः ॥ न०चाले ॥ इ०चि० ॥

पिटकः । पुं० पेटके । मञ्जूषायाम् । मञ्जूषायाम् ॥ पि०विस्फोटे ॥ पेटति । पिट० । क्वुन् । स्त्रियां० पिटका । क्षिपकादित्वान्नेत्वम् ॥

पिटक्या । स्त्री० पिटकसमूहे ॥ पिटकानां समूहः । पाशादिभ्योयः ॥

पिटङ्गः । पुं० पर्वताभिधमत्स्ये ॥

पिटङ्कोका । स्त्री० इन्द्रवारुण्याम् ॥

पिटाकः । पुं० मुनिविशेषे ॥

पिट्टकम् । न० दन्तकिट्टके ॥

पिठरः । पुं० स्थाल्याम् ॥ गन्धद्रव्यभेदे ॥ मुद्रके । उक्षाटे ॥ न० । मुस्तायाम् ॥ मन्थानदण्डे ॥ पेठति पिठ्यतेवा । पिठहिंसासंक्लेशनयोः । बाहुलकात् करोगुणाभावश्च ॥ पिठेरितिपृषेतिकः । पिठंराति । रादाने । वा तोनुपेतिकः ॥

पिठरी । स्त्री० स्थाल्याम् ॥ यथा । सच्छिद्रपिठरीतिलत्वम् ।

पिडकः । पुं० स्फोटके ॥ इ० हे० ॥

पिडका । स्त्री० स्फोटयविशेषे । पिडिया इ० फुडिया० इतिचभाषा ॥

पिण्डः । पुं० बोले ॥ बले ॥ सान्द्रे ॥ देहे ॥ आगारैकदेशे ॥ देहैकदेशे ॥ ग्रासे ॥ निवापे ॥ गोले ॥ सिह्लके ॥ ओड्रपुष्पे ॥ वृन्दे ॥ कवले ॥ गजकुम्भे ॥ मदनवृक्षे ॥ न० । आजीवने ॥ अयसि ॥ पुं० न० यागविशेषद्रव्यनिर्मितबिल्वफलाकारेपिण्डे येथ्रे ॥ पिण्डते । पिण्डिसङ्घाते। अच्० ॥ पिण्डातेवा । कर्म्मणि घञ् ।

कोषे ॥ मोचायाम् ॥ शाल्मलिवेष्टे ॥ भक्तसंभूतमण्डे । मांड० हू० भा० ॥ पक्षीचक्षपदामये ॥ पिच्छिले ॥ चोलिकायाम् ॥ फणिलालायाम् ॥ शिंशपावृक्षे ॥ हू० श० चं० । पिच्छासे पिच्छबाधे । गुरौ स्थेय : । टाप् ॥ पिच्छतिपिच्छावेवा । अचचञ्चा ॥ यद्वा । पतितु-मिच्छति । पतृल० । सन्नन्त: । प० चम् पृषोदरादि: ॥

पिच्छावान् । त्रि० पिच्छिले ॥ प्रशस्यर्थेमतुप् ॥

पिच्छितिका । स्त्री० शिंशपायाम् ॥

पिच्छिल : । पुं० बहुवारके । श्लेष्मातकवृक्षे ॥ त्रि० विजिले । लाला सीथे । विजिलन्तुभक्तमण्डयुक्तमितिरायमुकुट:सरसव्यञ्जनादीतिभरत:सूपादीतिरमानाथ: । स्निग्धसूपादीतिभानुदीक्षित : । यथा । तन्व'सर्वप्रभार्कनयोदनानिपिच्छिलानिचदधीनि । अल्पव्ययेनसुन्दरिग्राम्यजनोमिष्टमश्नातीति ॥ मण्डयुक्तव्यञ्जनमितिनीलकण्ठ : ॥ पिच्छाभक्तादिमण्डोस्यास्ति । पिच्छादित्वात्इलच् ॥

पिच्छिलका : । पुं० धन्वनवृक्ष ॥

पिच्छिलच्छदा । स्त्री० उपोदकायाम् ॥

पिच्छिलत्वक् । पुं० नागरङ्गवृक्षे ॥ धन्वनवृक्षे ॥

पिच्छिलसार : । पुं० मोचरसे ॥

पिच्छिला । स्त्री० पोतिकायाम् ॥ शिंशपायाम् ॥ शाल्मली ॥ सिन्धुविशेषे ॥ कोकिलाचे ॥ वृश्चिकालुपे ॥ शूलीत्वषे ॥ अलस्याम् । कच्छ्याम् ॥ शाल्मलिनिर्यास : पिच्छा । सास्यास्ति । पि० इलच् ॥

पिच्छोदकम् । न० मेचमले ॥

पिञ्ज : । पुं० वधे ॥ पिञ्जनम् । पिजिहिंसायाम् । चु० । अच् ॥ कर्पूरविशेषे ॥ न० बले ॥ त्रि० ॥ व्याकुले । व्यग्रे ॥

पिञ्जट : । पुं० नेत्रमले । दूषिकायाम् ॥

पिञ्जनम् । न० कार्पासस्फोटमधनुषि । विहनने । तूलस्फोटनवार्मके । पीजनइ० भा० ॥

पिञ्जर : । पुं० अश्वविशेषे ॥ पीतरक्तवर्णे ॥ न० पीतके । हरिताले ॥ स्वर्णे ॥ नागकेशरे ॥ पक्ष्यादिरोधगृहे ॥ त्रि० पिपिते ॥ पीतवर्णे ॥ पिञ्जनम् । पिजिहिंसाया-म्०वर्णेवा । घञ् । निष्ठायामनिट्त्वचनान्नकुत्वम् । पिञ्जं वर्णविशेषंरातिम : ॥

पिञ्जरकम् । न० हरिताले ॥

पिञ्जल : । पुं० अत्यन्तव्याकुलसैन्ये । समुत्पिञ्जे ॥ पिञ्जयति०पिञ्जतिवा । पिजि० । बाहुलकादलच् ॥ पिञ्जंजातिवा । आतद्भूतिक : ॥

पितृन्प्रसूते । क्विप् । पितॄणां प्रसूर्वा ॥ पितामह्याम् ॥
पितृप्रियः । पुं० भृङ्गराजे ॥ पितॄणां प्रियः ॥
पितृबान्धवः । पुं० पितुर्मातादिषु ॥ यथा । पितुर्मातापिताभ्राता पितुर्भ्रातुःस्वसुः सुताः । पितुःपितुः सोदराश्चविज्ञेयाःपितृबान्धवाः
पितृभोगीणः । त्रि० पितृशरीरहिते ॥ पितुर्भोगः शरीरम् । तस्मै हितः । आत्मन्विश्वजनभोगोत्तरपदात्खः ॥
पितृभोजनः । पुं० माषे ॥ न० । पितॄणांभक्षणे ॥
पितृभ्राता । पुं० पितृव्ये ॥ पितुर्भ्राता ॥
पितृमान् । त्रि० सुशिक्षिते ॥ प्रशंसायांमतुप् ॥
पितृयज्ञः । पुं० पितृतर्पणे ॥
पितृयाणः । पुं० धर्मिणांमार्गविशेषे । इष्टापूर्त्तदत्तमितिकर्म तेनप्रतिपत्तव्ये पथि । कृष्णगत्यपरपर्यायेदक्षिणमार्गे ॥
पितृराजः । पुं० यमे ॥ पितॄणां राजा । टच् ॥
पितृलोकः । पुं० पितॄणांभुवने ॥ दक्षिणमार्गे ॥ यएषदक्षिणःपन्थाः पितृलोकः सउच्यते । मनुष्यानन्दतः सोयंगुणैस्तु स्वाप्ततोधिकः ॥
पितृवनम् । न० श्मशाने ॥ पितॄणां वनम् ॥ पितृन्वनतिवा । वनसम्भक्तौ । पचाद्यच् ॥
पितृव्यः । पुं० पितुर्भ्रातरि ॥ पितृव्यमातुलेतिनिपातनात् । पितुर्भ्रातरिव्यत् ॥
पितृष्वसा । स्त्री० पितुःस्वसरि । पितुर्भगिन्याम् ॥ मातृपितृभ्यांस्वसेतिषत्वम् ॥
पितृस्वस्रीयः । त्रि० पितुर्भागिनेये ॥
पितृसन्निभः । त्रि० मनोज्ञे । पितृसमे । पितेवसम्यङ्निभाति । भा० । आतश्चोपसर्गइ० कः ॥
पितृसूः । स्त्री० सन्ध्यायाम् ॥
पित्तम् । न० शरीरस्थधातुविशेषे । मायौ ॥ अस्यस्वरूपम् । पित्तमुष्णं द्रवंपीतंनीलंसत्वगुणोत्तरम् । सरंकटुलघुस्निग्धं तीक्ष्णमम्लन्तु पाकतः ॥ पीतंनिरामम् । नीलं सामम् ॥ आमाशयगतंक्षीरंतैजः पित्तमित्युच्यते ॥ अस्यकोपकालो यथा । पित्तस्यवर्षान्तनिदाघयोर्तिः । प्रचलोपद्रुति संचयश्च ॥ यतः । आश्विनेकार्त्तिकेमासि वैशाखज्येष्ठयोर्ध्रुवम् । वैद्यशास्त्रविचारज्ञैः पित्तोराजा प्रकीर्त्तितः इतिनिर्द्देशात्पुंस्त्वमपि । अस्यप्र

पितामहसर : । न० तीर्थविशेषे ॥

पितामही । स्त्री० पितामहपत्न्याम् ॥ पितुर्माता । मातरिपितरि चेति डा मह च् पितान् ङीष् ॥

पिता । पुं० तातै ॥ जनके ॥ सचवालोऽपि पितैव । यथाऽहमनुः । ब्राह्मस्य जन्मन : कर्त्तास्वधर्मस्य च शासिता । बालोऽपिविप्रोवृद्धस्य पिता भवति धर्मतः अध्यापयामास पितृन् शिशुराङ्गिरसः कवि : । पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् । ते तमर्थमपृच्छन्त देवानागतमन्यव : । देवाश्चैतान् समेत्योचुर्न्याय्यं व : शिशुरुक्तवान् ॥ अज्ञोभवतिवैबाल : पिताभवति मन्त्रद : । अज्ञं हि बालमित्याहु : पितेत्येव तु मन्त्रदमिति ॥ पाति । पा ऋचो । न पृनेष्टृत्वष्टृ इति निपातनात् साधु : ॥ पुं० भू० पितर: । दिव्य पितृगणे ॥ ऋषिभ्य: पितरो जाता : पितृभ्यो देवमानवा: । देवेभ्यश्च जगत्सर्वं चरं स्थाण्वनुपूर्वश : ॥ पितरोऽग्निष्वात्तमुख्या : ॥ स्वधा पितृणां पत्नी ॥

पितृकम् । त्रि० पितृसम्बन्धिनि ॥ इति शब्दमाला ॥

पितृकाननम् । न० श्मशाने ॥

पितृकार्य्यम् । न० पितॄनुद्दिश्य क्रियमाणे श्राद्धादौ ॥

पितृगण : । पुं० आज्यपादीनां समूहे सोमपादिषु ॥ मनोर्हैरण्यगर्भस्य येमरीच्यादय: सुता : । तेषामृषीणां सर्वेषां पुत्रा : पितृगणा: स्मृता: ॥

पितृगृहम् । न० श्मशाने ॥ पितुर्वेश्मनि ॥

पितृतर्प्पणम् । न० पितृतीर्थे । तर्जन्यङ्गुष्ठयोर्मध्ये ॥ निवापे । तिलै: पितृतीर्थेन पितुद्देश्यकजलदाने ॥ पितृणां तृप्तिमात्रे ॥ विनारूप्यसुवर्णेन विना ताम्रतिलै : खगै : । विनादर्भैश्च मन्त्रैश्च पितृणां नोपतिष्ठति इति शङ्ख: ॥ नैष्ठकादिर्यतीपितॄंस्तर्पयेत् । नवेष्टितशिरा नक्षणाय वासादेवपितृकार्यं कुर्यात् ॥ *** ॥ यदेव तर्पयत्यद्भि : पितॄन् स्नात्वा द्विजोत्तम : । तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलमिति मन्वादय : ॥

पितृतिथि: । स्त्री० अमावास्यायाम् ॥

पितृतीर्थम् । न० गयायाम् ॥ तर्जन्यङ्गुष्ठयोर्मध्ये ॥ पितृणां तीर्थम् ॥

पितृदानम् । न० निवापे । सपिण्डनादूर्द्ध्वं पित्रुद्देशेन दाने ॥ पितृपदं सतोपलक्षणम् । तेन मात्रादेरपि ग्रहणम् ॥ पितृभ्यो दानम् ॥

पितृदानकम् । न० निवापे ॥

पितृपति: । पुं० यमे ॥ पितृणां पति: ॥

पितृपिता । पुं० पितामहे ॥ पितु : पिता ॥

पितृप्रसू : । स्त्री० सायंसंध्यायाम् ॥

पितॄन्प्रसूते । क्विप् । पितॄणां प्रसूर्वा ॥ पितामह्याम् ॥

पितृप्रिय : । पुं० भृङ्गराजे ॥ पितॄणां प्रिय : ॥

पितृबान्धव : । पुं० पितुर्मातादिषु ॥ यथा । पितुर्मातापिताभ्राता पितुर्भ्रातु : स्वसु : सुता : । पितु : पितु : सोदराश्चविज्ञेया :पितृबान्धवा :

पितृभोगीण : । वि० पितृशरीरहिते ॥ पितुर्भोग : शरीरम् । तस्मै हित : । आत्मन्विश्वजनभोगोत्तरपदात्ख : ॥

पितृभोजन : । पुं० माषे ॥ न० । पितॄणांभक्षणे ॥

पितृभ्राता । पुं० पितृव्ये ॥ पितुर्भ्राता ॥

पितृमान् । वि० सुशिक्षिते ॥ प्रशंसायेमतुप् ॥

पितृयज्ञ : । पुं० पितॄणांतर्पणे ॥

पितृयाण : । पुं० धर्मिणांमार्गविशेषे । इष्टापूर्तेदत्तमितिकर्मणेनप्रतिपत्त्यै पथि । तत्यागस्यपरपर्यायेदक्षिणमार्गे ॥

पितृराज : । पुं० धर्मराजे ॥ पितॄणां राजा । टच् ॥

पितृलोक । पुं० पितॄणांभुवने ॥ दक्षिणमार्गे ॥ यणपटक्षिण : पन्था : पितृलोक सउच्यते । मनुष्या नन्दत : सोयंशुवेस्तु स्यात्कृताधिक : ॥

पितृवनम् । न० श्मशाने ॥ पितॄणां वनम् ॥ पितॄन्वनतिवा । वनसम्भक्तौ । पचाद्यच् ॥

पितृव्य : । पुं० पितुर्भ्रातरि ॥ पितृव्यमातुलेतिनिपातनात् । पितुर्भ्रातरिव्यत् ॥

पितृष्वसा । स्त्री० पितु : स्वसरि । पितुर्भगिन्याम् ॥ मातृपितृभ्यां स्वसेतिषत्वम् ॥

पितृस्वस्रीय : । वि० पितुर्भगिनेये ॥

पितृसन्निभ : । वि० मनोज्ञे । पितृसमे ॥ पितेवसम्यङ्निभाति । भा० । आतश्चोपसर्गे० क : ।

पितृसू : । स्त्री० सन्ध्यायाम् ॥

पित्तम् । न० शरीरस्थधातुविशेषे । मायो ॥ तत्स्वरूपम् । पित्तमुष्णं द्रवंपीतनीलंसत्वगुणोत्तरम् । सरंकटुलघुस्निग्धं तीक्ष्णमम्लन्तु पाकत : ॥ पीतंनिरामम् । नीलं सामम् ॥ आमाशयगतंसोग्नितेज : पित्तमित्युच्यते ॥ अग्न्यक्षीणपक्वाशया । पित्तस्यर्थान्तनिदाघयोर्ति । अग्नोदन्ति मयधर्व ॥ यत : । धान्निमेयाग्निर्तिमासि वैशाराग्यं दर्योर्भुवम् । वैद्यशास्त्र निजारर्ज्ञ : पित्तोराम प्रकोर्तित इतिनिर्दिशात्पुंस्त्वमपि । अम्यप

कोपकारणान्याह भावमिश्र : । क
टूम्लोष्ण विदाहि तीक्ष्णलवणक्रो
धोपवासातपस्त्रीसंयोगतृषाक्षुधा
भिहननव्यायाममद्यादिभिः । भुक्ते
ऽजीर्यति भोजनेच शरदिग्रीष्मे तथा
प्राणिनांमध्याह्ने च तथार्द्धरात्रसम
येपित्तप्रकोपो भवेदिति ॥ अन्यच्च
। माषैस्तिलैःकुलत्थैश्चमत्स्यैर्मेषा
मिषैश्च । गव्ये नदधितक्रै चन्दनां
पित्तं प्रकुप्यतीति ॥ शब्दचन्द्रिका
यामस्यप्रभेदाः पंचोक्ताः । यथा
। पाचकंभ्राजकंचैवरञ्जकालोचकौ
तथा । साधकंचैवपंचेति पित्तनामा
न्यनुक्रमादिति ॥ एषांस्थानान्या
ह । पक्वाशयेयकृत्प्लीह्नोर्हृदये
लोचनद्वये । त्वचिसर्वशरीरेषुपि
त्तं निवसतिक्रमादितिभावप्रकाशः
॥ अपिदीयतेस्म । दो० दैह० वा
। क्तः । अवउपसर्गात्तः । वष्टिभा
गुरिरल्लोपमवाप्योरुपसर्गयो : । सं
ज्ञापूर्वकत्वादत्वोतिदीर्घोन ।

पित्तघ्नम् । न० घृते ॥ पित्तं हन्ति । ह
न० । अमनुष्यकर्त्तृकेपीतिठक् ॥
त्रि० पित्तनाशकद्रव्ये ॥

पित्तघ्नी । स्त्री० गुडूच्याम् । ङीप् ॥

पित्तज्वरः । पुं० पैत्तिकज्वरे । विशेष
तः कोमलनारिकेलंनिहन्तिपित्त
ज्वरमूत्रदोषान् ॥

पित्तद्रावी । पुं० मधुरजम्बीरे ॥

पित्तरक्तम् । न० रोगविशेषे । रक्त-
पित्ते ॥

पित्तलम् । न० धातुविशेषे । आर-
कूटे । पीतल० इ० भा० ॥ त्रि०
पित्तवति ॥ पित्तमस्त्यस्मिन्-
वा । सि० लच् ॥

पित्तला । स्त्री० तोयपिप्पल्याम् । ला-
ङ्गल्याम् । टाप् ॥

पित्तारिः । पुं० पर्पटे ॥ लाक्षायाम् ॥
चन्दनान्तरे ॥ पित्तस्यारिः ॥

पित्रीयः । त्रि० पित्र्ये हिते । तस्मै-
हितमितिच्छः ॥

पित्र्यः । न० पितृतीर्थे । अङ्गुष्ठाङ्गु
ल्योर्मध्ये ॥ श्राद्धादौ । मधुनि ॥
श्राद्धकर्म्मणि ॥ पितरोदेवताअस्य ।
वाय्वृतुपित्रितियत् । रीङृतः ।
यस्येतिच । त्रि० पितृरागते ॥ त-
तआगतइत्यधिकारेपितुर्यच्चेतिय-
त् ॥

पित्सन् । पुं० पिहङ्गमे । त्रि० पतनि-
च्छौ । पतितुमिच्छुः । शट : श-
तृ । सनिमीमेतीस् । अभ्यासलोपः ॥

पित्सनम् । न० पथि । इतिप्राणकृष्णा
शब्दाम्बुधिः ॥

पित्सुः । त्रि० पिपतिषति ॥

पिधानः । पुं० न० तिरोधाने । अ-
पिपूर्वकडुधाञोल्युट् । वष्टिभागु-
रिरितिपक्षेअल्लोपः ॥

पिनद्धः । त्रि० आमुक्ते । परिहितक-

वंचाद्दोभटे । अभिनस्थलिस । शब्द-वंधने । कर्म यिद्ध : । वष्टिभागुरि-रित्यल्लोप : ॥

पिनाक: । पुं० न० रुद्रचापे । पांशुवर्षे । त्रिशूले । शाङ्करवचित्रशूल : इति०स्वामी । धात्तिशिवानुचरान् पिनाकाद्यन्येसिपात्तेराक : इत्वं-नुमच ॥ पनाय्यते । पनस्तुतौ ॥ पिनाकादित्वात्साधुर्वा ॥

पिनाकी । पुं० शिवे । पिनाकोधनु-रस्यास्ति । इनि : ॥ यात्रायोगान्त रे । रवि : षष्ठेसितश्छिद्रे तृतीये-भूमिनन्दन : । पिनाकयोगोविज्ञे-योयात्तुर्विजयकारक : ॥

पिपतिषत् । पुं० खगे ॥ त्रि०पित्सौ । पतनेच्छौ ॥

पिपतिषु : । पुं० विहगे ॥ त्रि० प-तितुमिच्छौ ॥ पते : सन्नन्तादुप्र-त्यय : । तनिपतीत्यादिनावृट् ॥

पिपासा । स्त्री० तृषि । लोभस्यभार्ये यम् । मम्यक्षुत्पिपासे । पातुमि-च्छा । पापाने । धातोरितिसन् । अप्रत्ययात् । टाप् ॥

पिपासु : । तृषिते ॥ पातुमिच्छु : । पिबते:सन्नन्तादुप्रत्यय : ॥

पिपीलक : । पुं० कीटविशेषे ॥ अ-पिपील्यते । पीलप्रतिष्टम्भे । घञ् । वष्टिभागुरिरित्यपेरल्लोप : । स्वार्थे-कन् ॥ शनैर्यातिपिपीलक : ॥

पिपीलिका । स्त्री० पिपीलकास्त्रियि । चींटी०इ०भा० ॥ टाप् । प्रत्यय-स्थादितीत्त्वम् ॥

पिपीली । स्त्री० पिपीलिकायाम् ॥ घ ञन्तान्ङीष् ॥

पिप्पक : । पुं० खगान्तरे ॥

पिप्पटा । स्त्री० खाद्यभेदे । गुडशर्क-रायाम् ॥

पिप्पल: । पुं० बोधिद्रुमे । जलदले । अश्वत्थवृक्षे । पीपल०इ०भा० ॥ पि प्पलोदुर्जर : शीत : पित्तश्लेष्मव्र-णास्त्रजित् । गुरुस्तुवरकोरुक्षोवर्ण्यो योनिविशोधनःइतिभावप्रकाश : ॥ ॥ अथपद्मपुराणोक्ताश्चिवचनानि-लिख्यन्ते । अश्वत्थमूलमासाद्यशा केनान्नोदकेनवा । एकंवाभोजयेद्-विप्रंकोटिकोटिफलंलभेत् ॥ ■ ॥ अश्वत्थमूलमासाद्यतपोयोम : सुरा र्चनम् । अथयंमुनिशार्दूलक्षयणीय चनंयथा । †=† ॥ एवंसमर्चितोऽ श्वत्थ : सर्वसौख्यप्रदोभवेत् । यश्चा र्थच्छेदितोश्वत्थ : सर्वारिष्टप्रदोभ-वेत् । =†= । अश्वत्थ : पूजितोयेन पूजिता : सर्वदेवता: । अश्वत्थ-श्छेदितोयेनच्छेदिता:सर्वदेवता: । अन्त: शुद्ध : सुसन्तुष्टोऽश्वत्थोदेवम-योगुरु: । ससेव्य : पूजनीयश्चसर्वपाप यविनाशक : ॥ मृग्वर्क्षवारेभौमेच-मध्याह्ने निशिसंध्ययो: । अश्वत्थदर्श

नंकार्येकुलक्षयभयात्मिरिति ॥ पिप्पलंजलमस्यास्तिसूर्लेपिन्नत्वात् । अर्शआद्यच् ॥ निरंशुके ॥ पक्षिविशेषे ॥ निरर्गले ॥ न० । सलिले ॥ वस्त्रच्छेदविशेषे ॥ कर्मफले ॥

पिप्पलकस् । वचोलमस्ते । चूचुके ॥ सीवनसूत्रे ॥

पिप्पलव्रतम् । न० वालिवैधव्ययोगनाशव्रते ॥ वलयविधवायोगेवालये सतिमृगीदृशाम् । मितारहसिकुर्वीतराद्व्रतंयाक्षसस्वतम् ॥

पिप्पलादः । पुं० वेदप्रसिद्धऋषिविशेषे ॥

पिप्पलिका । स्त्री० कणायाम् । पिप्पल्याम् ॥ पिप्पल्येव। स्वार्थेकः। ह्रस्वः।

पिप्पली । स्त्री० कणायाम् । उपकुल्यायाम् । मागध्याम् । कणायाम् । पीपल० इ० भा० ॥ पिप्पलीदीपनीवृष्यास्वादुपाकारसायनी । अनुष्णाकटुकास्निग्धावातश्लेष्महरी लघुः ॥ पित्तलारेचनी हन्तिश्वासकासोदरज्वरान् । कुष्ठप्रमेहगुल्मार्शः प्लीहशूलाममारुतान् ॥ आर्द्रा कफप्रदास्निग्धाशीतलामधुरागुरुः । पित्तप्रशमनीसातुशुष्कापित्तप्रकोपिणी ॥ पिप्पलीमधुसंयुक्तामेदः कफविनाशिनी ॥ श्वासकासज्वरहरीवृष्यामेधाग्निवर्धिनी ॥ जीर्णज्वरेऽग्निमान्द्ये चशस्यतेगुडपिप्पली । कासाजीर्णारुचिश्वासहृत्पाण्डुकृ

मिरोगनुत् ॥ द्विगुणःपिप्पलीचूर्णाद्गुडोत्रभिषजांमतः ॥ पिपर्त्ति । पृ० । बा० अलच् । पृ० । गौरादित्वान्ङीष् ॥

पिप्पलीका । स्त्री० अश्वत्थीवृक्षे ॥

पिप्पलीमूलम् । न० ग्रन्थिके । पीपलामूल० इ० भा० ॥ दीपनंपिप्पलीमूलं कटूष्णं पाचनंलघु । रूक्षंपित्तकरंभेदिकफवातोदरापहम् ॥ आनाहप्लीहगुल्मघ्नं कृमिश्वासक्षयापहमितिभावप्रकाशः ॥ पिप्पल्यामूलम् ॥

पिप्पिका । स्त्री० दन्तमले ॥ इ० वै०

पिप्लुः । पुं० जडुले । खसान इतिभाषा ॥ अपिप्लवते शुङ्गतौ ॥ मितद्वादित्वाड्डुः । अपिभागुरिरल्लोप मवाप्योरुपसर्गयोः ॥

पियाल । पुं० राजादने । सन्नकद्रौ ॥ चिरौंजी० इतिप्रसिद्धबीजवृक्षे ॥ पीयते । पीयु : सौत्रोधातुः । पीयुक्षयिभ्यांकालन् । बाहुलकाद्धस्वः ॥

पिलुक : । पुं० पीलुवृक्षे ॥

पिल्लः । पुं० क्लिन्ने चक्षुषि ॥ नेत्ररोगभेदे ॥ त्रि० । तद्वति ॥ क्लिन्नेचक्षुपीचस्य । क्लिन्नस्यचिल्पिलौतिपिल्लादेशो लच्प्रत्ययः ॥ चक्षुर्गतः नेत्ररोगः पिल्लशब्दवाच्यः ॥ तद्योगात्सचक्षुः योगात्पुरुषोपीतिव्याख्यातारः ॥

पिशङ्गः । पुं॰ कपिले । पिङ्गलवर्णे । सुवर्णवर्णसदृशेवर्णे । त्रि॰ । तद्वति ॥ पिंशति । पिशअवयवे । पिशादिभ्यः किदित्यङ्गच् ॥

पिशङ्गा । स्त्री॰ कपिलवर्णायाम् ॥ पक्षेटाप् ॥

पिशङ्गी । स्त्री॰ पिङ्गलवर्णायाम् ॥ पिशङ्गादुपसङ्ख्यानमितिपाक्षिको ङीप् ॥

पिशाचः । पुं॰ देवयोनिविशेषे । पिचास पिशाच॰ इतिचभाषा॰ ॥ राक्षसादपकृष्टे चशुचिमरुदेशनिवासिनि ॥ पिशितमश्नाति । अग॰ । कर्मण्यण् पृ॰ शितशब्दस्यलोपः । अश्शब्दस्यशाचादेशः । मध्यतालव्यः ॥ प्रेते ॥ यथा । चशौचान्नाद्द्विरीयेक्रियस्यमोक्ष्यतिद्यः । पिशाचत्वंभवेत्तस्यदत्तैःश्राद्धशतैरपि ॥

पिशाचकः । पुं॰ पिशाचेकुशले ॥ चाकर्षादिभ्यः कन् ॥

पिशाचकी । पुं॰ कुवेरे ॥ पिशाचाःसन्त्यस्य । पिशाचाक्तीनिः कुगागमश्च ॥

पिशाचद्रुः । पुं॰ शाखोटवृक्षे ॥ पिशाचानांद्रुः ॥

पिशाचपतिः । पुं॰ रुद्रे ॥ पिशाचानां पतिः ॥

पिशाचवृक्षः । पुं॰ शाखोटे ॥

पिशाची । स्त्री॰ गन्धमांस्याम् ॥ पिशाचिकायाम् । पिशाचस्त्रियि ॥

पिशितम् । न॰ मांसे ॥ पिंशति । पिशअवयवे । पिशेः किच्चेतीतन् पिश्यतेस्मवा । क्तः ॥

पिशिता । स्त्री॰ जटामांस्याम् ॥

पिशिताशी । त्रि॰ राक्षसे । मांसभक्षके ॥

पिशी । स्त्री॰ जटामांस्याम् ॥

पिशुनः । पुं॰ कपिवक्त्रे । नारदे ॥ काके ॥ न॰ कुङ्कुमे ॥ त्रि॰ सूचके । परोक्षेपरदोषोद्भासके ॥ क्रूरे ॥ पिंशति । पिशि॰ । क्षुधिपिशिमिथिभ्यः किदित्युनन् ॥

पिशुना । स्त्री॰ पृक्कायाम् । पिडिंशाक इति गौ॰ भा॰ ॥ चदन्तत्वचाट्टाप् ॥

पिष्टम् । न॰ सीसके ॥ धूपे । त्रि॰ चूर्णिते । चूर्णीकृते । गुर्णे । पीसा इ॰ भा॰ ॥

पिष्टकः । पुं॰ धृतपूपादौ । चपूपे पूडा॰ इति भा॰ । नेत्ररोगविशेषे ॥ तल्लक्षणं यथा । श्लेष्मामारुतकोपेन शुक्ले पिष्टसमुन्नतम् । पिष्टवत्पिष्टकंविद्धिमलाक्ताद्र्शसन्निभम् ॥ पिष्टस्यविकारः । संज्ञायामिति कन् ॥ न॰ । तिलचूर्णे ॥

पिष्टकारिणी । स्त्री॰ चूर्णदायाम् । पिसनहारी इ॰ भा॰ ॥

पिष्टपम् । पुं॰ न॰ भुवने । विष्टपे । विशन्त्यस्मिन्सुकृतिनः । विशप्रवेश

नंकार्यंकुलक्षयभयात्क्षमिरिति ॥ पिप्पलंजलमस्यास्तिमूलेसिक्तत्वात् । अर्शआद्यच् । निरंशुके । पक्षि- विशेषे । निरर्गले ॥ न० । सलि- ले ॥ वस्त्रच्छेदविशेषे । कामफले ।

पिप्पलकम् । वक्षोजाग्रे । चूचुके । सीव नसूत्रे ॥

पिप्पलव्रतम् । न० बालवैधव्ययोगना शकव्रते । बालवैधव्ययोगेवाल्ये समृगीदृशाम् । पितारक्षसिकुर्वी ततद्व्रतंशास्त्रसम्मतम् ॥

पिप्पलादः । पुं० वेदप्रसिद्धेऋषिविशेषे ।

पिप्पलिका । स्त्री० कणायाम् । पिप्प ल्याम् । पिप्पल्येव । स्वार्थेकः । हृस्वः ।

पिप्पली । स्त्री० कणायाम् । उपकु ल्यायाम् । मागध्याम् । कणायाम् । पीपल० इ० भा० । पिप्पलीदी पनीवृष्यास्वादुपाकारसायनी । अ- नुष्णाकटुकास्निग्धावातश्लेष्महरी लघुः । पित्तलारेचनी हन्तिश्वास कासोदरज्वरान् । कुष्ठप्रमेहगुल्मा- र्शः प्लीहशूलाममारुतान् । आर्द्रा कफप्रदास्निग्धाशीतलामधुरागुरु: । पित्तप्रशमनीसातुशुष्कापित्तप्रको पिणी ॥ पिप्पलीमधुसंयुक्तामेदः कफविनाशिनी । श्वासकासज्वरह रीवृष्यामेधाग्निवर्धिनी । जीर्णज्वरे ऽग्निमान्द्येचशस्यतेगुडपिप्पली । कासाजीर्णाऽरुचिश्वासहृत्पाण्डुकृ मिरोगनुत् ॥ द्विगुणःपिप्पलीचूर्णा द्गुडोऽत्रभिषजांमतः । पिपर्ति । पृ० । बा० अलच् । पृ० । गौरा दित्वान्ङीष् ।

पिप्पलीका । स्त्री० अश्वत्थीवृक्षे ॥

पिप्पलीमूलम् । न० ग्रन्थिके । पीपला मूल० इ० भा० । दीपनंपिप्पली मूलं कटूष्णंपाचनंलघु । रूक्षंपित्त करंभेदिकफवातोदरापहम् । आ नाहप्लीहगुल्मघ्नंकृमिश्वासक्षयापह मितिभावप्रकाशः । पिप्पल्यामूल म् ॥

पिप्पिका । स्त्री० दन्तमूले ॥ इ० हे०

पिप्लुः । पुं० जट्ले । लसन इतिभाषा ॥ अपिप्लवतेग्रहणी ॥ मितद्वादि त्वाड्डुः । वष्टिभागुरिरल्लोप मवा प्योरुपसर्गयोः ।

पियालः । पुं० राजादने । सन्नकद्रौ ॥ चिरोंजी० इतिप्रसिद्धबीजस्यवृक्षे ॥ पीयते । पीयु : सौत्रोधातुः । पीयु कणिभ्यांकालन् । बाहुलकाद्ध्रस्व त्वं ॥

पिलुकः । पुं० पीलुवृक्षे ॥

पिल्लः । पुं० क्लिन्नेचक्षुषि । क्लेदयुक्तनेत्रे । त्रि० । तद्वति । क्लिन्नेचक्षुपीत्व- स्य । क्लिन्नस्यचिल्पिल्लौ इतिपिल्लादेशो लच्प्रत्ययः । चक्षुर्गत : क्लेदरोगः पिल्लशब्दवाच्यः । तद्योगाच्चक्षुस्त द्योगात्पुरुषोपीतिव्याख्यातारः ।

पिशङ्ग : । पुं॰ कपिले । पिङ्गलवर्णे । सुवर्णवर्णसदृशेवर्णे ॥ त्रि॰ । तद्वति ॥ पिंशति । पिशअवयवे । पिडादिभ्य : कित्दित्यङ्गच् ॥

पिशङ्गा । स्त्री॰ कपिलवर्णायाम् ॥ मचेटाप् ॥

पिशङ्गी । स्त्री॰ पिङ्गलवर्णायाम् ॥ पिशङ्गादुपसङ्ख्यानमितिपाणिनीयो ङीप् ॥

पिशाच : । पुं॰ देवयोनिविशेषे । पिचास पिशाच॰ इतिचभाषा॰ ॥ राक्षसादपकृष्टे अशुचिमरुदेशनिवासिनि ॥ पिशितमश्नाति । अश॰ । कर्मण्यण् पृ॰ शितशब्दस्यलोप : । अश्शब्दस्यशाचादेश : । मध्यतासव्य: ॥ प्रेते ॥ यथा । यदीवात्मा द्वितीयेन्द्रियस्यनोत्सृज्यतेव्ययः । पिशाचत्वभवेतस्यदत्तैःश्राद्धशतैरपि ॥

पिशाचक : । पुं॰ पिशाचेकुशले ॥ आकर्षादिभ्य : कन् ॥

पिशाचकी । पुं॰ कुबेरे । पिशाचा:सन्त्यस्य । पिशाचाद्वैतीनि : कुगागमश्च ॥

पिशाचद्रु : । पुं॰ शाखोटवृक्षे ॥ पिशाचानांद्रु : ॥

पिशाचपति : । पुं॰ रुद्रे । पिशाचानां पति : ॥

पिशाचवृक्ष : । पुं॰ शाखोटे ॥

पिशाची । स्त्री॰ गन्धमांस्याम् । पिशाचिकायाम् । पिशाचस्त्रियि ॥

पिशितम् । न॰ मांसे ॥ पिंशति । पिशअवयवे । पिशे : किच्चेतीतन् पिश्यतेस्मवा । क्त : ॥

पिशिता । स्त्री॰ जटामांस्याम् ॥

पिशिताशी । त्रि॰ शाष्कुले । मांसभक्षके ॥

पिशी । स्त्री॰ जटामांस्याम् ॥

पिशुन : । पुं॰ कपिवक्त्रे । नारदे ॥ काके ॥ न॰ कुङ्कुमे । त्रि॰ सूचके । परोक्षेपरदोषोद्भासके ॥ क्रूरे ॥ पिंशति । पिशि॰ । क्षुधिपिशिमिथिभ्य : कित्दित्युनन् ॥

पिशुना । स्त्री॰ पृक्कायाम् । पिडिंशाक इति गौ॰ भा॰ ॥ अदन्तत्वाट्टाप् ॥

पिष्टम् । न॰ सीसके ॥ पूपे । त्रि॰ चूर्णिते । चूर्णीकृते । शुष्के । पीसा इ॰ भा॰ ॥

पिष्टक : । पुं॰ घृतपूपादौ । अपूपे पूडा॰ इति भा॰ । नेत्ररोगविशेषे ॥ तल्लक्षणं यथा । श्लेष्मामारुतकोपेन शुक्ले पिष्टसमुन्नतम् । पिष्टवत्पिष्टकंविद्धिमलाक्तादर्शसन्निभम् ॥ पिष्टस्यविकार : । संज्ञायामितिकन् ॥ न॰ । तिलचूर्णे ।

पिष्टकारिणी । स्त्री॰ चूर्णदास्याम् । पिसनहारी इ॰ भा॰ ।

पिष्टपम् । पुं॰ न॰ भुवने । विष्टपे । विशन्त्यस्मिन्सुकृतिन: । विशप्रवेशे

ने । यस्मात्० विटपविष्टपविशपो लपाइत्यौणादिकः कपन्० विशते रादेः पः प्रत्ययस्य तुट् नश्चेति षत्वम् ॥ यद्वा पिश्यते० पिष्यतेवा । पिशगतौ० पिष्लृसञ्चूर्णनेवा ॥ प्रक्रियापूर्ववत् ॥ सूत्रेविष्टपस्थाने पिष्टपइतिपकारादिपाठस्तूज्ज्वलदत्तरीत्योक्तः । नायंयुक्तः । यत्र ब्रधुस्यविष्टपमित्यादावुदाहरणेषोष्ठ्यादि पाठस्यदर्शनात् ॥

पिष्टपचनम् । न० ऋजीषे । पिष्टपाकपात्रे । तद्दु० भा० ॥ तैलातौ द० गौ० भा० ॥ पच्यतेऽत्र । डुपचष्० । करणेतिल्युट् । पिष्टस्यपचनम् ॥

पिष्टपाकभृत् । पुं० पिष्टकपाकपात्रे । पिष्टपचने ॥

पिष्टपूरः । पुं० घटकेघृतपूरे ॥ ह०हे०॥

पिष्टवर्त्तिः । पुं० मुद्गमसूरादिपिष्टेघमस्याम् ॥

पिष्टसौरभम् । न० चन्दने॥ द०श०॥

पिष्टातः । पुं० पटवासके । धूलिगुच्छके । अवीर इतिख्याता० इतिमा० ॥ वस्त्रादिवासनार्थं मेलीकृतसुगन्धद्रव्यचूर्णे ॥ पिष्टमतति । अत० । कर्मण्यण् ॥

पिष्टकम् । न० तण्डुलोद्भवतचूर्णे॥

पिष्टिका । स्त्री० पिष्टविदले ॥ पिठी इ० भा० ॥ यथा । दालिः संस्थापितातोयेततोमर्दितकञ्चुका ॥ शिलायांसाधुसम्पिष्टापिष्टिकाकथिताबुधैरितिभावमिश्रः ॥

पिष्टोडी । स्त्री० श्वेताम्लिकायाम् ॥

पिहितः । त्रि० आच्छादिते । संवीते । आवृते । छन्ने । ढका० इ० भा० । तिरोहिते । अपिधीयतेस्म । डुधाञ्० । क्तः । दधातेर्हिः । वागुरिमतेनाल्लोपः ॥

पीठः । त्रि० चौकीतिपीढी०इत्यादि नाम्नाचप्रसिद्धे ॥ उपवेशनाधारे । आसनविशेषे । पेठन्त्यत्र । पिठहिंसासंक्लेशनयोः । हलश्चेतिघञ् । बाहुलकाद्दीर्घः । पीयतेऽत्रवा । पीङ्पाने । वा० ठक् ॥ धातुपाषाणकाष्ठैश्चपीठस्त्रिविधउच्यते ॥ सिद्धपीठेतुविज्ञेयतरोपीठोद्दिवोद्दृष्टव्यः ॥एकपञ्चाशद्भेदभिन्नेदेवतास्थानविशेषे ॥ यथा ॥ कृतयुगेदक्षप्रजापतेर्यज्ञेशिवनिन्दांश्रुत्वाप्राणांस्त्यक्तवत्याः सत्याः शरीरंशिरसिधृत्वाभ्रमतिशिवेविष्णुनाचक्रेणच्छिन्नाअवयवाः यत्रयत्रपतितास्तएवदेशाएकपञ्चाशन्महापीठाख्याभवन्निति पौराणिकी वार्त्तातिप्रसिद्धास्ति ॥ ० ॥ अथतेषांनिरूपणम् । ईश्वरउवाच । मातः परात्परेदेविसर्वज्ञानमयीश्वरि । कथ्यतांमेसर्वपी

ठंशक्तिभैरवदेवता: ॥ देव्युवाच ॥ शृणुवत्सप्रवक्ष्यामिदयालोभक्तवत्सल याभिर्विनानसिध्यन्तिजपसाधनतत्क्रिया : ॥ पञ्चाशदेकपीठानिएवं भैरवदेवता : । चक्रप्रत्यङ्गपातेन विष्णुचक्रक्षतेनच ॥ ममान्यवपुषो देवहितायत्वयि कथ्यते ॥ ब्रह्मरंध्रं हिङ्गुलायांभैरवोभीमलोचन : । कोट्टवीसामहामायात्रिगुणायादिगम्बरी ॥ १ ॥ शर्करारेत्रिनेत्रं मे देवीमहिषमर्दिनी । क्रोधीशोभैरव स्तत्रसर्वसिद्धिप्रदायक : ॥ २ ॥ सुगन्धायांनासिकामेदेवस्त्र्यम्बकभैरव : । सुन्दरीसामहादेवीसुनन्दा तत्रदेवता ॥ ३ ॥ काश्मीरेकण्ठदेशश्चत्रिसन्ध्येश्वरभैरव: । महामाया भगवतीगुणातीतावरप्रदा ॥४॥ ज्वालामुख्यांमहाजिह्वादेवउन्मत्तभैरव: । अम्बिकासिद्धिदानाम्नीस्तनकालन्धरेमम ॥ ५ ॥ भीषणोभैरवस्तत्रदेवीत्रिपुरमालिनी ॥ हार्दंपीठंवैद्यनाथेवैद्यनाथस्तुभैरव: ॥६॥ देवताजयदुर्गाख्या ॥ ७ ॥ नेपालेजानुनीमम ॥ कपालीभैरव : श्रीमान्महामायाचदेवता ॥ ८ ॥ मानसेदक्षहस्तोमेदेवीदाक्षायणीहर ॥ अमरोभैरवस्तत्रसर्वसिद्धिप्रदायक : ॥ ९ ॥ उत्कलेनाभिदेशश्चविरजाक्षेत्रमुच्यते । विमलासामहादेवीजगन्नाथस्तु

भैरव : ॥ १० ॥ गण्डक्यांगण्डपातश्चतत्रसिद्धिर्नसंशय: । तत्रसागण्डकीचण्डीचक्रपाणिस्तुभैरव: ॥ ११ ॥ बहुलायांवामबाहुर्बहुलाख्यानुदेवता । भीरुकोभैरवोदेव : सर्वसिद्धिप्रदायक : ॥ १२ ॥ उज्जयिन्यांकुर्परश्चमाङ्गल्य : कपिलाम्बर: । भैरव : सिद्धिद: साक्षाद्देवीमङ्गलचण्डिका ॥ १३ ॥ चट्टलेदक्षबाहुर्मेभैरवश्चन्द्रशेखर: । व्यक्तरूपाभगवती भवानीतत्रदेवताविशेषत : कलियुगेवसामिचन्द्रशेखरे ॥ १४ ॥ त्रिपुरायांदक्षपादोदेवतात्रिपुरामता । भैरवस्त्रिपुरेशश्चसर्वाभीष्टफलप्रद : ॥ १५ ॥ त्रिस्रोतायांवामपादोभ्रामरीभैरवोम्बर : ॥ १६ ॥ योनिपीठंकामगिरौकामाख्यातत्रदेवता । यत्रास्तेत्रिगुणातीतारक्तपाषाणरूपिणी । यत्रास्तेमाधव : साक्षादुमानन्दोथभैरव : । सर्वदाविहरेद्देवीतत्रमुक्तिर्नसंशय : ॥ तत्रश्रीभैरवीदेवीतत्रचतत्रदेवता । प्रचण्डचण्डिकातत्रमातङ्गीत्रिपुराम्बिका ॥ बगलाकमलातत्रभुवनेशीसुधूमिनी । एतानिवरपीठानिशंसन्तिवरभैरव ॥ एतंतादेवता : सर्वाएवंतेदशभैरवा : ॥ १७ ॥ सर्वंनवरलाचाहंकामरूपेगृहेगृहे ॥ गौरीशिखरमारुह्यपुनर्जन्मनविद्यते ॥ १८ ॥ करतोया-

समासाद्ययाश्च् शिखरवासिनी । शतयोजनविस्तीर्णं त्रिकोणंसर्वसिद्धिदम् । देवामरणमिच्छन्तिकिंपुनर्मानवादय : । भूतधात्रीमहामायाभैरव : क्षीरखण्डक : ॥ युगाद्यायां महादेवदक्षाङ्गुष्ठपदोमम ॥ १९ ॥ नकुलीय : कालिपीठेदक्षपादाङ्गुलीषुच । सर्वसिद्धिकरीदेवीकालिकातत्रदेवता ॥ २० ॥ अङ्गुलीषुचहस्तस्यप्रयागेललिताभव : । जयन्त्यांवामजङ्घाचजयन्तीक्रमदीश्वर : ॥ २१ ॥ भुवनेशीसिद्धिरूपाकिरीटस्थाकिरीटत : । देवताविमलानाम्नीसंवर्त्तोभैरवस्तथा ॥ २२ ॥ वाराणस्यांविशालाक्षीदेवताकालभैरव : । मणिकर्णीतिविख्याताकुण्डलञ्चममश्रुते : ॥ २३ ॥ कन्याश्रमेचपृष्ठंमेनिमिषोभैरवस्तथा । सर्वाणीदेवतात्तत्र ॥ २४ ॥ कुरुक्षेत्रेच गुल्फत : । स्थाणुर्नाम्नाचसावित्रीदेवता ॥ २५ ॥ मणिवेदके मणिबंधेचगायत्रीसर्वानन्दस्तुभैरवः ॥ २६ श्रीशैलेचममग्रीवा महालक्ष्मीस्तुदेवता । भैरवः शम्बरानन्दोदेशेदेशेव्यवस्थित : ॥ २७ ॥ काञ्चीदेशेच कङ्कालोभैरवोरुरुनामक : । देवतादेवगर्भाख्या ॥ २८ ॥ नितम्ब : कालमाधवे । भैरवश्चासिताङ्गश्चदेवीकालीचमुक्तिदा । दृष्ट्वादृष्ट्वामहा



देवमन्त्रसिद्धिमवाप्नुयात् ॥ कुब्जवारे भूततिर्यौनिशार्द्धेयस्तुसाधक : । नत्वाप्रदक्षिणीकृत्यमन्त्रसिद्धिमवाप्नुयात् ॥ २९ ॥ शोणाख्याभद्रसेनस्तु । नर्मदाख्येनितम्बक: ॥ ३० ॥ रामगिरौस्तनान्यस्तुशिवानीचण्डभैरव : ॥ ३१ ॥ वृन्दावनेकेशजालेउमानाम्नीचदेवता । भूतेशोभैरवस्तत्रसर्वसिद्धिप्रदायक : ॥ ३२ ॥ संहाराख्यऊर्द्धदन्तेदेवीनारायणीशुची । अधोदन्तेमहारुद्रोवाराहीपञ्चसागरे ॥ ३३ ॥ करतोयातटेतल्पं वामेवामनभैरव : ॥ अपर्णादेवतातत्रब्रह्मरूपाकरोद्भवा ॥ ३४ ॥ श्रीपर्वतेदक्षतल्पंतत्रश्रीसुन्दरीपरा । सर्वसिद्धिकरीसर्वासुन्दरानन्दभैरवः ॥ ३५ ॥ कपालिनीभीमरूपावामगुल्फोविभासके ॥ ३६ ॥ उदरञ्च प्रभासेमेचन्द्रभागायशस्विनी । वक्रतुण्डोभैरव ॥ ३७ ॥ ऊर्ध्वोष्ठोभैरवपर्वते । अवन्तीचमहादेवीलम्बकर्णस्तुभैरव : ॥ ३८ ॥ चिबुकेभ्रामरी । देवीविकृताक्षोजनेस्थले ॥ ३९ ॥ गण्डोगोदावरीतीरेविश्वेशीविश्वमातृका । दण्डपाणिर्भैरवस्तुवामगण्डेतुराकिनी ॥ अमायोभैरवोवत्ससर्वशैलात्मकोपरि ॥ ४० ॥ रत्नावल्यांदक्षस्कन्ध : कुमारीभैरव : शिव: ॥ ४१ ॥ मिथिलायामुमादेवीवामस्क

व्योमकेश्वरः॥ ४२ ॥ नालाहट्यां नलापातोयोगेशोभैरवस्तथा । तत्र साक्षालिकादेवी सर्वसिद्धिप्रदायिका ॥ ४३ ॥ कर्णाटेचैवकर्णेचभीरुनामभैरवः । देवताजयदुर्गाख्या नानाभोगप्रदायिनी ॥ ४४ ॥ वक्रेश्वरेमनः पातश्चक्रनाथस्तुभैरवः । नदीपापहरातत्रदेवीमहिषमर्दिनी ॥ ४५ यशोरेपाणिपद्मञ्चदेवतायशोरेश्वरी । चण्डश्चभैरवोयत्रतत्रसिद्धिमवाप्नुयात् ॥ ४६ ॥ अट्टहासेचोष्ठपातोदेवीसाफुल्लरास्मृता । विश्वेशोभैरवस्तत्रसर्वाभीष्टप्रदायकः ॥ ४७ ॥ हारपातोनन्दिपुरेभैरवोनन्दिकेश्वरः । नन्दिनीसामहादेवीतत्रसिद्धिर्नसंशयः ॥ ४८ ॥ लङ्कायांनूपुरश्चैवभैरवोराक्षसेश्वरः । इन्द्राक्षीदेवतातत्रइन्द्रेणोपासितापुरा ॥ ४९ ॥ विराटदेशमध्येतुपादाङ्गुलिनिपातनम् । भैरवोऽमृतनामश्चदेवीतत्राम्बिकास्मृता ॥ ५० ॥ मगधेदक्षजङ्घामेव्योमकेशस्तुभैरवः । सर्वानन्दकरीदेवीसर्वकामफलप्रदा ॥ ५१ ॥ एतास्ते कथिताः पुत्रपीठनायाधिदेवताः ॥ विनाधीशंविनादेवंपूजयेत्पीठदेवताम् । भैरवोक्तिविफलसर्वंजपपूजादिसाधनम् ॥ भक्ताख्यभैरवंपीठंपीठशक्तिञ्चशङ्कर ॥ प्राणनाथनसिध्येतकल्पकोटिजपादिभिः ॥ नदेयंपरशिष्येभ्योनिन्दकायदुरात्मने । शठायवञ्चकायेदंदत्त्वामृत्युमवाप्नुयात् ॥ ६५ । ५ । न्यायशिष्यायनैष्ठिकायशुचिमिते । साधकायकुलीनायमन्त्रीमन्त्रार्थसिद्धये ॥ ० ॥ इतितन्त्रचूडामणौशिवपार्वतीसंवादेएकपञ्चाशत्पीठोत्पत्तीपीठनिर्णयः समाप्तः ॥ अन्यानिपीठानिकालीपुराणे ॥ १८ । ५० । ६१ । अध्यायेषुद्रष्टव्यानि ॥

पीठकलिः । पुं० नायकविशेषे । पीठमर्दे ॥

पीठमर्दः । पुं० नायकविशेषे । नर्म्मसचिवे । तल्लक्षणं । कुपितस्त्रीप्रसादकइति । अस्योदाहरणं यथा । कोयंकोपविधिः प्रयच्छकरुणा गर्भंवचोन्नायतांपीयूषद्रवदीर्घिकापरिमलैऽऽरामोदितामेदिनी । आस्तांवास्पृहयालुलोचनमिदं व्यावर्त्तयन्तीमुहुर्यस्मैकुप्यसितस्यसुन्दरितपोवृन्दालिमन्दामहेइति ॥ नाट्योक्तानायकप्रिये ॥

पीठसर्पकः । त्रि० }
पीठविसर्पी । खञ्जे }
पीठसर्पी । पांशुरे । पङ्गौ ॥ }

पीठस्थानम् । न० देवताविशेषाणांपूजास्थाने ॥

पीठिका । स्त्री० पातनिकायाम् ॥ क्रमे ॥

पीठी । स्त्री० पीठे । आसने । चौकी

पीतरक्तः । पुं० पुष्परागमणौ ॥

पीतरत्नम् । न० गोमेदमणौ ॥

पीतरागः । पुं० पीतवर्णे । किञ्जल्के । सिक्थके ॥ त्रि० । पीतवर्णवति

पीतरोहिणी । स्त्री० काश्मर्याम् ॥

पीतलः । पुं० पीतवर्णे । त्रि० तद्वति ॥

पीतलकम् । न० पित्तले । इ० रा० ॥

पीतलोहम् । न० पित्तलभेदे ॥

पीतवासाः । पुं० श्रीकृष्णे । त्रि० पीतवस्त्रवति ॥

पीतबीजा । स्त्री० मेथिकायाम् । पीतानि बीजानियस्याः ॥ त्रि० पीतवर्णबीजयुक्ते ॥

पीतवृक्षः । पुं० श्योनाकप्रभेदे ॥ सरलवृक्षे ॥

पीतशालः । पुं० असनवृक्षे ॥

पीतसारः । पुं० मलयजे ॥ गोमेदकमणौ ॥ तुरुष्के । बीजके । अङ्कोठवृक्षे ॥ न० हरिचन्दने ॥

पीतसारकः । पुं० सर्जकवृक्षे विजयसारइतिख्याते ॥ पीतः सारो स्य ॥ निम्बवृक्षे ॥ अङ्कोठवृक्षे ॥ इ० रा० नि० ॥

पीतसारि । न० स्रोतोञ्जने ॥

पीतसालकः । पुं० सर्जकवृक्षे । असने । बन्धूके । विजयसार० इ० ख्याते । पीतः सारोऽस्य । स्वल्पार्थे कस्त्वम् ॥

पीतस्फटिकः । पुं० पुष्परागमणौ ॥

पीता । स्त्री० हरिद्रायाम् ॥ दारुहरिद्रायाम् । महाज्योतिष्मत्याम् ॥ कपिलशिंशपायाम् ॥ प्रियङ्गौ ॥ गोरोचनायाम् । अतिविषायाम् ॥ पीयतेस्म । पीङ्पाने० पापाने वा । कर्मणि क्तः । सुमास्थेतीत्त्वम् ॥

पीताङ्गः । पुं० श्योनाकप्रभेदे ॥

पीताब्धिः । पुं० अगस्त्यमुनौ । पीतः अब्धिर्येन सः ॥

पीताभम् । न० कालीयके । हरिचन्दने । पीताआभायस्यतत् ॥ त्रि० । पीतकान्तौ ॥

पीताम्बरः । पुं० अच्युते । विष्णौ ॥ पीतमम्बरंयस्य सः । शैलूषे । न० हरिद्राभवसने । पीतवर्णकौशेयवस्त्रे ॥ त्रि० पीतवस्त्रयुक्ते ॥

पीताम्बरा । स्त्री० वगलादेव्याम् ।

पीताश्मा । पुं० पुष्परागमणौ ॥

पीतिः । पुं० घोटके । तुरगे ॥ इत्वरः ॥ पिबति । पापाने । क्तिच् । सुमास्थेतीत्त्वम् ॥

पीतिः । स्त्री० पाने । द्रवद्रव्यस्यगलाधःकरणे ॥ शुण्डिकागृहे ॥ (?) पानम् । पा० । स्त्रियांक्तिन् । घुमास्थेतीत्त्वम् ॥ शुण्डायामिति शब्दचन्द्रिका ॥

पीतिका । स्त्री० पीतयूथ्याम् ॥ दारुहरिद्रायाम् ॥ हरिद्रायाम् ॥

पीतुः । पुं० । सूर्ये । वह्नौ ।

पिबति । पा० । प : किचेति तुन् ॥
पीथ : । पुं० यर्के । यग्नौ । काले ॥ न० । जले । घृते । पिबति । पा० । पातॄतुदीत्यादिनाथक् ॥
पीथि : । पुं० घोटके ।
पीन : । त्रि० स्थूले ॥ प्यायतेस्म । ओप्यायीवृद्धौ । गत्यर्थेति क्तः । ओदितश्चेतिनत्वम् । प्याय : पीभाव : ॥
पीनस : । पुं० रोगविशेषे । नासा स्रावे । प्रतिश्याये ॥ अस्यनिदान म् ॥ यथा । आनह्यतेयस्यविशु ष्यतेयप्रक्लिद्यतेधूप्यतिचैवनासा । नवेत्तियोगन्धरसांश्चजन्तुर्जुष्टं व्यव स्येत्खलुपीनसेन ॥ तचानिलश्ले ष्मभवविकारंब्रूयात्प्रतिश्यायसमा नलिङ्गम् ॥ अस्यौषधम् । यथा । पिप्पलीत्रिफलाचूर्णैंमधुसैंधवसंयुत म् । सर्वरोगज्वर श्वासशोषपीन सहृद्भवेत्तद्वत् ॥ पीनंस्यति० सा यतिश । पीनस्ताकास्ति० यैव यैवा । आतोनुपेतिक : ॥
पीनसा । स्त्री० कर्कट्याम् ॥ रा० नि० ॥
पीनसी । त्रि० पीनसरोगिणि ॥
पीनस्कन्ध : । पुं० महिषे ॥
पीनोध्नी । स्त्री० पीवरस्तन्यांगवि ॥ पीनमूधोऽस्या : । उधसोऽनङ् । बहुव्रीहेरूधसोङीष् ॥
पीपरि : । पुं० फ्लक्षवृक्षे ॥ रा० नि० ॥
पीयु : । पुं० काले । रवौ । घूके । पेचके ॥ सुवर्णवायसयोरिति दीक्षित : ॥ पिबति । पा० । खर शङ्कुपीयुनीलङ्गुलिगु० इतिकुप्र त्यय : धातोरीत्वयुगागमश्च ॥
पीयूषम् । न० अमृते । अमृतायाम् । गुडूच्याम् ॥ यथा । पीयूष लौकप० ... द्र० लोलिम्बराज : ॥ दुग्धे । पुं० न० नवसूतधेनो : सप्तदिवसावधि क्षीरे । मयूखे । पीयते० पीय्य ते० अनेनवा । पीय द्र० सौत्रो धातु : प्रीतौ । पीयेरूषन् ॥
पीयूषमहा : । पुं० चन्द्रे ॥ द्र० म० रत्नावली ॥
पीयूषरुचि : । पुं० चन्द्रे ॥ त्रि० । अमृतप्रिये ॥
पीलक : । पुं० पिपीलिकायाम् ॥ द्र० हैमचन्द्र : ॥
पीलु : । पुं० प्रसूने । परमाणौ । मतङ्गजे । तालस्थाणिखण्डे ॥ काण्डे । वाणे । म्लादिदेशेषु खनाम्नाप्रसिद्धे पादपविशेषे । गुड फले । कृमिविशेषे । पुष्पद्रुमे ॥ पीलयति । पीलप्रतिष्टम्भे । मृगय्वादित्वात्कु : । न० पीलुवृच

पीततण्डुला । स्त्री० वृहतीप्रभेदे । घण्टिकाख्ये । पुत्रप्रदायाम् । बहुफलायाम् ॥

पीततुण्ड : । पुं० कारण्डवपक्षिणि ॥ सुगृहे ॥

पीततैला । स्त्री० महाज्योतिष्मत्याम् ॥ ज्योतिष्मतीलतायाम् ॥

पीतदारु : । न० देवदारुणि ॥ पीतस्वतदारुच ॥ हरिद्रौ ॥ सरले ॥

पीतदुग्धा । स्त्री० हिमचोयाम् ॥ पीतंदुग्धमस्याः ॥ धेनुष्यायाम् ॥

पीतद्रु : । पुं० दारुहरिद्रायाम् ॥ पीतद्रवति । द्रुगतौ । मितद्र्वादित्वाट्डु : ॥ पीतश्चासौद्रुश्चेति ॥ सरलवृक्षे ॥

पीतन : । पुं० आम्रातके ॥ प्लक्षे ॥ न० पीतशारुणि ॥ कुङ्कुमे । हरितालो ॥ पीतकरोति । तत्करोतीति णिच् । बहुलमन्यत्रापीतियुच् । स्युर्वा ॥ यद्वा । पीयते । पीङपाने । बा० तनन्० गुणाभावश्च ॥ पीतंवर्णंनयतिवा । नयगतौ । गीण् वा । अन्येभ्योपीतिड: ॥

पीतनक : । पुं० आम्रातके ॥

पीतनी । स्त्री० शालपर्ण्याम् ॥

पीतपर्णी । स्त्री० क्षिप्रधन्याम् ।

पीतपादा । स्त्री० शारिकापक्षिणि ॥ पीतचरणयुक्ते ॥

पीतपुष्प : । पुं० चम्पकवृक्षे ॥ कर्णिकारे ॥ पिण्डीतकप्रभेदे ॥ पीतंझिण्ट्याम् ॥ कूष्माण्डे ॥ पीतानि पुष्पाण्यस्य ॥ न० । आहुल्यवृक्षे ॥ हरिद्राभकुसुमे ॥

पीतपुष्पा । आढक्याम् ॥ इन्द्रवारुण्याम् ॥ झिञ्झिरिष्टाक्षुपे ॥ सर्कोटक्याम् ॥

पीतपुष्पी । स्त्री० महापुष्पाम् ॥ पीतदाम्यालके ॥ सहदेव्याम् ॥ महाकोषातक्याम् ॥ त्रपुष्याम् । राजकोशातक्याम् ॥

पीतफल: । पुं० शाखोटवृक्षे ॥ कर्मरङ्गवृक्षे ॥ पीतानिफलान्यस्य ॥

पीतफलक । पुं० शाखोटवृक्षे ॥

पीतवालुका । स्त्री० हरिद्रायाम् ॥ पीतवर्णसिकतायाम् ॥

पीतभद्र : । पु० झिञ्झिराले ॥

पीतभृङ्गराज : । पुं० स्वर्णभृङ्गारे । हरिप्रिये ॥

पीतमणि : । पुं० पुष्परागे ॥ गोमेदे ॥

पीतमस्त: । पुं० खगान्तरे । कलिकारे ॥

पीतमाक्षिकम् । न० मधुप्रभेदे ॥

पीतमुण्ड: । खगविशेषे । कलिकारे ॥

पीतमुद्ग : । पुं० वस्रो । प्रवेले । शारदे । सोनामूंगा इ० भा० इ० हे० ॥

पीतमूलकम् । न० गर्जरे । इ० रा० नि० ॥

पीतयूथी । स्त्री० स्वर्णयूथ्याम् । सोनजुही० इ० भा० ॥

स्वफले । पीलू० इ० भा० ॥ पीलु श्लेष्मसमीरघ्नं पित्तलंभेदिगुल्मनुत् । स्वादुतिक्तञ्चयत्पीलुतन्नात्युष्णं त्रिदोषहृत् ॥

पीलुकः । पुं० मधूकप्रभेदे ॥

पीलुकुणः । पुं० पीलूनांपाके ॥ तस्य पाकमूलइत्यादिनाकुणप्प्रत्ययः ॥

पीलुनी । स्त्री० मूर्वायाम् ॥

पीलुपत्रः । स्त्री० लताविशेषे । मोरटायाम् ॥

पीलुपर्णी । स्त्री० बिम्बिकायाम् ॥ मूर्वायाम् ॥ ओषधिभिदि ॥ पीलोरिवपर्णान्यस्याः ॥ पाककर्णेतिङीष् ॥

पीवा । त्रि० स्थूले ॥ प्यायते । प्यैङ्वृद्धौ । प्याप्योः सम्प्रसारणं चेतिक्वनिप् ॥

पीवरः । त्रि० स्थूले । मोटा इति भाषा ॥ प्यायते । प्यैङ् । छित्वरच्छत्वरेतिवरच् प्रत्ययान्तो निपातितः ॥ पुं० कूर्मे ॥

पीवरस्तनी । स्त्री० स्थूलस्तन्यां स्त्रि । पीनोध्न्याम् ॥ पीनस्तनविशिष्टायांनार्य्याम् ॥ पीवराः स्तनाः पीवरौवास्तनौयस्याः स्वाङ्गाच्चोपसर्जनादितिङीष् ॥

पीवरा । स्त्री० अश्वगन्धायाम् ॥ शतावर्याम् ॥ स्थूलायाम् ॥

पीवरी । स्त्री० शालपर्ण्याम् ॥ शतम्स्याम् ॥ प्यायते । प्यैङ् । प्याप्योः सम्प्रसारणञ्चेतिक्वनिप् स्त्रियांवनोरचेतिङीपौ ॥

पुंखः । पुं० गन्धमूषिके ॥

पुंश्चलः । पुं० व्यभिचारिणि ॥ यथा ॥ ललाटोपस्थतास्तिस्रोरेखाःस्युःशतवर्षिणाम् । न्यपत्वं स्यात्सतस्भिरायुः पञ्चनवत्यथ ॥ अरेखिणायुर्नवतिर्विच्छिन्नाभिश्चपुंश्चलः ॥ इ० गरुडपु०

पुंश्चली । स्त्री० व्यभिचारिण्याम् । अतिचञ्चलायाम् । असत्याम् ॥ तत्स्वाश्वरित्रदोषाद्यथा । अशोकोपिद भुवनेदुर्लभंपुंश्चलीमनः । पुंश्चल्यां योषितिविप्रस्तोविधिनासविडम्बितः ॥ यथिष्टकृतस्ययशसाधर्मेणाखलु लोनच । वाञ्छितं नूतनंप्राप्य विनश्यतिपुरातनम् ॥ सदाखकान्तंसा ध्यासाक्षीयातस्याः प्रियोऽप्रियः । द्वेषिधर्म्मंपि पैवेश्वपुत्रेवस्त्रौनभर्त्तरि ॥ दारुणांपुंश्चलीचित्तं सदास्वकार्य्यंपि । प्राणाधिकंरतिज्ञंसाऽ स्ततहत्यापिपुंश्चली ॥ रतप्रदंरत्यं भिज्ञंविपदम्याभिपश्यति । सर्वेषां खलमस्थं वपुंश्चलीनांनकुत्रचित् ॥ दारुणापुंश्चली जातिर्नरजातिभ्य एवच ॥ निष्कृतिः कर्मभोगान्ते सर्वेषामस्तिनिश्चितम् ॥ नपुंश्चली नाविप्रेन्द्रयावच्चन्द्रदिवाकरौ । अन्यासांकामिनीनाञ्चकीटंहन्तुमया

दया। नास्तिपुंश्चलीनाञ्चकान्तं
कान्तंपुरातनम् ॥ रतिज्ञंनूतनंप्रा-
प्यद्विषन्तिपुरातनम्। कान्तंहत्वा
हिनस्त्येवसोपायेनावलीलया ॥ ० ॥
पृथिव्यांयानिपापानिपुंश्चलीष्वेव-
भारते। तिष्ठन्तिताभ्योनपरा: पा
पिष्ठा: सन्तिकेचन ॥ (०+०) ॥
पुंश्चलीपरिपक्वान्नंसर्व्वंपातकमिश्रि
तम्। दैवेकर्म्मणिपैत्रेचदेयंमयत-
यामलम् ॥ अन्नंविष्ठामयोमूत्रंपुंश्च
लीनाञ्चनिश्चितम्। दत्त्वापितृभ्यो
देवेभ्योभुक्त्वाचनरकंव्रजेत् ॥ शतव-
र्षंकालसूत्रेपच्यतेवसुदारुणे। घोरा
न्धकारेक्रमयस्तंदशन्तिदिवानिश-
म् ॥ पुंश्चल्यन्नस्ययोभुङ्क्तेदेशाद्व
हिनराधम: । सप्तजन्मकृतंपुण्यंत
स्यनश्यतिनिश्चितम् ॥ आयु: श्री-
र्यशसांहानिरिहलोकेपरत्रच। त-
स्याध्वगाद्ववनीयंपापकरंकालचक-
म् ॥ (०:‡०+) ॥ पुंश्चलीदर्शने
पुण्यंयात्रासिद्धिर्भवेद्ध्रुवम्। स्पर्शने
चमहापापंतीर्थस्नानाद्विशुध्यति ॥
स्नानंदानंव्रतंचैवजपश्चदेवपूजनम्।
निष्फलंपुंश्चलीनाञ्चभारतेजीवनंय
था ॥ (००+००) ॥ उपस्थितस-
कामपुंश्चलीत्यागेदोषोयथारहस्युप
स्थितांकामात्पुंश्चलींचेज्जितेन्द्रियः
परित्यजेद्धर्म्मभयाद्धर्मान्नरकंव्रजे
त् ॥ (+०००+) ॥ सर्वैर्देवतपस्त्रा-
तापस्विन्याज्यस्थंगर्हितत्वंचयथा।
उपस्थिताचयायोषित्त्याज्याराशि
परमेपि। श्रुतौश्रुतमितित्याज्यास
र्वदैवतपस्विनाम् ॥ अतोसर्वा: प-
रित्याज्या: पुंश्चलीचविशेषत: । ध
नायु: प्राप्यशसांनाशिनीदु: ख
दायिनी ॥ स्वकार्यतत्पराशश्वत्प-
रकार्यविघातिनी। निष्ठुरानरघा-
तिन्य: सर्व्वापदीजरूपिणी ॥ विद्यु
द्दीप्तिर्जलेरेखाक्षोभान्मैत्रीयथाभवे
त्। परद्रोहोयथाप्रासम्यत्कुलटाप्रेम
तत्परम्। सर्वेभ्योहिंस्रजन्तुभ्योपि
पक्षीत्रासदैवसा। योषिदश्वसेत्तां-
सम्मुढोपिपतत्यसदेपदे ॥ इतिब्र-
ह्मवैवर्त्तेश्रीकृष्णजन्मखण्डे २३।
२४। ७२ अध्याय: ॥ पुंसोभर्त्तु:
सकाशाच्चलतिपुरुषान्तरंगच्छति।
चलगतौ। अच्। गौरादि: ॥

पुंश्चिह्नम्। न० शिश्ने ॥

पुंसवनम्। न० दुग्धे। गर्भे ॥ सं-
स्कारविशेषे ॥ द्वितीयेवातृतीयेवा
मासिपुंसवनंभवेत्। व्यक्तेगर्भेभवे
त्कार्यंसीमन्तोन्नयनंतथा ॥ पुमान्
सूयतेऽनेन। षुञ्०। ल्युट् ॥

पुंस्त्वम्। न० रेतसि। शुक्रे ॥ पुरुष-
त्वे ॥

पुंस्त्वविग्रह: । पुं० भृत्ये ॥

पुक्कस: । पुं० श्वपचे ॥ अधमे ॥ पु
त्कुत्सितंपुष्यंवापुमांसंधावाक्रम

ति । कसगतौ । अच् । मू॰ कोवा । प॰ । निषादाच्छूद्रायांजाते । जातोनिषादाच्छूद्रायांजात्याभवति पुक्कस : ॥

पुक्कसी । स्त्री॰ कालिकायाम् ॥ नील्याम् ॥

पुङ्ग : । पुं॰ मङ्गलाचारे ॥ शराङ्गे । वाणमूले ॥ श्येने ॥

पुङ्खानुपुङ्खम् । न॰ मङ्गलामङ्गले ॥ यथा । पुङ्खानुपुङ्खविषयेक्षणतत् परोपिधीरोनमुञ्चति मुकुन्दपदार विन्दे । सङ्गीतनृत्यगतितालवशंगतापि मौलिस्थकुम्भपरिरक्षणधीर्न टीवेति ॥

पुङ्ग : । पुं॰ न॰ पुङ्खे ॥ इतिशब्द चन्द्रिका ॥

पुङ्गन : । पुं॰ आत्मनि ॥ इतिभूरि प्रयोग : ॥

पुङ्गव : । पुं॰ बलीवर्दे । वृषे ॥ पुमांश्चासौगौश्च ।गोरतद्धितलुकीति टच् ॥ औषधमात्रभेदे ॥ उत्तरपदस्थ : श्रेष्ठे ॥ ऋषभौषधे ॥ श्रेष्ठे ॥ पुरुषर्षभे ॥ पुमान्गौरिव । उपमितिसमासः । पूर्ववत्टच् ॥

पुच्छ : । पुं॰ पश्चात्प्रदेशे ॥ पुं॰न॰ लाङ्गूले ॥ न॰ कलापे । समूहे । लोमवल्लाङ्गूले ॥ पुच्छति । पुच्छप्रमादे । प॰ घञ् । पृ॰ । पुच्छभागे इतिनिपातनाद्दायनाय : ॥

लोमटकाना॰ इतिभा॰ ॥

पुच्छदा । स्त्री॰ । लक्ष्मणाकन्दे ॥ इ॰ राजनिघण्ट : ॥

पुच्छी । पुं॰ कुक्कुटे ॥ अर्कवृक्षे ॥ त्रि॰ । लाङ्गूलवति ॥

पुञ्ज : । पुं॰ राशौ । धान्याद्युच्छ्रित छन्दे ॥ पिञ्जयति॰ पिञ्ज्यतेवा । पिजिहिंसा.वलादाननिकेतनेषु । अप्॰बभ्वा । पृ॰ । यद्वा । उत्तम्यापुमांसंजयति । अन्ये॰ ड : ॥

पुञ्जकस्थली । स्त्री॰ अप्सरोविशेषे ॥

पुट : । पुं॰ वालपल्लवे ॥ न॰ । जातीफले ॥ उपर्यधोभवापन्नसंयुक्तास्ट श्चादिकपालद्वयरूपौषधपाकपात्रे ॥ धात्वादिमारणोपयुक्तान्पुटप्रकारा नाहरसप्रदीप : । लोहादेरपुनर्भाव स्तद्गुणस्य गुणाव्यता । सलिले तरणश्चापितसिद्धि : पुटनाद्भवेत् ॥ गम्भीरेविस्तृतेकुण्डे क्षिप्ते चतु रस्रके । वनोपलसहस्रे णपूरितेपुट मौषधम् । कोष्ठेकर्षं प्रयत्नेनगोधि छोपरिधारयेत् । वनोपलमहस्रा र्द्ध कोष्ठिकोपरिनि : क्षिपेत् ॥ व ह्निविनि : क्षिपेत्तन्महापुटमिति स्मृतम् ॥ १ ॥ कोष्ठंभूषा । गोष्ठा॰ गोष्ठा ॥ +०+० ॥ सपादहस्तमानेनकुण्डे निम्ने तथा यते । वनोपलसहस्रे णपूर्णंमध्ये विधारयेत् ॥ पुटनद्रव्यसंयुक्तांकी

स्यसतुलेखनः ॥ हर्षवैलार्थमितरः पित्तास्रगव्रणवातनुत् । इतरोरोपणः । स्नेहमांसवसामज्जमेदः स्वादौषधैः कृतः ॥ स्नेहनः पुटपाकः स्याद्धार्यो द्वे वाक्शतेतु सः । वाक्शतंकोटिकाशतम् । जाङ्गलानां यकृन्मांसैर्लेखनद्रव्यसंयुतैः ॥ कृष्णालोहरजस्ताम्रकांस्यविद्रुमसिन्धुजैः । समुद्रफेनकासीसस्रोतोञ्जनदधिमस्तुभिः ॥ लेखनोवाक्शतंतस्य परंधारणमिष्यते । स्तन्यजाङ्गलमधुाज्यतिक्तकद्रव्यभावितः ॥ लेखनात्त्रिगुणोधार्यः पुटपाकस्तुरोपणः । तिक्तकद्रव्याण्याह । निम्बामृताहपपटोलनिदिग्धिकाभिः स्यात्पञ्चतिक्तकमितिप्रथितोगणोयम् । भावैरेतर्पणोक्तास्तुक्रियाव्यापत्तिदर्शने । व्यापत्तिदर्शने । मिथ्याकृतपुटपाकजनितव्याधिदर्शने । तेजांस्यनिलमाकाशमादर्शभास्वराणिच । नेत्रेतर्पितैनैत्रे यथवापुटपाकवान् ॥ इति भावमिश्रः ॥

पुटपाकलम् । न० मांससाव्यञ्जनान्तरे ॥ गुरुयन्त्रेपायसृपक्वं तज्ज्ञेयं पुटपाकलम् ॥

पुटभेदः । पुं० नदीवक्रे ॥ पत्तने । नगरे ॥ धातोदौ ॥ तटिनीमुखे ॥ पत्राकारैर्जलानामधीयाने ॥ पुटंसंश्लिष्टं भिनत्ति । भिदिर० । कर्मण्यण् ॥ पाषाणविशेषे ॥ पुटैःपुटैर्भेद्यते इ० ॥

पुटभेदकः । पुं० पाषाणविशेषे ॥

पुटभेदनम् । न० पत्तने । स्थानीये । नगरे ॥ पुटानिभिद्यन्तेऽत्र । भिदिर्० । अधिकरणेल्युट् । युज्जा ॥

पुटालुः । पुं० शूकरकन्दे । कोलकन्दे ॥

पुटिका । स्त्री० एलायाम् ॥

पुटितम् । न० अहिपुटे ॥ हस्तपुटे । त्रि० । पाटिते ॥ स्यूते ॥

पुटी । स्त्री० कौपीने ॥ आच्छादने ॥ पत्रादिनिर्मितपुष्पाद्याधारे । पुडिया० पुड़ी० इ० भा० ॥ गौ० ङीप् ॥

पुटोटजम् । न० श्वेतच्छत्रे ॥ इ० विश्वाद्यपि ॥

पुटोदकः । पुं० नारिकेले ॥ इ० हा० ॥

पुण्डरी । पुं० हस्तिनांमनुष्याणाञ्च घुष्टेमुद्रविटपे । शालपर्णीप्रसमानपत्रे । पौण्डरीके । चक्षुष्ये । सालपुष्पे ॥ इ० शब्द० ॥

पुण्डरीकम् । न० सिताम्भोजे ॥ सितच्छत्रे ॥ भेषजे ॥ पुं० । व्याघ्रे । अग्निदिङ्नागे ॥ कोषकारान्तरे ॥ सहकारे ॥ गणधरे ॥ राजिलाशै ॥ गजज्वरे ॥ मदनवृक्षे ॥ कमण्डलौ ॥ श्वेतवर्णे ॥ शाले

चर्मातिविशेषे ॥ क्षुपविशेषे ॥ राज घणम् । सर्वे संरक्षपर्यन्तं पुण्डरीकदलोपमम् । सोऽक्षिधन्वसरागस्य पुण्डरीकंप्रचक्षते इति० । पुण्डरीकसर्गयोगात्पुण्डरीकः । यशं पाद्यत् । पुण्डयति । मण्डिभूषायाम् । पुण्डिच । फर्फरीकादयश्च स्थरीकम् ॥

पुण्डरीकाक्षः । पुं० विष्णौ । नारायणे । हृत्पुण्डरीकेप्रकाशमानेवासुदेवे ॥ तस्यस्मरणादेवशुचिर्भवति । यथा । अपवित्रः पवित्रोवासर्वावस्थाङ्गतोपिवा । यःस्मरेत्पुण्डरीकाक्षंसवाह्याभ्यन्तरः शुचिरितिस्मृतेः ॥ पुण्डरीकमिवाक्षिणीयस्य । बहुव्रीहौसक्थ्यक्ष्णोः स्वाङ्गात्षच् । पुण्डरीकेषु अक्षिणयस्य वा ॥ पुण्डरीकाख्यानेचक्षियस्येतिवा ॥ परमर्थस्सुहरिस्तं साक्षमितिपुण्यदक्तोर्वे व्ययः ॥ यद्वापुण्डरीकलोकास्तमश्नवति । अशूव्याप्तौ । कर्मण्यण् । तत्कायतिवा । कैशब्दे । आतोनुपसर्गेइतिकः । अन्येषामपीतिदीर्घः । आङ्प्रश्नेपोवा । लवसुपीतिसूत्रविमुक्तेतिकः ॥ न० । पुण्डर्ये ॥

पुण्डरीयकम् । न० प्रपौण्डरीके । स्थलपद्मे ॥

पुण्डर्यम् । न० प्रपौण्डरीके ॥ पुण्डयति । पुडिखण्डने । अच् । पुंडस्याव्धेः प्रधानम् । शकन्ध्वादिः

पुण्ड्रः । पुं० दैत्यविशेषे ॥ इक्षुप्रभेदे । पौंडा० इ० भा० ॥ अतिमुक्तविचे ॥ कृमौ ॥ पुण्डरीके ॥ तिलके । पुष्पवृक्षविशेषे ॥ वृक्षभेदे ॥ देशविशेषेतु पुण्ड्रः ॥ न० । कर्दपुण्ड्रादौ ॥ पुण्डयते । पुडिखण्डने । स्फायितञ्चीतिरक् ॥

पुण्ड्रकः । पुं० अतिमुक्ते । वासंत्याम् । माधवीलतायाम् । तिलकवृक्षे । खिरपुष्पाम् ॥ इक्षुप्रभेदे । पौण्डा इ० भा० ॥ पुण्डति० पुण्ड्रातेवा । मण्डिवत्स्मने० पुडिच । स्फायीतिरक् । स्वार्थेकन् ॥

पुण्ड्रकेलिः । पुं० इभे । हस्तिनि ॥ पुण्ड्रेपुकेलिर्यस्य ॥

पुण्यम् । न० धर्मे ॥ सुकृते ॥ यथा । पङ्क्तिहेनापिकिम्तेनसमर्थेनचदेहिनाम् । यत्पुण्यंभारमुद्वोढुमशक्तःपारलौकिकमिति ॥ तस्माद्यतेतपुण्येषुयवद्व्यूयक्षतोभिरमिति ॥ विधिविहिते ॥ सदाचारे ॥ शोभनकर्मणि ॥ त्रि० । शोभने । रमणीये । सुन्दरे ॥ पावने ॥ शुद्धे ॥ पुनाति० पूयतेऽनेनवा । पूञ् । पूञो यसुडहृस्वश्चेतियत्सादहस्वश्च ॥ यद्वा । पुण्यति । पुणकर्मणिशुभे । इगुपधेतिकः । पुण्येसाधुः । तत

साधुरितियत् ॥ दयासमं नास्तिपुण्यं पापं हिंसासमं नहीतिदेवीभागवतम् ॥

पुण्यकम् । न० विधिविहितोपवासकृच्छ्रचान्द्रायणप्राजापत्यव्रतभोजनादिव्रते ॥ पुण्यमेव । संज्ञायांकन् ॥

पुण्यजनव्रतम् । न० ब्रह्मवैवर्त्तोक्ते । स्त्रीकर्त्तव्ये नियमविशेषे ॥

पुण्यकृत् पुं० अश्वमेधादियाजिनि ॥ आश्वमेधस्य कृति ॥ त्रि० पुण्यकर्त्तरि । धार्म्मिके ॥ पुण्यकृतवान् सुकर्मपापमन्त्रपुण्येषुकृञः इति कृञः क्विप् ह्रस्वस्येतितुक् ॥ पुण्यंकारयतीति वा । बहुलमन्यत्रापीति णिलुक् ॥

पुण्यगन्धः । पुं० चम्पके । पुण्योगन्धोऽस्य ॥

पुण्यजनः । पुं० यक्षे ॥ राक्षसे ॥ सत्यादिविजयधरजनमाया पुण्यश्चासौ जनश्च ॥ धार्म्मिके ॥ पुण्याश्रयो जनः । मध्यमपदलोपीसमासः ।

पुण्यजनेश्वरः । पुं० कुबेरे । तस्यवशवर्त्ते ॥ पुण्यजनाः यक्षाः तेषामीश्वरः ॥

पुण्यतृणम् । न० श्वेतकुशे ॥

पुण्यदर्शनः । पुं० चाषपक्षिणि ॥

पुण्यफलः । पुं० वनविशेषे । लक्ष्म्याराम ॥ न० । धर्म्मजन्यफले ॥

पुण्यभाक् । त्रि० पुण्यविशिष्टे ॥

पुण्यभूः । स्त्री० आर्य्यावर्त्ते ॥ पुण्यस्य भूः । पुण्याचासौभूमिश्चेतिवा ॥

पुण्यभूमिः । स्त्री० आर्य्यावर्त्ते ॥ पुण्यस्यभूमिः । पुण्याचासौभूमिश्चेतिवा ॥

पुण्यवान् । त्रि० सुकृतिनि । धन्ये ॥ पुण्यमस्यास्ति । मतुप् । मादुपधायाश्चमतोर्वोऽयवादिभ्यः इतिवत्वम् ॥

पुण्यश्लोकः । पुं० जनार्द्दने । विष्णौ ॥ नलइतिप्रसिद्धे राजनि ॥ युधिष्ठिरे ॥ पुण्यानिपावनानि श्लोकानियशांसियस्य ॥ पुण्यानिकवीनांपद्यानिवायस्मिन् ॥ त्रि० पुण्यचरित्रे ॥

पुण्यश्लोका । स्त्री० द्रौपद्याम् ॥ वैदेह्याम् । सीतायाम् ॥ यथा । पुण्यश्लोकोनलोराजा पुण्यश्लोकोयुधिष्ठिरः । पुण्यश्लोकाचवैदेही पुण्यश्लोकोजनार्द्दनइतिपुराणम् ॥

पुण्या । स्त्री० मद्रायाम् ॥ तुलस्याम् ॥ पुण्यजनिकायाम् ॥

पुण्यात्मा । त्रि० धर्म्मशीले ॥ पुण्यआत्माऽस्य ॥

पुण्याहम् । न० शोभनदिवसे ॥ पुण्यस्तदहश्च । राजाहः सखिभ्यष्टजिति टच् । उत्तमैकाभ्यामित्यह्लादेशो न । पुण्यसुदिनाभ्यामितिक्लीबत्वम् ॥ मङ्गले ॥ यथा । पुण्याहवाचनम् ॥

पुण्याहवाचनम् । न० दैवादिकर्मा

पुत्र :

सितवार्यं मुनिपुङ्गव । बाल्ये वयसि सम्प्राप्ते रिपुवत्वर्ततेसदा ॥ पितरंमातरंचैव क्रीडमानोहिताडयेत् ताडयित्वाप्रयात्येवंप्रहस्यै वपुनः पुनः ॥ पुनरायातितं तत्रपितरं मातरंपुनः । सक्रोधोवर्तंतेनित्यं मैवकर्मणिसर्वदा ॥ पितरंमारयित्वातु मातरंचपुनः पुनः । प्रयात्येवंसदुष्टात्मा पूर्ववैरानुभावतः ॥ ३ ॥ अथातः संप्रवक्ष्यामियस्माल्लभ्योभवेत्प्रियः । बालभावः प्रियं कुर्यात्बाल्ये नटनक्रीडनैः ॥ वयः प्राप्यप्रियंकुर्यान्मातापितोरनन्तरम् । भक्त्यासन्तोषयेन्नित्यं तावुभौपरिपालयेत् ॥ स्नेहेनवचसाचैवप्रियसम्भाषणेनच । मृतौगुरुसमाख्यातस्तु स्नेहरुदतेपुनः ॥ श्राद्धकर्माणि सर्वाणि पिण्डदानादिकांक्रियाम् । करोत्येवंसदुःखार्त स्नेहयात्रा प्रयच्छति ॥ ऋणत्रयान्वितः स्नेहान्निर्यापयतिनिश्चितः । यस्माल्लभ्यं भवेत्कान्तप्रयच्छतिनसंशयः ॥ पुत्रीभूत्वातस्यप्राक्तनेनविधिनाखिल ॥ ४ ॥ उदासीनप्रवक्ष्यामितवार्ये प्रियसाम्प्रतम् । उदासीनेनभावेनसदैवपरिवर्त्तते ॥ ददातिनैवग्रृह्णातिनक्रुध्यतिनतुष्यति । नैवोपयातिसंत्यज्यउदासीनोद्विजोत्तम ॥ तवाग्रे कथितंसर्वं पुत्राणांगतिरीदृ

शी । यथापुत्रास्तथाभार्या पितामाताथबान्धवाः ॥ भृत्याश्चान्ये समाख्याताः पशवस्तुरगास्तथा । गजा महिष्योदासश्चसर्वऋणसम्बन्धिनः स्वमी ॥ ६० ॥ सुपुत्रलक्षणंतु । दण्डिउवाच । पुत्रस्यलक्षणंपुण्यं तवाग्रे प्रवदाम्यहम् । पुण्यप्रसक्तो यस्यात्मासत्यधर्मरतः सदा ॥ बुद्धिमान्ज्ञानसम्पन्नस्तपस्वीवाग्विदांवरः । सर्वकर्मसुसदृधीरोवेदाध्ययनतत्परः ॥ सर्वशास्त्रप्रवक्ताचदेवब्राह्मणपूजकः । याजकः सर्वयज्ञानां दातात्यागी प्रियम्वदः ॥ विष्णुध्यानपरोनित्यं शान्तोदान्तः सुहृत्सदा । पितृमातृपरोनित्यंसर्वसुजनवत्सलः ॥ कुलस्यतारकोविद्वान् कुलस्यपरिपोषकः । एवंगुणैः सुसंयुक्तः सुपुत्रः सुखदायकः ॥ पुत्रस्यजन्मतीर्थत्वं यथा । सर्वतीर्थाद्वरंतीर्थंपुत्रतीर्थंमुदाहृतम् ॥ यदेवोवैपावदेपौत्रश्चधर्मपविष्णुतः । पृथुमापुत्रतीर्थेन पवित्रोऽगात्परंपदम् ॥ सत्पुत्रंपरमंतीर्थंप्राप्य मुच्यन्तिपूर्वजाः । पितापितृगणसुतः स्नातजातेपुत्रे महात्मनि ॥ वैष्णवपुत्रस्यपूर्वपुत्रजातृत्वं यथा । वैष्णवोयदिपुत्रःस्यात्समस्तारयति पूर्वजान् । पितॄनधस्तात्सवंशांस्तारयत्यतिपावनः ॥ + ॥ कुपुत्रजन

पुत्र :

नैमित्तृणांनरकगमनंयथा । तथाय-
दिकुपुत्रःस्यात्तेनमज्जन्तिपूर्वजाः
। सुघोरेनरकेदीनाः भपन्तिचमुहु
र्मुहुः ॥ यथा नलेकुप्लवेनतरन्म
ज्जतिमूढधीः । तथापिताकुपुत्रे
णतमसान्धे निमज्जति ॥ जातमा
त्रे कुलेजन्तौसंशेरतेपितामहाः ।
किमेषोऽधोनयेदस्मात्किं वावैषा
वोभवन् ॥ इतिपाद्मे भूमिखण्डे
११ । १२ । १८ । १२० अध्यायः
॥ सप्तविधाः पुत्रा यथा । वरजो
वीर्यजस्सैयपोभवः मालकस्तथा ।
विद्यामन्त्रसुतानाश्चगृहीतः सप्तमः
सुतः ॥ इतिब्रह्मवैवर्त्ते ॥ इति
ब्रह्मवैवर्त्तेप्रकृतिखण्डे ५६ अध्या-
यः पुत्रमुखदर्शने पुण्यं यथा । श्री
पार्वत्युवाच । शृणुनागच्छप्राणेश
तत्पुत्रफलदायकम् । कल्पे कल्पे
ऽध्यास्यसिर्यं तंपश्यागच्छमन्दिरम् ।
श्रीशं पुत्रमुखंनश्यपुण्यबीजंमहोत्स
वम् । पुन्नामनरकत्राणकारणंभव
तारणम् ॥ स्नानश्चसर्वतीर्थेषुसर्वय
ज्ञेषुदक्षिणा । पुत्रस्यदर्शनस्यास्य
कलांनार्हन्तिषोडशीम्सर्वदानेनयत्पु
ण्यं यत्पृथिव्याः प्रदक्षिणं पुत्रद
र्शनपुण्यस्यकलां नार्हन्तिषोडशीम्
सर्वास्तपोभिर्विप्रभ्यु यद्देवानशनैः
र्व्रतैः । यत्पुण्यैऽवपुण्यस्यकलाना
र्हन्तिषोडशीम् । यद्विप्रभोजनैःपु

पुत्र :

ण्यंयद्देवसुरसेवनैः । तत्पुत्रप्राप्ति
पुण्यस्यकलानार्हन्तिषोडशीम् ॥
इति ब्रह्मवैवर्त्ते गणपतिखण्डे ६
ऽध्यायः ॥ ०( +++ )० विद्यादि
रहितस्यपुत्रस्यनिन्दायथा । कोर्थः
पुत्रेणजातेनयोनविद्वान्नधार्मिकः ।
तयागवाकिंक्रियते यानदोग्ध्रीनग-
र्भिणी ॥ सचमध्यमोत्तमाधममिदा
त्त्रिविधः । यदुपात्तं यशः पित्रा
धनंवीर्यमथापिवा । तन्नाशयतेय
स्तुसनरोमध्यमःस्मृतः ॥ तद्वीर्या
द्यधिकंयस्तुपुनरन्यत्स्वशक्तितः ।
निष्पादयतितंप्राज्ञावदन्तिनरमुत्त
मम् । यः पित्रासमुपात्तानिधनवी
र्ययशांसिच । न्यूनतांनयतिप्राज्ञा
स्तमाहुः पुरुषाधममितिमार्कण्डे
यपुराणम् ) ॥ ०+० ॥ जायमानो
हरेद्दारान् वर्द्धमानोहरेद्धनम् ।
म्रियमाणोहरेत्प्राणान् नास्तिपुत्र
समोरिपुरितिनुकुपुत्रजन्यं दुःख
मनुभवंकुर्वाणस्योक्तिः ॥ संसारिणः
सुखं पुंसःस्त्युत्रमुखदर्शनम् । कुपु-
त्राचरिताद्दुःखंमरणाभ्यधिकंवि-
दुः ॥ ०( ०+० )० पुत्रस्यप्रशंसा
यथा । धनंनान्यश्चरत्नं यानत्सर्वंपु
त्रहेतुकम् । नभाति संयत्पुत्रे णाद्
द्रव्यंनिष्फलंभुवि ॥ शतकूपाधिका
वापीशतवापीसमंसरः । सरः श
ताधिकोयज्ञः पुत्रोयज्ञशताद्वरः

वक्तव्यमितिनिषेधोत्तरपठितेन ॰
अभ्रुकुंसादीनामितिवक्तव्यमिति
वार्त्तिकेनतन्निषेधाद्ध्रस्वः ॥ एवं
भ्रुकुटिशब्देपिबोध्यम् ॥

भ्रुकुटिः । स्त्री॰ भृकुटी । भ्रूकुट्या
म् । क्रोधादिनाललाटसङ्कोचने ॥
कुटेरिगुपधात्किदितीन् । भ्रुवोः
कुटिः । भ्रुकुंसवत्प्रक्रिया ॥

भ्रुकुटी । स्त्री॰ भ्रुकुटी । भ्रुवोः
कौटिल्ये ॥ कुटेरिगुपधादितीन् ।
कृदिकारादितिङीप् । भ्रुवोः
कुटी ॥ अभ्रुकुंसादीनामितिवा
र्त्तिकाद्ध्रस्वः ॥

भ्रूः । स्त्री॰ नेत्रोपरिभागस्थरोमराज्यां
चिल्लिकायाम् । भौं॰ इ॰ भा॰ ॥
भ्रमु॰ । भ्रमेर्डूः । टिलोपः ॥ यद्वा
भ्रमति । भ्रूमुचलने । भ्रमेर्डूः
॥ यद्वा । भ्राम्यति । क्विप् । जङ्ग
मादीनामिति॰ गमः क्वावित्यत्र
वार्त्तिकेन॰मलोपऊङ्चादेशः ॥

भ्रूकुंसः । पुं॰ भ्रूकुंसे । भ्रुकुंसे
। नर्त्तकेस्त्रीवेशे ॥ इ॰ भा॰ ॥ भ्रावणा
॰कुचुरादिण्यन्तात्कुंसेरच् ।
भ्रुवाकुंसोभाषणमस्य । इकोह्रस्वो
ऽङ्योगालवस्येतिसूत्रे॰इयङ्॰वङ्
भाविनाम॰ बानाह्रस्वेतिवार्त्तिका
द्ध्रस्वनिषेधः ॥

भ्रूकुटिः । स्त्री भ्रूकुट्याम् ॥ भ्रुवो॰
कुटिः इयङुवङ्भाविनामिति
निषेधाद्ध्रस्वोनभवति ॥

भ्रूकुटी । स्त्री॰ भ्रकुट्याम् । भ्रुकुटौ
॥ कुटेरिगुपधादितीन् । कृदिका
रादितिङीप् । भ्रुवोः कुटी ।
इयङुवङ्भाविनामितिह्रस्व नि
षेधः ॥

भ्रूणः । पुं॰ स्त्रीगर्भे । उदरस्थजन्तौ
॥ डिम्भे । अर्भके ॥ गर्भस्थाम्
॥ श्रोत्रियद्विजे ॥ भ्रूण्यते । भ्रूण
आशाविशङ्कयोः । घञ् ॥

भ्रूणहत्या । स्त्री॰ गर्भस्थबालकहन
ने॥ यथा । विविधाहृतंयेनमकारीं
तिचतुर्थाम् । कुलानिपातयेत्स
प्तभ्रूणहत्यावतस्वरेत् ॥

भ्रूणहा । त्रि॰ गर्भस्थबालकहन्तरि
॥ भ्रूणंहतवान् । हन॰ । ब्रह्म
भ्रूणवृत्रेषुक्विप् ॥ ब्रह्महणि ॥
भ्रूणहा॰ परिवेत्तासमएनमोच्यत
इतिव्याख्यानात् ।

भ्रूभङ्गः । पुं॰ भ्रूविक्षेपे । भ्रुवः
कौटिल्ये ॥ भ्रुवोभङ्गः ॥

भ्रेषः । पुं॰ अधःपाते । यथोचि
तात्॰ भ्रंशे ॥ भ्रेषणम् । भ्रेषृ च
लने । घञ् ॥ चलने ॥

भ्रेषणम् । न॰ चलने ॥

भ्रौणहत्यम् । न॰ भ्रूणघ्नोभावे ॥
ष्यञ् । हायिडनायनेतिनिपातना
त्तकारादेशः ॥

† ——॥—— †

म : । पुं० मकारे ॥ यमे ॥ समये ॥ विधे ॥ मधुसूदने ॥ चन्द्रशेखरे । शम्भौ ॥ ब्रह्मणि ॥ चन्द्रमसि ॥ मन्त्रे ॥ मङ्गले ॥ त्रिगुरौ०ऽऽऽ० ॥

मंहिष्ठ : । त्रि० महनीये । पूजनीये ॥

मकर : । पुं० नक्रे । याद : प्रभेदे । मगर० इतिभाषाप्रसिद्धे । भक्ष्याणांमध्येभगवद्विभूतौ ॥ निधिप्रभेदे ॥ दशमराशौ । चाक्रोबेरे ॥ हस्ताभ्यां कृतकच्छपाकारे... मनुष्याणांकार : । पृषोदरादि : ॥ यद्वा । मङ्कते । मकिमण्डने । अच् । आगमशास्त्रस्यानित्यत्वान्नुम् । मकंराति । रादाने । आतोनुपेतिक : ॥ दर्पकोऽप्युक्त : सारस्वतकोषे ॥ यदद्भुते ॥

मकरकुण्डलम् । न० मकराकृतिकर्णाभरणे ॥

मकरकेतन : । पुं० कामदेवे ॥ मकर : केतनं यस्य स : ॥

मकरध्वज : । पुं० कन्दर्पे । अनङ्गे ॥ मकरोनक्रोध्वजोयस्य स : ॥ रससिन्दूरविशेषे । चन्द्रोदये ॥ तत्प्रकारणप्रकारोन्यभरसेन्द्रचिन्तामणौ ॥

मकरन्द : । पुं० पुष्परसे ॥ मकरमपि द्यति०कामजनकत्वात् । दोअवखण्डने । आतोनुपेतिक : । पृषोदरादि : ॥ यद्वा । मकरमप्यन्दति । अदिबन्धने । कर्मण्यण् । शकन्ध्वादि : ॥ कुन्दपुष्पवृक्षे ॥ न० किञ्जल्के ॥

मकरमुखी । स्त्री० प्रणाल्याम् । पयस : पदव्याम् ॥

मकरन्दवती । स्त्री० हृष्पवन्तायाम् । पाटलापुष्पे ॥ मधुविशिष्टायाम् ॥

मकरव्यूह : । पुं० मकराकृतिपतत्सैन्यविन्यासे ॥ यत्राहव्यूहविपर्यये-णमकरव्यूहोभवति । तिमाऽस्मै पश्चाद्भीमयचभयेसतिमच्छेत् ॥

मकराकर : । पुं० समुद्रे ॥ मकराणामाकर : ॥

मकराकार : । पुं० सदाकारङ्के । यज्ञग्रन्थे ॥

मकराङ्क : । पुं० समुद्रे ॥ कामदेवे ॥

मकराधिप : । पुं० शनियष्टि ॥ मकरराशिविशेषस्याधिप : ॥

मकरालय : । पुं० अब्धौ ॥ मकराणां मकरोपलक्षितानांजलजन्तूनामालय : ॥

मकरी । पुं० समुद्रे ॥ मकरा : सन्त्यस्मिन् । अतइनिठनाविति०इ-नि :

मकुटम् । न० मुकुटे । किरीटे ॥ मङ्कतेऽलं० ॥ पञ्चि० । बाहुलकादुट : । [illegible]स्यानित्यात्वन्नुम् ॥

मकुतिः । स्त्री॰ शूद्रशासने ॥

मकुरः । पुं॰ मुकुरे दर्पणे ॥ बकुलद्रुमे ॥ कुलालदण्डे ॥ कोरके ॥ मङ्कते । मकि॰ । मकुरदर्दुरावितिसाधुः ॥

मकुलः । पुं॰ न॰ मुकुले ॥ बकुलद्रुमे ॥

मकुष्ठः । पुं॰ वनमुद्गे । मोठ॰ इ॰ प्र॰ व्रीहिविशेषे । मकुष्ठोवातलोग्राहीकफपित्तहरोलघुः । वह्निजिन्मधुरः पाकेक्रमिकृज्ज्वरनाशनः ॥ चि॰ मंथरे ॥

मकुष्ठकः । पुं॰ वनमुद्गे । मयुष्ठके । मकुष्ठे ॥ मङ्कते॰ मङ्कस्यतीवा । मकि॰ । वाहुलकादुत्वमभावश्च । तिष्ठति । ष्ठा॰ । कुन् । मकुष्ठासौष्यकश्च । पूर्वपदादितिषः ॥

मकूलकः । पुं॰ मुकूलके । दन्त्यामोषधौ ॥ मङ्कते । मकि॰ । खर्जपिञ्जादिभ्यउरोलचावितिप॰-पिञ्जादित्वादूलच् स्वार्थेकन् ॥

मक्कल्लः । पुं॰ शूलरोगविशेषे ॥ यथा । सूतायाहृच्छिरोवस्तिशूलंमकल्लसंज्ञितम् । यवक्षारंपिबेत्तत्रमस्तुनोष्णोदकेनवा ।

मक्का । स्त्री॰ खुरासानाभिधे देशे ॥

मक्कुलम् । न॰ शिलाजतुनि ॥

मक्केशः । पुं॰ ) खुरासानदेशस्थे
मक्केश्वरः । पुं॰ ) शिवे ॥

मक्कोलः । पुं॰ शिलाधातौ । सितोपले । मक्कोल॰ खडियामाटी॰ गोलू॰ इ॰ भा॰ ॥

मक्षः । पुं॰ स्वदोषाच्छादने ॥

मक्षवीर्य्यः । पुं॰ पियालवृक्षे ॥

मक्षिका । स्त्री॰ कीटविशेषे । गन्धोलुपायाम् । वमनीयायाम् । मक्खी॰ इ॰ भा॰ ॥ मशति । मशशब्देरोषकृतेच । इणिमशिभ्यांसिकन् ॥ मक्षतिवा । मक्षरोषसङ्घाते । क्वुन्॰ अत्इत्वम् ॥

मक्षिकामलम् । न॰ सिक्थके ॥

मक्षीका । स्त्री॰ मक्षिकायाम् ॥

मखः । पुं॰ यज्ञे ॥ मखन्तिदेवाअत्रपर्णेनवा । मखगतौ । हलश्चेति॰ घञ् । संज्ञापूर्वकत्वान्नवृद्धिः ॥ यद्वाकचिदपवादविषयेप्युत्सर्गोभिनिविशते॰ पुंसिसंज्ञायांघःप्रायेणेतिघः ॥ यद्वा । मह्यते । मह॰ । नर्दिस्वोपधः॰ महेश्चेतिखोन्तलोपश्च॥

मखत्राता । पुं॰ श्रीरामचन्द्रे ॥ मखानांत्राता ॥

मखवह्निः । पुं॰ प्रगीते । यज्ञाग्नौ ॥

मखानलः । पुं॰ महावीरे । यज्ञाग्नौ ॥

मखान्नम् । न॰ पद्मबीजाभे । पानीयफले । मखाना॰ इ॰ भा॰ ॥ मखान्नंपद्मबीजस्यगुणैस्तुल्यंविनिर्दिशेत् ॥

मखासुहृत् । पुं॰ शिवे । मखस्यदक्ष यज्ञस्यअसुहृत्॰शत्रु : ॥

मगण : । पुं॰ त्रिगुरौ॰ऽऽऽ ॥

मगध : । पुं॰ वन्दिनि ॥ मागधे । वंशपरम्परार्शसके ॥ मगध्यति॰या चते । मगधपरिवेष्टने । कण्ड्वादियगन्त : । अच् । यस्यहलइतियलोपः ॥ मगधा : पुं॰भूम्नि॰ कीकटदेशे ॥ यथा । व्यासेश्वरंसमारभ्यतमकुराश्रान्तकंशिवे ।मगधाख्योमहादेशोयात्रायांनविदुष्यति ॥ इत्येतरतु सैवंचक्रमात्कीकटमागधौ ॥ मगधानांनिवासोजनपद : ॰ मगधा : । निवासोऽयोजनपदेलुप् । लुपियुक्तवद्भाव : ॥

मगधा । स्त्री॰ पिप्पल्याम् ॥

मगधेश्वर : । पुं॰ जरासन्धनृपे । मगधदेशाधिपमात्रे ॥ मगधानांदेशविशेषाणामीश्वर : ॥

मगधोद्भव : । त्रि॰ मगधदेशजाते ॥

मगधोद्भवा । स्त्री॰ पिप्पल्याम् ॥ मगधेउद्भवोयस्य ॥

मग्न : । त्रि॰ जलान्त : प्रविष्टे । आप्लुते । स्नाते ॥ मज्जति । टुमस्जोशुद्धौ । क्त । चोदितश्चेति॰निष्ठानत्वम् । तस्यासिद्धत्वात्॰स्कोरितिसलोप : । चो : कु : ॥

मघ : । पुं॰द्वीपान्तरे ॥ देशान्तरे । मग ॰नामकम्लेच्छस्थाने ॥ न॰ पुष्पविशेषे ॥

मघवा । पुं॰ इन्द्रे । शक्रे ॥ मह्यतेपूज्यते । मह पूजायाम् । श्वन्नुक्षन्पूषन्प्लीहन्नित्यादिना॰कनिन् । कविवितिमनोरमायांस्फुटम् ॥ निपातनात्॰हस्यघोवुगागमश्च । मघवानौ॰मघवान : ॥ मघवाबहुलमितिमितिवादेशपक्षेतु॰ मघवान्मघवन्तौ॰ मघवन्त : ॰ इत्यादिबोध्यम् ॥ जिनानांद्वादशचक्रवर्त्त्यन्तर्गतचक्रवर्त्तिविशेषे ॥

मघवती । स्त्री॰ इन्द्राण्याम् ॥

मघा । स्त्री॰ दशमनक्षत्रे ॥ तत्रजातस्यफलंयथा । कठोरचित्त : पितृमातृभक्तोतिखभावस्त्वनयप्रविद : चेत्पुत्रप्रभवस्यमघाऽनव : स्यान्मति : सदारातिविनाशदक्ष ॥ बहुवचनान्तोप्ययंदृश्यते ॥ यथा मघोदयेनवान्नेचपदम्भशाद्गेनतथा । पितर : सुप्रयच्छन्त्यमृष्टकास्सुमघासुचेति । मघायांपिण्डदानेनज्येष्ठपुत्रोविनश्यतीतिवचनान्तोपि ॥ औषधविशेषे ॥

मघाभव : । पुं॰ शुक्राचार्ये ॥

मघाभू : । पुं॰ शुक्राचार्ये ॥

मघी स्त्री॰ धान्यविशेषे ।

मघोनी । स्त्री॰ इन्द्राण्याम् ॥

मद्गुर : । पुं॰ दर्पणे । मुकुरे । मङ्क्ते मण्डि॰ । बाहुलकादुरच् ।

मपि चित्रदर्शनात्क्रूरीरममपि पुरम् । पुरश्चसोपकरणं स्वात्मनाऽसंहतस्वस्वस्वाम्यर्थंदृष्टम् । तथेदंपुरसामान्यादनेकोपकरणसहितं शरीरंस्वात्मनाऽसंहत राजस्थानीयस्वाम्यर्थं भवितुमर्हतीत्यनुध्येयम् । राजनामचिह्नितराजधान्याम् । पिपर्त्ति । पृ० । सू०क : । यद्वा । पुरति । पुरअग्रगमने । इगुपधेतिक : । न० । स्त्री० बह्वादिविशिष्टस्थाने । बहुग्रामीयव्यवहारस्थाने । नगरे । पत्तने । कटके । पट्टे । निगमे ॥ अस्यलक्षणंमत्स्यपुराणेराजधर्मेद्रष्टव्यम् ॥

पुर:सर : । त्रि० अग्रगे । अग्रेसरे । पुर : सरति । सृ० । पुरोऽग्रतोर्थे पुरसर्तेरिति : ॥

पुरञ्जन : । पुं० जीवे । जर्माणापुरञ्जनयतीतिव्याख्यानात् ॥ पुरयंपुरञ्जनंविद्याद् यद्व्यनक्त्यात्मन : पुरम् । एकद्वित्रिचतुष्पाद्बहुपादमपादकमितिश्रीभागवतम् ॥

पुरञ्जनी । स्त्री० बुद्धौ ॥ यथा । नविदामवयंसम्यक् कर्तारंपुरुषर्षभ । आत्मनश्चपरस्यापिगोत्रंनामपरम् कृतम् । रहजनूलटीया : सर्वेतिमाद्यपुरञ्जनीमितिभागवतम् ॥

पुरञ्जय : । पुं० सूर्यवंशीयराजविशेषे । काकुत्स्थे ॥ त्रि० पुरजयकर्तरि ।

पुरटम् । न० सुवर्णे ॥

पुरण : । पुं० समुद्रे ॥ पूर्यते । पृ० । कृपृवृजिमन्दिनिधाञ : क्यु : ॥

पुरतटी । स्त्री० हट्टाग्राम् । हट्टीपुरतटीमतेतिहारावली ॥

पुरत, : । अ० अग्रतोर्थे । प्रथमे ॥ पुरति । पृ०र० । बाहुलकादतसुच् ।

पुरद्वारम् । न० गोपुरे ॥ पुरस्यद्वारम् ॥

पुरद्विट् । पुं० शिवे ॥ पुरंद्वेष्टि । द्विष० ॥ क्विप् ॥

पुरन्दर : । पुं० इन्द्रे । पुरःहन्ते । शक्रे ॥ शरीराणिपुरोदारयतीतिविग्रहे । पृ:सर्वयोर्दारिसहोरितिवि- दारणार्थकाद्दृधातोःखच्प्रत्ययेवाग्रममपुरन्दरौचेतिनिपातित : ॥ चौरे । यथा । समासमीनायदिया कगालासमासमीनाद्गमैनव:सु: पुरन्दरस्याविषयंवदिश्यात्पुरन्द- रस्यापिपुरंनयाचे । न० । चविके ।

पुरन्दरा । स्त्री० गङ्गायाम् । इतिश- रावली ।

पुरन्ध्रि : । स्त्री० पुरन्ध्राम् ।

पुरन्ध्री । स्त्री० सपुत्रमधवायाम् । कुटुम्बिन्याम् । पुरंध्रीरंधारयति । धृञ्० । स्वार्थेव्यन्त : । संज्ञायांभृतृवृजिधारिसहितपिदमःस्व:। गौ०ङीप् । पृ० । सीमन्ते ।

पुरविजयी । पुं० पुरविजेतरिशिवे ।

पुरश्चरणम् । न॰ मन्त्राणांसाधनायजपहोमादिक्रियायाम् ॥ यथा । जपहोमौतर्पणञ्चाभिषेकोविप्रभोजनम् । पञ्चाङ्गोपासनंलोकेपुरश्चरणमिष्यते ॥

पुरश्छदः । पुं॰ तृणविशेषे । दर्भे । सोमपथे । उत्तु॰ङ्॰ गौड़भा॰ ॥

पुरः । अ॰ अग्रे ॥ प्रथमे ॥ प्राच्यांदिशि ॥ पूर्वकाले ॥ पूर्वस्मिन्पूर्वस्मात्॰पूर्वावापूर्वस्याम् पूर्वस्याः पूर्वावापस्यागतोवमध्येयंवा। पूर्वाधरावराणामसि पुरधवश्चैषामितिअसि : पुरत्रादेशश्च ॥

पुरस्कारः । पुं॰ पुरस्क्रियायाम् । अभियामि ॥ अग्रकरणे । पुरः क्रियतेऽनेन । कृञ्॰ । घञ् ॥

पुरस्कृतः । त्रि॰ अभियुक्ते ॥ अरिग्रस्ते ॥ अग्रकृते ॥ पूजिते ॥ स्वीकृते ॥ सिक्ते । अभिषिक्ते । पुरोऽकारि । डुकृञ्॰ । क्तः । पुरोव्ययमितिगतित्वम् । नमस्पुरसोरितिसत्वम् ॥

पुरस्कृत्य । अ॰ पुरतः कृत्वेत्यर्थे ॥

पुरस्क्रिया । स्त्री॰ पुरस्कारे ॥

पुरस्तात् । अ॰ प्रथमे ॥ प्राच्याम् ॥ अग्रतोऽर्थे ॥ पुरार्थे ॥ अग्रभागे ॥ पूर्वस्मिन् पूर्वस्यांवा पूर्वस्मात् पूर्वस्यावा । पूर्वः पूर्वावा । दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्योदिग्देशकालेष्वस्तातिः अस्तातिचेतिपूर्वस्यपुरादेशः ॥

पुरा । अ॰ पुराणे । निकटे ॥ प्रबन्धे ॥ अतीते ॥ भाविनि ॥ प्रतीघे ॥ पुरति । पुर॰ । बा॰ का ॥ चिरन्तने ॥ चिरातीते ॥ भविष्यदासन्ने ॥ गच्छपुरादेवोवर्षिष्यति । सत्वरमागमिष्यतीत्यर्थः ॥

पुरा । स्त्री॰ पूर्वदिशि ॥ सुगन्धिद्रव्यविशेषे । दिव्यायाम् । गन्धाढ्यायाम् । गन्धकुट्याम् ॥

पुराकल्पः । पुं॰ अर्थवादान्तरे । ऐतिह्यसमाचरिततयाकीर्त्तने । पूर्वपुरुषैराचरितत्वाभिधाने ॥ यथा । पुराकल्पे तुनारीणांमौञ्जीबन्धनमिष्यते । अध्यापनञ्चवेदानां सावित्रीवचनंतथेतियमः ॥ युगान्तरे ॥ यथा । पुराकल्पएतदासीत्॰संस्कारकालोत्तरंब्राह्मणाव्याकरणंस्माधीयते । तेभ्यस्तत्तत्स्थानकरणनादानुप्रदानज्ञेभ्योवैदिकाः शब्दाउपदिश्यन्तेतदद्यत्वेनतथा॰वेदमधीत्यत्वरितावक्तारोभवन्तीतिमहाभाष्यम् ॥

पुराकृतम् । त्रि॰ प्रारब्धकर्मणि ॥ पूर्वकालकृतपुण्यादौ ॥

पुराणः । पुं॰ पणे ॥ षोडशपणे ॥ आत्मनि । सर्वकारणे । अनाद्यात्मनि ॥ सचपुरापिनवएकरूपएवनत्वधुनानूतनांकांश्चिदवस्थामनुभव

ति। योहिस्वयवबोपचयद्वारेणाभिनि र्वर्त्तेसइदानींनघोयथाकुम्भादिः। तद्विपरीतस्त्वात्मापुराणोऽविवक्षित : ॥ न० सर्वपुराणसामान्ये पञ्च लक्षणे। सर्गश्चप्रतिसर्गश्च वंशोमन्वन्तराणिच। वंशानुचरितञ्चेति पुराणंपञ्चलक्षणम् ॥ ( मत्स्य० ) ॥ इतिपञ्चलक्षणलक्षितेपुमत्स्याद्यष्टादशसु । यथा । मद्वयंभद्वयञ्चैव ब्रत्रयं वचतुष्टयम् । अनापलिङ्गकूस्कानि पुराणानिपृथक्पृथगिति ॥ पुराभवमित्यस्मिन्नर्थे सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ । तुट्चेति०ष्युट्युलौ । पूर्वकालैकेतिनिपातितत्त्वाद्भावः ॥ पुराणप्रोक्तेष्वब्राह्मणकल्पेष्विति निपातितोवा ॥ पुं० न० कार्षापणे ॥ त्रि० । भवे । पुरातने । पुराणी० पु० भा० ॥

पुराणग : । पुं० प्रजापतौ । ब्रह्मणि ॥

पुराणपुरुष : । पुं० विष्णौ । पुराणश्चासौपुरुषश्च ॥

पुराणी । स्त्री० चिरन्तन्याम् ॥ पुराभवा । टित्वान्ङीप् ॥ बह्वादित्वात्पक्षेङीष्वा ॥

पुरातन : । पुं० परमात्मनि ॥ कालेनापरिच्छिन्नत्वात्पुरापिभवतीति सततोच्यते ॥ त्रि० । चिरन्तने । पुराणे । प्रतने ॥ अनादिगुरुपरम्परागते ॥ पुराभव : । सायंचिरमितिष्युट्युलौ । सर्वाधकान्येपिनिपातनात्निभवन्तीतिपक्षेतुट् ॥

पुरातनी । स्त्री० चिरन्तन्याम् ॥ टित्वान्ङीप् ॥

पुराधिप : । पुं० पुरपालके ॥

पुराध्यक्ष : । त्रि० नगराधिकृते ॥

पुरारि : । पुं० त्रिपुरान्तके ॥ शिवे ॥

पुरार्द्धविस्तर : । पुं० खेटे ॥ ग्रामार्द्धनगरे ॥

पुरावसु : । पुं० भीष्मे । पाण्डवानां पितामहे ॥

पुरावृत्तम् । न० इतिहासे । पूर्वचरिते ॥ पूर्ववृत्तप्रतिपादकव्यासादिप्रणीतग्रन्थे ॥ पुरावृत्तमाचष्टे । पुरावृत्तमाख्यानम् । ख्यानात्पचावच् ॥

पुराश्रुति : । स्त्री० पुरातन्यांगाथायाम् ॥ अन्तकालेऽभिभूतानिमुह्यन्तीतिपुराश्रुतिः ॥

पुरासिनी । स्त्री० सहदेवीलतायाम् ॥

पुरासुहृत् । पुं० शिवे । हे० च० ॥

पुरि : । पुं० राजनि ॥ स्त्री० पुर्याम् ॥ नद्याम् ॥ पिपर्त्ति पूर्यतेवा । पृ० । कृगृशृपृकुटिभिदिच्छिदिभ्यश्चेति इ : ॥

पुरी । स्त्री० नगर्याम् ॥ नृपावास : पुरीप्रोक्ताविशांपुरमपीष्यते ॥ तीर्थविशेषे । अयोध्यामथुरामायाकाशीकाञ्चीह्यवन्तिका । पुरीद्वारावतीचैव

पुरुषार्थत्वम् । न० पुरुषोद्देश्यप्रत्यच फलसाधकत्वे ॥ भावेत्व : ॥

पुरुषार्थसाधनम् । न० चतुर्वर्गोपाये । तेषञ्च स्तिप्रसिद्धा : । यथा धर्मस्य मूर्त्तिर्निकृति : धर्माचकामस्तुपश्च मधोवपुस्त्व । धर्मस्ययागादिदयादम समोव्रह्मसर्वोपरम : क्रियाश्च : ॥ तदुक्तं पुरुषार्थलाभिसम्भवत्वध संकामयमानोसूर्खपव ॥

पुरुषास्थिमाली । पुं० शिवे ॥ पुरुषा स्थ्नांमाला०सा अस्ति यस्य । व्रीह्या दित्वादिनि : ॥

पुरुषोत्तम : । पुं० विष्णौ । भगवति । वासुदेवे ॥ पुरुषेभ्य : पुरुषेषुवा उत्तम : । नतिर्द्धारणसूत्रेप्रतिषेधात् । पुरुषाणांमध्येउत्तमो वा । नतिर्द्धारणइति निषेधस्तुना त्वन्यपेक्षयाऽसमर्थत्वान्नप्रवर्त्तते कर्मधारयेतु सम्भवत्परमोत्तमो त्कृष्टा : पूज्यमानैरिति तत्पुरुष इतिसत् ॥ यस्मात्क्षरमतीतो हमक्षरादपिचोत्तम : । अतोस्मि लोकेवेदेचप्रथित : पुरुषोत्तम : ॥ नृपवि० । हस्तार्द्धविशेषे ॥

पुरुषव्रत : । पुं० श्रीहरौ ॥ पुरुषस्थेव रूपदासीसत्तामस्य ॥

पुरुस्पृह : । त्रि० बहुभिःस्पृहणीये ॥

पुरुह : । त्रि० प्रचुरे ॥ पुरून्हन्तिग च्छति । हन० । अन्येष्वपीतिड :

॥ यद्वा । पुरून्जहाति० जिहीते वाआसद्दर्शिक : ॥

पुरुहूत : । पुं० इन्द्रे ॥ पुरुप्रचुरंहूत माह्वानंयज्ञेष्वस्य । पुरूणिहूतानि नामान्यस्य । पुरुं पुरुनामानमसुरंच हूतइतिवा । ह्वेञ : क्त : । सम् प्रसारणम् । हलइति दीर्घ : ॥ पुरुभूयिष्ठंयथास्यात्तथायज्ञेषुहू यतइतिवा ॥

पुरुहूता । स्त्री० देवीविशेषे ॥ पुरुहूता पुष्कराक्षे० इतिभागवतोक्ते : ॥

पुरूरवा : । पुं० बुधस्यपुत्रे । उर्वशीर मणे । ऐले । बौधे ॥ चन्द्रवंशीया दिराजे । राजर्षौ ॥ दिग्वंद्ये ॥ पार्श्वस्थावदेवे ॥ यथा । पुरूरवा माद्रवाश्चपार्श्वेसमुद्राहृतौ ॥ पुरु रौति । रुशब्दे । पुरूरवाइति० पुरुशब्दस्यदीर्घोरौतेरसिश्चनिपात्यते

पुरोग : । त्रि० अग्रगे । अग्रे सरे ॥ पुरोगच्छति । गम्लृ० । अन्येष्वपी यौगिक : ॥ प्रधाने ॥

पुरोगति : । पुं० कुक्कुरे ॥ त्रि० अग्र गे ॥

पुरोगम : । त्रि० अग्रगे । पुर : सरे ॥ पुरोगच्छति । गम्लृ० । अच्० स्वु चया ॥

पुरोगामी । त्रि० पुरोगे । अग्रे सरे । श्रेष्ठे ॥ पुरोगन्तुं शीलमस्य । सुप्य- जातौणिनिस्ताच्छील्ये इतिणिनि : ॥

पुरोटि: । पुं० पत्रझङ्कारे । शब्दभाटिव० गौ० भा० ॥ पुरोटि:पुरसंस्कारेइतिशब्दावली ॥

पुरोडाश: । पुं० हविर्भेदे । यवचूर्णनिर्मितरोटिकाविशेषे ॥ पिष्टकस्य चमस्याम् ॥ हुतशेषे ॥ सोमरसे ॥ पुरोदाश्यते । दाशृ दाने । कर्म्मणिघञ् । पौरोडाशपुरोडाशेत्यच निपातनाद्दस्य डत्वम् ॥

पुरोडाशीयम् । त्रि० पुरोडाशीये । हविर्योग्ये ॥

पुरोद्भवा । स्त्री० महामेदायाम् ॥

पुरोधा: । पुं० पुरोहिते ॥ पुरोऽग्रे धीयते । डुधाञ् । पुरसिचेति० धात्वोऽस्ति : ॥

पुरोभागी । त्रि० दोषैकदृशि । दोषमात्रदर्शिनि ॥ पुर : पूर्वं भजते । भज० । विनुण् ॥ दोषैकदृक्पुरोभागीत्यमर: ॥ असूयाशीलिनि ॥

पुरोहित : । पुं० शान्त्यादिकर्त्तरि । पुरोधसि ॥ पुरोऽग्रे दृष्टादृष्टफलेषु कर्मसु धीयते आरोप्यते य : । डुधाञ् । क्त : । दधातेर्हि : ॥ त्रय्यास्तु दण्डनीत्याञ्च कुशल:स्यात् पुरोहित : । अथर्वविहितं कुर्य्यान्नित्यं शान्तिकपौष्टिकम् ॥ तच गारुडे च यथा । वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायण : । आशीर्वादवचोयुक्त एषराज्ञ पुरोहित इति ॥ वर्जनीयस्तु यथा । कार्पण्यदूषमपुत्रं वा ऽत्वभिज्ञमजितेन्द्रियम् । नक्षत्राधिकं चापि नृप:कुर्य्यात्पुरोहितमिति ॥

पुर्य्यष्टम् । न० पुर्य्यष्टके ॥

पुर्य्यष्टकम् । न० ज्ञानेन्द्रियाद्यष्टके । यथा । ज्ञानेन्द्रियाणिपञ्चैवपञ्चकर्मेन्द्रियाणिच । मनोबुद्धिरहङ्कारश्चित्तञ्चेतिचतुष्टयम् ॥ प्राणोपानस्तथाव्यानस्तथानास्यस्तथैवच । समानश्चेतिपञ्चैता:कीर्त्तिता:प्राणवृत्तय : ॥ खंवायुर्ज्वलनश्चेति व्यक्तभूतसूक्ष्माणिपञ्चच । अविद्याकामकर्म्माणिलिङ्गंपुर्य्यष्टकंविदुरिति । अन्यच्च । भूतेन्द्रियमनोबुद्धि वासनाकर्म्मवायव : । अविद्याचाष्टकंप्रोक्तं पुर्य्यष्टमृषिसत्तमै : ॥ अपिच । ज्ञानेन्द्रियाणिखलुपञ्च तथापराणि कर्म्मेन्द्रियाणि मनआदिचतुष्टयञ्च । प्राणादिपञ्चकमथो वियदादिपञ्चकामश्चकर्म्मचतम : पुनरष्टधाम् : ॥ पुरीणामष्टकम् ॥

पुल: । पुं० पुलके । त्रि० विपुले ॥

पुलक : । पुं० कृमिभेदे । प्रस्तरविशेषे ॥ तस्करनीलान्यतदृष्टव्याः । मणिदोषे ॥ रोमाञ्चे । त्वक्पुष्पे ॥ हरिताले । गजान्नपिण्डे ॥ गन्धर्वे । गल्वर्के० इतिहेमचन्द्रपाठ : ॥ असुराज्याम् इतिहेमचन्द्र : ॥ न० पर्वती

रसाञ्जने ॥ लोहकांस्ये ॥ मृद्दार भकद्याम् ॥ कासीसे ॥ पुष्पति । पुष्प० । क्वुन् ॥ पुष्पमिवदा । दूरेप तिक्तामितिकन् ॥

पुष्पकरण्डकम् । न० उज्जयिन्यामृषि वस्योद्याने ॥

पुष्पकरण्डिनी । स्त्री० अवन्त्याम् । उज्जयिन्याम् ॥

पुष्पकाशीशम् । न० किञ्चित्पीतिका सीसे । कंसके । भैषीपथे ॥

पुष्पकीट : । पुं० भ्रमरे । रोलम्बे ॥ कुसुमक्तमिसारे ॥

पुष्पकेतन : । पुं० कामदेवे ॥

पुष्पकेतु: । पुं० रीतिपुष्पे । कुसुमा ञ्जने ॥ पुष्पस्यकेतुरिवभाशकत्वात्

पुष्पघातक : । पुं० कीचकवृक्षे । द्रुम मक्षे ॥

पुष्पज : । पुं० पुष्परसे । पुष्पद्रवे ॥

पुष्पद : । पुं० वृक्षे ॥ त्रि० । पुष्पदा तरि ॥

पुष्पदन्त: । पुं० वायुकोणस्थदिग्गजे ॥ विद्याधरविशेषे । सुविख्यास्य- जिने ॥ पुष्पमिवदन्ता : यस्यस : ॥

पुष्पदन्तक : । पुं० गन्धर्वविशेषे ॥

पुष्पद्रव : । पुं० पुष्पाम्बुदे । पुष्पसारे ॥

पुष्पधनु : । पुं० कामदेवे ॥ पुष्प धनु रस्य । वासञ्ज्ञायामित्यनङभावेसा न्त : ॥

पुष्पधन्वा । पुं० मदने । कामे ॥ पुष्पं धनुरस्य । वासंज्ञायामित्यनङ् ॥

पुष्पनिच : । पुं० भ्रमरे ॥

पुष्पनिर्यासक : । पुं० पुष्पद्रवे ॥

पुष्पन्धय : । पुं० भ्रमरे ॥ पुष्पाणिधय ति । धेट्० । मुञ्जकुलास्यपुष्पेषु धेट : खशितिकेचिदिति खश् । च कर्त्तिं घदितिमुम् ॥

पुष्पपथ : । पुं० भगे । योनौ ॥

पुष्पपाचम् । न० पुष्पाधारे ॥

पुष्पपुरम् । न० पाटलिपुत्रनगरे ॥

पुष्पफल : । पुं० कपित्थे । कूष्माण्डे ॥ पुष्पयुक्तंफलमस्य ॥

पुष्पबलि : । पुं० वास्तुपूजायाम् ॥

पुष्पमास : । पुं० वसन्ते ॥ पुष्पाणां मास : ॥

पुष्पयोग : । पुं० याथायोगान्तरे ॥ यथा । भौमेस्वराशिगेलग्नेसौम्ये केन्द्रत्रिकोणगे । पुष्पयोगोरिपुविपि नकुठार : सङ्गरागमे ॥

पुष्परक्त : । पुं० सूर्यमणिवृक्षे ॥

पुष्परथ : । पुं० चक्रयाने । युद्ध विना यात्रोत्सवादौ सुखभ्रमणार्थरथे ॥ सुकुमारत्वात्० पुष्पमिवरथ : ॥

पुष्परस : । पुं० मकरन्दे ॥ पुष्पस्य रस : ॥

पुष्परसाह्वयम् । न० मधुनि ॥

पुष्पराग : । पुं० पीतमणौ । वाचस्प तिशलभे । पोखराज० इ० भा० ॥ चास्यलक्षणंयथा । सुच्छायपीत

गुरुगाम्ससुरक्तशुभ्रं स्निग्धध्वनिर्मल मतीवसुवृत्तशीतम् । यः पुष्पराग सकलंकलयेदसुपपुष्पातिकीर्त्ति मतिशौर्यसुखायुरर्थान् ॥ तस्यापल क्षणम्यथा । छायाविनृर्दहिमरूक्षं धवलंमलिनंलघु । विच्छायंशर्करा गारंपुष्परागंसदोषकं ॥ परापरी चालक्षणं यथा । घृष्टोविकाशयेत् पुष्परागमधिकमात्मीयम् । नखलु पुष्परागोनाम्लतयामरीचकोरस्तः ॥

पुष्परेणुः । पुं॰ परागे ॥

पुष्परोचनः । पुं॰ नागकेशरे ॥

पुष्पलावः । पुष्पलावी । पुं॰ } मालाकारे ॥

पुष्पलिट् । पुं॰ भ्रमरे ॥ पुष्पंलेढि । लिह॰ । क्विप् ॥

पुष्पवटी । स्त्री॰ फुलौरी॰ इ॰ प्र॰ खाद्यप्रभेदे ॥

पुष्पवन्तौ । पुं॰ एकयोक्त्यानिष्पत्ति षचनात्सन्द्रसूर्ययोः ॥ चन्द्रा र्कौ॰ एकयोक्त्यासाधारणवचनं॰ पुष्पवन्तौ॰ प्रत्येकंपुष्पवानितिन प्रयोक्तव्यमितिभावः । पुष्पविकास ने । भावेघञ् । पुष्पः प्रकाशस्त द्वन्तौ ॥

पुष्पवती । स्त्री॰ रजस्वलायाम् ॥ तीर्थविशेषे ॥ पुष्पंरजोऽस्त्यस्याः । मतुप् ॥ त्रि॰ पुष्पविशिष्टे ॥

पुष्पवाटिका । स्त्री॰ पुष्पवाट्याम् ॥

पुष्पवाटी । स्त्री॰ पुष्पोद्याने । फुल वारी॰ फुलवरिया॰ इ॰ भा॰ ॥ पुष्पाणांवाटी ॥

पुष्पवाणः । पुं॰ मन्मथे । कामदेवे ॥ पुष्पाणियाणायस्य ॥

पुष्पवाहनः । पुं॰ पुष्करराजाभिधे नृपे ॥

पुष्पशकटी । स्त्री॰ आकाशवाण्याम् । दैववाण्याम् ॥

पुष्पशून्यः । पुं॰ उदुम्बरे ॥ त्रि॰ कुसुमरहिते ॥

पुष्पसमयः । पुं॰ वसन्ते । चैत्रवैशा खयोः ॥ पुष्पाणांसमयः ॥

पुष्पसायकः । पुं॰ पुष्पधन्वनि । कामदेवे ॥

पुष्पसारः । पुष्पद्रवे ॥ पुष्पसारः ॥

पुष्पसिता । स्त्री॰ फूलसक्कर॰ इ॰ भा॰ प्र॰ द्रव्ये ॥ भवेत्पुष्पसिता शीतारक्तपित्तहरीलघुः ॥

पुष्पसौरभा । स्त्री॰ कलिकारीवृक्षे ॥

पुष्पस्वेदः । पुं॰ पुष्पद्रवे ॥

पुष्पहासः । कुसुमविकासे ॥ पुष्पा णांमुकुलात्मनास्थितानांहासोविका शः पुष्पहासः ॥

पुष्पहासा । स्त्री॰ रजस्वलायाम् ॥

पुष्पहीना । स्त्री॰ उदुम्बरे ॥ निष्फला याम् । रजःशून्यायाम् ॥

पुष्पा । स्त्री॰ । चम्पापुर्याम् । मालि

पूगकृत : । त्रि० पुञ्जीकृते ॥ अपूगः पूगः सम्पद्यमानः कृतः इत्यर्थे श्र्यादयः कृतादिभिरितिसमासे • श्र्यादिपुच्व्यर्थेच्यवर्नमिति च्व्यर्थता ॥

पूगतिथ : । त्रि० पूगानांपूरणे ॥ वष्टुपूगेतिस्टटिसिथुगागमविधानादसंख्यात्वे पिडट् ॥

पूगपात्रम् । न० पूगपीठे । कलश के ॥

पूगपीठम् । न० पाटकोषे , पतद्ग्रहे ॥

पूगपुष्पिका । स्त्री० कुल्लो । विवाहे सम्बन्धिपुष्पदानस्त्रि ॥

पूगफलम् । न० छड्गे । चिक्कणाम् ॥

पूगयाजक : । पुं० बहुयाजकी ॥

पूगबोट : । पुं० हिन्तालवृक्षे ॥

पूगिका । स्त्री० क्रमुकी ॥

पूगिकाफलम् । न० पूगीफले ॥

पूगी । स्त्री० पूगे । पूगवृक्षे ॥

पूगीफलम् । न० छड्गे । पूगफले ॥

पूजक : । त्रि० पूजाकर्त्तरि ॥

पूजनम् । न० अर्चने । पूजायाम् । यथा ॥ शास्त्रप्रयासशुभपूजादौ ॥ पूजपूजायाम् । ल्युट् ॥

पूजनीय : । त्रि० श्रुताचाराभिजनादिभि : पूजायोग्ये । पूज्ये ॥ पूजेरनीयर् ॥

पूजा । स्त्री० नमस्कारायाम् । अपचितौ ॥ सपर्यायाम् ॥ पादप्रक्षालनार्घगन्धदानादिरूपायामर्चायाम् ॥ देवार्चनायाम् ॥ तस्याः सामान्यानुष्ठानंयथा । भूतशुद्ध्यादिन्यासः करशुद्धिस्तत : परम् । अङ्गुलिव्यापकन्यासौहृदादिन्यासएवच ॥ तालत्रयसदिग्बन्ध : प्राणायामस्तत : परम् । ध्यानंपूजाजपश्चैव सर्वतन्त्रेष्वयंविधिरितियामलवचनम् ॥ पूजनम् । पूज० । चिति पूजीत्यड् ॥

पूजार्ह : । त्रि० मान्ये । अर्चभाजि ॥ कुसुमादिभिरर्चनयोग्ये । पूज्ये ॥ पूजासर्हति । अर्हपूजायाम् । अर्हप्रत्यय ॥ स्त्रियांपूजार्हा ॥

पूजित : । त्रि० सत्कृते । अर्चिते ॥ पूज्यते स्म ॥ पूज० । क्तः ॥ देवे ॥ पूजितोय : सुरासुरैरित्यादौभूतेक्तोऽत्रतुवर्त्तमाने• तेन तृतीयातत्रोपपद्यते । अन्यथातस्य चवर्तमानइतिषष्ठीस्यात् ॥

पूजितव्य : । त्रि० पूजनीये ॥

पूजिल : । पुं० देवतायाम् ॥ त्रि० पूज्ये ॥

पूज्य : । पुं० श्वशुरे ॥ त्रि० वन्द्ये पूजार्हे । प्रतीच्ये ॥ पूजार्हाय

या। गुरूणामपिसर्वेषांपूज्या : पञ्चविशेषत :। तेषामाद्यास्त्रय : श्रेष्ठास्तेषांमातासुपूजिता ॥ यो भावयतियासूतेयेनविद्योपदिश्यते ज्येष्ठ : भ्राताचभर्ताचपंचैतेगुरवस्मृताइतिकौर्मेउपरिभागे ११ अध्याय : ॥ पूज्यते। पूज०। । यचीयत् ॥ पूजयितुमर्ह :। पूज०। यर्हे कृत्यश्चेतियत् ॥ सर्वस्यैवहिदानस्यप्रोतागुरुरुच्यते। कन्यायाश्चैव विद्याया : प्रदातापूज्यतेगुरु :॥

पूज्यपाद :। पुं० भगवच्छङ्कराचार्ये।

पूत :। पुं० शङ्खे ॥ श्वेतकुशे ॥ विकङ्कतवृक्षे ॥ न० बहुलीकृते। अपनीततुषधान्ये ॥ सत्यवचने ॥ त्रि० व्रतादिनाशुद्धे। पवित्रे। पूयती ॥ दधिगोमयादौसामान्यप त्रि० स्वभावपवित्रे वा। पवित्रे मेध्ये ॥ दृष्टिपूतंन्यसेत्पादंवस्त्र पूतं जलंपिबेत्। सत्यपूतांवदेद्वाचं मन : पूतं समाचरेत्। शठिते बहुलीकृते ॥ पूयतेस्म। पूङ्० पूञ्० वा। क्त ॥ पवतेस्मवा। पूङोगत्यर्थेतिक्त :॥

पूतक्रतायी। स्त्री० इन्द्राण्याम्। शच्याम् ॥ पूतक्रतो : स्त्री०। पूतक्रतोरैचेत्यैकारादेशोङीप् च ॥

पूतक्रतु :। पुं० इन्द्रे ॥ पूता:क्रतवो येन ॥

पूतक्रतु :। स्त्री० देव्याम् ॥ पूता : क्रतवोयस्यासा ॥

पूतगन्ध :। पुं० बर्बरे ॥

पूततृणम्। न० श्वेतकुशे ॥ कुशे ॥ पूतश्चतत्तृणञ्च ॥

पूतद्रु :। पुं० पलाशवृक्षे ॥

पूतधान्यम्। न० तिले ॥ पूतञ्चतद्धान्यञ्च ॥

पूतना। स्त्री० हरीतक्याम्। पूतना स्थिमतीसूक्ष्मेतिनिरूपणात्। सिन्धुदेशवासल्पत्वक्वृहदस्थिहरीतकीलेपनेप्रशस्तेतिराजवल्लभ :। गन्धमांस्याम्। वातरोगविशेषे ॥ बालमातृकाविशेषे। दानवीविशेषे। बकासुरभगिन्याम्। यदीयकीर्यं स्तनकालकूटंजिघांसयापायियदप्यसाध्वी। लेभेगतिंधात्युचितांततोन्यंकंवादयालुंशरणंव्रजेम ॥ पूतंकरोति। तत्करोतीतिणिच्। बहुलमन्यत्रापीतियुच् ॥

पूतनारि :। पुं० बालमुकुन्दे। श्रीकृष्णे। पूतनायाश्चरि :।

पूतनासूदन :। पुं० श्रीकृष्णे। पूतनामुदितवान्। सूदयतिवा। सूद-क्षरणे। नन्द्यादित्वाल्ल्यु :॥

पूतनाघ्न। पुं० श्रीकृष्णे। पूतनां-हन्ति। हन०। क्विप् ॥

पूतपाप : । त्रि० निरस्तस्वर्गभोगप्रतिबन्धकपापे ॥

पूतफल : । पुं० पनसे ॥

पूता । स्त्री० दूर्वायाम् ॥

पूतात्मा । पुं० ईश्वरे ॥ पूत : शुद्धः सत्त्वादिगुणसम्बन्धरहित : आत्मा स्वरूपंयस्य ॥ पूतश्चासावात्माचेति वा ॥ शुद्धदेहे । शुद्धात्मा : स्मरणे ॥ पूतपात्मायस्य ॥

पूति : । स्त्री० दुर्गन्धे । पवित्रतायाम् ॥ खट्टाशमुष्के । न० गोक्षिपहरणे ॥

पूतिक : । पुं० पूतिकरञ्जे ॥ पुनाति । पू-अ० । तिन्तिडीकादयश्चेति०इकन् ॥ न० विष्ठायाम् ॥

पूतिकरज : । पुं० लट्टाकरञ्जवृक्षे । कलिकारके । कलहनाशने । कपटवतिकरञ्जे । काँटाकरञ्जइति० भा० ॥ पूतिश्चासौकरञ्जश्च ॥

पूतिकरञ्ज : । पुं० पूतिकरजे ॥

पूतिकर्णक : । पुं० कर्णरोगविशेषे ॥ तल्लक्षणयथा । कर्णविद्रधिपाकाद्वा जायतेचाम्बुपूरणात् । पूयंस्रवतिवापूतिर्ज्ञेय: पूतिकर्णक : ॥ अस्यौषधयथा । निर्गुण्डीसुरसम्लंसिन्धुधूमरजोगुड : पूरणात्पूतिकर्णस्यशमनोमधुसंयुत : ॥ अथवा । पत्रपाद्रंकपित्थाम्रजम्बूपल्लवसाधितम् । पूतिकर्णापहतैलजा-

तीपत्त्ररसेनवेति चक्रपाणिदत्त : ॥

पूतिका । स्त्री० मार्जार्याम् ॥ पोइ इ० प्र० लताशाके । उपोदकायाम् ॥

पूतिकामुख : । शम्बूके ॥

पूतिकाष्ठम् । न० सरलद्रुमे ॥ देवदारुमहीरुहे ॥ पूतिपतत्काष्ठञ्च ॥ पूते : पावनस्यकाष्ठंवा ॥

पूतिकाष्ठकम् । न० पूतिकाष्ठे ॥

पूतिगन्ध : । पुं० गन्धके ॥ हिङ्गुदीवृक्षे । न० रङ्गे । त्रि० दुर्गन्धे ॥

पूतिगन्धि : ।<br>पूतिगन्धिक : } त्रि० दुर्गन्धे ॥

पूतिगन्धिका । स्त्री० वाकुच्याम् ॥

पूतितैला । स्त्री० ज्योतिष्मत्याम् ॥

पूतिदारु : । न० देवदारुणि ॥

पूतिनस्य : । पुं० नासारोगभेदे ॥ तल्लक्षणयथा । दोषैर्विदग्धैर्गलतालुमूलेसम्मूर्छितोयस्यसमीरणस्तु । निरेतिपूतिर्मुखनासिकाभ्यांतंपूतिनस्यंप्रवदन्तिरोगम् । औषधन्तु । व्याघ्रीदन्तीवचाशिग्रुसुरसव्योषसैन्धवै : । पाचितंनावयेत्तैलंपूतिनासागदंजयेत् ॥ अथवा । चित्रकटुविडङ्गवासैन्धववृहतीफलशिग्रुसुरसदन्तीभि : । तैलंगोजलसिद्धंनस्यंस्यात्पूतिनस्यस्य ॥

पूतिपत्र : । पुं० श्योनाकविशेषे ॥

पूतिपुष्पिका । स्त्री० मातुलुङ्गायाम् ॥

पूतिफली । स्त्री० वाकुच्याम् । सोम

राज्याम् ॥ पूतिफलीप्रस्था : पारा कर्णेतिङीप् ॥
पूतिमयूरिका । स्त्री० अजगंधायाम् ॥
पूतिमेद : । पुं० अरिमेदे ॥
पूतिवात : । पुं० बिल्ववृक्षे ॥ अधोवायौ ॥
पूतिवृक्ष : । पुं० श्योनाके ॥
पूतिशारिजा । स्त्री० खट्टाशीम् ॥
पूतिक : । पुं० गंधमार्जारे ॥ घोडा करञ्ज इ० भा०प्र० करञ्जविशेषे ॥ लताविशेषे ॥
पूतिकरञ्ज : । पुं० लट्टा स्थकरञ्जे ।
पूतिगण्ड : । पुं० पूतिकोटे ॥
पूतिभाव : । पुं० दौर्गन्ध्ये ॥ क्लेदे ॥
पूत्यण्ड : । पुं० गन्धकीटे ॥ गन्धे ॥ यस्तनाभीत्युच्यनाभिर्भवति ॥
पूप : । पुं० अपूपे । पिष्टके । पूआ० इ०भा० ॥ यथा ॥ समितांगुडतोयेनमेलयित्वासुमर्दिताम् । घृतेविस्तार्यसुपचेत्तुवृत्तोयःपूपउच्यते : ॥ अपूप : पुष्टिदोवस्योवृष्योगुरुतर : स्मृत : । पिनाहानिलहरोवृष्य : सुमहोशेषविकारकृत् : ॥ पवनंपू : । पूङ्-सं०क्षिप् । पुनंपाति०पिवति वा । भारचर्ये०पानिवा । वातदूतिका : ॥
पूपला । स्त्री० पोलिकायाम् ॥
पूपाली । स्त्री० पोल्याम् ॥
पूपाष्टका । स्त्री० आग्रहायणीपूर्णिमाया : परत : अष्टम्याम् ॥
पूपिका । स्त्री० पूलिकायाम् ॥
पूयम् । न० पक्वव्रणादिसम्भवघनीभूतशुक्लवर्णविकृतरक्ते । मतले । मलक्षौ । पीप०राध०इ०भाषा ॥
पूयनम् । न० रक्तविकारे । पूयै ॥
पूयरक्त : । पुं०-नासारोगभेदे ॥ तल्लक्षणम् । दोषैर्विदग्धैरथवापिजन्तोर्ललाटदेशेऽभिहतस्यतैस्तै : । नासास्रवेत्पूयमसृग्विमिश्रं तंपूयरक्तं प्रवदन्तिरोगम् ॥
पूयारि : । पुं० निम्बपादपे॰
पूयालस : । पुं० सन्धिगतरोगभेदे ॥ तल्लक्षणं यथा । पक्व : शोफ : सन्धिज : संस्रवेद्यः सान्द्रं पूयंपूतिपूयालस : स : ॥ इतिसुश्रुत : ॥
पूयोद : । पुं० नरकान्तरे ॥
पूर : । पुं० जलसमूहे । चम्पसंवृद्धौ ॥ व्रणसंशुद्धौ ॥ खाद्यविशेषे ॥ न०दाहागुरुणि ॥
पूरक : । पुं० प्राणवायौ : शनैर्वामनासापुटेन०दक्षिणनासापुटेनवा:सव्यापसव्यन्यायेनान्त : प्रवेशने ॥ बाह्यैर्नवायुमाकृष्य तिसीभमपूरयनम् । पूरक : सतदभ्यासात्सगुर्वैपियिक्तपर्येत्॥ नासिकोत्कृष्टउच्छ्वासोध्मात : पूरकउच्यते ॥ जम्बीरवृक्षे ॥ ब्रह्मवस्यो तियावृत्ति : पूरकोवायुरीरित : ॥ पूरीपापर्याय

मे । खल्त् ॥ बीजपूरे ॥ गुग्गकाद्धि ॥ पुं॰ प्रेतदेहनिष्पादकाशौचमध्यदेय दशपिण्डे ॥ त्रि॰ पूरणकर्त्तरि ॥

पूरणः । पुं॰ सेतौ ॥ त्रिष्णुतैले ॥ न॰ षड्कानांगुणने ॥ वृष्टौ ॥ कुटन्नटे ॥ वानतन्तु ॥ पिष्टभेदे ॥ छिन्न धान्यकलेमांसंमुखिन्नं सूक्ष्मखण्डितम् । संयुक्तंछिन्नजीरार्द्रं बीजपूरैलसैन्धवैः ॥ घृतेतप्ते परिभृष्टं धूपितंमांसपूरणम् ॥ मांसस्यपूरणंह्यं हृद्यं पुष्टिकरंपरं । वातपित्तहरंच स्यं मन्दाग्निकफनाशनम् ॥ त्रि॰ पूरके । पूरणकर्त्तरि । पालनकर्त्तरि ॥ पूणाति । पृपालनपूरणयोः । ल्युट् ॥ पर्यतेऽनेन । पूरी॰ । करणेल्युट् ॥

पूरणी । स्त्री॰ शाल्मलिवृक्षे । पटारम्भकसूत्रेषु । पूरणकर्त्र्याम् ॥ पूरयति । पूरी॰ । ल्युट् । ङीप् ॥

पूराम्लम् । न॰ वृक्षाम्ले ॥

पूरिका । स्त्री॰ पूपविशेषे । पूरी॰ कचौरी॰ इ॰भा॰ ॥ यथा । मायामापिष्टिकांसुश्लक्ष्णांलवणाद्रकहिङ्गुभिः । तथापिष्टिकयापूर्णांसमिमांकृतपोलिका ॥ ततस्तैलेविपक्वा सापूरिकाकथितावुधैः । रुच्यास्वादीगुरुः स्निग्धावातपित्तासृदूषिका । चक्षुर्ष्ये लोहरीचोष्णापाकेवातविनाशिनी । तथैवघृतपक्वाऽपिचक्षुष्या रक्तपित्तहृत् ॥ बदरचूर्णपूरिकातु । घृतमिश्रकनिष्पायमिलितंपञ्चमाषकम् । बदरस्यगुभवंचूर्णंलवणेना लोड्यमीलयेत् ॥ पूरिकाघृतसंपक्वा खण्डपाकविलेहिता । पूरिकाबदरोषिणाग्निग्धापित्तहराहिमा ॥ मधुराम्लस्वातघ्नी सराच्छर्दिविनाशिनी । एवंविधायखर्जूरशर्करानारिकेरलैः ॥ द्राक्षयावैसुपूर्णस्तुपूरिकाःपूर्ववत्पचेत् ॥

पूरितः । त्रि॰ ज्ञातपूरणे । पूर्णे ॥ पूर्यतेस्म । पूरी॰ । क्तः । णाद्यन्तोऽपिचेष्टद् ॥ गुणिते ॥

पूरुषः । पुं॰ पुरुषे । नरे ॥ पुंसि ॥ विवक्षे ॥ यथा । यस्माद्विश्वमुदेति यत्ररमतेयस्मिन्पुनर्लीयते भासायस्यजगद्विभातिसहजानन्दोज्ज्वलं यन्महः । शान्तंशाश्वतमक्रियंयमपुनर्भावायभूतेश्वरम् द्वैतध्वान्तमपास्ययान्तिकृतिनः प्रस्तौमितंपूरुषमिति ॥ पुरति । पुरअग्रगमने । पुरः कुशन् । अन्येषामपीतिदीर्घः । पृषोदरादित्वाद्वा ॥ यद्वा । पूर्यतिपूर्यतेवा । पूरी॰वा॰ कुशन् ॥

पूर्णः । त्रि॰ व्याप्ते ॥ पूरिते ॥ पुं॰ शक्ते । समग्रे । सकले ॥ पूर्यतेस्म । पूरी॰ । कर्त्तरिकर्मणिवाक्तः । वा दान्तेतिसाधुः ॥

पूर्णकः । पुं॰ स्वर्णचूडपक्षिणि ॥ कुत्सितः पूर्णः । संज्ञायां कन् ॥

पूर्णकुम्भः । पुं॰ भद्रकुम्भे । जलपूरितघटे ॥ पूर्णश्चासौ कुम्भश्च ॥

पूर्णकोष्ठा । स्त्री॰ नागरमुस्तायाम् ॥

पूर्णचन्द्रः । पुं॰ सम्पूर्णेन्दुमयाष्टम्यो र्मध्यस्थेन्दौ ॥ पूर्णश्चासौ चन्द्रश्च ॥

पूर्णता । स्त्री॰ पर्याप्तौ ॥

पूर्णपात्रम् । न॰ वस्तुपूर्णपात्रे ॥ वर्द्धापके । पूर्णानके ॥ उत्सवकालेष्वर्गा हृतगृहीतवस्त्रालङ्कारादौ ॥ होमकर्मणि ब्रह्मदक्षिणायाम् ॥ एषांदुत्सववाक्षेयदलङ्काराम्बरादिकम । आकृष्य गृह्यते पूर्णपात्रं पूर्णानकञ्चतत् ॥

पूर्णमा । स्त्री॰ पौर्णमास्याम् ॥

पूर्णमासः । पुं॰ पौर्णमासयागे ॥

पूर्णमासी । स्त्री॰ पूर्णिमायाम् ॥

पूर्णवीजः । पुं॰ बीजपूरे ॥

पूर्णवैनाशिकः । पुं॰ वैनाशिके ॥ वैशेषिकाद्यास्त्वर्द्धवैनाशिकाः सर्वक्षणवादिनस्तु पूर्णवैनाशिकत्वेन प्रसिद्धाः शाङ्के ॥

पूर्णा । स्त्री॰ पञ्चमीदशमीपूर्णिमाख्यासु तिथ्यासु ॥

पूर्णानकम् । न॰ वर्द्धापने ॥ चानके ॥ पटहे ॥ पात्रे ॥ पूर्णपात्रे । हर्षोत्सवकाले वस्त्राद्याकर्षणे ॥

पूर्णावतारः । पुं॰ नृसिंहे । रामे ॥ परिपूर्णतमे श्रीकृष्णे ॥

पूर्णाहन्ता । स्त्री॰ परमाहन्तायाम् । यथाहुर्वार्तिककाराः । भुक्तं यथान्नं कुक्षिस्थं स्वात्मत्वेनैव पश्यति । पूर्णाहन्ताकवलितं विश्वं योगीश्वरस्तथेति ॥

पूर्णिका । स्त्री॰ नासाच्छिन्नीनामकपक्षिणि ॥

पूर्णिमा । स्त्री॰ पौर्णमास्याम् । शुक्लपञ्चदशीतिथौ ॥ सा द्विविधा । यथा । राकाचानुमतीचैव द्विविधा पूर्णिमामता । पूर्णोदितकलाधीशे पौर्णमास्यां निशाकरे ॥ पूर्णिमानुमतीज्ञेया पश्चादस्तमिते भास्करे ॥ यस्यामनुमन्यन्ते देवताः पितृभिः सह । तस्मादनुमतीनाम पूर्णिमा प्रथमा स्मृता ॥ यदास्तमिते सूर्ये पूर्णचन्द्रस्य चोद्गमः । युगपत्त्वोत्तरारागात्तदानुमतिपूर्णिमा ॥ राकान्तामनुमन्यन्ते देवताः पितृभिः सह । रञ्जनाच्चैव चन्द्रस्य राकेति कवयोऽब्रुवन् ॥ तस्यां जातस्य फलं यथा । कन्दर्पतुल्यो युवतिप्रियश्च न्यायागतवित्तः सततं सदर्पः । शूरोऽतिशीघ्रं स्वविशारदश्च स्यात्पूर्णिमाजन्मनि यस्य जन्तोः ॥ पूरी॰ । भावितः । पूर्णचन्द्रस्य पूर्णम्॰ तेन निर्वृत्ता ॥

पूर्त्तम् । न॰ खातादिकर्मणि ॥ खातादिना देवकुल्यादिप्रयत्नः । तदुक्तम् । पुष्करिण्यः सभा वापी देवतायतनानि च । आरामश्च विशेषेण

उपदासु ॥ तत्रजातस्यफलं । जितेन्द्रिय : सर्वकलासुदक्षो जितारिपक्ष : खलुतस्यनित्यम् । भवेन्मनीयान्सुतरामपूर्वापूर्वापदाभाद्रपदाप्रसूतौ ॥ पूर्वाश्चताभाद्रपदाश्च ॥ एकवचनान्तोपि ॥

पूर्वयज्ञ : । पुं॰ जिनवि॰ । सलेन्द्रे । मणिभद्रे ॥

पूर्वरङ्गः । पुं॰ नाट्यशालायाम् ॥ नाट्योपक्रमे । प्राक्सङ्गीते । गुणनिकायाम् ॥ रङ्गप्रधानस्योरङ्गविघ्नशान्तिकारीनान्दीपाठगीतवाद्यवाद्यगीतकाद्यविशेषोनाट्यादौकर्त्तव्यः वाक्य विशेषः पूर्वरङ्गः । तदुक्तंवसन्तराजीये । यन्नाट्यवस्तुनः पूर्वरङ्गविघ्नोपशान्तये । कुशीलवा : प्रकुर्वन्ति पूर्वरङ्ग : प्रकीर्त्तितः इति ॥ पूर्वरङ्गं विधायादौसूत्रधारेविनिर्गते । प्रविश्यतद्वदपर.काव्यमास्थापयेन्नट : ॥ प्रथमंपूर्वरङ्गस्ततः प्रस्तावनेतिच । आरम्भे सर्वनाट्यानामेतत्सामान्यमिष्यते ॥ पूर्वरङ्गशरीऽस्मिन् । रङ्गे धैर्यम् । कृत्स्नम् ॥

पूर्वराग. । पुं॰ नायिकानायिकयोर्दर्शनादिजे ॥ श्रवणाद्दर्शनाद्वापिमिथ : संगूढरागयो : । दशाविशेषो योऽप्राप्तौपूर्वराग.सउच्यते ॥ कृ॰ ॥

पूर्वरात्र : । पुं॰ रात्रेःपूर्वभागे ॥ रात्राह्नाहा : पुंसि ॥

पूर्वरूपम् । न॰ पूर्वलक्षणे ॥ वैद्यके, भाविव्याधिबोधकचिह्ने ॥

पूर्ववत् । न॰॰अनुमानविशेषे ॥ यथा । दृष्टस्वलक्षणसामान्यविषयंयत्॰ तत्पूर्ववदुच्यते । पूर्वंप्रसिद्धमृदृष्टस्वलक्षणसामान्यमितियावत्॰तस्यसविषयत्वं नास्ति॰अनुमानस्यानस्येतिपूर्ववत् । यथाधूमाद्वह्नित्वसामान्यविशेष : पर्वतेनुमीयते॰ तस्यवह्नित्वसामान्यस्यलक्षणवह्निविशेषोदृष्टोऽन्सवत्याम् । वीतावीतभेदाद्द्विविधम् ॥

पूर्ववादी । त्रि॰ प्रागभियोक्तरि । प्रथमविवादिनि ॥

पूर्ववित् । त्रि॰ अतीतज्ञे ॥

पूर्वशैल : पुं॰ उदयपर्वते ॥

पूर्वसर : । त्रि॰ अग्रगामिनि ॥

पूर्वा । स्त्री॰ पूर्वदिशि । प्राच्याम् ॥ तद्दिग्भवायुगुणा : । पूर्वस्तुमधुरोवात : स्निग्ध : काटुरसान्वित : । गुरुर्विदाहजननोवातरक्तपित्तनाशन : ॥ इति ॥

पूर्वाद्रि : । पुं॰ उदयाचले । दिनसूर्द्धनि ॥

पूर्वाषाढा । स्त्री॰ अश्विन्यादिसप्तविंशतिनक्षत्रान्तर्गतविंशतिसंख्याकनक्षत्रे ॥ तत्रजातस्यफलंयथा । क्षमीभय : सूयमानानुरक्तो भक्तोदेवैश्च मान्योविदग्ध : । पूर्वाषाढाऊ-

प्रकालेयदिखादापाठः स्यादेरि
यर्गेनिरात्मम् पूसावर्णाचापाठाच॥

पूर्वाह्णः । पुं॰ द्विधाविभक्तदिनस्य
पूर्वभागे ॥ यथा । आवर्तनास्तपू
र्वाह्णोऽथपराह्णस्ततः परः । आ
वर्तनात्॰वासरस्यच्छायापरिवर्तना
त्प्रागितिशेषः ॥ त्रिधाविभक्तदि
नस्यप्रथमभागे ॥ सचत्रिंशद्दण्डदि
नमानेसूर्योदयावधिदशदण्डात्मकः
काल : यथा । पूर्वाह्णोवैदेवानां
मध्यंदिनंमनुष्याणामपराह्णः पि
तृणामितिश्रुतिः ॥ अह्नः पूर्वम्
। पूर्वापराधरोत्तरमेकदेशिसमासः ।
राजाहः सखिभ्यष्टजितिटच् । अ
ह्नादेशोणत्वम् ॥

पूर्वाह्णेतनम् । त्रि॰ पौर्वाह्णिके ॥
पूर्वाह्णेभवः । विभाषापूर्वाह्णा
पराह्णाभ्याम्॰इतिट्युट्युलौतुट्च
। घकालतनेष्विस्यलुक् ॥

पूर्वेद्युः । अ॰ प्रातःकाले । धर्मवा
सरे ॥ पूर्वस्मिन्नहनि ॥ रूपः पक
दित्यादिनापूर्वशब्दादेद्युसुप्रत्ययो
निपात्यते ॥

पूष : । पुं॰ ब्रह्मदारुणि । तूत॰इ॰
भा॰ ॥ पूषतृप्तौ । इगुपधात्कः ॥

पूषक : । पुं॰ ब्रह्मदारुणि ॥ पूषएव
कः ॥

पूषा । पुं॰ सूर्ये ॥ जगतःपोषणा
त् । पुष्णाति । पुषपुष्टौ । श्वन्नु-

घन्नैपुषन्निति निपातितः ।

पूषभासा । स्त्री॰ अमरावत्याम् ।
इन्द्रनगर्याम् । सुरपुर्याम् ॥

पूषसुहृत् । पुं॰ शिवे ॥

पृषा । स्त्री॰ पिङ्गलापृष्ठवर्ति न्याम
ङ्गाम ॥ पृषातुपिङ्गलापृष्ठे नील
जीमूतसन्निभा । याम्यभागसमेता-
न्ताथावत्पादतलंगता ॥

पृक्का । स्त्री॰ मरुन्मालायाम् । पिशु
नायामोषधौ । अतारवा॰इ॰भा॰
। पिडिं॰इ॰गौ॰भा॰स्पृशती । स्पृ
शस्पर्शने । वा॰ कक् । पृ॰ ॥

पृक्तम् । न॰ धने ॥ त्रि॰ मिलिते ॥
सम्पर्कयुक्ते ॥ पृच्यते । पृचीं॰ ।
क्तः ॥

पृक्ति : । स्त्री॰ सम्पर्के । स्पृष्टौ ।
स्पर्शे ॥ पर्चनम् । पृचीसम्पर्के ।
क्तिन् ॥

पृच्छा । स्त्री॰ अनुयोगे । प्रश्ने ॥ प्रच्छ
नम् । प्रच्छज्ञीप्सायाम् । गुरोश्चह
लइत्यः । सम्प्रसारणम् ॥

पृच्छितम् : । पुं॰ प्रश्नकर्त्रे ॥

पृच्छ्यम् । त्रि॰ प्रष्टव्ये ॥

पृतना । स्त्री॰ सेनामात्रे ॥ सेनावि
शेषे । तिस्रएवाहिन्यौ ॥ अत्रे भा॰ ॥
२४३ । रथाः २४३ । अश्वाः ७२
८ । पादातिकाः १२१५ । समस्तम
ङ्ख्ययासविंशतिचतुर्विंशतिभिः पृ
ता । २४३॰ ॥ प्रियते । पृङ्व्या-

यासे । दा० तनः शुक्लमावश ॥
पृतनाषाट् । पुं० इन्द्रे । पृतनां सह
ते । पद्मसर्पये । छन्दसिसहइति०
णिव : सहेरितिप : ॥
पृथक् । अ० भिन्ने । विनार्थे । अन्तरे
ण । ऋते ॥ असङ्कीर्णे । नानार्थे ॥
पर्य्ययति । पृथप्रक्षेपे । चा० अक् ॥
पृथक्त्वम् । न० पृथक्प्रत्ययासाधारण
कारणत्वे ॥ यथा । सङ्ख्यावच्चपृ
थक्त्वंस्यात्पृथक्प्रत्ययकारणम् ।
अन्योन्याभावतोनास्य चरितार्थत्व
मुच्यते ॥ अस्मात्पृथगिदंनेतिप्रती
तिर्हि विलक्षणा ॥ पृथक्त्वं निरूपयति
सङ्ख्यावदिति । पृथक्प्रत्ययासाधा
रणकारणपृथक्त्वम् । तन्नित्यता-
दिकंसंख्यावत् । यथानित्ये एक
त्व नित्यम्० अनित्ये अनित्यम्० आ
श्रयद्वितीयक्षणेचोत्पत्तिराश्रयना
शान्नश्यति० तथापृथक्त्वमपिद्वित्वादि
वत्द्विपृथक्त्वादिकमपीत्यर्थः । वैयो
माईयविवेके ॥ भेदे ॥ शाविक्य : ॥
पृथग्भावे । परस्परभिन्नत्वे ॥
पृथक्त्वचा । स्त्री० मूर्वायाम् । कर्क-
टीशा० इ० भा० । देव्याम् । म-
धुरसायाम् ॥ पृथक्त्वचायस्या : ॥
पृथक्पर्णी । स्त्री० पृश्निपर्ण्याम् । चि
त्रपर्ण्याम् । पीठवनी० इ० भा० ।
पाकुरप्रा० इ० भा० ॥ पृथक्पृथ
क्पर्णमस्या : । पाकर्णादित्वीप् ।

पृथगात्मता । स्त्री० विवेके । व्यक्तौ ॥
पृथगात्माऽयस्य । तस्यभाव : । त
ल् । तलन्तंस्त्रियाम् ॥
पृथगात्मिका । स्त्री० व्यक्तौ ॥
पृथग्जन : । पुं० मूर्खे ॥ नीचे ।
पामरे ॥ पृथक्कार्यीजन : असभ्य-
त्वात्पृथग्जनः । शाकपार्थिवादि
। सज्जनेभ्य : पृथग्भूतोजनोवा ।
त्रि० पापिनि । भिन्नलोके ।
पृथग्रूप : । त्रि० बहुविधे । पृथ
क्रूपमस्य । ~ ~
पृथग्वर्त्मात्मा । पुं० वायौ । पृथक्
नानाविधंवर्त्मसञ्चरणमात्मास्वभा
वोऽस्य ॥
पृथग्वाद : । पुं० द्वैतिनि । पृथक्
नानावस्तु० इत्थं वदनंयस्य ॥
पृथग्विध : । त्रि० नानारूपे । पृथक्
धर्माधर्मादिसाधनवैचित्र्य०पर
स्परविलक्षणाविधायस्य ।
पृथग्बीज : । पुं० भल्लातके ।
पृथक् । भिन्ने । विलक्षणे । प्रथयति
। प्रथ० । प्रथ. किस्सम्प्रसारणञ्च
प्रत्यजि : ।
पृथवी । स्त्री० भुवि । पृथिव्याम् ।
प्रथते । प्रथविस्तारे । प्रथे : षवन्
सम्प्रसारणञ्चेत्यके । षित्त्वान्ङीप् ।
पृथा । स्त्री० कुन्त्याम् । वसुदेवस्वस
रि । पाण्डो : पत्न्याम् ॥
पृथाज : । पुं० कुन्तीपुत्रे । युधिष्ठि

यामे । वा०तन: गुणाभावश्च ॥
पृतनाषाट् । पुं० इन्द्रे ॥ पृतनांसह
ते । पृतनाशब्दे । छन्दसिसहइति०
ण्वि : सहेरितिष: ॥
पृथक् । अ० भिन्ने । विनार्थे । अन्तरे
च । वर्ते ॥ अमरकोषे ॥ नानार्थे ॥
पर्थयति । पृथप्रक्षेपे । वा० अस् ॥
पृथक्त्वम् । न० पृथक्प्रत्ययासाधारण
कारणत्वे ॥ यथा । सङ्ख्यायथापृ
थक्त्वंस्यात्पृथक्प्रत्ययकारणम् ।
अन्योन्याभावतोनास्य चरितार्थत्व
मुच्यते ॥ अस्मात्पृथगियमितिप्रती
तिर्हिविलक्षणा॥ पृथक्त्वं निरूपयति
सङ्ख्यावदिति । पृथक्प्रत्ययासाधा
रणकारणपृथक्त्वम् । तन्नित्यता-
दिकंसंख्यावत् । यथानित्ये यत्त्वैक
त्वं नित्यम्०अनित्ये अनित्यम्०था
श्रयद्वितीयक्षणेपोत्पद्यतेयाश्रयना-
शान्नश्यति० तथापृथक्त्वमपिद्वित्वादि
वत्द्विपृथक्त्वादिकमपीत्यर्थ: । द्वैवो
पादेयविवेकी ॥ भेदे ॥ शाविरूप: ॥
पृथग्भावे । परस्परभिन्नत्वे ॥
पृथक्त्वचा । स्त्री० मूर्वायाम् । अर्क-
पीला० इ० मा० । देव्याम् । म-
धुरसायाम् ॥ पृथक्त्वचायस्या: ॥
पृथक्पर्णी । स्त्री० पृश्निपर्ण्याम् । चि
त्रपर्ण्याम् । पीठवनी०इ० भा० ।
पाकुल्या० इ० भा० ॥ पृथक्पृथक्
तांपर्णमस्या: । पाककर्णेतिङीष् ।

पृथगात्मता । स्त्री० विवेके ॥ व्यक्तौ ॥
पृथगात्मायस्य । तस्यभाव: । त
ल् । तलन्तंस्त्रियाम् ॥
पृथगात्मिका । स्त्री० व्यक्तौ ॥
पृथग्जन: । पुं० मूर्खे ॥ नीचे ।
अधमे ॥ पृथक्कार्यीजन: असभ्य-
त्वात्पृथग्जन: । शाकपार्थिवादि:
॥ सज्जनेभ्य: पृथग्भूतोजनोवा ।
वि० पापिनि ॥ भिन्नलोके ॥
पृथग्रूप: । त्रि० बहुविधे । पृथ
क् रूपमस्य ॥
पृथग्वर्त्मात्मा । पुं० वायौ ॥ पृथक्
नानाविधवंशसञ्चरणमात्मास्यभा
वोऽस्य ॥
पृथग्वाद: । पुं० द्वैतिनि । पृथक्
नानावस्तु०द्वैतं वंवदनंयस्य ॥
पृथग्विध: । त्रि० नानारूपे । पृथक्
धर्माधर्मादिसाधनवैचित्र्येण०पर
स्परविलक्षणाविधायस्य ॥
पृथग्बीज: । पुं० भल्लातके ॥
पृथक् । भिन्ने । विलक्षणे ॥ प्रथयति
। प्रथ० । प्रथ: किन्सम्प्रसारणञ्च
स्विचि: ॥
पृथवी । स्त्री० भुवि । पृथिव्याम् ॥
प्रथते । प्रथविस्तारे । प्रथे: षवन्
सम्प्रसारणञ्चेत्येके। षित्वान्ङीष् ॥
पृथा । स्त्री० कुन्त्याम् । वसुदेवस्यस
रि । पाण्डो: पत्न्याम् ॥
पृथाज: । पुं० कुन्तीपुत्रे । युधिष्ठि

रैव । संज्ञायांकन् ॥ यद्वा प्रथते ॥ प्रथप्रख्याने । पर्थयति॰पथ्य तेवा । पृथुप्रक्षेपे । चु॰ । अर्भकपृथुकेति पृथेर्वाकुकन्॰प्रथेःसम्प्रसारणञ्च ॥ यद्वा । पृथुकायति । कै शब्दे । आतश्चोपसर्गे क : ॥ त्रि॰ शिशौ । अर्भके ॥

पृथुका । स्त्री॰ हिङ्गुपत्र्याम् ॥ बालिकायाम् ॥

पृथुकोल : । पुं॰ राजबदरे ॥

पृथुच्छद : । पुं॰ दर्भभेदे ॥ त्रि॰ वृहत्पत्रे ॥

पृथुदभ : । पुं॰ रक्तलशुने ॥ दरिद्रभे ॥

पृथुपलाशिका । स्त्री॰ शट्याम् ॥

पृथुरोमा । पुं॰ मत्स्ये ॥ पृथूनि महान्तिरोमाण्यस्य । रोमशब्देनात्र शल्कानि लक्ष्यन्ते । मत्स्यामितिस- र्वधर : ॥ त्रि॰ वृहल्लोमयुक्ते ॥

पृथुल : । त्रि॰ विशाले ॥ पृथुत्वमस्यास्ति । सि॰लच् ॥ पृथुत्वं लातिवा । क : ॥

पृथुला । स्त्री॰ हिङ्गुपत्र्याम् ॥ टाप्

पृथुशिम्ब : । पुं॰ श्योनाकभेदे ॥

पृथुशेखर : । पुं॰ पर्वते ॥ पृथुसंहान् शेखरोऽस्य ॥

पृथुसेन : । पुं॰ राज्ञि ॥ पृथ्वीसेना यस्य ॥

पृथुस्कन्ध : । पुं॰ शूकरे ॥

पृथूदकम् । न॰ तीर्थविशेषे॰

पृथूदर : । पुं॰ मेषे ॥ त्रि॰ वृहत्कुक्षौ ॥

पृथ्वी । स्त्री॰ भूमौ । अचलायाम् । धरायाम् ॥ स॰ त्वक्क्षामक्षुपत्र्याम् हिङ्गुपत्र्याम् ॥ कृष्णजीरके ॥ वृहदेलायाम् ॥ पुनर्नवायाम् ॥ प्रथते प्रथविस्तारे॰ प्रख्यानेवा । प्रथिम्रदिभ्रस्जांसम्प्रसारणमितिकु : । वोतोगुणवचनादिति ङीष् ॥ वर्णवृत्तविशेषे । तल्लक्षणं यथा । जसौजसयलावसुग्रहयतिश्चपृथ्वीगुरुरिति । अपिच । पयोधरयुगास्फुरत्कनकयुग्मताटङ्किनीसुवर्णरचिताङ्कचाचजितभावनूपुरा । सुवर्णरचिरांशुकस्तवकबद्धमवत्कुण्डलाभुजङ्गपतिवर्णितावरतिश्चपृथ्वीमम ॥ यथा । घताधरतटीघनस्तनितमङ्गरागव्ययोदृशोरविरतोभिमाभवतिकारणादन्यत : । इदंतवपरप्रियानिभृतसङ्गमव्यञ्जकंसुखेयदिदमञ्जनंरचसिचार्द्धचन्द्रं गले ॥

पृथ्वीका । स्त्री॰वृहदेलायाम् ॥ कृष्णजीरके । कलाजाज्याम् ॥ हिङ्गुपत्र्याम् ॥ प्रथते । प्रथप्रख्याने । फर्फरीकादयश्चेतिसाधु : ॥

पृथ्वीकुरबक : । पुं॰ श्वेतमन्दारे ॥

पृथ्वीजम् । न॰ गडलवणे ॥

पृदाकुः । पुं० वृश्चिके ॥ व्याघ्रे ॥ सर्पे ॥ चित्रके ॥ पर्दते । पर्द० । पर्देर्नित्सम्प्र सारणमल्लोपश्चेति काकुप्रत्ययः ॥

पृश्निः । स्त्री० रश्मौ ॥ त्रि० अल्पतनौ ॥ स्पृशति स्पृश्यते वा । स्पृश संस्पर्शे । घृणिपृश्नीति साधुः ॥ पृच्छति पृच्छ्यते वा । पर्षति पृष्यते वा । प्रच्छ्यतेऽसावाम् । पृषु सेचने वा । पूर्ववत्साधुः ॥

पृश्निका । स्त्री० कुम्भिकायाम् ॥

पृश्निगर्भः । पुं० गदाग्रजे । श्रीकृष्णे ॥

पृश्निपर्णी । स्त्री० पृथक्पर्ण्याम् । चकुलिकाक्षिकायाम् । चक्रीति हि० । पिठवनि० इ० च० भा० । चाकुलिया० इ० गौ० भा० ॥ पृश्निपर्णी त्रिदोषघ्नी वृष्योष्णा मधुरा सरा । हन्ति दाहज्वरश्वासरक्तातीसारतृड्वमीः ॥ पृश्निरल्पं पर्णमस्याः । पाककर्णेति ङीष् ॥

पृश्निभद्रः । पुं० श्रीकृष्णे ॥

पृश्निशृङ्गः । पुं० विष्णौ ॥ गणेशे ॥

पृश्नी । स्त्री० वारिपर्ण्याम् ॥

पृषत् । पुं० मृगे ॥ न० विन्दौ ॥ त्रि० श्वेतविन्दुयुक्ते ॥ पर्षति । पृषु सेचने । वर्तमाने पृषद्बृहन्महज्जगदिति अतिप्रत्ययो गुणाभावश्च निपात्यते । शतृवद्भावश्चार्यम् ॥

पृषतः । पुं० पृषाकमृगे । चित्रमृगे ॥ यथा । पृषतस्तु चित्रविन्दुः स्यादरिष्टात्किञ्चिदल्पकः ॥ पृषतस्तु भवेत्स्वादुर्ग्राहकः शीतलो लघुः । दीपनो रोचनः श्वासज्वरदोषत्रयापहः ॥ इति ॥ विन्दौ ॥ त्रि० श्वेतविन्दुयुक्ते ॥ पर्षति । पृषु० । पृषिरञ्जिभ्यां कित् इत्यतच् ॥ यथा । पृषताः विन्दवः सन्त्यस्य । अर्शआद्यच् ॥

पृषताम्पतिः । पुं० वायौ ॥

पृषताश्वः । पुं० वायौ । अनिले ॥ पृषतो मृगविशेषोऽश्वो वाहनमस्य ॥

पृषती । स्त्री० मृग्याम् ॥

पृषत्कः । पुं० वाणे । शरे ॥ पर्षति पृषु० । अटः शतृ । संज्ञापूर्वकत्वान्न गुणः ॥ यद्वा । वर्तमाने पृषन्महदिति साधुः स्वार्थे कन् ॥

पृषदश्वः । पुं० गन्धवहे । पवने । वायौ ॥ पृषन्मृगभेदोऽश्वो वाहनमस्य ॥ पृषतामश्वानामश्ववद्वेति वा ॥

पृषदाज्यम् । न० सदध्याज्ये । दधिमिश्रितघृते ॥ पृषच्च तदाज्यञ्च ॥ यद्वा । पृषद्भिः सहितमाज्यम् ॥

पृषद्वलः । पुं० वायुसखे ॥

पृषन्तिः । पुं० विन्दौ ॥ यथा । पयः पृषन्तिभिः स्पृष्टा वान्ति वाताः शनैः शनैरिति शाकुन्तले दृश्यते ॥ [illegible]

पृषभाषा । स्त्री० इन्द्रपुर्याम् ॥

पृषाकरा । स्त्री॰ क्षुद्राश्मनि । वटखराद्य॰भा॰ ॥
पृषातकम् । न॰ सदध्याज्ये ॥
पृष्टम् । न॰ सामगानांमाध्यन्दिनसवनेगीयमानस्तोत्राणांनामधेये ॥ त्रि॰ कृतप्रश्ने । उपासिते ॥
पृष्टेः त्व : ॥
पृष्ट्य : । त्रि॰ जिज्ञासिते ॥
पृष्ठम् । न॰ शरीरपश्चाद्भागे । पार्श्वस्थाने । पीठ॰इ॰भा॰ ॥ चरमभागमात्रेणालक्षणया । सुस्निग्धमांसलपृष्ठमभग्नस्त्राण्यरोमशम् । सवनानामिपर्वस्त निर्दनानां प्रकीर्तितमितिसमुद्र : ॥ चरममाघे ॥ पृष्ठते । पृषु॰ । तिथपृष्ठगूमिति साधु ॥ स्तोत्रविशेषेपिपृष्टम्॰ चिन्ताधिकरणे॰ पृष्ठैः स्तुवन्तइत्यादौ तथानिर्णयात् ॥
पृष्ठग्रन्थि : । पुं॰ गडौ । कूब॰ इ॰भा॰ ॥
पृष्ठत : । अ॰ पश्चात् । पृष्ठदेशे ॥ पृष्ठे इति । आद्यादित्वात्तसिः ॥
पृष्ठदृष्टि । पुं॰ भल्लूके ॥
पृष्ठमांसाद : । त्रि॰ परोक्षे दोषाभिधायिनि ॥ वाच्यामिधायिनि ॥ इ॰ त्रिकाण्डशेष : ॥
पृष्ठमांसादनम् । न॰ परोक्षे दोषकीर्तने ॥ त्रि॰ तद्दति ॥
पृष्ठयाण । पुं॰ रीठके । पृष्ठास्थि-
नि ॥ सतुगर्भेमांससमाने याऽभवति ॥
पृष्ठवह : । पुं॰ पृष्ठवाह्ये ॥
पृष्ठवास्तु । न॰ गृहस्योपरिगृहे ॥
पृष्ठवाट्टह् । पुं॰ युगपार्श्वगवृषे ॥
पृष्ठवाहिनि ॥
पृष्ठवाह : । पुं॰ } वृषे ॥
पृष्ठवाहक : । पुं॰ }
पृष्ठशय्य : । पुं॰ आरनाङ्कभवे । खौरिणि । पृष्ठे ॥
पृष्ठशृङ्ग : । पुं॰ वनच्छागे ॥
पृष्ठशृङ्गी । पुं॰ हंसभीरौ । सैरिभे । गडे । भीमसेने । वकोदरे ॥
पृष्ठशायन : । पुं॰ धान्यविशेषे ॥ मतः छुवे ॥
पृष्ठी । पुं॰ मत्स्यविशेषे ॥
पृष्ठोदय : । पुं॰ राशिविशेषे ॥ मेषोहपकर्कटधनुर्मकरपञ्च । पृष्ठोदया : पडेवशेषानघापितदेवच ॥
पृष्ठ्य : । पुं॰ खौरिणि । पृष्ठिभारवहनशीलेघोटके ॥ न॰ पृष्ठवृन्दे ॥ यच्चस्मिन्नेद : अरत्नि ॥ पृष्ठ्यानांस मूह : । पृष्ठ्यान् ॥ प्रशस्तमतिशयितंपृष्ठमस्य । यन्यं ष्योपीतियद्वा
पृष्णि । पुं॰ सूर्ये ॥
पृष्णिका } स्त्री॰ } कुत्तृणे । कुम्भ्या
पृष्णी । } म॰ ॥
पेचक : । पुं॰ उलूके । वायसारातौ । कौशिके ॥ यूके ॥ गजलाङ्गूलमूले । तद्द्वाष्ठादकमांसपिण्डवि

शोधे ॥ पचति०पच्यतेवा०टुःखसे न । डुपचष्० ॥ पचिमच्योरित्वो-पधायाइतिवुन् । चतड्त्वम् । पु नर्ना तिगुपःपर्यन्द्व० मेचे० । शूके ॥
पेत्वकी । पुं० हस्तिनि ॥
पेचिल : । पुं० गजे । हस्तिनि ॥
पेचु । न० पेचुल्याम् ॥
पेचुकम् । न० नाडीचशाके। पेचुल्याम् ॥ चिन्तामणौपेचकमितिपाठ:
पेचुली । स्त्री० पिचुनि । नाडीचशाके
पेट : । पुं० प्रहस्ते । पेटति । पिट० । प० अच् ॥
पेटक : । पुं० न० पिटके । पुस्तका दीनांमञ्जूषायाम् । पिटार० हू० भा० ॥ नि० कदम्बके । समूहे ॥ पेटति । पिटशब्दसंघातयो :। ण्वुल् ॥
पेटाक : । पुं० पेडायाम् । पेटके ॥
पेटिका । स्त्री० छत्रविशेषे० । कुवेरा ख्यायाम् । क्षुद्रमञ्जूषायाम् ॥
पेटी । स्त्री० पेटके ॥
पेडा । स्त्री० पेटके । मञ्जूषायाम् । हस्तपेटाके । पिडते । पिडिसं-घाते । भ० अच् । अनित्यत्वान्नुम् न ॥
पेत्वम् । न० अमृते । घृते । पीयते । धा० । अन्येभ्योपिदृश्यत इति० त्वन् ॥
पेपीयमान : । त्रि० पुनःपुनरत्यापीय-
साने ॥
पेयम् । न० पयसि । जले ॥ दुग्धे ॥ मद्ये । अष्टविधान्नान्तर्गतान्नवि० । यथा।भोज्यंपेयंतथाचूष्यंलेह्यंखाद्यंच चर्वणम् । निष्पेयञ्चैवभक्ष्यं स्याद-न्नमष्टविधंस्मृतम् ॥ द्र० रा० नि० ॥ त्रि० पानयोग्यद्रव्ये । पातव्ये ॥ पातुंयोग्यम् । पा० । यत् । ईद्यति । गुण: ॥
पेया । स्त्री० आपणवाम् । षड्गुणजले । सिक्थसमन्वितपेयद्रव्ये । पेया विधिर्यथा । चतुर्दशगुणेनीरेरक्ता ग्नास्थादिभि : स्रुता । द्रवाधिका-स्वल्पसिक्थापेयाप्रोक्ताभिषग्वरैः । सातिसवीर्याधिकीचधातुपुष्टिविधा यिनी । स्वेदाग्निजननीज्ञेयावात-वर्चोनुलोमिनी । शुण्ठीसैंधवमंयु क्ताद्रोपरोपाचनोचसा । आमशूल हरीरुच्याख्यातिवस्थविनाशिनी । पातुंयोग्या । पा० । यत् । ईद्दणौ । टाप् ।
पेयूष : । पुं० न० अमृते । नव्यदु ग्धे । सप्तदिवसावधिक्षीरे । आस प्रसवप्रभवंक्षीरंपेयूषउच्यते । पीय ते०पीयतेऽनेनवा । पीयततिसौ त्रोधातु: प्रीतौ । पीयेरूपन् । पत्त लत्वनात्पक्षेगुण : ॥ अग्निसंयो-गात्कठिनत्वंगतेनवप्रसूतायागो: क्षीरे ॥ क्षीरंसत्कालसूतायाघनं-

त्यायाम् । पट्टे । गरुडकञ्चपे । सि
त० द्र० भा० ॥
पेघल : । वि० पेशले ॥
पैपासा : । पुं० पेयस्थास् ॥
पैंङ्ग्य : । पुं० कर्षे ॥
पैठर : । वि० उखे । स्थालीपक्वमां
साढी ॥ पिठरेसंस्कृतम् । संस्कृतंभचा
इत्यण् ॥
पैठीनसि : । पुं० स्मृतिकारकैमुनि
विशेषे ॥
पैण्डिन्यम् । न० भैक्षजीविकायाम् ॥
पैतामहम् । वि० पित्र्ये । पितामह
सम्बन्धिधनादौ । पितामहस्येदम्
। तस्येदमित्यण् ॥ स्त्रियांपैतामही
पैतृकम् । वि० पितृसम्बन्धिनिधनादौ
॥ सुसिमद्यौयतेयमसदेश : तत्रपै
तृक : ॥ पितुरागतम् । पितुर्यश्चे
तिचकाराट्ठञ् ॥ छौमि० पैतृकौवि
द्या ॥
पैतृकभूमि : स्त्री० । पितृसम्बन्धिस्थाने ॥
पैतृष्वसेय : । वि० पितुर्भगिनीसन्त
तौ । पितृष्वसुरपत्यम् । ढकिलोप :
। अतएवज्ञापकाड्ढञ् ॥ स्त्रियांपैतृ
ष्वसेयी ॥
पैतृष्वस्रीय : । वि० पितुर्भागिनेये ।
पैतृष्वसेये ॥ पितृष्वसुरपत्यम् ।
पितृष्वसुश्छण् ॥
पैत्त : । त्रि० पैत्तिके ॥
पैत्तिकम् । वि० पित्तजव्याधौ । पि-
त्तसम्भवे ॥ पित्तस्यशमनंकोपनंवा
वातपित्तश्लेष्म : शमनकोपनयो
रितिठञ् ॥
पैत्रम् । न० पितृतीर्थे । तर्जन्यंगुष्ठयो
र्मध्ये ॥ पितृणामिदम् । तस्येद
मित्यण् ॥ वि० पितृसम्बन्धिनि ॥
पैत्राहोरात्र : । पुं० पितृलोकस्याहि
रात्रौ । त्वर्यामासि । कृष्णपक्ष :
पितृणांदिनम् । शुक्लपक्षोरात्रि : ।
पितृणामयम् । पैत्र : । पैत्रश्चासा
वहोरात्रश्च ॥
पैत्र्य : । पुं० दैवसर्गप्रभेदे ॥
पैप्पलम् । वि० पिप्पलकाष्ठे ॥ पि-
प्पलभवानि ॥ पिप्पलस्यावयवोवि
कारोवा । अवयवेचेत्यण् ॥
पैल : । पुं० ऋषिविशेषे । ऋग्वेदधा
रकेव्यासशिष्ये । पीलायाअपत्यम्
। पीलायावेत्यण् ॥
पैलेय : । पुं० पैले ॥ पीलायाअपत्य
म् । अयमार्षे० हाप इति० ढक् ॥
पैशाच : । पुं० अष्टप्रकारविवाहान्त
र्गताष्टमविवाहे ॥ पैशाच : कन्य-
काछलात् । छलमाह्मनु : । सुप्तां
मत्तांप्रमत्तांवारहोयत्रोपगच्छति ।
सपापिष्ठोविवाहानांपैशाचश्चाष्टमो
धम : ॥ पिशाचस्यायम् । अण् ॥
पिशाचएववा । स्वार्थिक : प्रज्ञाद्य
ण् । दैवसर्गविशेषे ॥ वि० पिशाच
सम्बन्धिनि ॥

वा । पूञ्० । हसिमृग्रिण्वितितन् ॥ यद्वा । पवते । पूङ्० । पूर्ववत्तन् ॥

पोतकी । स्त्री० श्यामायाम् । 'सौन फिडी० इ० भा० । पूतिकायाम् उपोदिकायाम् । मालवे० यस्तत्र सरोति प्रसिद्धा । पोईशाक इ० भा० ॥ पोतकी शीतला स्निग्धा श्लेष्मला वातपित्तनुत् । अकण्ठ्या पिच्छला निद्राशुक्रदा रक्तपित्तजित् । बलदा रुचिकृत् पथ्या बृंहणी तृप्तिकारिणी ॥

पोतजः । पुं० कुञ्जरादौ ॥

पोतवणिक् । पुं० सांयात्रिके । नावा नानावाणिज्यकरे ॥ पोतेनोपलक्षितो वणिक् ॥

पोतवणिक्प्रियः । पुं० बुद्धप्रभेदे ॥ पोतवणिजः प्रियो यस्य ॥

पोतरक्षः । पुं० केनिपाते । पतवार० इ० भा० ॥ कालि० इ० गौ० भा० ॥

पोतवाहः । पुं० नियामके । गुणवृक्षोपरिस्थितेनाविकावि० ॥ वहित्र वाहके । दाँडी० इ० गौ० भा० ॥ पोतं वहति । वह० । कर्मण्यण् ॥

पोताच्छादनम् । न० वस्त्रकुट्टिमे ॥

पोताधानम् । न० क्षुद्रमत्स्यसंघाते । पोना० इ० गौ० भा० ॥ पोता डिम्भा आधीयन्ते । धाञः क

र्मणि ल्युट् ॥ यद्वा । पोतोऽर्भकः आधीयतेऽत्र । अधिकरणे ल्युट् ॥

पोतासः । पुं० कर्पूरविशेषे ॥

पोतिका । स्त्री० शतपुष्पायाम् ॥ पूतिकायाम् ॥ मूलपोत्याम् ॥

पोती । स्त्री० पश्चियांसल्यपर्णी ॥ पोतस्थक्षुद्रनौकायाम् ॥ पोतास्य यस्मिन्नयम इति ङीप् ॥

पोत्रः । पुं० स्रुविणि ॥ पुनाति । पूञ्० । हन्विधाघस्यिमुपानुमस नीभ्ये इति त्रन् ॥ भतृणिदूद्यदृजोदयो दश्यादश्यामालदृष्टि इति साधुः ॥ विश्वौ ॥

पोत्रम् । न० वस्त्रे ॥ शूकरमुखाग्रे ॥ हलस्याग्रे । फालाग्रे ॥ पूयतेऽनेन । पूञ्० । हलसूकरयोः पुवः इति ष्ट्रन् ॥ वस्त्रं ॥

पोत्रायुधः । पुं० शूकरे ॥

पोत्री । पुं० कोले । सूकरे ॥ पोत्रमुखाग्रमस्त्यस्य । अतइनिः ॥

पोमिरथा । स्त्री० जिनशासि० । शिमुखाग्राम् । यक्षकालिकायाम् । मायादेव्याम् ॥

पोलिका । स्त्री० पिष्टकविशेषे ॥ यथा । कुर्यात्सलिलशालीवत्तन्वीं पर्पटिकां ततः । खेदयेत्तप्तकैतान्तु पोलिकां जगदुर्बुधाः ॥ तांश्चादेलपिकादुलांतस्मादसुकवस्तु पाः ॥

पोलिन्दः । नौकावयवविशेषे । पाटा

रथी ॥

पोष्ली । स्त्री० पिष्टकवि० । पूपाख्या न् । चर्पट्याम् ॥

पोप : । पुं० पोषणे ॥

पोषक : । त्रि० पालनकर्त्तरि ॥

पोषणम् । न० पुष्टौ ॥ पुष्पपुष्टौ ॥ ल्युट् ॥ पुष्टौ ॥

पोषयित्नु : । पुं० कोकिले ॥ भर्त्तरि ॥ हिजी ॥ त्रि० पोषके । पोषणकर्त्तरि ॥ पोषयति । पुष० । स्तनिहृषिपुषी त्यादिना० इत्नुच् ॥

पोष्टा । पुं० पूतीके । काँटाकरञ्ज० इ० गौ० भा० ॥ त्रि० पोषणकर्त्तरि ॥ पुष्णाति । पुष० । तृच् ॥

पोष्टृवरे : । त्रि० पोषकाग्रेष्ठे ॥

पोष्य : । त्रि० प्रतिपाल्ये । पोषणीये । अवश्यसम्वर्धनीये पोष्यवर्गे ॥

पोष्यपुत्र : । पुं० पुत्रप्रतिनिधौपालनासुतत्वंप्राप्ते ॥

पोष्यवर्ग : । पुं० परिजने । प्रतिपालनीयगणे । यथा मातापितागुरु : पत्नीत्वपत्यानिसमाश्रिता : । अभ्यागतोऽतिथिरग्निः : पोष्यवर्गाच-मीनव ॥

अपिच । मातापितागुरुर्भ्राताप्रजा: दीना : समाश्रिता : । अभ्यागतोऽतिथिरग्नि : पोष्यवर्गउदाहृत : ॥ भरणंपोष्यवर्गस्यप्रशस्तंस्वर्गसाधनम् । नरकंपीडनेचास्यतस्माद्यत्नेन संभरेत् ॥ पोष्याखांवर्ग : ॥

पौंसवनम् । न० पुंसवनसंस्कारे ॥

पौंस्नम् । न० पुंस्त्वे ॥ पुंसइदम् । स्त्रीपुंसाभ्यांनञ्स्नञौ भवनादिति स्नञ् ॥ त्रि० पुंसुभवे ॥ स्त्रियांपौंस्नी ॥

पौगण्डम् । न० पञ्चाब्दानन्तरंदशाब्दपर्यन्तायामवस्थायाम् ॥ यथा । कौमारंपञ्चमाब्दान्तंपौगण्डंदशमावधि । कैशोरमापञ्चदशात्यौवनन्तुततः परमिति ॥ आचार्यप्रमुखाच्चांछिथीन : पौन्धं मतैर्मतौ । यतो गण्डावस्थितेनपौगण्ड : सप्तमोऽत्र धैरित्युक्तेस्तदवस्थायामिति । त्रि० ॥

पौण्डरीयम् । न० प्रपौण्डरीके ॥ पुण्डरीकमिव । गर्वरादिभ्योऽण् ॥

पौण्डर्यम् । न० औषधीभेदे । स्थलपद्मे । प्रपौण्डरीके ॥ पौण्डर्यंमधुरं तिक्तंकषायंशुक्रलं हिमम् । चक्षुष्यं मधुरंपाकेवर्ण्यंपित्तकफापहम् ॥

पौण्ड्र : । पुं० चंदेलो० इ० प्र० देशे ॥ भीमसेनस्यशङ्खे ॥ पौंडा० इ० प्र० इक्षुविशेषे ॥ पुण्ड्रातेः पुण्ड्रखण्डने । स्फायीतिरक् । प्रज्ञादण् ॥

पौण्ड्रक : । पुं० श्वेतपौंडा० इ०प्र० इक्षौ ॥ वातपित्तप्रशमनोमधुरोरसपाकयो : । सुशीतोबृंहणोबल्य : पौण्ड्रकोभीरुकस्तथा ॥ पौण्ड्रदेशे

ह्रस्वेत्यादीर्घाविधौ पत्वादिविहितक्रिया लोपादिनाशुद्धह्रस्वमापन्नं दस्युपदग च्यो वाच्यस्वरे ॥ शौण्डिकायामुवै- म्याञ्जातेत्याविवि० । पुंडो० ड० गौ० भा० ॥ पुरडुवक । स्त्री० कन् ॥

पौण्डुवर्धन : । पुं० देशवि० । विहार० ड० भा० ॥

पौण्ड्रिक : । पुं० पुण्ड्रे चौ । सेव्ये । चतिरसे ॥

पौतिमाष्य : । पुं० पैङ्गसिद्धेष्टविधिश्रेपे ॥ पूतिमाषस्यगोत्रापत्यम् । गर्गादिभ्योयञ् ॥

पौतिकम् । न० घृतवर्णमधुनि ॥ या क्षुद्रासमयोपमाखपुतरा : प्रायो- सराभिविडखायक्षानास्तरुकोटरा- न्तर्गता : पुत्रावसंस्कुर्वते । तासाञ् पैतिरइपुत्तिकानिगद्दितलाभि:कृत सर्पिर्वातुल्यं यन्मधुस्तदनैः परजने : सपौतिकंपौत्तिकम् ॥ पौतिकमधु रुचोष्णं पित्तदाहास्रवातकृत् । वि दाहिमिहकृच्छ्रघ्नमन्ध्यादिघ्नतमो- विपु ॥ पुत्तिकाभि: कृतम् । तस्ता यामित्यण् ॥

पौत्र : । पुं० पुत्रस्यपुत्रे । नप्तरि । पौता० ड० नाती ड० भा० ॥ पु- त्रस्य० पुत्रापत्यम् । अनृष्यानन्त र्येबिदादिभ्योऽञ् ॥ न० पौतुर्भाव कर्मणो : ॥ उङ० ष्यञ् ॥

पौत्रिकेय : । त्रि० पुत्रिकातनये ॥

पौत्री । स्त्री० पुत्रसुतायाम् । नप्त्यां म् ॥ पुत्रस्यपुत्र्यापत्यम् । यञन्तत्वान्ङीप् ॥

पौन : । पुनिक : त्रि० पुन : पुनर्भवे ॥ कालाङ्ठञ् ॥

पौन : पुन्यम् । न० आभीक्ष्ण्ये । पुन : पुनरित्यस्मिन्नर्थे ॥ पुन:पुनरित्यस्यभाव : । ष्यञ् । अव्ययानांभमात्रेटिलोपस्य०प्रातिपदिकाद्यर्थ उत्संख्यानमितिटिलोप : ॥

पौनरुक्तिक : । पुं० पुनरुक्तमधीयाभि ॥ उ० ठञ् ॥

पौनर्नवम् । न० पुनर्नवाशाके ॥

पौनर्भव : । पुं० द्वादशविधपुत्रान्तर्गतपुत्रवि० । पुनर्भूपुत्रे ॥ याज्ञवल्क्ये डक्षतयाखताक्षतयावाविधवाया स्वेच्छया । उत्पादयेत्पुनर्भूत्वास- पौनर्भवउच्यते ॥

पौरम् । न० यातृणे । रोहिषतृणे । ग न्धद्रव्ये० ड० स्याती० त्रि० नागरे । परोक्षृति ॥ पुरेभवम् । तत्रभवइ त्यण् ॥

पौरक : । पुं० गृहनाबोपवने ॥ नि- ष्कुटस्तुगृहारामेवाद्यारामस्तुपौर क : ॥ इतिहेमचन्द्र : ॥

पौरन्दर : । पुं० पुरन्दरापत्ये ॥ त्रि० पुरन्दरसम्बन्धिनि ॥ अण् ॥

पौरन्दरी । स्त्री०पुरन्दराधिष्ठितदिशि

पौरव : । पुं० दुष्यन्तनृपतौ । पुरोरप

दिभ्योबलवत् । अतएवाग्नेर्दीव्यति राजन्यमितिविदेवनाद्योधर्माअभि षेचनीयसन्निधौपठितात्र्यपिस्थाना न्नतदङ्गम्॰किन्तुप्रकरणाद्राजसूया ङ्गमितिमीमांसका : ॥

प्रकरणसमः । पुं॰ नैयायिकाभांपदा र्थान्तरविशेषे ॥ तंलक्षयति । य- स्मात्प्रकर्णचिन्तासनिर्णयार्थमपदि ष्ट : प्रकरणसम : ॥ ४७ ॥ सहेतुः स्वसाध्यस्यपरसाध्याभावस्यवा॰नि- र्णयार्थमपदिष्ट : प्रयुक्त : प्रकरण- समउच्यते । सकः तुल्याकाङ्क्षया मात्र । यस्मात्प्रकरणं पक्षप्रतिप क्षावितिभाष्यम् । साध्यतदभावव- त्त्वावितितदर्थः । तथाचनिर्णयार्थम् प्रयुक्तोहेतुर्थंनिर्णयंजनयितुमशक्त स्तुल्यबलेनपरेणप्रतिबन्धात्॰किन्तु धर्मिण.साध्यवत्त्वंतदभाववत्त्वमृवेति चिन्तांजिज्ञासांप्रवर्तयतिसप्रकरण सम : । यद्वा प्रकृष्टंकारणंलिङ्गंपरा मर्शो वा॰कोहेतुरनयो : साधकः॰ पक्षयो : क॰ परामर्श : प्रमेतिवा यत्रजिज्ञासाभवतीत्यर्थ : । यथा- दिव्यादित्तुवस्तुस्थितिआह्नम् । अत्र यन्तुतुल्यबलविरोधिपरामर्शकाली नपरामर्शविषयत्वंस्वसाध्यपरामर्श कालीनतुल्यबलविरोधिपरामर्शो- वा । विरोधिपरामर्शस्यचहेतुनिष्ट त्वमैकज्ञानविषयत्वसम्बन्धेन । य

न्यथाहेतोर्दुष्टत्वंनस्यात् । अयञ्च शाब्दिशिष्टदोषद्रष्टव्य : सद्धेतोरपि विरोधिपरामर्शद्वारेदुष्टत्वमिष्टमेवे त्यवधेयम् ॥ ४७ ॥

प्रकरी । स्त्री॰ नाट्यङ्गे ॥ चत्वरभूमौ ॥

प्रकर्षः । पुं॰ विशेषे । अधिके । उत् र्षे ॥ यथा । गुणप्रकर्षेणजनोनु रज्यतेजनानुरागप्रभवाहिसम्पदः ॥ प्रकर्षणम् । क्लप॰ । घञ् ॥

प्रकाण्डः पुं॰,न॰ विटपे । तरोर्मूल शाखान्तरे । मूलादारभ्यशाखाव धिभवे । स्कन्धे । त्रि॰ प्रशस्ते ॥ प्रगत :काण्डोऽधमोयस्मात् । प्रश स्तोगो : गोप्रकाण्डं । प्रकाण्डस्य रूढिशब्दत्वात्प्रशंसावचनैश्चेतिस समास : । प्रकाण्डते । काण्डभेद ने । चु॰ । पत्ते । पु॰ । प्रकाण्ड्यते । क्रम॰ यिङ् । वरणार्ड्यश्चेतिडोषा ॥

प्रकाण्डर : । पुं॰ द्रुमे ॥

प्रकामम् । अ॰ अतिशये ।

प्रकामम् । त्रि॰ निकामे । यथेप्सिते ॥ प्रकमनम् । कमु॰ । घञ् ॥

प्रकार : । पुं॰ भेदे । सामान्यस्यभेद केविशेषे । सादृश्ये ॥ प्रकरणम् । डुकञोघञ् ॥

प्रकाश : । पुं॰ दीप्तौ । आतपे ॥ स्फुटे । प्रकटे । उन्मेषे । व्यक्ते ॥ प्रहासे । बुद्धिपरिणामविशेषेविष- याकारे॰दीपवत् । स्वविषयावरग

विरोधिनिसत्वकार्ये । प्रभावे । न० कांस्ये । त्रि० व्यक्ते । प्रकाशनम् प्रकाशसेवा । काम्यदीप्तौ । घञ्० पचाद्यच्वा । अतिप्रसिद्धे ॥

प्रकाशकः । पुं० सूर्यादिवदन्यावभासकेपरमात्मनि । सूर्यादिषु । त्रि० व्यञ्जके, अवभासके । प्रकाशकर्त्तरि ॥ प्रकाशयति । काश्० । णवुल् ॥

प्रकाशक्रेता । पुं० कुक्कुटे ॥ त्रि० प्रकाशक्रेतरि ॥

प्रकाशनः । पुं० प्रकाशके ॥ प्रकाशयति । काश्०ल्यु: ॥

प्रकाशमानः । त्रि० भासमाने । विशेषणव्यात्मनासदाप्रकाशमानमेवतस्मिन्यथा ॥

प्रकाशात्मा । पुं० दिवाकरे । सूर्ये । प्रकाशश्चात्मास्वरूपंयस्य । त्रि० व्यक्तस्वभावे ॥

प्रकाशितः । त्रि० व्यक्तीकृते । दर्शिते । आविष्कृते । प्रकटिते । सञ्जातप्रकाशे ॥ ता० इतच् ॥

प्रकाशी । त्रि० दीप्तिजनके ॥

प्रकीर्णः । पुं० पूतिकरञ्जे । न० ग्रन्थविच्छेदे । चामरे । त्रि० असङ्गते । नानाप्रकारमिश्रिते । यथा । प्रकीर्णः पुष्पाणांहरिचरणयोरञ्जलिरयमितिवेणीसंहारः ॥ विस्तृते, विक्षिप्ते ॥ च० । प्रकीर्णसार्द्धमनवेक्ष्यकारिणोंसदैवभर्तुः प्रतिकूलवादिनीम् । परस्परेणाभिरतामवज्ञानेवंविधांस्त्रीपरिवर्जयामीतिवत्सोचरितम् । प्रकीर्यतेस्म । कृविक्षेपे । क्त: ॥

प्रकीर्णकः । पुं० अश्वे ॥ न० चामरे । विस्तारे, ग्रन्थविभेदे । पाप-वि० ॥ यदनुक्तंतत्प्रकीर्णकम् । अनुक्तम्० अनुक्तनिष्कृतिकम् । प्रकीर्णपातकेज्ञात्वागुरुत्वमथलाघवम् । प्रायश्चित्तंबुधः कुर्यात्ब्राह्मणानुमतेसदा । विवादपदे । नष्टं यत्रपूर्वंपुसर्वंतत्स्यात्प्रकीर्णकम् । संज्ञायांकन् ॥

प्रकीर्त्तितः । त्रि० कथिते ॥ प्रकर्षेणकीर्त्तितः । यथा । प्रभूतमल्पंकार्येवायोनरः कर्त्तुमिच्छति । सर्वारम्भेणतत्कुर्यात् सिंहादेकंप्रकीर्त्तितम् ॥

प्रकीर्य्यः पुं० पूतिकरञ्जे । कण्टिकार के । कठकरञ्ज० ष्ठ० भा० । नाटाकरञ्ज० इ० गौ० भा० ॥ घृतकारञ्जे ॥ रीठाकरञ्जे ॥ त्रि० विप्रकीर्णे ॥ प्रकीर्यते । कृ० । अघ्न्यादित्वात्यक् ॥

प्रकृतः त्रि० प्रस्तुते । प्रकरणप्राप्ते ॥ यथा । प्रकृतमनुसरामः ॥ प्रकर्षेकृते ॥ अविकृते ॥ प्रक्रियतेस्म । कृञ्: क्तः ॥

प्रकृतार्थः त्रि० प्रकरणप्राप्तस्याऽभिधेये

प्रकृति : । स्त्री० अमात्यादिषु ॥ तेच । यथा । स्वाम्यमात्यसुहृत्कोषरा-ष्ट्रदुर्गबलानिच । राज्याङ्गानिप्रकृतय : । इति ॥ प्रकृते : प्रभावस्तु क्षोदेवीभागवतेइन्द्रं प्रतिहरिश्चन्द्र नृपेण यथा । भुङ्क्षेशक्रनृपोराज्यं प्रभावात्प्रकृतेर्ध्रुवम् । यजतेचम-शायज्ञै : कार्यंप्तं करोतिचेति ॥ प्रकृष्टं करोतिराज्यमिति । क्तिन् ॥ स्वभावे ॥ सांसिद्धिकीस्वाभाविकी सहजाचप्रकृतावचा । प्रकृतिःसैति विज्ञेयास्वभावंनजहातिया ॥ जातौ॥ लिङ्गे॥ लिङ्गम्॰व्यक्तम् । स्त्री पुन्नपुंसकश्चेतिस्वामी । यथा॰इती याप्रकृतिः शब्दः ॥ पौरवर्गे । भी रायांयोनिषु ॥ शिल्पिनि ॥ शक्तौ ॥ सापञ्चविधायथा । साप ञ्चविधायथा।गणेशजननीदुर्गाराधा लक्ष्मीसरस्वती । सावित्रीचसृष्टिवि धौप्रकृतिःपञ्चमीस्मृतेति॥ किंतुति स्तु । प्रकृष्टवाचकः प्रश्चकृतिश्चसृष्टि वाचक : । सृष्टौप्रकृष्टायादेवीप्रकृ ति : साप्रकीर्तिता ॥ गुणेप्रकृष्टे सत्त्वेचप्रशब्दोवर्ततेश्रुतौ । मध्यमे वर्ततेकृश्चकृतिश्चसृष्टिवाचक : सृष्टे रायाचयादेवीप्रकृति : साप्रकीर्ति तेति ॥ योषिति ॥ परमात्मनि ॥ प्रलयात्प्रविकायाम् । प्रलयात्-प्रथमे ॥ साद्विधा । धातु : प्रातिप दिकञ्च ॥ पञ्चमहाभूतेषु ॥ कारणे ॥ गुह्ये ॥ जन्तौ ॥ एकविंशत्यक्षरा यांछन्दोवृत्तौ ॥ एकविंशतिसंख्यायां ॥ मातरि । अनन्यायाम् ॥ सामर्थ्ये ॥ योनौ । उपादानकारणे । मूलप्र-कृतौ । सत्त्वरजस्तमसांसाम्याव स्थायाम् ॥ यथा । सत्त्वंरजस्तमश्चै वगुणत्रयमुदाहृतम् । साम्यावस्थि तिरेतेषांप्रकृतिःपरिकीर्तिता ॥ के चित्प्रधानमित्याहुरव्यक्तमपरेजगुः । एतदेवजगत्सृष्टिंकरोतिविकरो तिच ॥ मूलप्रकृतिरविकृति : । प्रकरोतीतिप्रकृतिः । साचविकृतिः प्रकृतिरेवेत्यर्थः । कस्मात्॰इत्यत उक्तंमूलेति । मूलञ्चासौप्रकृतिश्चे ति॰मूलप्रकृतिः । विश्वस्यकार्यक लापस्यसामूलंनत्वस्यास्मूलान्तर म्॰अनवस्थाप्रसङ्गात् । नचानवस्था यामस्तिप्रमाणमितिभाव : । इति साङ्ख्यविद : ॥ अविद्यायाम् ॥ प्रकृतिर्मायमाया । साचसत्वरजस्त मोगुणमयीअघटनघटनापटीयसी-मिथ्याज्ञानात्मिकापारमेश्वरीश-क्तिः ॥ प्राग्जन्मकृतधर्माधर्मज्ञाने च्छादिसंस्कारैर्वर्तमानजन्मन्यभिव्य क्त॰सर्वचकरोतीति ॥ पुरुषार्थभ्रंस-हेतुभूतायामनिर्वचनीयस्वभावायां त्रिगुणात्मिकायांसर्वविकारकारण

भूतायांभगवन्मायायाम् ॥ मायान्तु प्रकृतिंविद्यात् । प्रक्रियतेऽनयेति-प्रकृतिरुपादानकारणंविद्याजानी-यादित्यर्थः ॥ पराऽपरभेदेनप्रकृतिर्द्विधा । पराचैतन्यलक्षणा० अपराचैतन्यलक्षणा । यथा भूमिरापोऽनलोवायुः खंमनोबुद्धिरेवच । अहङ्कारइतीयंमेभिन्नाप्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यांप्रकृतिंविद्धिमे पराम् । जीवभूतांमहाबाहोययेदं धार्यतेजगत् ॥ इति ॥ समयाङ्गोप देशे ॥ यत्समयाङ्गोपदेशः साप्रकृतिः । यथादर्शपौर्णमासादिः । तत्प्रकरणेसर्वाङ्गपाठात् ॥ प्रकृतिवद्विकृतिः कर्त्तव्येतिमीमांसकानांव्यवस्था । रा यस्मिन्यागे० इति कर्त्तव्यतोपदिष्टा यागान्तरेचोपदेक्ष्यतेसाप्रकृतिः । येनचोपदेक्ष्यते साप्रकृतिरितितदर्थः ॥ प्रकरणम् । डुकृञ्० । क्तिन् । प्रकुर्वते । क्तिच् ॥

प्रकृतिजः । त्रि० स्वभावप्रभवे । प्रकृतेरभिव्यक्तेर गर्द्धभादौ ॥ प्रकृतेर्जातः । जनी० । डः ॥

प्रकृतित्वम् । न० तत्त्वान्तरोपादाने । तदेवप्रकृतित्वमाहुस्तयोरभिमतम् । अतोयद्यपिपृथिव्यादीनामपि गोघट तथाद्ययोर्विकाराः सन्ति० एवंतद्विकारभेदानांपयोबीजादीनां दध्यङ्कुरादयः० तथापिगवादयो बीजादयोवापृथिव्यादिभ्यस्तत्त्वान्तरम् । सर्वेषांगोघटादीनांस्थूलत्व-मिन्द्रियग्राह्यत्वञ्चसममितिनतत्त्वान्तरम् ॥

प्रकृतिदान्तः । त्रि० स्वभावतएवोपशान्ते ॥ प्रकृत्यादान्तः ॥

प्रकृतिलयः । पुं० प्रधानलये । प्रकृतौसंशोपि ॥ पुरुषतत्त्वानभिज्ञस्य० वैराग्यमात्रात्प्रकृतिलयः । प्रकृतिपदवाच्यप्रकृति महदहङ्कारभूतेन्द्रियाणिगृह्यन्ते । तेष्वात्मबुद्ध्योपास्यमानेषुलयः । वैराग्यात्प्रकृतिलयः ॥

प्रकृतिविकृतिः । स्त्री० महदादिसप्तसु । महदाद्याः प्रकृतिविकृतयः सप्त । प्रकृतयश्चविकृतयश्चेति-प्रकृतिविकृतयः सप्त । तथाहि । महत्तत्त्वमहङ्कारस्यप्रकृतिर्विकृतिश्च मूलप्रकृतेः । एवमहङ्कारतत्त्वंतन्मात्राणामिन्द्रियाणाञ्चप्रकृतिर्विकृतिश्च महतः । एवंपञ्चतन्मात्राणितत्त्वानिभूतानामाकाशादीनांप्रकृतयोविकृतयश्चाहङ्कारस्य ॥

प्रकृतिविरूपम् । न० गगनादौ । तत्त्वविभाजकोपाध्यवच्छिन्नाकाशत्वात् ॥ निजरूपविरूपम् । प्रकृतिविरूपम् । त्रि० प्रकृतेरसमानरूपे ॥

प्रकृतिसरूपम् । न० महदादिसमष्टौ ।

प्रक्षोभ : । पुं॰ प्रकृष्टक्षोभे ॥ नं॰ चल ने ॥

प्रक्ष्वेडन : । पुं॰ सर्वलोहमयेशरे । नाराचे । प्रकर्षे क्ष्वेडने । ञिक्ष्विदा अव्यक्ते शब्दे । ल्युट् । पु॰ ।

प्रक्ष्वेदन : । पुं॰ प्रक्ष्वेडने । नाराचे ।

प्रखर : । पुं॰ हयसन्नाहे । पाखर॰ इ॰ भा॰ ॥ कुक्कुरे ॥ अश्वतरे ॥ वेसरे ॥ त्रि॰ अत्यन्तखरे ॥ अत्यु ग्रे ॥

प्रख्य : । त्रि॰ उत्तरपदेतुल्यार्थवाचकी । यथा । स्तुतरपदेऽख्य: मकार : प्रतिमोनिभ इतिहैमचन्द्र : ॥ सन्निभ : सदृशय : सरक्षतेतितुल्यम् ।

प्रख्या । स्त्री॰ कान्ती । प्रख्यानम् । ख्या॰ । चक्षिङादेशीवा । आतश्चो पसर्गइत्यङ् । टाप् ॥

प्रख्यात : । त्रि॰ प्रसिद्धे । प्रकारख्यात युक्ते । विख्याते ॥ प्रकर्षेणाख्या ति । ख्याप्रकथने । चक्षिङ ख्याञ्वा । क्त : ॥

प्रख्यातपितृक : । पुं॰ प्रख्यातवप्तृकि । विख्यातपितरि । आमुष्यायणे ॥ प्रख्यात : पितायस्य । कप् ।

प्रख्याति : । स्त्री॰ प्रकृष्टायाम् । प्रकृ ष्टायांकीर्त्तौ । विख्यातौ ॥

प्रख्यानम् । न॰ प्रतीतौ ॥

प्रगण्ड : । पुं॰ कूर्परोपरिस्कन्धपर्यन्त भागे । भुजमध्योपरिभागे ॥ प्रत्या सन्नोगण्ड : कपोलोऽस्य ॥ ॥

प्रगण्डी । स्त्री॰ बहि : प्राकारे ॥ दुर्ग प्राकारभित्तौ शूराणामुपवेशनस्था ने ॥

प्रगतजानु : । त्रि॰ प्रगतजानुके ॥

प्रगतजानुक : । त्रि॰ प्रज्ञौ । वाता दिनाविरलजानुके ॥ प्रगतेविरले जानुनीयस्य । कप् ॥

प्रगन्ध : । पुं॰ पर्पटे ॥

प्रगल्भ : । त्रि॰ प्रतिभान्विते । प्रष्ट व्याद्यवसरे अकीयत्वाप्रतिभस्याद्य योगवति । प्रत्युत्पन्नमती । प्रगल् भते । गल्भधार्ष्ट्ये । पचाद्यच् । धृष्टे ॥ प्रौढे ॥ वाग्मिनि ।

प्रगल्भधी : । स्त्री॰ उदारबुद्धि ॥ त्रि॰ तद्वति ॥

प्रगल्भता । स्त्री॰ सामोत्कर्षे ॥ प्रग ल्भभावे । उत्साहे । उद्यमे ॥ नि : शङ्कत्वं प्रयोगेषुबुधैरुक्ताप्रगल्भता

प्रगल्भा । स्त्री॰ नायिकाभेदे ।

प्रगाढ : । त्रि॰ भृशे ॥ दृढे ॥ प्रगा हतेस्म । गाहू॰ । क्त : । यस्यवि- भाषेतिनेट् ॥ भृशे ॥

प्रगाता । त्रि॰ उत्तमगायके ॥

प्रगाथ : । पुं॰ चतुर्थपञ्चमप्राटीचार्द्धेते प्रगाथेपुनरस्या सिस्वोत्तरयोरयम्मे दिष्टे वमादिवचनाद्यवद्धयोर्द्वे चो- सिद्ध : क्रियन्ते सप्रगायइत्युच्यते ॥

प्रघूर्णः । पुं॰ अतिथौ । त्रि॰ प्रकृष्ट घूर्णयुक्ते ॥

प्रचक्रम् । न॰ प्रस्थितायां सेनायाम् ॥ प्रस्थितं चक्रं सैन्यम् ॥

प्रचक्षाः । पुं॰ बृहस्पतौ ॥

प्रचण्डः । पुं॰ श्वेतकरवीरे ॥ त्रि॰ दुर्वहे । दुर्धर्षे ॥ प्रतापिनि ॥

प्रचण्डमूर्त्तिः । पुं॰ वरुणद्रुमे ॥ त्रि॰ प्रतापयुक्तशरीरे ॥ प्रचण्डा मूर्त्तिर्यस्य ॥

प्रचण्डा । स्त्री॰ देवीविशेषे ॥ यस्याः स्थानं कमलखण्डः ॥ श्वेतदूर्वायाम् ॥

प्रचयः । पुं॰ समूहे ॥ प्रसङ्गे ॥ पुष्पाद्यवचये ॥ शिथिलाख्यसंयोगे ॥ अयं स्वपरिमाणजनकः । यथा । सङ्घातः परिमाणाप्रचयादपि जायते । प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते ॥ परिमाणं तूलकादीनामस्त्याश्रयनाशतः ॥ इ॰ भा॰ प॰ ॥ प्रचीयते । चिञ् एरच् ॥

प्रचयगमनम् । न॰ बाहुल्येनपसरणे ॥ प्रचयेनगमनम् ॥

प्रचरः । पुं॰ पथि ॥

प्रचरद्रूपः । त्रि॰ व्यक्तरूपे ॥

प्रचलकी । पुं॰ प्रचलाकिनि ॥

प्रचलाकः । पुं॰ शराघाते ॥ शिखण्डे । भुजङ्गमे ॥

प्रचलाकी । पुं॰ मयूरे ॥ भुजङ्गे ॥

प्रचलायितः । त्रि॰ निद्रादिना घूर्णिते ॥ प्रचलवदाचरति । कर्त्तुः क्यङ् सलोपश्चेति॰ सन्नतात्कर्त्तरि क्तः ॥ प्रचलाया जातास्येति वा । प्रचलायते स्म । गत्यर्थेति क्तो वा ॥

प्रचलितः । त्रि॰ प्रस्थिते ॥

प्रचारः । त्रि॰ सततव्यवहारे ॥ व्यक्तौ । प्रकाशे ॥ प्रचरणम् । चर॰ । घञ् ॥

प्रचितः । त्रि॰ परिवृंहिते ॥ प्रचीयते स्म । चिञ्॰ । क्तः ॥

प्रचितकम् । न॰ दण्डकविभेदे ॥ य॰ । प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डको नद्वयादुत्तरैः सप्तभिर्यैः ॥ यथा सुन्दरयदुकुलाम्बोधिचन्द्रप्रभौदिव्यकौगर्भरक्षाविलोकैकनाथ॰ प्रचितकपटसुरारिप्रमोदामदक्षावलस्तोमविद्रावणैकेश्वरीन्द्र । चरणनखरसुधांशुच्छटीभिः प्रनिःशेषितध्वान्तविध्वंसनीनिर्विशान्धकार॰ प्रणतजनपरितापोपशान्त्यगिरोक्ष दमेधप्रसीदप्रसीदप्रसीद ॥

प्रचीयमानः । त्रि॰ पुष्यमाणे ॥

प्रचुरः । त्रि॰ प्रभूते । प्राज्ये । बहुले ॥ प्रचोरयति । चुर॰ । इगुपधेति कः । चुरादीनां णिज्वैकल्पिकः ॥ प्रगतश्चुराया इति वा ॥

प्रचुरपुरुषः । पुं॰ चौरे ॥ बहुनरे ॥

वाक्क्रीतएवच ॥ एकविंशतिकुल्य ज्ञात्वं प्रजायतय : स्मृता: । इति महाभारतेमोचधर्म : ॥ प्रजानां पति : ॥ कौटबि० ॥

प्रजापतितीर्थम् । न० कनिष्ठामूले ॥

प्रजापतिपति : । पुं० ब्रह्मणि । पितामहे ॥ प्रजापतीनांपदस्थोनांपति : ॥

प्रजापाल : । पुं० वायौ ॥ यथा । शीतांशु : क्षेदयत्युर्वी विवस्वान् शोषयत्यपि । तावुभावपिसंश्रित्य वायु : पालयतिप्रजा : ॥ तच्चर्षि वायनम् वर्षाशरद्धेमन्ता : । तेषु भगवानाप्यायतेसोमोऽम्ललवणमधुरारसावलवन्तोभवन्ति । उत्तरी सरश्चसर्वप्राणिनांवलमभिवर्द्धते । उत्तरायणश्चशिशिरवसन्तग्रीष्मा : । तेषुभगवानाप्यायतेऽर्कस्तिक्तकषायकटुकाश्चरसावलवन्तोभवन्ति । उत्तरोत्तरश्चसर्वप्राणिनांवलमपचीयते ॥

प्रजापालनम् । न० लोकानांसंरक्षणात्मकेभूपतिधर्मे ॥ यथा । चाटचारचौरेभ्योवधवन्धभयादिभि : । पीडामाना : प्रजारक्षेत्कायस्थेभ्योविशेषत इतिवह्निपुराणम् ॥

प्रजावती । स्त्री० भ्रातृजायायाम् ॥ प्रजाऽस्यस्या : । तदस्यास्तीतिमतुप् ॥ सन्तानविशिष्टायाम् ॥

प्रजाहितम् । न० जले ॥ प्रजाभ्योहितम् ॥ त्रि० प्रजोपकारे ॥

प्रजिन : । पुं० वायौ ॥

प्रजुष्ट : । त्रि० प्रसक्ते ॥

प्रजेश्वर : । पुं० नृपे । राज्ञि ॥ प्रजानामीश्वर : ॥

प्रज्झटिका । स्त्री० मात्रावृत्तान्तरे । य० । चत्वारिचतुष्कलकानिधेहि तत्रापिजगणमन्ते विधेहि । भविता फणिनायकपिङ्गलेनप्रज्झटियासा षोडशकलेन ॥ यथा ॥ रमतेन-मन : परितापधारिनिजमानसमिहविहरिपिहितमनयबारि । यदवधिहरिपीह क्वपयमगासितदवधिवाधाशतमनुभवामि ॥

प्रज्ञ : । त्रि० पण्डिते ॥ प्रज्ञानाति । ज्ञअवबोधने । आतश्चोपसर्गइति क : ॥ प्रज्ञ प्राज्ञौविरलजानुकः० इतिहेमचन्द्र : ॥

प्रज्ञप्ति : । स्त्री० प्रज्ञाने ॥ प्रज्ञप्ति प्रतीतौ ॥ सङ्केते ॥

प्रज्ञप्ती । स्त्री० जिनविद्यादेवीविशेषे

प्रज्ञा । स्त्री० मेधायाम् । बुद्धौ । यथा । प्रज्ञाहीनस्यपठनमन्धस्यदर्प्पणंयथा । देशेभ्ज्ञावत:शास्त्रं तत्त्वज्ञानस्यसाधनमिति ॥ अतीतानुस्मृतिर्मेधातत्कालग्राहिणीमति: । बुद्धिस्तुभविचारज्ञाधीरैरुदाहृता । इतिविशेष : ॥ प्रज्ञाम् ॥ अप

रीतानुभवपर्यन्तविचारे ॥ चेतना-
यांजीवनधर्मे ॥ प्रजानाति । प्रज्ञा
यतेऽनयावा । ज्ञा० । आतश्चोप
सर्गे इतिकः

प्रज्ञाकायः। पुं० मञ्जुघोषे । प्रज्ञै
वकायोऽस्य ॥

प्रज्ञाचक्षुः। त्रि० अन्धे । प्रज्ञाचक्षु-
र्यस्य ।

प्रज्ञातः। त्रि० प्रत्यक्षे । सकलप्रमाण
श्रेष्ठतयाप्रत्यक्षगोचरः प्रज्ञातइत्यु
च्यते । प्रकर्षेणज्ञातः ।

प्रज्ञानम्। न० बुद्धौ । चिन्हे ॥ प्रज्ञा-
यतेऽनेनवा । भावकर्मकारणादौ-
ल्युट् ॥ प्रज्ञाने । प्रज्ञाविज्ञाने ।
ब्रह्मणि । प्रकृष्टजन्मादिविक्रिया
विरहितंकूटस्थंज्ञानंज्ञप्तिरूपंवस्तु०
प्रज्ञानंसब्रह्मप्रज्ञानंश्रुतिःयेनेक्षते
शृणोतीदंजिघ्रतिव्याकरोतिच । स्वा
द्वस्वादूविजानाति तत्प्रज्ञानमुदी-
रितम् । चतुर्मुखेन्द्रदेवेषु मनुष्या
श्वगवादिषु । चैतन्यमेकंब्रह्मातः
प्रज्ञानंब्रह्ममय्यपीति विदुषामनुभ-
वात् । त्रि० पण्डिते ।

प्रज्ञानघनः। त्रि० प्रज्ञैकरसेप्राज्ञे ।
सप्रज्ञायनघनः स्वच्छनानिघनी-
भूतानीव । यथावर्षाणिशेन सम-
मात्रविभज्यमानं सर्वघनमिवतद्-
त् ।

प्रज्ञामात्रा । स्त्री० शब्दादिबुद्धिषु ग-

न्धादिज्ञानेन्द्रियेषु ॥

प्रज्ञावान्। पुं० धीरे । प्रज्ञिले ॥ प्र-
ज्ञास्ति अस्य । मतुप् ॥

प्रज्ञावादः। पुं० प्राज्ञैर्वक्तुमनुचिते-
शब्दे ॥ प्रज्ञानामवादः ॥ प्रज्ञा-
वतांपण्डितानांवादे ॥

प्रज्ञिलः। त्रि० पण्डिते । प्रज्ञास्त्यस्य
पिच्छादित्वादिलच् ॥

प्रज्ञुः। त्रि० प्रगतजानौ । प्रगतेविर-
लेजानुनीयस्य । प्रसंभ्यांजानुनो-
र्ज्ञुः ॥

प्रज्वरः। पुं० सारकेनैष्यायज्वरे ॥

प्रज्वलः। त्रि० उज्ज्वले ॥ प्रज्वलति ।
ज्वलदीप्तौ । अच् ॥

प्रज्वलितः। त्रि० उज्ज्वलिते ॥ दीप्ते ।
दह्यमाने ॥

प्रडीनम्। न० पक्षिणांगतिभेदे । उड्डय
नायकमवस्थे ॥ प्रथसंडयनम्। डीङ्
विहायसागतौ। नपुंसकेभावेक्तः ।
स्वाद्ययोदितइतिधोदित्वान्निष्ठा-
नत्वम् ॥ पतनवेगपरायामिति-
माणीपर्य ॥ भा : पतनेस्यगपरायाय-
म् ।

प्रणः। त्रि० पूर्वे । पुरातने ॥ नय-
पुराणप्रादित्विनप्रत्यय : ॥

प्रणतः। त्रि० प्रह्वीभूते । नमस्कृते ॥
प्रणमतिस्म । गत्यर्थकर्त्तरि । क्तः ।
कर्मविवक्षा । प्रणयमानतोया ।

प्रणतिः। स्त्री० प्रणामे ॥ प्रणिपा-

ते । अनुनये । नमस्कारे । प्रकृष्टा नतिः । ईश्वरोजीवकलयाप्रविष्टो भगवानिति । प्रथमेहयडवक्रमा-वाग्वचाण्डालयोखरम् ॥

प्रणतोदर : । त्रि॰ प्रनतोदरे ॥

प्रणय : । त्रि॰ प्रसरे । प्रश्रये । प्रीत्या प्रार्थने ॥ प्रेम्णि । स्नेहे । याच्ञायाम् ॥ विश्रम्भे । निर्वाणे । मोक्षे ॥ सान्त्वनायाम् ॥ परिचये ॥ प्रणयनम् ; णीञ् । परच् ॥ त्रि॰ ॥

प्रणयनम् । न॰ प्रापणे ॥ प्रणीयते । णीञ्प्रापणे । ल्युट् ॥

प्रणयवान् । त्रि॰ प्रेमविशिष्टे ॥

प्रणयी । पुं॰ स्वामिनि ॥ त्रि॰स्नेहवति ॥ प्रणयोस्यास्ति । इनिः ॥ अर्थिनि ॥

प्रणयिनी । स्त्री॰ भार्यायाम् ॥

प्रणव : । पुं॰ तारे । मन्त्रादौ । वेदादौ । ब्रह्मणि ॥ प्रणवाद्यास्तथावेदाः प्रणवेचप्रतिष्ठिताः । वाङ्मयं प्रणवः सर्वंतस्मात्प्रणवमभ्यसेत् ॥ प्रणमन्तिएवं वेदास्तस्मात् प्रणव-उच्यतेइतिसनत्कुमारवचनम् ॥ प्रणव्यते स्तूयते इतिप्रणव : । णु स्तुतौ । कर्मणिघञ् संज्ञापूर्वकत्वाद्वृद्ध्यभाव : । पृषोदरादित्वाण्णत्वम् : । प्रणूयते स्तूयते । णु स्तुतौ । अदोरप ॥ यद्वा प्रणौतिप्रकर्षेणनौतीतिपर मेश्वरम् । णु॰ । पचाद्यच् । उपसर्गादितिणत्वम् ॥

प्रणष्ट : । त्रि॰ प्रकर्षेणनाशयुक्ते ॥

प्रणाद : । पुं॰ तारशब्दे ॥ श्रवणामये । कर्णनादे । यथा । कर्णस्रोत : स्थितेवातेशृणोतिविविधान्स्वरान् । भेरीमृदङ्गशङ्खानांकर्णनाद : सउच्यते ॥ अनुरागजशब्दे । प्रीतिजनितमुखकण्ठादिशब्दे । प्रीतिविशेषजात्शीत्कृतशब्दे ॥ अनुरागजातशब्दे प्रणादःशीत्कृतंनृणामितिशब्दार्णवः । प्रणदनम् । णदअव्यक्तेशब्दे । घञ् । उपसर्गादसमासेपीतिणत्वं ॥

प्रणाम : । पुं॰ प्रणतौ प्रणिपाते । भक्तिश्रद्धातिशययुक्तनमस्कारे । स्वापकर्षबोधकव्यापारविशेषे । अष्टाङ्गपञ्चाङ्गादिभेदभिन्ने ॥ यथा । दोर्भ्यां पद्भ्यांचजानुभ्यामुरसाशिरसादृशा । मनसावचसाचेति प्रणामोष्टाङ्गईरित : ॥ बाहुभ्यांचैवजानुभ्यां शिरसावचसादृशा । पञ्चाङ्गोयंप्रणाम : स्यात्पूजासुप्रवराविमौ ॥ एकहस्तप्रणामश्चएकावाषिप्रदक्षिणम् । अकालेदर्शनं विष्णोर्हन्तिपुण्यंपुराकृतम् ॥ प्रणमनम् । णमप्रह्वत्वे । घञ् ॥ य : शूद्रेणार्चितंलिङ्गंविष्णुंवाप्रणमेद्द्विज : । निष्कृतिस्तस्य नास्त्येवप्रायश्चित्तायुतैरपि ॥

प्रणाय्य : । त्रि॰ अभिलाषविवर्जिते ॥ असम्मते ॥ प्रणीयते । णीञ् । ।

प्रणाय्योसम्मताविति साधुः॥ प्रणाय्यः साध्वनिन्दितवृत्तिविकाण्डशेषः॥

प्रणालः। पुं॰ कृत्रिमजलनिःसरणमार्गे। पयनालः॰ पनालः॰ द्वि॰ भा॰॥ मत्स्यते। वारयतेः। परम्परायाम्। उपसर्गादितिणत्वम्॥

प्रणाली। स्त्री॰ आनुपूर्व्याम्॥ कृत्रिमाम्बुनिःसरणमार्गे। पयनाली॰ पनाली॰ द्वि॰ भा॰॥ गौ॰ ङीष्॥

प्रणिदानम्। न॰ विनिमये॥ अत्यर्पणे॥

प्रणिधानम्। न॰ प्रयत्ने॥ प्रवेशने। अभियोगे॥ समाधौ॥ मनसोविषयान्तरवारणे। चित्तेकाग्रे॥

प्रणिधिः। पुं॰ अनुचरे॥ गूढपुरुषे। चरे॥ प्रार्थने। याचने॥ अवधाने॥ प्रणिधानम्॰प्रणिधीयतेवा। डुधाञ्॰। उपसर्गेघोःकिः। प्रकर्षेणनिधीयतेज्ञेयमनेनवा॥

प्रणिपातः। पुं॰ अनुनये। प्रणती। प्रकर्षेणभक्तिश्रद्धातिशयेननीचैःपतनं। दीर्घनमस्कारे। दण्डवत्पतने॥ प्रकृष्टोनिपातः॥

प्रणिहितः। त्रि॰ निहिते। समाहिते॥ सम्प्राप्ते॥ न्यस्ते। स्थापिते। निहिते॥ प्रणिधीयतेस्म। डुधाञ्॰। क्तः। दधातेर्हिः। अत्यन्तासे॥ प्रणिधिकर्मणानियुक्ते॥

प्रणीतः। पुं॰ संस्कृताग्नौ॥ प्रकर्षेणनीतः॥ त्रि॰ क्षिप्ते॥ उपसम्पन्ने। पाकेनसंस्कृतेव्यञ्जनादौ॥ विहिते। कृते॥ प्रवेशिते॥ प्रणीयतेस्म। णीञ्॰। कर्मणिक्तः॥ उपसृष्टे॥

प्रणीतसभा। त्रि॰ दृष्टचित्ते॥

प्रणीता। स्त्री॰ यज्ञपात्रविशेषे। विष्णोरासनार्थंवारिपूरितेपात्रे॥ टाप्॥

प्रणुतः। त्रि॰ स्तुते॥ प्रणूयतेस्म। णुस्तुतौ। क्तः॥

प्रणुन्नः। त्रि॰ कम्पिते॥ प्रकर्षेणनुन्नः॥

प्रणेता। त्रि॰ कर्त्तरि॥ यथा। सर्वासामपिविद्यानांप्रणेताभगवान्शिवइति॥

प्रणेयः। त्रि॰ वशीभूते। वश्ये॥ प्रकर्षेणनेतुंशक्यः। णीञ्॰। यत्॥

प्रणोद्यः। त्रि॰ प्रत्याख्येये॥

प्रततः। त्रि॰ अभिव्याप्ते॥ निरन्तरे॥

प्रततिः। स्त्री॰ विस्तृतौ॥ प्रव्याप्ती॥ प्रतनोति। तनुविस्तारे। क्तिच्क्तौचसंज्ञायाम्॥

प्रतती। स्त्री॰ लतायाम्॥ विस्तारे॥ कृतिकारादितिङीष्॥

प्रतनः। त्रि॰ पुरातने॥ नवपुराणेप्रादिभ्यश्चेतिष्टनप्रत्ययः॥

प्रतनु। त्रि॰ उत्कृष्टे॥

प्रतमक : । पुं॰ तमकप्रभेदे ॥ पित्तानुबद्धज्वरादियोगेनतमकस्यैवप्रतमकसंज्ञा । यथा ॥ ज्वरमूर्च्छापरीतस्यविद्यात्प्रतमकन्तुतम् । उदावर्त्तरजोऽजीर्णक्लिन्नकायनिरोधत : ॥ तमसावर्द्धतेऽत्यर्थंशीतैश्चाशुप्रशाम्यति । मज्जतस्तमसीवास्यविद्यात्प्रतमकन्तुतदिति ॥

प्रतर्कणम् । न॰ वितर्के । ऊहे ॥

प्रतर्दन : । पुं॰ भगवति ॥ प्रलयेभूतानिप्रकर्षेणतर्दतिहिनस्ति । तर्दहिंसायाम् । नन्द्यादित्वाल्ल्यु : ॥ नृपविशेषे । दिवोदासात्मजेकाशिराजे ॥ प्रकर्षेणतर्दयत्यभिभवतिस्वशत्रून्॰ इति ॥

प्रतल : । पुं॰ चपेटे । तताङ्गुलिकरे । चाप॰ ह॰ भा॰ ॥ न॰ पातालवि॰ ॥ प्रसलति । तलप्रतिष्ठायाम् । अच् ॥ संहतले ॥ प्रततिप्रश्लिष्टं तलेच च ॥

प्रतान् । अ॰ विस्तारे ॥ प्रतानयति । तनुश्रद्धायाम् । क्विप् । अनुनासिकस्य क्विझलो : ॥ नोनोधातो : ॥

प्रतान : । पुं॰ तन्तुसंयुक्तपुष्पशालादूप्रभृतिषु ॥ शाखापत्रप्रचये ॥ विस्तारे ॥ प्रतननम्॰ प्रतन्यतेवा । तनु॰ । घञ् ॥ कुटिलतन्तौ ॥ अपतानकाख्ये वायुरोगविशेषे ॥

प्रतानिनी । स्त्री॰ प्रतानवल्लाम् ॥

शाखापत्रप्रचय : प्रतान : कुटिलतन्तुर्वा ॥ सोऽस्त्यस्या : । इन्नन्तान्ङीप् ॥ प्रसारण्याम् ॥

प्रताप : । पुं॰ तापे ॥ तेजसि । कोषदण्डजेतेजसि ॥ कोषोधनम्॰ दण्डोदम : तद्धेतुत्वात्सैन्यमपिदण्ड: । ताभ्यांयत्तेजो जायतेतस्मिन्निति-यावत् ॥ प्रतापयति॰ अनेन । तप॰ । ण्यन्त : । पुंसिसंज्ञा : प्रतपनंवा । भावेघञ् ॥ अर्कवृक्षे ॥ प्रतापौपौरपातपावितियादव : ॥

प्रतापक : । पुं॰ रवे : प्राग्भागान्तरे ॥

प्रतापन : । पुं॰ नरकविशेषे । कुंभीपाके ॥ न॰ पीडने ॥ प्रतापयति- । तपदाहे । ल्यु : ॥

प्रतापवान् । त्रि॰ अन्यत्समान्येवाग्रपुवि दारकत्वे नप्रथस्वर्णीकृपि ॥

प्रतापस : । पुं॰ श्वेतार्के । शुक्लार्कद्रुमे ॥ प्रतापंचक्षुस्तेज : स्यति । षो॰ । क : ॥ प्रभृतास्तापस्यायेनवा ॥

प्रतापान्वित : । त्रि॰ शौर्ययुक्ते ॥

प्रतापी । त्रि॰ शत्रुतापके ॥ प्रतापयितुंशीलमस्य । ताच्छील्ये णिनि : ॥ तेजस्विनि ॥ अतइनिठनाविती नि : ॥

प्रताम् । अ॰ ग्लानौ ॥

प्रतारक : । त्रि॰ वञ्चके ॥ प्रतारयति । तॄ॰ । ण्वुल् ॥ ..

प्रतारणम् । न॰ वञ्चने ॥

भिन्नसङ्घातेऽनीके ॥ प्रतिगृह्यते ऽनेन । ग्रहद्रिष्वप् ॥ पतद्ग्रहे ॥ द्विजेभ्योविधिवद्देये ॥ दानद्रव्यग्रहे ॥ ग्रहविशेषे ॥ क्रियाकारे ॥ प्रतिगृह्णाति । ग्रहउपादाने । विभाषाग्रह इतिपक्षेऽच् ब्राह्मणस्यार्थे प्रतिग्रहार्जितः । यथा । प्रतिग्रहार्जिताविप्रे क्षत्रिये शस्त्रनिर्जिताः । वैश्ये न्यायार्जितार्थाः शूद्रे शुश्रूषयार्जिताः ॥ अयाचितप्रतिग्रहेदोषाभावोयथा । अयाचितोपपन्ने तुनास्ति दोषः प्रतिग्रहे । अमृतं तं विदुर्देवास्तस्मात्तन्नैवनिर्नुदेत् ॥

प्रतिग्राहः । पुं० पतद्ग्रहे । आचमनके । प्रोक्ते ॥ प्रतिगृह्णाति । ग्रह । विभाषाग्रहइतिपक्षेण ः ॥ प्रतिग्रहणे ॥

प्रतिग्राहित ः । त्रि० स्वीकारिते ॥

प्रतिघ ः । पुं० प्रतिघाते ॥ क्रोधे ॥

प्रतिघ्ननम् । हन० । अन्यत्रापिदृश्यतइतिडेन्यङ्कादित्वात् कुत्वम् ॥ मूर्च्छायाम् ॥

प्रतिघात ः । पुं० प्रतिबन्धे ॥ प्रतिहननम् । हन० । घञ्० । हनस्तोचिण्णलोः । होहन्तेरितिकुत्वम् ॥

प्रतिघातनम् । न० मारणे ॥ हन्तेः स्वार्थण्यन्तात्ल्युट् ॥

प्रतिघ्नम् । न० वपुषि ॥

प्रतिच्छन्द ः । न० प्रतिरूपे ॥

प्रतिच्छाया । स्त्री० प्रतिबिम्बे ॥ प्रकृष्टाच्छाया ॥

प्रतिजङ्घा । स्त्री० अग्रजङ्घायाम् ॥

प्रतिजल्प ः । पुं० वाक्यविशेषे ॥

प्रतिजागरः । पुं० अवेक्षायाम् । प्रत्यवेक्षणे ॥

गृहमवेक्षस्वेत्यादिनियोगे ॥ प्रतिजागरणम् । जागृ० । घञ् । जाग्रोऽवीतिगुणः ॥

प्रतिजिह्वा । स्त्री० उपजिह्वायाम् । रसनकाङ्गे । भासविध०ह०मी०

प्रतिजिह्विका । स्त्री० तालुमूलस्थक्षुद्रजिह्वायाम् । प्रतिजिह्वायाम् ॥ घण्टिकायाम् ॥

प्रतिज्ञा । स्त्री० अङ्गीकृतौ । अङ्गीकारे । साध्याभिधायिकायांवाचि ॥ भृगावथोप्रतिज्ञापरिपालनंस्वर्गसाधनमितिबुधाः ॥ कर्तव्यत्वप्रकारकज्ञानानुकूलव्यापारे । इत्यनुमितौ गदाधरी ॥ साध्यनिर्देशः प्रतिज्ञा ॥ इ० गौतमसूत्रम् ॥ ३३ ॥ साधनीयस्यार्थस्य योनिर्देशः सप्रतिज्ञा ॥ साधनीयश्चवह्निमत्वादिनापर्वतादिः । —— (+०+)—— तथाचपक्षतावच्छेदकविशिष्टपक्षेसाध्यतावच्छेदक विशिष्टवैशिष्ट्यबोधकशब्दत्वम् ः । निगमनवारणायचसाध्यांशे० साध्यतावच्छेदकातिरि

ह्निमान्काञ्चनमयधूमादित्यादौ हेत्वाभासान्तरसाङ्कर्यम्। तथापिउ-पधेयसङ्करेऽप्युपाधेरसाङ्कर्यान्नदोषः। नचासङ्कीर्णस्थलाभावः। पर्वतोवह्निमान्धूमात्योयोधूमवान् सअग्निरग्निरित्युदाहरणे० निरग्निस्थायमित्युपनयेचतत्सत्वात्। एवंनिगमनेपिबोध्यम्। ४७।

प्रतिज्ञासन्न्यासः। पुं० निग्रहस्थानविशेषे। पक्षप्रतिषेधेप्रतिज्ञातार्थापनयनप्रतिज्ञासन्न्यासः। ४८। पक्षस्यस्वाभिहितस्यपरेणप्रतिषेधे कृतेसतितत्परीजिहीर्षयाप्रतिज्ञातार्थस्यापनयनमपलापइत्यर्थः॥ यथा। शब्दोऽनित्यऐन्द्रियकत्वादित्युक्तेसामान्येव्यभिचारेणपरेणप्रत्युक्तेकएवमाहशब्दोनित्यइति। ४८॥

प्रतिज्ञाहानिः। स्त्री० निग्रहस्थानवि०। प्रतिदृष्टान्तधर्माभ्यनुज्ञास्वदृष्टान्तेप्रतिज्ञाहानिः। ४५। प्रतिपक्षोदृष्टान्तोयस्यसप्रतिदृष्टान्तः परपक्षः। स्वःस्वीयःदृष्टान्तोयस्यसस्वदृष्टान्तःस्वपक्षः। तथाचस्व-पक्षेपरपक्षधर्माभ्यनुज्ञाप्रतिज्ञाहा-निः। स्वयंविवक्षिताभिहितपरित्यागइतिफलितार्थः। सिद्धान्तस्तुस्वयंविवक्ष्यनाभिधीयतइतिनापसिद्धान्तसाङ्कर्यम्। सेयंपक्षहेतुदृष्टान्तसा-

ध्यतद्न्यहानिभेदात्पञ्चधाभवति। यथाशब्दोऽनित्यःकृतकत्वादित्युक्ते० प्रत्यभिज्ञयाबाधितविषयोयमित्युक्तेरिते० अस्तुतर्हिघटएवपक्षइति। एवंतथैवऐन्द्रियकत्वादितिहेतोरनैकान्तिकत्वमितिप्रत्युक्ते अस्तुकृतकत्वादितिहेतुरिति। एवं पर्वतोवह्निमान्धूमात् अयोगोलकवदित्युक्ते० दृष्टान्तःसाधनविकलइति प्रत्युक्ते० अस्तुतर्हिमहानसवदिति। एवमेवसिद्धसाधनेचप्रत्युक्ते० अस्तुतर्हिइन्धनवानिति। अ-न्यहानिस्तुविशेषणहान्यादिः। यथा तत्रैवनीलधूमादित्युक्तेअसमर्थविशेषणत्वेनप्रत्युक्ते० अस्तुतर्हि-धूमादितिहेतुरित्यादि॥ ४५॥

प्रतिज्ञेयः। त्रि० प्रतिज्ञातुंयोग्ये। पुं० स्तुतिपाठके॥

प्रतितन्त्रसिद्धान्तः। पुं० सिद्धान्तविशेषे। समानतन्त्रसिद्धः॥ २९॥ समानशब्दएकार्थः तेनैकतन्त्रसिद्ध-इत्यर्थः। स्वतन्त्रसिद्धइतिपर्यवसितोर्थः। यथावादिप्रतिवाद्यो कतरमात्राभ्युपगतस्तदेकतरस्यप्रतित-न्त्रसिद्धान्तःइतिफलितार्थः। यथा मीमांसकानांशब्दनित्यत्वम्। २९।

प्रतितालः। पुं० तालविशेषे। यथा। कान्तारःसमरोपचयैःकुवठोपाब्धि तस्तथा। कथिताःशङ्करेणैवत्या

र : प्रतितालका : ॥

प्रतिताली । स्त्री॰ तालकोद्घाटनयन्त्रे । तालो॰ इ॰ भा॰ ॥

प्रतिदानम् । न॰ विनिमये । नैमेये ॥ स्वामिनेन्यस्तस्यार्पणे । दत्तस्यप्रतिनिर्यातने ॥ प्रतिकृत्यदानम् । प्रतीपंवादानम् ॥

प्रतिदारणम् । न॰ भाजौ । युद्धे ॥

प्रतिदिनम् । न॰ प्रत्यहम् ॥

प्रतिदिवा । पुं॰ सूर्ये ॥ प्रतिदीव्यति । दिवु॰ । कनिन्युष्पपितक्षिराजिधन्विद्युप्रतिदिवइतिकानिन् ॥ दिवसे ॥ प्रतिदीव्यन्त्यस्मिन्नित्यधिकरणेकनिन् ॥

प्रतिदृष्टान्त : । पुं॰ परपक्षे । प्रतिकूलदृष्टान्ते ॥

प्रतिदेयम् । त्रि॰ क्रीतद्रव्यस्यदुष्क्रीतबुध्यापराहत्यदाने ॥ यथा । क्रीत्वामूल्येनयः पण्यं दुष्क्रीतंमन्यतेक्रयी । विक्रेतुःप्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतम् ॥ इतिमिताक्षरा ॥

प्रतिद्वन्द्वी । त्रि॰ प्रतिस्पर्धिनि ॥ विरोधिनि ॥ तस्ते द्वन्द्वौ स्वतान्यत्वेत्वन्ताद्वन्द्वौ परस्परम् । प्रतिद्वन्द्वितयालोकेप्रसिद्धेनात्रसंशय : ॥

प्रतिध्वनि : । पुं॰ प्रतिरवे । प्रतिशब्दे ॥

प्रतिध्वान : । पुं॰ प्रतिश्रुति । प्रतिशब्दे ॥

प्रतिनन्दनम् । न॰ वन्दने ॥ आशीर्वादादिभि : सम्भावने ॥

प्रतिनप्ता । पुं॰ प्रपौत्रे । पुत्रस्यपौत्रे ॥

प्रतिनव : । त्रि॰ नूतने ॥ प्रतिनूयते णु॰ । स्तुत्यर्थ ॥

प्रतिनिधि : । पुं॰ मुख्यसदृशे ॥ ॥ मुख्यस्याभावेतत्सदृशोयउपादीयतेसप्रतिनिधिरुच्यते ॥ यथा व्रतादावस्वस्थतासामर्थ्ये सति॰पुत्रं वापिविनयोपेतंभगिनींभ्रातरं तथा । एषामभावएवान्यंब्राह्मणंविनियोजयेदिति गरुडपुराणम् ॥ काम्ये प्रतिनिधिर्नास्तिनित्य नैमित्तिकेहिस : । काम्ये पूपक्रमादूर्ध्वं मन्येप्रतिनिधिंविदुरिति ॥ काचमाधवीयवचनान्नित्यनैमित्तिकयोरेवप्रतिनिधि : कार्य : ॥ विश्वे चदेवै : साध्यैश्चब्राह्मणैश्चमहर्षिभि : । आपत्सु मरणाद्भीतैर्विधे:प्रतिनिधि : कृत इति मनु : । मुख्यस्यविधे सोमादेरभावानयदि : प्रतिनिधिर्विधेयप्रतिपदेषादिभिरनुष्ठितोऽसौसोमुख्याभावेकार्योनतुमुख्यसम्भवेकार्यइत्यर्थः ॥ प्रतिमायाम् ॥ प्रतिनिधीयते॰सहशीक्रियते । डु- धाञ्॰ । उपसर्गे घो : कि : ॥

प्रतिनिनद : । पुं॰ प्रतिध्वाने ॥

प्रतिनियम : । पुं॰ व्यवस्थायाम् ॥

प्रतिनिर्देश : । पुं॰ प्रतिपाद्यतयाविधे,

यतयावाक्कीर्तने ॥

प्रतिपन्न : । पुं० चरौ । शचौ ॥ विपरीतसाधकत्वे नाभिमते ॥ अन्तराये ॥ साद्दश्ये ॥

प्रतिपत्तव्य : । त्रि० अवगन्तव्ये ॥

प्रतिपत्ति : । स्त्री० प्रवृत्तौ ॥ प्रागल्भ्ये ॥ गौरवे ॥ सम्प्राप्तौ ॥ प्रबोधे सम्यग्ज्ञाने । पदप्राप्तौ ॥ सत्यवचने ॥ साध्यस्यसत्यवचनंप्रतिपत्तिरुदाहृता ॥ प्रतिपदनमनयावा । पद० । क्तिन् ॥ मीमांसकमतेफलशून्यकर्मादि ॥ कर्तव्यज्ञाने ॥

प्रतिपत्तिपटह : । पुं० सम्मापटहे । नगारा० इ० भा० ॥ प्रतिपत्ते : पटह : ॥

प्रतिपत्तूर्यम् । न० दुगडवाद्ये ॥

प्रतिपत्त्यभिसन्धि : । पुं० प्राप्तिसङ्कल्पे ॥ प्रतिपत्ते : अभिसन्धि : ॥

प्रतिपत्फला । स्त्री० मुद्रकारवेल्याम् ।

प्रतिपत्सिता । स्त्री० हरीतक्याम् ॥

प्रतिपथिक : । त्रि० प्रतिपथप्राप्ते प्रतिपथिके ॥ प्रतिपथशब्देन । ठन् ॥

प्रतिपत्० द् । स्त्री० तिथिवि० । पत्तौ ॥ साचन्द्रस्यप्रथमकलाक्रियारूपा । वृद्धिरूपाचिच्छुक्ला । ह्रासरूपाचेत्कृष्णा ॥ तदनामलक्षणफलम् । मतिवानकविभूषा संयुतश्चारुकान्ति र्निजकुलकमलोद्भासमार्तण्डबिम्ब : । प्रतिपदिशशिपूर्वोलब्धजन्मा प्रतापीभवतिविमलवेशस्वाद्वेश:प्रजेश: ॥ मतौ । संविदि । चेतनायाम् ॥ दुगडवाद्ये ॥ उप प्रतिपद्यते ज्ञायतेऽनया । पदगतौ । सम्पदादित्वात्क्विप् ॥ प्रतिपदनम् । कर्मणिवाक्विप् ॥ तिथीनांप्रवरायस्माद्ब्रह्मणासमुदीरिता । प्रतिपाद्यापदेपूर्वेप्रतिपत्तनसोच्यते ॥ अथचन्द्रदर्शनकारणंयथा । अमावास्याघटीभोध्यापष्ट्याश्मानसंयुता । सूर्यराहुघटीभ्यये दधिकाद्यगणेयथीति ज्योतिषम् ॥

प्रतिपद्यमान : । पुं० भजमाने ॥

प्रतिपन्न : । त्रि० अवगते । विदिते ॥ अङ्गीकृते ॥ विक्रान्ते ॥ प्राप्ते ॥ प्रतिपद्यतेस्म । पद० । क्त : ॥

प्रतिपर्णशिफा । स्त्री० द्रवन्त्याम् ॥

प्रतिपादक : । त्रि० प्रतिपत्तिजनके । बोधके । ज्ञापके । प्रमापके ॥

प्रतिपादनम् । न० दाने ॥ प्रतिपत्तौ ॥ बोधने ॥ पद० । ण्यन्त : । भावे ल्युट् ॥

प्रतिपादयिता । त्रि० समर्थयितरि ॥

प्रतिपादित : । त्रि० बोधिते ॥

प्रतिपादुक : । त्रि० प्रतिपद्यमाने ॥ लषपतपदेत्यादिना० उकञ् ॥

प्रतिपाद्य : । त्रि० बोद्धव्ये ॥ वक्तव्ये ॥

प्रतिपालक : । त्रि० पालनकर्त्तरि ॥ प्रतिपालयति । पारचणे । ण्वुल् ॥

प्रतिपालनम् । न० पोषणे ॥ रक्षणे ।
प्रतिपालित : । त्रि० रक्षिते ॥
प्रतिपाल्य : । त्रि० प्रतिपालनीये ॥
प्रतिपिपादयिषा । स्त्री० प्रतिपादयितुमिच्छायाम् ॥
प्रतिप्रयाणम् । न० प्रतिगमने ॥ यथा प्रतिप्रयाणेप्यमृतायमानामिति ॥
प्रतिप्रयात : । त्रि० प्रतिनिवृत्तगते । मिलवीवोर्टि० पु० भा० ॥
प्रतिप्रसवः । पुं० निषिद्धस्यपुनर्विधाने।
प्रतिप्रसूत : । त्रि० प्रतिप्रसवविशिष्टे ॥ सामान्यशास्त्रविहितं क्वचिच्छास्त्रेणप्रतिषिद्धंपुनर्विधीयमानंप्रतिप्रसूतमुच्यते ॥ पुनःसम्भाविते ॥
प्रतिप्रस्तोता । पुं० ऋत्विग्विशेषे ॥
प्रतिप्रियम् । न० प्रत्युपकारे ॥
प्रतिफलनम् । न० प्रतिबिम्बे ॥ त्रि० तुल्यफले ॥
प्रतिफालम् । न०प्रतिबिम्बे ॥
प्रतिफुल्ल : । प्रतिफुल्लक : । } पुं० प्रफुल्ले ॥
प्रतिबद्ध : । त्रि० गृहीते ॥ मनोहरे ॥ प्रतिबध्यतेस्म । बन्धबन्धने । क्त : ॥ प्रतिबन्धविशिष्टे ॥
प्रतिबध्य : । त्रि० प्रतिबन्धनीये । प्रतिबंधार्हे ॥
प्रतिबन्ध : । पुं० प्रतिष्टम्भे । कार्यप्रतिघाते । प्रतिबन्धनम् । बन्ध० । घञ् ।

प्रतिबन्धक : । त्रि० प्रतिरोधके । वारके ॥
प्रतिबन्धि : । पुं० अनिष्टान्तरप्रसञ्जकेवाक्यविशेषे । प्रतिबन्धे ॥ प्रतिबन्धिरन्युत्तरत्वम् ॥
प्रतिबल : । त्रि० समानबले ॥ शक्ते । समर्थे ॥
प्रतिबोध : । पुं० स्फुटने ॥ निद्रापगमे ॥ गुरूपदेशे ॥
प्रतिबोधम् । अ० बोधंबोधंप्रतीत्यर्थे ॥ अव्ययंविभक्तीत्यादिनायथार्थेऽव्ययीभाव : ॥ बोधाभिमुखे ॥
प्रतिभयम् । न० भये ॥ त्रि० घोरे । भयङ्करे ॥ प्रतिगतंभयंयेन । प्रादिसमास : प्रतिगतंभयमस्मिन् । प्रादिभ्योधातुजस्येतिवा ॥
प्रतिभयाकार : । त्रि० भयङ्कररूपे ॥ प्रतिभयसाकारोयस्य ॥
प्रतिभा । स्त्री० उपस्थितायांबुधौ ॥ ज्ञानबीजभूतसंस्कारविशेषे ॥ नवनवोन्मेषशालिन्यांबुद्धौ ॥ [illegible] नवनवोन्मेषशालिनी[illegible]प्रतिभा[illegible]ता ॥ पञ्चमयष्टे ॥ प्रतिभानम् । [illegible] । भातयेरङ् ॥
प्रतिभाग : । पुं० [illegible] फलकुसुम[illegible] ।
प्रतिभानम् । [illegible]
[illegible]
[illegible]

सूचम् ॥

प्रतिभानवान् । त्रि० प्रतिभाविशिष्टे ॥ प्रतिभैवप्रतिभानम् । प्रतिभानमस्त्यस्य । मतुप् ॥ तात्कालिकबुद्धिमति ॥

प्रतिभान्वित: । त्रि० प्रगल्भे ॥ प्रतिभयाऽन्वित: ॥

प्रतिभामुख: । त्रि० प्रगल्भे ॥

प्रतिभार्गव:। पुं० प्रतिशुक्रे ॥ यद्दिग्गत: समुद्यैदिचरेत्स्वगोलके । यद्द्वारेऽपि तुपिचरेत्स्विविध: प्रतिभार्गव: ॥ एकग्रामेऽपि तु: यात्री दुर्भिक्षे राष्ट्रविप्लवे । प्रतिभार्गीयमानाया: पुर: शुक्रोनदुष्यतीति नववधूव्यागमनेदीपिका ॥

प्रतिभास: । पुं० प्रतीतौ ॥

प्रतिभाहानि: । स्त्री० बुद्धिनाशे ॥

प्रतिभू: । पुं० लग्नके । धनिकाधमर्णयोर्मध्यस्थे । जामिन्‌इ० फारसीयभाषा ॥ सत्रिविध: एकोदर्शनप्रतिभू: । द्वितीयोदानप्रतिभू: । अपर: प्रत्ययप्रति भूरिति ॥ प्रति० प्रतिनिधिर्भवति । भू० । भुव: संज्ञान्तरयोरितिक्विप् ॥ निर्वेतरि ॥

प्रतिम: । त्रि० उत्तरपदस्थोऽयं स्वसदृशे ॥ प्रतिमीयते । माङ् । आत इत्यङ् ॥

प्रतिमा । स्त्री० गजदन्तस्यबन्धे ॥ अनुकृतौ । मूर्तिसदृशमृच्छिलादिनिर्मितप्रतिरूपके । प्रतिमाने । प्रतिबिम्बे ॥ प्रतिमीयतेऽनया । माङ्माने । आतश्चोपसर्ग इत्यङ् ॥ उपमायाम् ॥

प्रतिमानम् । न० प्रतिच्छायायाम् । प्रतिबिम्बे । प्रतिक्रियामीयतेऽनेन । माङ्माने । ल्युट् ॥ गजकुम्भान्तराले । गजदन्तद्वयान्तरे ॥ दन्तयोरुभयोर्मध्यं प्रतिमानमिति स्मृतम् । वाहित्याधोभागे ॥ प्रतिमीयतेऽनेन । मीञ्हिंसायाम् । करणेतिल्युट् । मीनातिमीनोतीत्यात्वम् ॥

प्रतिमार्गक: । पुं० पुरविशेषे ॥ उद्भट्टे ॥

प्रतिमुक्त: । त्रि० आमुक्ते । परिहितकञ्चुकादौ भटे ॥ प्रतिमुच्यतेस्म । मुच्ल० । क्त: ॥

प्रतिमुख: । पुं० नाटकसन्ध्यन्तरे ॥ अभिमुखे ॥ विमुखे ॥

प्रतियत्न: । पुं० गुणाधाने । संस्कारे ॥ लिप्सायाम् ॥ उपग्रहणे ॥ त्रि० यत्नवति ॥ प्रतियत्नम्० प्रतियत्नतेवा । यतीप्रयत्ने० निकारादौवा । यजयाचेतिनङ् ॥

प्रतियातना । स्त्री० प्रतिकृतौ । प्रतिबिम्बे । प्रतिमायाम् ॥ प्रतियात्यतेऽनया । यतनिकारोपस्कारयो:

। पुं० । व्यासश्चन्योसुच् ॥ तुल्यया तनायतम् ॥
प्रतियोगः । पुं० विरोधे ॥ प्रतियुज्यते । घञ् ॥ सम्बन्धे ॥
प्रतियोगी । त्रि० विरोधिनि ॥ यथा रागप्रतियोगीविरागः ॥ सत्प्रतिपक्षे ॥ यथा ॥ प्रतियोगिनं दृष्ट्वाप्रतियोगोगिवर्त्तते ॥ तुल्यपक्षिमसि ॥ निरूपिते ॥ यथा । सम्भावप्रतियोगिकम् । विद्यमान वस्तुनाचनिरूपित मित्यर्थः ॥
प्रतिरथः । त्रि० प्रतिपक्षे ॥
प्रतिरयः । पुं० प्रतिलम्भे ॥
प्रतिरवः । त्रि प्रत्यावर्त्ते ॥
प्रतिरूपः । त्रि० सदृशे ॥ न० । प्रतिमायाम् ॥ प्रतिसदृशं रूपं यस्य ॥
प्रतिरूपकम् । न० प्रतिरूपे ॥ स्वा० कः ॥
प्रतिरोधा । त्रि० प्रतिकूलाचरण शीले ॥
प्रतिरोधः । पुं० तिरस्कारे ॥ चौर्ये ॥ सत्प्रतिपक्षे ॥
प्रतिरोधकः । पुं० चौरे । प्रतिबन्धके ॥
प्रतिरोधी । पुं० चौरे । प्रतिरोद्धुं शीलमस्य । रुधिर० । सुपीतिणिनिः ॥
प्रतिरोपणम् । न० उत्खायपुना रोपणे ॥
प्रतिलम्भः । पुं० लाभे । लम्भने ॥
प्रतिलोमः । त्रि० वामे ॥ विलोमे ॥ अच्प्रत्यन्ववेत्यच् ॥
प्रतिलोमजः । त्रि० प्रतिलोमजाते ॥ उत्तमवर्णायामधमवर्णाज्जाते ॥
प्रतिवचनम् । न० उत्तरे । प्रतिवाक्ये ॥
प्रतिवचः । न० प्रत्युत्तरे ॥
प्रतिवन्दी । स्त्री० स्वस्वीकृततदीयसाम्ये ॥
प्रतिवसथः । पुं० ग्रामे ॥
प्रतिवस्तूपमा । स्त्री० अलङ्कारवि० ॥
प्रतिवाक्यम् । न० उत्तरे ॥ प्रतिवचनम् । यत् ॥
प्रतिवाणिः । स्त्री० प्रतिवाक्ये ॥
प्रतिवापः । पुं० वालवि० ॥ योगुरदेवाच्छिद्यदेशभागप्रतिवापः स प्रतिवापइत्युच्यते ॥
प्रतिवादः । पुं० प्रत्याख्याने ॥ प्रतिवदनम् । वद० । घञ् ॥ विरोधे ॥
प्रतिवादी । त्रि० विरोधिनि ॥ प्रतिवादोयस्यास्ति । इनिः ॥ प्रतिपक्षे ॥ यथा । यदार्त्तिर्धियः पक्षः कल्पितः पूर्ववादिना । तदात्तत्पक्षसंनष्टंप्रतिवादीतदोत्तरम् ॥ इतिवृहस्पतिः ॥
प्रतिवापः । पुं० प्रतिवापे ॥
प्रतिवासरः । पुं० प्रतिदिने ॥

प्रतिवासी । त्रि० आसन्नगृहिणि । प्रतिवेशवासिनि । प्रतीसी० इ० भा० ॥ प्रतिवसति । वस० । ग्रह्यादिणिनिः ॥

प्रतिविधानम् । न० प्रतियत्ने ॥

प्रतिविधि : । पुं० प्रतीकारे ॥

प्रतिविम्बम् । न० प्रतिरूपे । प्रति मायाम् ॥ तत्तदुपाधिषु विम्बाकारैचित्तपरिणामे ॥ प्रतिकृतिर्विम्बस्य । कुगतीतिसमासः ॥

प्रतिविषा । स्त्री० अतिविषायाम् । अतीस० इ० भा० ॥ प्रतीपं विषं यस्याः ॥

प्रतिविष्णुकः । पुं० मुचुकुन्दवृक्षे । मुचुकुन्दप्रप्र० इ० प्रसिद्धे ॥

प्रतिविहितः । त्रि० सज्जिते ॥

प्रतिवेशः । पुं० प्रतिवासिगृहे ॥ प्रतिवासिनि ॥ प्रतिनिधिर्वेशः ॥

प्रतिवेशवासी । त्रि० प्रतिवासिनि ॥

प्रतिवेशी । त्रि० प्रतिवासिनि ॥

प्रतिशब्दः । पुं० प्रतिध्वाने । सुल्लसङ्गाधुन्यक्षरे ॥

प्रतिशरणम् । न० प्रतिगृहे ॥

प्रतिशासनम् । न० आज्ञयभृत्यादीनां कार्यप्रेरणे ॥ प्रतिपूर्वात्०शासधनुशिष्टाविवस्मात्ल्युट् ॥

प्रतिशिष्टः । त्रि० प्रहिते । प्रेरिते ॥ प्रत्याख्याते ॥

प्रतिशीर्षकम् । न० निष्क्रये ॥

प्रतिश्रुः । पुं० प्रतिभार्गवे ॥

प्रतिश्या । स्त्री० पीनसे ॥ प्रतिश्यायतेनयाश्येङ्गतौ । आतश्चोपसर्गेङ् लङ्० । टाप् ॥

प्रतिश्यायः । पुं० पीनसे । नासारोगे । प्रतिश्यायश्यायते । श्यैङ् । श्याद्व्यधेतिणः ॥

प्रतिश्रयः । पुं० सभायाम् ॥ आश्रये । आश्रये ॥ निवासे ॥ यज्ञगृहे ॥ प्रतिश्रयणम् अनया । श्रिञ्० । एरच्० घोषा ॥

प्रतिश्रवः । पुं० अङ्गीकारे । अभ्युपगमे ॥ प्रतिपूर्वाच्छ्रृणोतेः ऋदोरप् ॥

प्रतिश्रवणम् । न० आज्ञाङ्गीकारणे ॥

प्रतिश्रुत् । स्त्री० प्रतिध्वाने ॥ सुत्रवणे । सम्पदादित्वात्क्विप् प्रतिपूर्वमशब्दसच्ची कृत्यश्रुवसे० इ० प्रतिश्रुत् ॥

प्रतिश्रुतः । त्रि० स्वीकृते । अङ्गीकृते ॥ प्रतिश्रूयतेस्म । श्रु० । क्तः ॥

प्रतिषिद्धः । त्रि० निषिद्धे । प्रतिषेधविषये ॥ अप्रतिषिद्धमनुमतंभवतीतियथा ॥

प्रतिषेद्धा । त्रि० निषेधके । माधव्दिके । प्रतिषेधकर्त्तरि ॥

प्रतिषेधः । पुं० निषेधे ॥ यथा । प्राधान्यन्तुविधेर्यत्रप्रतिषेधेप्रधानता । पर्युदासः सविज्ञेयोयत्रोत्तरपदे

दिवसकृद्दतुवर्यसप्रभः स्निग्धः ॥ वैदूर्यनिभः स्वच्छः शुक्लश्चेमसौभिन्नः ॥ पीतोव्याधिंजनयति च शोकरूपश्चशस्त्रकोपाय। प्रतिसूर्यो यांभासादस्तु भयासन्नंपरूर्यो ॥ दिवसकृतः प्रतिसूर्योजलदकृदुदग्दक्षिणोस्थितोऽनिलकृत्। उभयस्थः सलिलभयं नृपमुपरिनिहन्त्यधोजनहा ॥ इति ॥

प्रतिस्पष्टः। त्रि० प्रत्याख्याते ॥ प्रेषिते ॥ दत्ते ॥ प्रहिते ॥

प्रतिसोमा। स्त्री० महिषवल्ल्याम् ॥

प्रतिस्पर्धा। स्त्री० स्पर्धायाम् ॥

प्रतिस्पर्धी। त्रि० स्पर्धाविशिष्टे ॥ प्रतिगर्जिते ॥

प्रतिश्रसः। त्रि० छिद्रे प्रतिसृष्टलिते ॥ सद्दे ॥ यष्टे ॥ प्रतियष्टे ॥ प्रतिशब्यतेस्म । क्तः ॥

प्रतिहतिः। पुं० विनाशे ॥ प्रतिघाते ॥

प्रतिहन्ता। त्रि० विनाशके ॥ प्रतिहन्ति। हन० । बहुलमन्यत्रापीति तृन् ॥

प्रतिहरणम्। न० इतस्ततोनयने ॥

प्रतिहर्ता। पुं० ऋत्विग्विशेषे ॥ प्रतिहरति। हृञ्०। बहुलमन्यत्रापीति तृन् ॥ त्रि० वारयितरि ॥ प्रतिहर्तास्त्वमापदाम् ॥

प्रतिहारः। पुं० द्वारि। द्वारे ॥ द्वास्थे। द्वारपाले ॥ प्रतिह्रियतेऽनेनाऽनया। हृञ्०। घञ्०। उपसर्गस्य निपातिकोदीर्घाभावः ॥ प्रतिहरणम्। भावेघञ्। प्रतिहारोऽलनवारणमस्त्यस्य। अर्शआद्यच् ॥ साम भक्त्यन्तरे ॥ पाञ्चभक्तिकसाम्नश्च तुर्यभक्तौ ॥

प्रतिहारकः। पुं० मायाकारे ॥ इन्द्रजालादिकारके ॥

प्रतिहासः। पुं० करवीरे ॥ प्रतीपोहासोऽस्य ॥ हासस्यप्रतिशब्दे ॥

प्रतीकः। पुं० अङ्गे। अवयवे ॥ त्रि० प्रतिकूले। प्रतीपे। विलोमे। प्रतिगताऽङ्गत्वैकदेशत्वंयेनवा। मत्तादतवेति कप् ॥ प्रत्येति० प्रतीयतेवा। इण् गतौ। अलीकादयश्चेति साधुर्वा ॥

प्रतीकारः। पुं० कृतापकारस्यप्रत्यपकारे। वैरशुद्धौ ॥ स्वप्राणादिनाशयव्यापारे ॥ प्रतिकरणम्। कृञ्०। घञ्। उपसर्गस्येतिदीर्घः ॥ उपाये ॥ चिकित्सायाम् ॥

प्रतीकाशः। पुं० उपमायाम्। उत्तरपदस्थित्वासदृशवचने ॥ प्रतिकाशते। काशृदीप्तौ। पचाद्यच्। इकः काशइत्युपसर्गस्यदीर्घः ॥

प्रतीक्षणम्। न० प्रतीक्षायाम् ॥ ईक्ष० । ल्युट् ॥

प्रतीक्षा। स्त्री० प्रतीक्षणे। निद्रातिप्रातीहार्यप्रतीक्षणे ॥ ईक्षणम्। ईक्ष

दर्शनाङ्गनयो : । गुरोश्चेत्य : । टाप् ॥

प्रतीच्य : । त्रि० पूज्ये ॥ प्रतिग्राह्ये ॥ प्रतीचणीये ॥ प्रतीच्यते । ईच० । ऋहलोर्ण्यत् ॥

प्रतिघात : । पुं० प्रतिघाते ॥

प्रतीची । स्त्री० पश्चिमदिशि ॥ प्रसि पश्चाद्दिनान्ते यस्यातिसूर्यम् । अञ्चु गतिपूजनयो : । ऋत्विगादिनाक्विन् । उगितश्चेतिङीप् ॥

प्रतीचीन : । त्रि० प्राग्भवे ॥ प्रत्यक् ॥ विभाषाञ्चेरदिक्स्त्रियामितिख : ॥

प्रतीच्छक : । त्रि० ग्राहके ॥

प्रतीच्छित : । त्रि० इष्टे ॥ गृहीते ॥

प्रतीच्य : । त्रि० प्रतीचिभवे ॥ द्युप्रागितियत् ॥

प्रतीत : । त्रि० सादरे ॥ ख्याते ॥ हृष्टे ॥ प्रख्याते ॥ प्राज्ञे ॥ प्रथिते ॥ प्रत्ययामगात् ॥ प्रतीयतेस्मेतिवा । इण् ० । गत्यर्थत्वात् ० कर्तरि० कर्मणिवाक्त : ॥

प्रतीति : । स्त्री० प्रत्यये ॥ ज्ञाने ॥ सिद्धौ । भाने ॥

प्रतीप : । पुं० चन्द्रवंशीयकुरुराजपुत्रे । शान्तनुराजपितरि ॥ त्रि० प्रतिकूले । पराङ्मुखे ॥ न० वामे ॥ अलङ्कारविशेषे ॥ यथा । प्रतीपमुपमानस्योपमेयत्वकल्पनम् । त्वल्लो

चनसमंपद्मं त्वद्वक्त्रसदृशोविधु : ॥ प्रसिद्धोपमानोपमेय प्रातिलोम्यात् प्रतीपम् ॥ यथावा । यत्त्वन्नेत्रसमानकान्तिसलिलेमग्नन्तदिन्दीवरं मेघैरन्तरित : प्रियेतवमुखच्छायानुकारीशशी । येपित्वद्गमनानुकारिगतयस्ते राजहंसागतास्त्वत्साद्दृश्यविनोदमात्रमपिमेदैवेननक्षम्यते ॥ अन्योपमेयलाभेनवर्ण्यस्यानादरस्तत ॥ अलङ्कर्वेगर्वेवक्त्रकान्त्या चन्द्रोपिताद्दृश : ॥ अत्रवक्त्रगुणतयावर्ण्यमानस्य० चन्द्रस्याद्दृश्य मसदृशमानस्य उपमेयंकिञ्चित्प्रदर्श्य तावतावर्ण्यस्य तिरस्कारोद्वितीयं प्रतीपं । पूर्वस्मादयंविच्छित्तिविशेषशालि । यथा । गर्वमसम्भाव्यमिमंलोचनयुगलेनकिंवहसिभद्रे ॥ सन्तीदृशानिदिशिदिशिसरस्सुननु नीलनलिनानि ॥ वर्ण्योपमेयलाभेन तथान्यस्याप्यनादर : । क्वतीव्रदर्प ते मृत्योस्त्वत्तुल्या : सन्तिशिखिन : ॥ अत्रतत्कुरुगुणतयाक्वचिदप्युपमानभाव मसदृशमानस्य वर्ण्यस्य वर्ण्यमुपमेयंपरिकल्प्यतावतातस्यापितिरस्कार : पूर्वप्रतीपमेवपरीत्य तृतीयंप्रतीपम् ॥ यथावा । अहमेवगुरु : सुदारुणानामितिहालाहलमास्मतातदृप्य : । ननुसन्तिभवादृशानिभूयोभुवनेऽस्मिन्वचनानि

दुर्जनानाम् ॥ वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचस्तत् । सुधाऽपवादो मुग्धाचित्वन्म् खाभं किलाम्बुजम् ॥ अवर्ण्येवर्ण्योपमित्यनिष्पत्तिवचनं पूर्वेभ्यस्त्वर्थशालित्वतुर्थं प्रतीपं । उदाहरणेसुधापवादस्योक्त्या उपमित्यनिष्पत्तिरुद्घाटिता । यथावा । आकर्णयसरोजाक्षिवचनीयमिदंभुवि । गणकिस्तवयक्त्रं यथामरैकपमीयते ॥ प्रतीपमुपमानस्योपमेयत्वमपिमन्वते । इत्यस्येदनंतस्याः किंपद्मेनकिमिन्दुना ॥ उपमेयस्येवोपमानप्रातिलोम्यात् पञ्चमंप्रतीपम् । यथावा । तद्गोजसस्तद्यशः स्थिताविमौवृथेचित्ते कुरुते यदायदा । तनोतिभानोः परिवेशधैतवात्तदाविधिः कुण्डलनांविधोरपि । केचिदनन्वयोपमेयोपमाप्रतीपानामुपमाविशेषत्वेन तदलङ्कारभिन्नमन्यन्ते । अन्येतुपञ्चसंप्रतीपप्रकारसुपमानाक्षेपरूपत्वात्याक्षेपालङ्कारमाहुः ॥ प्रतिकूलाभावोऽस्मिन् । ऋक्पूर्वेतिसमूहवयः । दूव्यन्तोपसर्गेभ्यत्तीत्वम् ॥

प्रतीपगः । त्रि० स्रतस्यागतमार्गेवगन्ते ॥ प्रतिकूलगामिनि ॥

प्रतीपदर्शिनी । स्त्री० स्त्रीमात्रे । प्रतीपंद्रष्टुंशीलमस्याः अपाङ्गनिरीक्षणात् । सुप्यजातावितिणिनिः ॥

प्रतीमानम् । न० प्रस्थद्रोणादिमानविशेषे ॥

प्रतीयमानः । ज्ञायमाने । प्रमाणस्यविषये ॥

प्रतीरम् । न० तटे । तीरे । तीरयति । पारतीरकर्मसमाप्तौ । पचाद्यच् । प्रान्त्योपसर्गनिवृत्तये ॥

प्रतीवापः । पुं० दुग्धादौदध्यादिभावार्थंतक्रादिप्रक्षेपे ॥ निक्षेपे ॥ स्वर्णादेर्द्रुतस्यद्रव्यान्तरेणापचूर्णनप्रतिवापो ॥ पानीयौषधविशेषे ॥

प्रतीवेशः । पुं० प्रतिवेशी ॥ उपसर्गस्यघञोतिदीर्घः ॥

प्रतीसरः । पुं० कङ्कणे ॥

प्रतीहारः । पुं० द्वारि ॥ द्वाःस्थे ॥ प्रतीहारोजनद्वारणमस्यास्य । पर्शआद्यच् ॥ अस्यलक्षणं यथा । इङ्गिताकारतत्वज्ञोबलवान्प्रियदर्शनः । अप्रमादीसदादक्षः प्रतीहारः सउच्यते ॥ अपिच । प्रांशुःसुरूपोदक्षश्चप्रियवादीनचोद्धतः । चित्तग्राहश्चसर्वेषां प्रतीहारोविधीयते । इति ॥ वृद्धौ ॥ सन्धिविशेषे यथास्योपकृतंपूर्वंमयस्योपकरिष्यति । इतियः क्रियतेसन्धिः प्रतीहारः सउच्यते ॥ प्रतिहरणम् । प्रतिह्रियतेऽनेनावना । हृञ् । घञ् । उपसर्गस्येतिदीर्घः ॥

प्रतीहारी । स्त्री० द्वारिणि ॥ द्वारार्थे

कप्रतीहारशब्दादस्त्यर्थेइनि : ॥

प्रतीहारी । स्त्री० द्वा:स्थितायाम् । द्वारपालकसंकर्म्याम् ॥ गौ० ङीष्

प्रतीवास : । पुं० करवीरे । शतप्राशे । हयमारके ॥

प्रतुद : । पुं० हारीतादिपक्षिगणे ॥ यथा । हारीतोधवल : पाण्डुचित्रपृष्ठोथपुच्छक : । पारावत : खञ्जरीट : पिकाद्या:प्रतुदा : स्मृता : ॥ अतमुख्यपाठस्त्वयम् । कोणष्टकहारीतकपोतशतपत्रिका : । सारिकाखञ्जरीटश्चपिकाद्या : प्रतुदा : स्मृता : ॥ इति । भावप्रकाशीयव्याख्यानुरोधात् ॥ प्रतुदा मधुरापित्तकफघ्नास्तुवराहिमा : । लघवीयबद्धवर्चस्का : किञ्चिद्वातकरा : स्मृता : ॥ अपिच । छागाद्याविष्किरोवर्ग : प्रतुदाजाङ्गला : मृगा : । लघव : शीतमधुरा : कषायाश्वहिताॠणाम् ॥ इति ॥

प्रतोद : । पुं० प्राजने । तोदप्रोतायें प्रजभादिप्रेरणदण्डे ॥

प्रतोरणम् । न० बहिर्द्वारे ॥

प्रतोली । स्त्री० ग्राममध्यमार्गे । रथ्यायाम् । विशिखायाम् ॥ प्रतोलयति । तुलउन्माने । चु० । अच् । गौ० ङीष् ॥

प्रत्त : । त्रि० दत्ते ॥ प्रदीयतेस्म ॥ डुदाञ्दाने । क्त : । अचउपसर्गात्तइतितादेश : ॥

प्रत्न : । त्रि० पुरातने ॥ नश्वपुराणे प्रादितित्वेनसमुच्चितस्त्नप्प्रत्यय: ॥

प्रत्यक्चेतन : । पुं० त्वम्पदलक्ष्ये ॥

प्रत्यक्फलम् । न० सर्वान्तरस्वे ॥

प्रत्यक्पर्णी । अपामार्गे ॥ द्रवन्त्याम् ॥ प्रत्यञ्चिपर्णान्यस्या : सा । पाककर्णेतिङीप् ॥

प्रत्यक्पुष्पी । स्त्री० अपामार्गे ॥ प्रत्यञ्चिपुष्पाण्यस्या : पाककर्णेतिङीप् ॥

प्रत्यक्श्रेणी । स्त्री० दन्त्याम् ॥ मूषिकपर्ण्याम् । सुरश्रेण्याम् ॥ प्रतीचीश्रेणीयस्या: । समासान्तस्यानित्यत्वान्नकप् ॥

प्रत्यक्षम् । अ० प्रत्यक्षे ॥ अक्षिअक्षिप्रतीतिवीप्सायाम् यथार्थत्वेनसमास: । अक्ष्णोराभिमुख्यमित्यर्थे०तद्धितेनाभिप्रतीतिवाव्ययीभाव : प्रतिपरसमनुभ्योक्ष्णइतिटच् ॥

प्रत्यक्षम् । त्रि० प्रमाणविशेषे । स्मृतौ ॥ प्रामाण्यंप्रत्यनपेक्षत्वात् । इन्द्रियग्राह्ये । ऐन्द्रियके ॥ इन्द्रियार्थसन्निकर्षजन्यार्थाकाराश्रया० इन्द्रियाश्रितवृत्ति : प्रत्यक्षंप्रमाणम् ॥ प्रत्यक्षज्ञानकारणंप्रत्यक्षम् । इन्द्रियार्थसन्निकर्षजन्यंज्ञानंप्रत्यक्षम् ॥ तद्द्विविधम् । निर्विकल्पकं०सविकल्पकञ्चेति । तत्रनिष्प्रकारकंज्ञानंनिर्विकल्पकम् । सप्रकारकंज्ञा

नं० सविकल्पकम् । यथा० डित्थो
यम्० ब्राह्मणोयं० श्यामोयमिति ।
प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः
षड्विधः । संयोगः संयुक्तसमवायः
संयुक्तसमवेतसमवायः समवेत
समवायः विशेषणविशेष्यभावश्चे
ति । तत्रचक्षुषाघटप्रत्यक्षजनने०
संयोगसन्निकर्षः ( ॥ + १ + ॥ )
घटरूपप्रत्यक्षे० संयुक्तसमवायः च-
क्षुःसंयुक्तेघटे रूपस्यसमवायात् रूप
त्वसामान्यप्रत्यक्षेसंयुक्तसमवेतसम
वायःचक्षुःसंयुक्तेघटेरूपंसमवेतम्त
त्ररूपत्वस्यसमवायात् ॥ ३ ॥ श्रोत्रेण
शब्दसाक्षात्कारे० समवायः सन्नि
कर्षः कर्णविवरवर्त्याकाशस्यश्रोत्र
त्वात्० शब्दस्याकाशगुणत्वात्० गुण
गुणिनोश्चसमवायात् ॥ ४ ॥ शब्द
त्वसाक्षात्कारे० समवेतसमवायः
सन्निकर्षः श्रोत्रसमवेतेशब्दे० शब्द
त्वस्यसमवायात् ॥ ५ ॥ अभावप्रत्यक्षे
विशेषणविशेष्यभावः सन्निकर्षः
घटाभाववद्भूतलमित्यत्र० चक्षुःसं-
युक्तेभूतले० घटाभावस्यविशेषणत्वा
त् ॥ ६ ॥ एवंसन्निकर्षषट्कजन्यं
ज्ञानंप्रत्यक्षम् । तत्करणमिन्द्रियम्
। तस्मात्० इन्द्रियंप्रत्यक्षप्रमाणमि
तिसिद्धम् ॥ इन्द्रियार्थसन्निकर्षोत्प
न्नंज्ञानमव्यपदेश्यमव्यभिचारिव्यव
सायात्मकंप्रत्यक्षम् ॥ प्रतिगतोऽक्ष



म् । अत्यादयइतिसमासः ॥ अनु
भवविशेषे ॥ तत्षड्विधम् । घ्राण-
जम् १ रासनम् २ श्रावणम् ३ चा
क्षुषम् ॥ स्पार्शनम् ५ मानसम् ६
निर्विकल्पकसविकल्पकभेदेनप्रत्य
क्षंद्विविधम् । निर्विकल्पकमतीन्द्री
न्द्रियम् । सविकल्पकंमनोग्राह्यम् ।
षड्विधप्रत्यक्षे० आश्रयस्यमहत्त्वंका
रणम् । इन्द्रियंकरणम् । विषयेणस
ह० इन्द्रियसन्निकर्षोऽस्यव्यापारः ।
यथा । घ्राणजादिप्रभेदेनप्रत्यक्षंष-
ड्विधंमतम् । घ्राणस्यगोचरोगन्धो
गन्धत्वादिरपिस्मृतः ॥ तथारसो
रसज्ञायास्तथाशब्दोऽपिचश्रुतेः ।
उद्भूतरूपंनयनस्यगोचरोद्रव्याणितद्व
न्तिपृथक्त्वसंख्ये । विभागसंयो
गपरापरत्वस्नेहद्रवत्वंपरिमाणयुक्त
म् । क्रियांजातिंयोग्यवृत्तिंसमवा-
यञ्चतादृशम् । गृह्णातिचक्षुः स-
म्बन्धादालोकोद्भूतरूपयोः ॥ उद्भू
तस्पर्शवद्द्रव्यंगोचरः सोऽपिचत्व
चः । रूपान्यच्चक्षुषोयोग्यंरूपमत्रा
पिकारणम् ॥ द्रव्याध्यक्षेत्वचोयोगो
मनसाज्ञानकारणम् । मनोग्राह्यं
सुखंदुःखमिच्छाद्वेषोमतिः कृ
तिः ॥ ज्ञानंयन्निर्विकल्पाख्यंतद
तीन्द्रियमिष्यते । महत्त्वंषड्विधे
तुरिन्द्रियंकरणंमतम् ॥ विषयेन्द्रि
यसम्बन्धोव्यापारः सोऽपिषड्विधः

॥ इतिभाषापरिच्छेद : ॥

प्रत्यक्त्वम् । न० अखिलस्विसप्रतीति कत्वे ॥

प्रत्यक्दर्शन : । त्रि० साक्षिणि ॥ प्रत्यक्संदर्शनम् । वक्ष्यस : ॥

प्रत्यक्दर्शी । त्रि० साक्षिणि ॥

प्रत्यक्देव : । पुं० ब्राह्मणे ॥

प्रत्यक्वादी । पुं० चौरे ॥

प्रत्यची । त्रि० व्यक्तदृष्टार्थे ॥

प्रत्यगात्मा । पुं० वर्तशब्दप्रत्ययालम्बने० आत्मनि ॥ अहानृताहङ्कारादिभ्य : सत्यज्ञानानन्दादिरूपतया प्रतिपक्षतिइतिप्रत्यक् । सचासावात्माच ॥

प्रत्यगाशापति : । पुं० वरुणे ॥

प्रत्यग्धुत : । त्रि० अन्तर्मुखीभूते ॥

प्रत्यग्र : । अभिनवे । नूतने ॥ शोधिते ॥ प्रतिनवमग्रमस्य ॥

प्रत्यङ्पथ : । पुं० पश्चिमदेशे ॥

प्रत्यङ्गम् । न० कर्णाद्यवयवे ॥ यथा । प्रत्यङ्गंकर्णनासाक्षिजिह्वाङ्गुलिकरादिकम् । इति ॥

प्रत्यङ्गिरा । स्त्री० देवीविशेषे ॥

प्रत्यङ् । अ० दिशि ॥ देशे ॥ काले ॥ प्रतीच्यांदिशि०प्रतीच्यादिश: प्रतीचीदिग्वा । दिक्शब्देभ्य . सप्तमीपञ्चमीप्रथमादिनाऽस्ताति : । अस्तेर्लुक् । लुक्तद्धितलुकि ॥ ॥ एवंदेशकालेऽपि ॥

प्रत्यक् । त्रि० दिशि ॥ देशे ॥ काले ॥ प्राग्भवे ॥ सर्वान्तरेदृश्यादन्यस्मिन् कोऽहमितिप्रत्यगितिचेत्०तादृगीदृगितिद्वयम् । यत्रनप्रसरेत्तत्प्रत्यगित्यवधार्यताम् ॥ निर्विशेषापरोक्ष ॥ अहानृताहङ्कारादिभ्य : सत्यज्ञानानन्दादिरूपतया प्रतिपक्षतीति तथा । क्विन् ॥

प्रत्यर्चित : । त्रि० पूजिते ॥

प्रत्यनन्तर : । त्रि० प्रत्यासन्ने ॥

प्रत्यनीक : । पुं० अरौ । शत्रौ । विरोधिनि ॥ परपक्षसैन्ये ॥ न० अर्थालङ्कारवि० ॥ यथा । प्रतिपक्षमशक्तेनप्रतिकर्तुं तिरस्क्रिया । यातदीयस्यतत्स्तुत्यैप्रत्यनीकंतदुच्यते ॥ व्यक्तमतिपरमपिविपक्षं साक्षान्निरसितुमशक्तेनकेनापियत्तमेवप्रतिपक्षमुत्कर्षयितुंतदाश्रितस्य तिरस्करणम् तदनीकप्रतिनिधितुल्यत्वात्०प्रत्यनीकमभिधीयते । यथानीकेऽभियोज्ये तत्प्रतिनिधिभूतमपरंगूढतयाकेनचिदभियुज्यते०तथेहप्रतियोगिनिविजेयेतदीयोन्यो विजेयतयार्थ : । उदाहरणम् । त्वंविनिर्जितमनोभवरूप : साचसुन्दरभवत्यनुरक्ता । पञ्चभिर्युगपदेवशरैस्तांतापयत्यनुशयादिवकाम : ॥ यथा । यस्यकिञ्चिदपकर्तुमक्षम : कायनिग्रहगृहीतविग्रह : । कान्तवक्त्रसदृशाकृ

तिगच्छतीतिवाविग्रहे । अच० ।
अच् । प्रत्ययाः सहकारिणइतिचि
कारहर्षेय : ॥
प्रत्ययकारिणी । स्त्री० मुद्रायाम् ।
छोव० मोरछाप० इ० भा० ॥ अ-
भिधाने ॥ प्रत्ययस्यनिश्चयस्यकारि
णी ॥
प्रत्ययित : त्रि० । आप्ते । विश्वस्ते ॥
· प्रत्ययोविश्वास : सञ्जातोऽस्य । त
दस्यसञ्जातमितीतच् ॥
प्रत्ययी । त्रि० विश्वासिनि ॥ प्रत्ययो
ऽस्त्यस्य । इनि : ॥
प्रत्यरि : । पुं० पञ्चमतारायाम् ॥
प्रत्यर्थी । त्रि० शत्रौ ॥ प्रतिकूलमर्थ-
यितुंशील: । अर्थयाञ्चायाम् । सुपी
तिणिनि : ॥ प्रतिवादिनि । अर्थि-
प्रतिपक्षे ॥ यथा । प्रत्यर्थिनोऽयतो
येस्य यथावेदितमर्थिना । समामा
सतदर्थर्विनामकात्थादिचिह्नितम्
॥ अर्थ्यतेऽर्थ्यर्थ : साध्य : सोऽस्या
स्तीत्यर्थी० तत्प्रतिपक्ष : प्रत्यर्थी ॥
प्रत्यर्पणम् । न० निर्यातने । न्यासा-
र्पणे ॥
प्रत्यर्पित : । त्रि० प्रतिदत्ते ॥ प्रत्य
वमर्गनम् न० हागलकरे ॥ नि-
वर्तंते ॥
प्रत्यवर : । त्रि० निकृष्टे ॥
प्रत्यवसानम् । न० भक्षणे ॥भोजने ॥
प्रत्यवसितम् । त्रि० भक्षिते ॥ प्रत्य

वसीयतेस्म । भोक्तकर्मणि । क्त : ॥
प्रत्यवस्कन्द : । पुं० प्रत्यवस्कन्दने
प्रत्यवस्कन्दनम् । न० व्यवहारोत्तर
प्रभेदे । यथा । प्रत्यवस्कन्दनंनाम
सत्यंग्रहीतम्० प्रतिदत्तंप्रतिग्रह-
लब्धमितिवा । यथाहनारद : । अ
र्थिनालेखितोयोर्थ : प्रत्यर्थीयदि
तंतथा । प्रपद्यकारणंब्रूयात्प्रत्यव
स्कन्दनंस्मृतमिति ॥ वृहस्पतिरपि
। अर्थिनाभिहितोयोर्थ:प्रत्यर्थीयदि
तंतथा । प्रपद्यकारणंब्रूयात्प्रत्य-
वस्कन्दनंहितदिशि ॥
प्रत्यवस्थाता । पुं० शत्रौ ॥
प्रत्यवस्थानम् । न० दूषणाभिधाने ॥
प्रत्यवहार : । पुं० प्रलये ॥ प्रत्यव
ह्रियन्तेप्राणिनोऽस्मिन् । हञ्० ।
अवहाराधारेतिघञ् ॥
प्रत्यवाय : । पुं० अङ्गवैगुण्यनिबन्धने
पापे ॥ प्रत्ययाय्यते । प्रत्यवम् यदि
यतिघञ् ॥
प्रत्यवेक्ष्य : । त्रि० एतावत्कृतमेताव
त्कर्तव्यमित्यनु सन्धानेनविचार
णीये ॥
प्रत्यश्मा । पुं० गैरिके । गिरिमृदि ॥
प्रत्यस्त : । त्रि० प्रक्षिप्ते ॥
प्रत्यक्षम् । अ० प्रतिदिने ॥ अह :
अह : प्रति० यथार्थेऽव्ययीभावेन
पुंसकादन्यतरस्यामितिसमासान्त
टच् । टिलोप : ॥

प्रत्याकार : । पुं॰ खड्गकोषे ॥

प्रत्याख्यात : । पुं॰ दूरीकृते । निराकृते ॥ प्रत्याख्यायतेस्म । ख्याप्रकथने॰चक्षिङादेशोवा । क्त : ॥

प्रत्याख्यानम् । न॰ निराकरणे । निरसने ॥ ख्या॰ चक्षिङादेशोवा । ल्युट् ॥

प्रत्याख्येय : । त्रि॰ प्रयोज्ये । प्रत्याख्यातुंयोग्ये ॥ यथा । धृत् ॥ भुगा : शास्त्रप्रयोगज्ञा : प्रत्याख्येयंनयाविच । यथाचिताइतंयाइ मपिदुष्कृतकर्मण : ॥ यन्यत्रकुलटापरक्रमतितिश्रीविषयेत्यमगरुड पुराणे अध्याय : ॥

प्रत्यागत : । त्रि॰ पुनरागते ॥ सन्निवृत्ते ॥

प्रत्यागम : । पुं॰ प्रत्यागमने । फिरकेआवना॰ चू॰ भा॰ ॥

प्रत्यागमनम् । न॰ पुनरागमने । प्रत्यागमे ॥

प्रत्यादित्सु : । त्रि॰ आच्छिद्यग्रहीतुमिच्छौ ॥

प्रत्यादिष्ट : । पुं॰ निराकृते । निरस्ते । साथागच्छत्याद्युक्ते । प्रतिरुद्धे ॥ प्रत्याख्याते ॥ प्रत्यादिश्यतेस्म । दिशअतिसर्जने । क्त : ॥

प्रत्यादेश : । पुं॰ निराकृतौ । प्रत्याऽऽख्याने ॥ प्रसङ्गनिवारणे ॥ भर्त्तांप्रतिदेवतायाउपदेशे ॥ प्रत्यादेशनम् । दिश॰ । घञ् ॥

प्रत्याय : । पुं॰ विश्वासे ॥

प्रत्यायक : । त्रि॰ प्रतीतिजनके ॥ यथा । वर्णसमूहरूपतयाशब्दोऽयंस्यप्रत्यायकइति ॥ यथावाक्षिरादेजित्यत्रक्षिशब्दस्यप्रत्यायकत्वमादेशांप्रत्याथ्यत्वम् ॥

प्रत्यायनम् । न॰ प्रतीतासानयने ॥ बोधजनने ॥

प्रत्यायित : । त्रि॰ विश्वसनीये ॥ प्रत्ययप्रत्याय : संप्राप्त : ॥

प्रत्यालीढम् । न॰ धन्विनांयुद्धकाले चरणन्यासभेदे । अत्रस्वसव्यामपाद्यप्रसारिदक्षिणपादसङ्कोचे ॥ त्रि॰ चर्षिते ॥ प्रत्यालेपनम् । लिह॰ । नपुंसकेभावेक्त : ॥

प्रत्याशा । स्त्री॰ अभिलाषे ॥

प्रत्यासत्ति : । पुं॰ सामीप्ये ॥

प्रत्यासन्न : । त्रि॰ निकटवर्त्तिनि ॥

प्रत्यासर : । पुं॰ सैन्यपृष्ठे ॥

प्रत्यासार : । पुं॰ व्यूहस्यपश्चाद्भागे । व्यूहस्यपश्चाद्व्यूहान्तरे । व्यूहपार्ष्णौ ॥ प्रतीपमासारयतिभगान् । सृ॰ । ख्यन्त : । अच् ॥

प्रत्याहत : । त्रि॰ कुण्ठिते ॥

प्रत्याहरणम् । न॰ प्रत्याहारे ॥

प्रत्याहार : । पुं॰ उपादाने । स्वस्वविषयेभ्यइन्द्रियाणांप्रत्याहरणे ॥ स्वस्वविषयासम्प्रयोगेचित्तस्वरू

प्रत्युप्त : । त्रि० खचिते ॥

प्रत्यूष : । न० प्रभाते ॥ प्रत्योषत्यन्ध कारम् । उषदाहे । उष : क्विप् ल्यसि: यन्योपसर्गनिवृत्तवैप्रतीति ॥

प्रत्यूढ : । त्रि० ढूते । वहिष्कृते ॥

प्रत्यूष : । पुं० वसुर्मेखे । प्रभाते ॥ वसौ ॥ प्रत्यूषति०कलतिकामुकान् । अपरुत्त्वायाम् । इगुपधेतिकः ॥

प्रत्यूष : । न० प्रत्यूषे ॥

प्रत्यूह : । पुं० विघ्ने ॥ प्रत्यूहनम् । ऊह० । घञ् ॥

प्रत्येकम् । न० एकमेकम्प्रतीत्यर्थे ॥

प्रत्येना : । त्रि० चौर्यादिनिषेधके ॥ प्रत्येनस : निषेधका : स्तुचौर्यादीतत्पदेनस्ति ॥

प्रथनम् । न० विस्तारे ॥

प्रथम : । त्रि० आदौ ॥ प्रधाने । मुख्ये ॥ *प्रथते । प्रथप्रख्याने विस्तारे* वा । प्रथेरमच् । प्रथमचरमेति सर्वनामसंज्ञात्पक्षे०जस : शी । प्रथमे प्रथमा : ॥

प्रथमा । स्त्री० सु० औ० जस् इति विभक्ते ॥

प्रथयन् । त्रि० विस्तारयति ॥

प्रथा । स्त्री० ख्यातौ । प्रसिद्धक्रियायाम् ॥ प्रथनम् ॥ प्रथ० । भिदादङ् ॥

प्रथित : । त्रि० विख्याते ॥ प्रथतेस्म । प्रथ० । अकर्मकत्वात्कर्त्तरिक्तः कृत् ॥

प्रथिति : । स्त्री० ख्यातौ ॥ प्रथते प्रथ० । पद्रिप्रथिभ्यांनिदितिति: ॥ *नितुवेध्वमधादीनामितीट्* ॥

प्रथिमा । पुं० पार्थवे । पृथुत्वे ॥ पृथोर्भाव : । पृथ्वादिभ्यइमनिज्वेति इमनिच् । रऋतोरितिरत्वादेश : । टेरितिटिलोप : ॥

प्रथिष्ठ : । त्रि० अतिशयेनप्रथौ । अतिशयति ॥

प्रथीयान् । त्रि० पृथुतरे ॥ ईयसुनि० रऋतोरूखादेरितिरिफादेश : ॥

प्रद : । त्रि० प्रदातरि । प्रकर्षेणददाति । डुदाञ्० । क : ॥ मे दास्त्रव्रतिकर्मेत्युपपदेविधानान्नक्त : तत्वादसाधुरेवायम् ॥

प्रदक्षिण : । पुं० न० दक्षिणावर्त्तेनदेव तानुदिश्यभ्रमणे ॥ यथा । एकादेव्यांरवौसप्त त्रीणिकुर्याद्विनायके । चत्वारिकेशवेकुर्यात् शिवेचार्धप्रदक्षिणम् ॥ सर्वदेवस्तुतिप्रदप्रदक्षिणम् यथा । प्रसार्यदक्षिणंहस्तं स्वयं नम्रशिरा : पुन : । दक्षिणंदर्शयन्याति मनसापिचदक्षिण: ॥ सकृत्विकर्विष्टेत्तादेव्याप्रीति : प्रजायते । सचप्रदक्षिणोज्ञेय: सर्वदेवैघतुष्टिद: । घटोत्तरगतंयस्तुदेव्या: कुर्यात्प्रदक्षिणंसर्वान्कामान्समासाद्यपरान्मोक्षमवाप्नुयात् ॥ मन-

सापिचयोदद्याद्दिव्यैभक्त्याप्रदक्षि-
णम् । प्रदक्षिणाद्यमगृहेनरक्षाणि-
नपश्यति ॥ चपिच । दक्षिणादाय
वीनत्वादिशंतस्याश्चशाश्ववीभ् ।
ततश्चदक्षिणांगत्वानमस्कारखिक्षो
पावत् ॥ चर्चंचन्द्रंमहेशस्यपृष्टतयस
मीरितम् । शिवप्रदक्षिणेमन्त्रीच-
र्वंचन्द्रकमेणतुं ॥ सव्यासव्यक्रमेणै-
वसोमसूत्रंनलङ्घयेत् ॥ प्रसार्यदक्षि
णंहस्तंस्वयंनम्रशिरा : पुन : । दर्श
येदक्षिणंपार्श्वंमनसापिचदक्षिण : ॥
चिधाचवेष्टयेत्सम्यक्देवताया : प्र
दक्षिणम् ॥ एकहस्तप्रमाणास्यएकंधा
पिप्रदक्षिणम् । भक्ताचिदर्शनंयिथो
र्षेन्तिपुण्यंपुराकृतम् ॥ प्रगतोदक्षि
णम् । तिष्ठद्गुप्रभृतीनिचइत्यव्ययी
भाव : ॥

प्रदस : । चि॰ प्रकर्षेणदर्शी ॥

प्रदर : । पुं॰ विदीर्णभूभागे । विदारे
॥ शरे । वाणे ॥ भङ्गे ॥ नारीरुग्-
भेदे । असृग्दरे ॥ तत्तु फलितयोन्या
रक्तादिधातुचरणं ॥ तस्यनिदानं
यथा । विरुद्धमद्याध्यशनादजीर्णा
दगर्भप्रपातादतिमैथुनाच्च । यानाध्व
शोकादतिकर्षणाच्चभाराभिघाता
च्छयनाद्दिवाच ॥ असृग्दरंभवेत्तत्त
र्वंसाङ्गमर्दंसवेदनम् ॥ तस्यातिवृ
द्धौदौर्बल्यंश्रमोमूर्च्छामदस्तृषा ।
दाह : प्रलाप : पाण्डुत्वंतन्द्रारोगा

श्चवाततजा : ॥ सचतुर्विधउक्तोयथा
। तंश्लेष्मपित्तानिलसन्निपातैश्चतु :
प्रकारंप्रदरंवदन्तिइद्धाइति ॥ प्रदीर्य
ते॰प्रदरश्चमनेनवा । इविदारणे
। कद्दोरप् ॥ गर्ते ॥ प्रकृष्टभये ।
चि॰ तद्वति ॥

प्रदर्शनम् । न॰ संदर्शने ॥ दिङ्मात्र
दर्शने ॥ प्रदृश्यते । दृशिर् । ल्युट्

प्रदर्शित : । चि॰ आलोकिते ॥

प्रदल : । पुं॰ वाणे ॥

प्रदानम् । न॰ दाने ॥ प्रदीयमाने ॥
डुदाञ्॰ । प्रपूर्व : । प्रकृष्टदाने ॥

प्रदानोचित : । चि॰ दानपात्रे ॥

प्रदिग्धम् । न॰ मांसव्यञ्जनभेदे ॥
यथा । मांसंबहुघृतैर्भृष्टंसिक्त्वाचो-
ष्णाम्बुनामुहु : । जीरकाद्यै :समा
युक्तंपरिशुष्कंसदुच्यते ॥ तदेवघृत
तक्राढ्यंप्रदिग्धंसचिजातकम् ॥
चिप्रकर्षेणलिप्ते ॥

प्रदिक् । स्त्री॰ विदिशि ॥ दिग्भ्य :
प्रगता । प्राप्ता ॥

प्रदिष्ट : । चि॰ निर्दिष्टे । प्रदर्शिते ॥

प्रदीप : । पुं॰ गृहमणौ । दशेन्धने ।
कज्जलध्वजे । दीपे । दीपा॰ रु॰
भा॰ ॥ दीपवत्प्रकाशकत्वात्तेजसा
दीप्यमेरव । इचेचदीपोदातव्योनतु
भूमौकदाचन ॥ सर्वंसहावसुमती
सहतेनत्विदंद्वयम् । अकार्यपाद-
घातञ्चदीपतापंतथैवच ॥ प्रदीप्यते

ऽनेनवादीपयतिप्रकाशयतिवा । दीपीदीप्तौ । द्रुगुणत्वात्क । घ- ञ्था । यञ्वा । प्रोन्योपसर्ग मिवृत्यर्थं : ॥

प्रदीपन : । पुं॰ स्थावरविषभेदे ॥ स ग्रन्थान्यथा । वत्सनाभोहितीय: स्या हौद्रिलानद्दरन : प्रभ : । मदाष्ट एकर : पूर्वैःकथित : सप्रदीपन : ॥ अपिच । प्रदीपनस्तुदस्नोरक्तवर्णो ज्ञानाद्रिज : ॥ पु॰ ॥ त्रि॰ प्रका शके ॥ प्रकर्षेणदीपयति । णिज न्ताद्दीपेर्ल्यु : ॥

प्रदीप्त : । त्रि॰ प्रज्वलिते । दह्यमाने॥

प्रदीप्ता । स्त्री॰ रवियुक्तदिशि ॥

प्रदूषित : । त्रि॰ उपहते ॥

प्रदेय : । त्रि॰ पारितोषिके ॥

प्रदेश : । पुं॰ देशमात्रे । भित्तौ । आख्याने । अवकाशे ॥ तर्जन्यङ्गुष्ठ सम्मिते ॥ भित्तौ । एकदेशे । प्र- दिश्यते । दिश॰ । एलर्थे तिघञ् । उपसर्गस्यघञीतिप्राचिकोदीर्घोभा व : ॥

प्रदेशनम् । न॰ प्राभृते । उपायने । उपहारे । प्रदिश्यते । दिश॰ । क ल्युल्युट् ॥

प्रदेशनी । स्त्री॰ तर्जन्याम् । प्रदिश्य तेऽनया । दिश॰ । करणेल्युट् ॥

प्रदेशिनी । स्त्री॰ तर्जन्याम् ॥ प्रदि शति । दिश॰ । सुपीतिणिनि : प्र

देशोस्त्यस्यावा । इनि॰ ॥

प्रदेह : । पुं॰ आलेपभेदे । प्रलेपे ॥ आर्द्रोघनस्तनोघ : स्यात्प्रदेह : स्त्री ष्यावानहा ॥ अनुलेपनाभ्यङ्गादौ ॥

प्रदोष : । पुं॰ रजनीमुखे ॥ त्रिमुहू र्त्त : प्रदोषस्याद्रवावस्तंगतेसतीत्य के ॥ प्रदोषोऽस्तमयादूर्ध्वंघटिका द्वयमिष्यतइत्यन्ये ॥ प्रकृष्टदोषे ॥ दुष्यति । दुष॰ । घञ् । टाप् । प्रारब्धोदोषाया : प्रादिसमास : । प्रारब्धादोषायस्मिन्वा । गोस्त्रियो रितिह्रस्व : ॥

प्रदोषव्रतम् । न॰ प्रदोषदिनेक्रियमा णे व्रतानुष्ठाने ॥ यथा । यत्रदेवोमहा देवोदेवीसंस्थाप्यविष्टरे । नृत्यंकरो तिपुरत:सार्द्धंदेवैर्निशामुखे । तत्री पोष्यरजन्यादौ प्रदोषेपूजयेच्छिवा म् । प्रतिपत्पक्षयोरिवपक्षदेवोप्रीति. कारकमितिश्रीदेवीभागवतेश्रीदेवी गीता ॥

प्रद्युम्न : । पुं॰ कामदेवे । कन्दर्पे । व द्युम्नधिनतारि । वासुदेवांशवि॰ । यथा । अनिरुद्ध : स्वयंब्रह्माप्रद्यु- म्न : कामएवच । वलदेव : स्वयं- शेष : साक्षात्प्रकृते : पर : । प्रकृ- ष्टंद्युम्नंबलमस्य ॥

प्रद्योत : । पुं॰ आतपे । प्रकाशे ॥ प्रकृष्टोद्योत : ॥ रश्मौ ॥

प्रद्योतन : । पुं॰ सूर्ये ॥ प्रकृष्टोद्योत-

द : । न० द्युतौ ॥

प्रद्रावक : । त्रि० कुत्सितामवस्थांप्राप्ते । अन्नाभावादन्त्यावस्थांप्राप्ते ॥

प्रद्राव : । पुं० पलायने । अपक्रमे ॥ प्रद्रवणम् । द्रु० । प्रद्रुस्रुस्रुवद्रुतिघञ् ॥

प्रधनम् । न० युधि । रणे । दारणे । डुधाञ्० । कृपृवृजीतिक्युः ॥

प्रधर्षणम् । न० अभिभवे ॥

प्रधानम् । न० प्रकृतौ । गुणसाम्यावस्थायाम् ॥ परमात्मनि ॥ बुद्धौ ॥ प्रभवत्सर्वमात्मनि । अन्यचापीतिबुध ॥ त्रि० उत्तमे ॥ प्रदधाति । डुधाञ्० । ल्युट्० युज्वा । प्रधत्ते ०प्रधीयतेऽनेनाऽस्मिन्वा । करणादौ ल्युट् ॥ पुं०न० महामात्रे । सेनापत्यादौ ॥ प्रधीयते । कार्यस्य ट्युतिकर्मणिल्युट् ॥ प्रधानानुयायिनीजनव्यवहाराभवन्ति ॥ प्रधानस्य प्रधानेनसह निरोधीनतुद्वर्शीन ॥

प्रधानात्मा । पुं० जगत्प्रकृतौ । मायायाम् ॥

प्रधावन : । पुं० वायौ । त्रि० प्रकृष्टगमनविशिष्टे । प्रकृष्टं धावनं यस्य ॥

प्रधि : । पुं० रथस्यचक्रान्तेभूमिस्पर्शिभागे । नेम्याम् ॥ प्रधीयतेऽनेन । डुधाञ्० । उपसर्गेघो : कि : ॥

प्रधी : । त्रि० उत्कृष्टबुद्धियुक्ते ॥ प्रकृष्टं ध्यायति । ध्यै० । ग.यते : सम्प्रसारणञ्चेतिक्विप् । हलसेति दीर्घ : । नित्यस्त्रीत्वाभावान्ननदीत्वम् । प्रकृष्टाधीर्यस्येतिविग्रहेतुनदीत्वम् ॥ स्त्री० प्रकृष्टबुद्धौ० तत्पुरुषायाञ्च ॥ प्रकृष्टाधी : प्रकृष्टाधीर्यस्यावा ॥

प्रधूपित : । त्रि० प्रकर्षेणतप्ते । दीप्ते च ॥ क्लेशिते ॥ प्रकर्षेणधूपित : ॥

प्रधूपिता । स्त्री० क्लेशितायाम् ॥ रविगन्तव्यदिशि ॥

प्रधूमित : । त्रि० सञ्जातधूमे । ता० स्त्री० सूर्यगन्तव्यदिशि । प्रकर्षेण धूम : संजातोऽस्या० इतच् ॥

प्रध्वंस : । पुं० विनाशे । प्रकृष्टो ध्वंस : ॥

प्रध्वंसाभाव : पुं० अभावविशेषे ॥ सच० सादिरनन्त : प्रध्वंस : उत्पत्तेरनन्तरम्कार्यस्य । घटादावतिव्याप्तिवारणायानन्तइति । आकाशादावतिव्याप्तिवारणायसादिरिति ॥ प्रध्वंसस्याभावाभावः ॥ कपालेषुघटादेर्विद्यमानस्य थाभावः प्रध्वंसाभावन्निरोधावक्रनकइति सत्कार्यवादिन : ॥

प्रनष्टोदर : । त्रि० विनष्टोदरे । प्रनष्टोदरे । प्रकर्षेणनष्टनमुदरंयस्य ॥ स्त्री० ॥ युयादित्वात्तलप : ॥

प्रनिघातनम् । न० प्रनिघातने ।

वधे ॥

प्रपञ्चः । पुं० सञ्चये ॥ विस्तारे । प्रतारणे । विप्रलम्भने ॥ विपर्यासे । विपर्यासो ॥ वैपरीत्यं भ्रमो वा मायेति ख्यातो ॥ संसारे । नामरूपप्रपञ्चे इति सर्वे दृश्यविस्तारे । आकाशादिदेहान्ते जगद्विस्तारे ॥ प्रपंचते । पचिव्यक्तौ करणे । घञ् ॥ अध्यारोपापवादाभ्यां निष्प्रपंचं प्रपंच्यते । अतः प्रपंचो न वास्तवः । यथाहुर्गौडपादाचार्याः । प्रपंचो यदि विद्येत निवर्त्तेत न संशयः । मायामात्रमिदं द्वैतमद्वैतं परमार्थतः । विकल्पो विनिवर्त्तेत कल्पितो यदि केनचित् । उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥ प्रपंचस्य किं कारणं किंस्वरूपमित्यादितर्कणं न कर्त्तव्यं तस्य मायामयत्वादित्याहुराचार्याः यथा ॥ किमिदं किमस्य रूपं कथमिदमभूदमुष्य को हेतुः । इति न कदापि विचिन्त्यं चिन्त्यं मायेति धीमता विश्वम् ॥ दन्तिनि दारुविकारे दारु तिरोभवति सोऽपि तत्रैव । जगति तथा परमात्मा परमात्मन्यपि जगत् तिरोधत्ते ॥ आत्ममये महति पटे विविधजगच्चित्रमात्मना लिखितम् । स्वयमेव केवलमसौ पश्यन् प्रमुदं प्रयाति परमात्मा ॥ तथा चोक्तं योगिनीहृदये । जगच्चित्रं समालिख्य स्वेच्छातूलिकयात्मनि । स्वयमेव समालोक्य प्रीयाति भगवान् शिव इति ॥

प्रपञ्चितम् । त्रि० विस्तारिते ।

प्रपञ्चोपशमः । पुं० आत्मनि ॥ प्रपञ्चस्य उपशमो यस्मिन् ॥ चिन्मात्रममलमद्वयमक्षयमानन्दमनुभवारूढम् । ब्रह्मैवास्ति तदन्यन्न किञ्चिदस्तीति निश्चयो विदुषाम् ॥

प्रपथः । त्रि० शिथिले ॥

प्रपथ्या । स्त्री० हरीतक्याम् ॥ प्रकर्षेण पथ्या ॥

प्रपदम् । न० पादाग्रे ॥ प्रकृष्टं प्रारब्धं प्रगतं वा पदम् । प्रादयो गताद्यर्थे प्रथमयेति समासः ॥

प्रपदनम् । त्रि० प्राप्तिसाधने ॥ प्रपद्यतेऽनेन । पद० । ल्युट् ॥ शरणगमने ॥

प्रपद्यमानः । त्रि० मन्यमाने ॥

प्रपन्नः । त्रि० शरणागते ॥ सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥ प्रपद्यते स्म । पद० । क्तः । आगते ॥ प्राप्ते ॥

प्रपन्नाडः । पुं० एडगजे । चक्रमर्द्दके ॥

प्रपा । स्त्री० पानीयशालिकायाम् ॥ प्रपिबन्त्यस्याम् । पापाने । आतश्चोपसर्गे इत्यङ् ॥

प्रपाठक : । पुं० सामवेदाध्याये ॥

प्रपाणि : । पुं० करस्याग्रोद्देशे । पाणितले ॥

प्रपात : । पुं० अतटे । भृगौ । निरवलम्बनपर्वतपार्श्वे । यस्मात्पतने ऽवस्थानक्रियाविशेषोनास्ति०तस्मिन् । प्रपतन्त्यस्मात् । पत्लृ० । अ-पादाने घञ् ॥ निर्झरे ॥ अम्बवस्कन्दे ॥ कूले० । इतिहेमचन्द्रः पतनप्रदेशे । यत्रपतन्तितत्र ॥ प्रपतत्यस्मिन् ॥

प्रपान : । पुं० अम्लस्योत्तरोष्ठतले ॥

प्रपायी । त्रि० मानकर्त्तरि ॥ रक्षणकर्त्तरि ॥

प्रपावनम् । न० वनान्तरे । कान्तारपथे ॥ त्रि० प्रकर्षेणाशुचिजनके ॥

प्रपितामह : । पुं० पितृपितामहे । पितामहपितरि ॥ विधातरि । ब्रह्मणि ॥ हिरण्यगर्भस्यापिपितरिवासुदेवे ॥ प्रकर्षेणपितामह : । प्रादयइति समास : ॥

प्रपितामही । स्त्री० पितृपितामह्याम् ॥ प्रपितामहपत्न्याम् ॥ खेनभश्चांसदश्चाद्यमानाभुङ्क्तेस्वधामयम् ॥ पितामहीघर्तु नैवत्ते नैवप्रपितामही ॥ प्रकर्षेणपितामही ॥

प्रपित्सु : । त्रि० प्राप्तुमिच्छौ ॥ पततेः सन्नन्तादुः प्रत्ययः । । सनिमीमेत्यादिना०इसादेशः

अभ्यासलोपोऽभ्यासस्य त्यभ्यासलोपः

प्रपुन्नाट : । पुं० चक्रमर्दे ॥

प्रपुंनाड : । पुं० एडगजे । पद्माटे द्विपत्रजातंप्रपुन्नाडशाकं सुखेदितं पिच्छितवातदकृत् । ससैन्धवं दाडिम्बयासुस्निग्धं विमर्द्यसैन्यं कृथितं हिंगुपाच्यम् ॥ प्रपुंनाडोलघु : स्वादु र्वातश्लेष्महर : पर : । तिक्त : कफापह : श्वासकासकुष्ठकृमीन्हरेत् ॥ पुमांसंनाडयति । नडभ्रंशे । चु० । कर्म्मण्यण् । मस्याशुस्यापरसवर्णप्रकर्ष : प्रगतोवापुन्नाड :

प्रपूरिका । स्त्री० कण्टकार्याम् ॥

प्रपूरित : । त्रि० दग्धे । पूरिते ॥

प्रपौण्डरीकम् । न० पुण्ड्रये । हस्तिनामनुष्याणाञ्चचक्षुष्ये क्षुद्रविटपे । शालपर्णीपत्रतुल्यच्छदे । चक्षुर्ष्ये पुण्डरिया इति गौ० भा० प्र० । ख्यातपत्रांतिप्र० ॥ पुण्डरीकियसदृशम् । शैवे० इत्यण् । प्रकृष्टंपौण्डरीकम् । यद्वान्वर्थेऽण् ॥

प्रपौत्र : । पुं० पुत्रस्यपौत्रे । पौत्रस्य पुत्रे । प्रतिनप्तरि ॥

प्रपौत्री । स्त्री० पौत्रस्यपुत्र्याम् ॥

प्रफुल्ल: । त्रि० उत्फुल्ले । समफुल्ले । फुल्लोविकसिते ॥ फलति । निफला० । जीत:क्त : । आदितश्चेतीडभाव : । निपात्यतम् । अनुपसर्गात्फुल्लक्षीबकृशोल्लाघा : । प्रादिस

मासः ॥ प्रफुल्लसिता । फुल्लविक सने । प० अच् ॥

प्रबन्धः । पुं॰ सन्दर्भे रचनायाम् । काव्यादिग्रथने ॥ पूर्वापरसङ्गतौ ॥ प्रवाहे ॥ प्रकृष्टोबन्धः

प्रबन्धकल्पना । स्त्री॰ कथायाम् ॥ प्रबन्धे भकल्पना ॥ प्रबन्धस्याभिधेयकल्पनास्त्वयंरचनाया ॥ प्रबन्धकल्पनास्तोकसत्याप्राज्ञाः कथांविदुः । परस्पराश्रयायाख्यात्सामता ख्यायिकाक्वचित् ॥ इतिकोशाव्याख्यायां ॥

प्रबल: । पुं॰ पल्लवे ॥ त्रि॰ प्रकृष्टबलसंयुक्ते ॥ प्रकृष्टंबलमस्य न॰ प्रकृष्टबले ॥

प्रबला । स्त्री॰ प्रसारिण्याम् प्रकृष्टंबलमस्याः वाऽसौवा ॥ प्रकृष्टबलयुक्तायाम् ॥

प्रवाल: । पुं॰ न॰ अभिनवपल्लवे । किसलये ॥ वीणादण्डे । अङ्कारत्नमणौ । विद्रुमे । लतामणौ । रक्तावर्त्तुलाकाररत्नवि॰ । मूंगा॰ दू॰ भा॰ ॥ तस्यशुभाऽशुभलक्षणं यथा । शुद्धघनंदृढंवृत्तं स्निग्धंगात्रसुरक्तकम् । समंगुरुसिराहीनंप्रवालंधारयेच्छुभम् । गौरंरक्तजलाक्रान्तंवक्रं सूक्ष्मंसकोटरम् । रूक्षकृष्णंलघुश्वेतंप्रवालमशुभंत्यजेत् ॥ विशेषो युक्तिकल्पतरोरनुसन्धेयः ॥ प्रकर्षेणावल्यतेसंनियते । बलसंवरणे । घञ् ॥ यद्वा । प्रवलति । बलप्राणने । ज्वलतीतिण: ॥ यद्वा॰ प्रा- न्तात्प्रवाद्वाच् ॥ जीवशाके ॥

प्रवालक: । पुं॰ जीवशाके जीवन्ते ॥

प्रवालफलम् । न॰ रक्तचन्दने ॥

प्रवाहिका । अ॰ समकाले ॥ जार्यार्थे ॥

प्रवाहु: । पुं॰ ऊर्ध्वंरस्याधोभागे ॥

प्रवाहुकम् । अ॰ समकाले ॥ ऊर्ध्वे प्रवाहुकंगृह्णीयात् ॥

प्रबुद्ध: । त्रि॰ निद्रोत्थिते । प्रफुल्ले । विकसिते । ऊहापोहकुशले । पण्डिते ॥ आत्मबोधयुक्ते । नि:सन्देहापरोक्षज्ञानिनि ॥ प्रकर्षेण॰ अस आवरणादिरहितत्वेनबुद्ध: ॥

प्रबोध: । पुं॰ विनिद्रत्वे ॥ ज्ञाने ॥ यथार्थज्ञाने ॥ चैतन्यप्रधाने । ब्रह्माकाराख्य : करणस्यउपहितपदाहत चैतन्ये ॥ प्रकृष्टोबोध: ॥

प्रबोधनम् । न॰ अनुबोधे । गतगन्धस्यप्रयत्नेनोद्बोधने ॥ यथाकस्तूरिका दिर्गन्धादिनाप्रबुधि : । बुध अवगमने । भावेल्युट् ॥ विबोधने ॥

प्रबोधनी । स्त्री॰ दुरालभायाम् । कार्त्तिकशुक्लैकादश्याम् । देवउठनी॰ दू॰ भा॰ ॥

प्रबोधित: । त्रि॰ सञ्जातप्रबोधे ॥ प्रकर्षेणज्ञापिते ॥

प्रबोधिता । स्त्री॰ अतिजगतिप्रभेदे

प्रपाठकः । पुं॰ सामवेदाध्याये ॥

प्रपाणिः । पुं॰ करस्याधोदेशे । पाणितले ॥

प्रपातः । पुं॰ अतटे । भृगौ । निरवलम्बनपर्वतपार्श्वे । यस्मात्पतनेऽवस्थानक्रियाविशेषोनास्ति॰ तस्मिन् । प्रपतन्त्यस्मात् । पत्लृ॰ । अ-कर्त्तरीतिघञ् ॥ निर्झरे ॥ अभ्यवस्कन्दे ॥ कूले॰ । इतिहेमचन्द्रः पतनप्रदेशे । यत्रपततितत्र ॥ प्रपतत्यस्मिन् ॥

प्रपानः । पुं॰ अम्ललोणरोहतको ॥

प्रपायी । त्रि॰ पानकर्त्तरि । रसपानकर्त्तरि ॥

प्रपावनम् । न॰ वनान्तरे । कामारण्ये ॥ त्रि॰ प्रकर्षेणाशुचिजनके ॥

प्रपितामहः । पुं॰ पितृपितामहे । पितामहपितरि ॥ विधातरि । ब्रह्मणि ॥ हिरण्यगर्भस्यापिपितरिवासुदेवे ॥ प्रकर्षेणपितामहः । प्रादयइति समासः ॥

प्रपितामही । स्त्री॰ पितृपितामह्याम् ॥ प्रपितामहपत्न्याम् ॥ स्वेनभर्त्तासहश्राद्धं माताभुङ्क्ते स्वधामयम् ॥ पितामहीचस्वेनैवस्वेनैवप्रपितामही ॥ प्रकर्षेणपितामही ॥

प्रपित्सुः । त्रि॰ प्राप्तुमिच्छौ ॥ पततेः सन्नन्तादुः प्रत्ययः । । सनिमीमेत्यादिना॰ इसादेशः । अत्रलोपोऽभ्यासस्येत्यभ्यासलोपः

प्रपुन्नाटः । पुं॰ चक्रमर्दे ॥

प्रपुंनाडः । पुं॰ एडगजे । चक्रमर्दे ॥ द्विपचलात्प्रपुन्नाडशाकं सुखेदितं पिण्डितवाढवाढं । ससैन्धवंराजिकायासुदिग्धं विमर्थसैन्यंखादितं हिपाच्यम् । प्रपुंनाडोलघुःस्वादुर्वातश्लेष्महरः परः । तिक्तःस्फोटक्रमिकासश्वासकुष्ठक्रमीन्जयेत् ॥ पुमांसंनाडयति । नडभ्रंशे । चु॰ । कर्म्मण्यण् । मस्यानुस्वारपरसवर्णौप्रकृष्टः प्रगतोवापुन्नाडः ॥

प्रपूरिका । स्त्री॰ कण्टकार्याम् ॥

प्रपूरितः । त्रि॰ दग्धे । पूरिते ॥

प्रपौण्डरीकम् । न॰ पुण्डर्ये । हस्तिनामनुष्याणाञ्चचक्षुष्ये क्षुद्रविटपे । शालपर्णीपत्रतुल्यच्छदे । चक्षुष्ये पुण्डरिया इति गौ॰ भा॰ प्र॰ । स्थलपद्मेति प्र॰ ॥ पुण्डरीकेणसदृशम् । शैषि॰ इत्यण् । प्रकृष्टंपौण्डरीकम् । वह्वार्थेऽण् ॥

प्रपौत्रः । पुं॰ पुत्रस्यपौत्रे । पौत्रस्यपुत्रे । प्रतिनप्तरि ॥

प्रपौत्री । स्त्री॰ पौत्रस्यपुत्र्याम् ॥

प्रफुल्लः । त्रि॰ उत्फुल्ले । सम्फुल्ले । फुल्लोविकसिते ॥ फलति । निफला॰ । जीतःक्तः । आदितश्चेतीडभावः । तिचोल्लत्वम् । अनुसर्गात्फुल्लक्षीवेतिनिपातसल्लः । प्रादिस

मास : ॥ प्रफुल्लिता । फुल्लविकसने । प० घञ् ॥

प्रबन्ध : । पुं० सन्दर्भे रचनायाम् ॥ काव्यादिग्रथने ॥ पूर्वापरसङ्गतौ ॥ प्रवाहे ॥ प्रकृष्टोबन्ध :

प्रबन्धकल्पना । स्त्री० कथायाम् ॥ प्रबन्धेनकल्पना ॥ प्रबन्धस्यअभिधेयकल्पनास्वयंरचनाया ॥ प्रबन्धकल्पनांस्तोकसत्यांप्राज्ञा : कथांविदुः । परस्पराश्रयायास्यात्सामता स्यायिषाक्वचित् ॥ इतिकोलाहलाचार्य : ॥

प्रबल : । पुं० पल्लवे ॥ त्रि०प्रकृष्टबल संयुते ॥ प्रकृष्टंबलमस्य न० प्रकृष्टबले ॥

प्रबला । स्त्री० प्रसारिण्याम् प्रकृष्टंबलमस्या : षस्यांवा ॥ प्रकृष्टबलयुक्तायाम् ॥

प्रवाल : । पुं० न० अभिनवपल्लवे , किसलये ॥ वीणादण्डे , अङ्गारकमणौ । विद्रुमे । लतासमौ । रक्तपर्वबर्तुलाकाररत्नवि० । मूंगा० इ० भा० ॥ तत्रशुभाऽशुभलक्षणं यथा । शुक्लपक्वंदत्तंचस्निग्धंगात्रसुरक्तकम् । ससंगुरूसिराहीनप्रवालधारयेच्छुभम् ॥ गौरंरक्तजलाक्रान्तंवक्रंसूक्ष्मंसकोटरम् । रूक्षकृष्णंलघुश्वेतंप्रवालमशुभंत्यजेत् ॥ विशेषोयुक्तिकल्पतरौरत्नपरीक्षा : ॥ प्रक-

र्षेणवल्यतेसंक्रियते । बलसंवरणे । घञ् ॥ यद्वा । प्रवलति । वलप्राणने । ज्वलतीतिवा : ॥ यद्वा० ग्रहात्प्रचाद्याच् ॥ जीवशाके ॥

प्रवालक : । पुं० जीवशाके जीवन्ते ॥

प्रवालफलम् । न० रक्तचन्दने ॥

प्रवाहिका । स्त्री० समकाले ॥ जर्द्धर्षे ॥

प्रबाहु : । पुं० पूर्णरस्याधोभागे ॥

प्रबाहुकम् । अ० समकाले ॥ जर्द्धर्षे प्रबाहुकंगृहीयात् ॥

प्रबुद्ध : । त्रि० निद्रोत्थिते ॥ प्रफुल्ले । विकसिते ॥ अमावोधकुशले । पण्डिते ॥ आत्मबोधयुक्ते । नि : सन्देहावरोधज्ञानिनि ॥ प्रकर्षेण० घस भावनादिरहितत्वेनबुद्ध : ॥

प्रबोध : । पुं० विनिद्रत्वे ॥ ज्ञाने ॥ यथार्थज्ञाने ॥ चैतन्यप्रधाने । ब्रह्माकारा : कारणस्य परिणामनाश्रत चैतन्ये ॥ प्रकृष्टोबोध : ॥

प्रबोधनम् । न० अनुबोधे । गतगन्धस्यप्रयत्नेनोद्दोधने ॥ यथाकस्तूरिकादेर्मद्यादिनाप्रवृत्ति : । बुधअवगमने । णिच् ल्युट् ॥ विबोधने ॥

प्रबोधनी । स्त्री० दुरालभायाम् । कार्त्तिकशुक्लैकादश्याम् । देवउठनी० इ० भा० ॥

प्रबोधित : । त्रि० सञ्जातप्रबोधे ॥ प्रकर्षेणज्ञापिते ॥

प्रबोधिता । स्त्री० अतिजगतिप्रभेदे

॥ यथा । सजसाजगौचभवतिप्रबोधिता ॥ यथा शयितामृषाचटुलमाननिद्रया॰रतिकेलिकुञ्जनिलयेविलासिनी । मुरवैरिणावदनचुम्बनास्मितमाततालसपदिप्रबोधिता ॥

प्रबोधिनी । स्त्री॰ उत्थानैकादश्याम् । प्रबोधन्याम् ॥

प्रभञ्जण : । त्रि॰ असत्त्वयशीले । ख्यातिख्याते ॥

प्रभञ्जन : । पुं॰ वायौ ॥ प्रकृष्टंभनक्ति । भञ्जीयामर्द्दने । युच् ॥

प्रभद्र : । पुं॰ निम्बे ॥ त्रि॰ श्रेष्ठे ॥

प्रभद्रा । स्त्री॰ प्रसारिण्याम् ॥

प्रभव : । पुं॰ जलमूले ॥ जन्महेतौ पित्रादौ । पराक्रमे ॥ ज्ञानस्यादिमस्थाने । प्रथमज्ञानाधिस्थाने ॥ मुनिविशेषे ॥ जन्मनि ॥ उपादाने निमित्ते ॥ प्रभवत्यस्मात् । अकर्त्तरिचकारकेऽपत्यधिकारादपादानार्थे भुवस्तदोरप् ॥ अन्यत : सिद्धस्य प्रथममुपलब्धौ । विष्णौप्रकृष्टोभवो जन्मास्य ॥ यथा । प्रकर्षेणभवन्ति आयन्ते महाभूतान्यस्मात्पूर्वपदम् ॥ गुरोर्मानेनषष्टिवत्सराणामादिमे वत्सरे ॥ तत्फलंयथा । बहुतोया स्तथामेघावहुशस्याचमेदिनी । बहुक्षीरास्तथागावो व्याधिरोगविवर्ज्जिता: ॥ प्रशान्तापार्थिवाश्चैवप्रभवेपरिकीर्त्तिता : ॥ १ ॥ तीर्थविशेषे

प्रभविष्णु : । पुं॰ उत्पत्तिकालेसर्वस्यप्रभवनशीले ॥ प्रभूर्यक्षवतेर्भुवश्चेतिइष्णुच्॰यद्यपिभुवश्चेतिछन्दसि॰इष्णुजिष्यते॰तथा पि॰जगत्प्रभोरप्रभविष्णुवैष्णवमितिलोकेपि प्रयोगदर्शनात् । अत्रनिरङ्कुशा : कवयइतिसमाधानमकारिभट्टोजिदीक्षितेन ॥ प्रभौ ॥ यथा । नभर्त्तानैवचसुतोनपितामातरोनच । यादानेवाविसर्गेवास्त्रीधनेप्रभविष्णव : । स्मृ॰ ॥ त्रि॰ प्रकर्षेणभवनशीले ॥

प्रभा । स्त्री॰ रुचि । त्विषि दीप्तौ । प्रकाशे ॥ तेजसोभार्येयम् यथा । प्रभाचदीक्षाचैवद्वेभार्येतेजस : स्मृते । याभ्यांविनाजगत्स्रष्टुंविधातुञ्चमहीश्वर: वृति ॥ यज्ञार्णवहविर्धानाख्यायाम् ॥ यथाहस्कन्दपुत्र: । याचच्छायाप्रभासैवषड्विधा साप्रकीर्त्तिता । सच्छाकिणधा प्रसन्नाचकान्ता दीप्ताविह्वीपनीति कुवेरपुर्याम् ॥ जगतीछन्द : प्रभेदे । मन्दाकिन्याम् । लक्षणंयथा । स्वरशरविरतिननौरौप्रभेति । य॰ । वलिदमनविधौवभौसङ्गतापद्मजलक्षालितस्यमन्दाकिनी । सुरनिहितसिताम्बुजस्त्रग्विभाहरतुजगदघंसपीताम्बर : ॥ प्रभाति । भादीप्तौ । आतश्चोपसर्गेङ्क : ॥ दुर्गायाम्

॥ सूर्यपत्न्यां ॥ गोपीविशेषे ॥

प्रभाकर : । पुं॰ वह्नौ ॥ सूर्ये प्रभां करोति । दिवाविसेतिटः अर्कहवे ॥ चन्द्रे ॥ समुद्रे ॥ मीमांसैक देशिनि ॥

प्रभाकीट : । पुं॰ खद्योते ॥

प्रभाञ्जन : । पुं॰ शोभाञ्जने ॥ प्रभामनक्ति । अञ्ज॰ । कर्त्तरिल्युट् ॥ बहुलमन्यत्रापीतियुक्त्या ॥

प्रभातम् । न॰ प्रातः काले । दिनादौ । प्रत्यूषे । उषसि ॥ भातुंप्रवृत्तम्‌प्रादिकर्मणिक्तः ॥ वेधाःपुरोहितोमन्त्रीदेवज्ञोथचतुर्थकः । प्रभातकालेद्रष्टव्योनित्यंस्वश्रियमिच्छता ॥

प्रभाव : । पुं॰ शक्तौ ॥ नीतिवेदिनांप्रभावोत्साहमन्त्रजाशुशक्तिषु ॥ कोशदण्डजतेजसि ॥ प्रतापे ॥ महिमनि ॥ भवत्यनेन । भू॰ । श्रिणीभुवोनुपसर्गेइ॰घञ् ॥ भवनंभावः ॥ प्रकृष्टोभावः ॥ प्रभुत्वशक्त्यतिशये ॥

प्रभावान् । त्रि॰ प्रभायुक्ते ॥

प्रभावती । स्त्री॰ मालिकानामकोनर्विंशत्यार्हन्मातरि ॥ गणानांवीणायाम् ॥ छन्दोभेदे ॥ यथा । एतेक्रमात्तभसजसंज्ञया गणागयाम्नौ यदिनिहितोमहीपते । वेदैर्यदैर्भवतियतिश्चशोभनानागाधिपोवदति तदाप्रभावतीम् ॥

प्रभावन : । त्रि॰ सम्पादयितरि ॥ प्रभावयति । कर्त्तरिल्युट ॥ ङीपिप्रभावनी ॥

प्रभावी । त्रि॰ महानुभावे ॥ प्रभावोस्यास्य । इनिः ॥

प्रभाष : । पुं॰ वसुविशेषे ॥

प्रभाषितम् । न॰ वचने ॥ प्रकृष्टंभाषितम् ॥

प्रभास : । सोमतीर्थे ॥ पुष्करेक्षणादेव्याः स्थाने ॥ प्रभासेसोमतीर्थेसौदेवीचपुष्करेक्षणेत्यागमात् ॥ जैनगणाधिपविशेषे ॥

प्रभिन्न : । पुं॰ मत्तहस्तिनि । गर्जिते । मत्ते ॥ त्रि॰ विदीर्णे ॥ प्रस्फुटभेदविशिष्टे ॥ प्रकर्षेणभिद्यतेस्म । भिदिर्॰ क्त : ॥

प्रभु : । पुं॰ ईश्वरे ॥ पारदे ॥ शब्दे ॥ त्रि॰ निग्रहानुग्रहसमर्थे । स्वामिनि । मदीयोयंमितिस्वीकर्त्तरि । अधिभुवि । नायके ॥ नित्ये ॥ शक्ते ॥ प्रभवति । भू॰ । विप्रसम्भ्यड्॰ डु॰ ॥ परमेश्वरे ॥ प्रभवति॰सृष्टिस्थितिसंहारप्रवेशप्रशासनेषु॰ इतिप्रभुः

प्रभुता । स्त्री॰ विभुतायाम् ॥

प्रभुत्वम् । न॰ ऐश्वर्ये ॥ स्वाम्ये ॥

प्रभुभक्त : । पुं॰ उत्तमाश्वे ॥ त्रि॰ स्वामिन्यनुरक्ते ॥ प्रभोर्भक्त : ॥

प्रभुशक्ति : । स्त्री॰ कोशदण्डबले ॥

प्रभो : पत्न्याम् ॥ प्रभोःशक्ति : ॥

प्रभूतम् । त्रि० उद्गते ॥ प्रचुरे । प्राज्ये ॥ पुं० ज्ञानैश्वर्यादिगुणै: संपन्ने भगवति ॥ प्रभवतिस्म । भू० । गत्यर्थेतिक्त : ॥ प्रकृष्टे सुमहाभूतेषु

प्रभूष्णु : । त्रि० शमे । शक्ते ॥

प्रभृति : । अ० तदादीतत : प्रभृति पितर : पितृसंज्ञान्तुलेभिरे ॥ इतिसिध्यादित्वम् ॥

प्रभृति : । पुं० तदादौ ॥

प्रभेद : । पुं० भेदे । प्रकारे । विशेषे । भिदायाम् । अन्तरे ॥ प्रकृष्टोभेद : ॥

प्रभ्रष्टकम् । न० चूडालम्बिमाल्ये । शिखातोलम्बमानमाल्ये ॥ प्रभ्रंशितुंप्रवृत्तम् । आदिकर्मणिक्त : ० वार्तरिच । स्वार्थेकन् ॥

प्रमत्त : । त्रि० अनवहिते । अनवधानतायुक्ते । प्रमादिनि । व्यसनासक्ते ॥ शीलसंरक्षणेनरहिते ॥ यथा । सन्ध्यादूजाविहीनश्चप्रमत्त : पतित : स्मृत : इतिमघराज्ञानात्ता नयितव्योयथा । मत्तोन्मत्तप्रमत्ता. र्त्तभृत्यान्नाज्ञानयेन्नृप : ॥ प्रमाद्यतिस्म । मदी० । गत्यर्थेतिक्त : । नध्याख्येतिनत्वाभाव : ॥

प्रमथ : । पुं० षट्त्रिंशत्कोटिसङ्ख्याके हरपारिषदे ॥ दुष्टान्प्रकर्षेणमथति । मथि० । प० अच् ॥ भूतविशेषे ॥ प्रमथ्यतेमन्त्रादिना । खनोघञ्चेतिव : ॥ घोटके ॥

प्रमथनम् । न० वधे । मारणे ॥ मथहिंसायाम् । ल्युट् ॥

प्रमथनाथ : । पुं० महाभैरवे ॥ प्रमथानांनाथ: ॥ यथा । भवद्भवनदेहलीप्रकटचण्डदण्डाहतस्फुटन्मुकुटकोटिभिर्मघवदादिभिर्भूयते । व्रजामिभवदन्तिकंप्रकृतिमेत्यपैशाचिकीं किमित्यमरसम्पदं प्रमथनाथनाथामहे ॥

प्रमथा । स्त्री० हरीतक्याम् ॥

प्रमथाधिप : । पुं० शिवे ॥ प्रमथानां योगिविशेषगणानामधिप: ॥ ते गणा यथा । षट्त्रिंशत्सहस्राणि प्रमथरहितसत्तमा : । तथैकत्र सहस्राणिभागेषोडशसंस्थिता : ॥ नानारूपधरायेचैजटाचन्द्रार्धमंडिता : । तेसर्वेसकलैश्वर्ययुक्ताध्यानपरायणा : ॥ योगिनोमद्नात्सर्वेदक्षाहङ्कारवर्जिता : । क्षीणपापामहाभागा : शम्भो : प्रीतिकरा : परा : ॥ नतेपरिग्रहंरागंकाङ्क्षन्ति चकदाचन । संसारविमुखा : सर्वेयतयोयोगतत्परा : ॥ ध्यानावस्थमहादेवंपरिवार्यधृतव्रता : । कृत्वा परिषदंकच्यातिष्ठन्तिविगतक्लमा : ॥ यदैवपरमंज्योतिश्चिन्तयत्यम्बिकापति : । तदैवतेपारिषदा : स

न्यायमते॰ तद्वति तत्प्रकारकज्ञाने । भ्रमभिन्नज्ञाने ॥ अस्याः कारणं गुणः । स च प्रत्यक्षे॰ विशेष्यविशेषणयोः सम्बन्धः । अनुमितौ॰ साध्यविशिष्टपक्षे परामर्शः । शाब्दबोधे॰ योग्यतायाः तात्पर्यस्य वा यथार्थज्ञानम् । उपमितौ॰ शक्ये सादृश्यबुद्धिः । यथा । दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् । प्रत्यक्षे तु विशेष्येण विशेषणवता समम् ॥ सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ पुनः । पक्षे साध्यविशिष्टे च परामर्शो गुणो भवेत् ॥ शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः । शाब्दबोधे योग्यतायास्तात्पर्यस्याथवा प्रमा ॥ गुणः स्याद्भ्रमभिन्नन्तु ज्ञानमत्रोच्यते प्रमा । अथवा तत्प्रकारं यज्ज्ञानं स्यात्तद्विशेष्यकम् ॥ इति ॥ प्रमाणमप्रमाणञ्च प्रमाभासस्तथैव च । कुर्वन्त्येव प्रमां यत्र तदसम्भावना कुतः ॥

प्रमाणम् । न॰ नित्ये । शाश्वती ॥ शास्त्रे ॥ सत्यवादिनि ॥ इयत्तायाम् । परिच्छेदे ॥ यथा । कियत्प्रमाणमुदकम् ॥ मर्यादायाम् । अवधौ ॥ यथा । रात्रान्मासप्रमाणं कृत्वा॰ अवधिं कृत्वेत्यर्थः ॥ हेतौ । ज्ञप्तिनिमित्ते ॥ यथा । अग्नौ प्रमाणं धूमः ॥ प्रमातरि ॥ यथा ॥ अत्रार्थे प्रभुः प्रमाणम् ॥ नित्यक्लीवैकवचनान्तोऽयं शब्दः । यथा ॥ वेदाः प्रमाणं स्मृतयः प्रमाणमित्यादि ॥ बहुवचनान्तमपि । यथा । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति ॥ प्रमाकरणे ॥ प्रमातानेनार्थं प्रमिणोतीति तत्प्रमाणम् । प्रमीयतेऽनेनेति निर्वचनात् प्रमां प्रति करणत्वं गम्यते । असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिः बोधश्च पौरुषेयः फलं प्रमा । तत्साधनं प्रमाणमिति । एतेन॰ संशयविपर्ययस्मृतिसाधनेष्वप्रसङ्गः ॥ ॥ प्रत्यक्षानुमानशाब्दोपमानार्थापत्त्यभावाख्यानि॰ षट् प्रमाणानीति वैदिकाः । प्रत्यक्षानुमानागमाः प्रमाणानि त्रीणीति योगाः । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति नैयायिकाः । अत्र तद्वति तत् प्रकारकत्वरूपप्रकर्षविशिष्टज्ञानं॰ प्रशब्दविशिष्टेन माधातुना प्रत्याय्यते॰ तत्करणत्वं प्रमाणत्वम् । ज्ञानञ्चात्रानुभवो विवक्षितः । तेन स्मृतिकारणेऽनातिव्याप्तिः । लक्षितानां प्रमाणानां विभागः प्रत्यक्षानुमानोपमानशब्दा इति॰ विभागश्चोद्देश एवान्तर्भूतत्वादविशेषोद्देशः । प्रत्यक्षं कालसर्वानुग्रथाख्याने दृष्टम् । एवञ्चान्तर्भावबहिर्भावाभ्यां सङ्कोच

न्यायमते॰तद्वतितत्प्रकारकज्ञाने
। भ्रमभिन्नज्ञाने ॥ अस्याः कार
णं गुणः। सचप्रत्यक्षे॰ विशेष्ये
विशेषणस्यसम्बन्धः। अनुमितौ॰
साध्यविशिष्टपक्षेपरामर्शः। शाब्द
बोधे॰योग्यतायाःतात्पर्यस्ययथा
र्थज्ञानम्। उपमितौ॰ शक्येसादृ
श्यबुद्धिः। यथा। दोषोऽप्रमाया
जनकःप्रमायास्तुगुणोभवेत्। प्रत्य
क्षेतुविशेष्येणविशेषणवतासमम्-
॥ सन्निकर्षोगुणस्तुस्यादथत्वनुमि
तौपुनः। पक्षेसाध्यविशिष्टेचपरा
मर्शोगुणोभवेत् ॥ शक्येसादृश्य
बुद्धिस्तुभवेदुपमितौगुणः। शाब्द
बोधेयोग्यतायास्तात्पर्यस्ययथाप्र
मा ॥ गुणः स्याद्भ्रमभिन्नबुद्धि-
त्वमुच्यते प्रमा [illegible] दात्मनि ॥ लौकिक-
वैदिकव्यवहारेष्वभ्रान्तेजीवे ॥ प्र-
मातैर्यथार्थंप्रमिमीते॰सचचेतनोऽभि
धीयते ॥ प्रकृष्टोमाताः ॥ प्रमाता
रम् विनाशास्त्रंकस्यार्थावबोधकृ
त्। प्रमातापिविनाशास्त्रंकेनार्थम
वबुध्यते ॥ स्मृतिनिश्चयसन्देहराग
द्वेषादिवृत्तिषु। अहंरूपेणयोऽन्वेति
सप्रमातात्वनिश्चित् ॥ वृत्तिमद
न्तःकरणावच्छिन्नाचित्प्रमातेति
॥ स्मरास्यहंनिश्चिनोमिसंशयेराग
वानिति। अहंरूपान्वयःस्पष्टः
कर्त्ताभोक्ताप्यसौभवेत् ॥ प्रकृष्टो



यथा ॥ अनार्थिप्रभुः प्रमाणम् ॥
नित्यक्लीबैकत्ववाचकशब्दः। य
था ॥ वेदाः प्रमाणंस्मृतयः प्रमा
णमित्यादि ॥ बहुवचनान्तमपि।
यथा। प्रत्यक्षानुमानोपमानशब्दाः
प्रमाणानीति ॥ प्रमाकरणे ॥ प्रमा
तायेनार्थंप्रमिणोतितत्प्रमाणम्।
प्रमीयतेऽनेनेतिनिर्वचनात्प्रमांप्र
तिकरणत्वंगम्यते। असन्दिग्धा
विपरीतानधिगतविषयाचित्तवृत्ति
र्बोधश्चपौरुषेयफलंप्रमा॰तत्साध
नंप्रमाणमिति। एतेन॰संशयवि
पर्ययस्मृतिसाधनेष्वप्रसङ्गः ॥ ४ ॥
प्रत्यक्षानुमानशास्त्रोपमानार्थापत्त्य
भावाख्येषु च अविमृष्टकृत्ये। अनव
धानतायाम्। यथा॰ समाधिसाध
नानुष्ठानसामर्थ्येऽपि अनुष्ठानशील
तां॰विषयान्तरव्यापृततयायोगसा
धनेष्वौदासीन्यमितियावत् ॥ वस्तु
विवेकासामर्थ्ये ॥ चित्तविक्षेपे ॥
सत्त्वकार्यप्रकाशविरोधिनि। तत्का
लकर्त्तव्यत्वेनप्राप्तस्यार्थस्यानुसन्धा
नाभावे। पूर्वैःकर्त्तव्यतयानिश्चिते
ष्वकर्त्तव्यताबुद्धौ ॥ मदोद्वेगे। भा
वेघञ्। प्रकृष्टोमादः ॥ स्वाभावि
कज्ञानाभावात्प्रच्युतौ ॥

प्रमादवान्। त्रि॰ जाड्ये। प्रमादयु
क्ते। प्रमादोऽस्त्यस्मिन्वा। मतु
प् ॥

त्रिकाणौद्रव्यौ ॥ † ॥ प्रमितिसा
धने ॥ श्रुतिलिङ्गवाक्यप्रकरणस्थान
समाख्याश्च॰प्रमाणानि । श्रुतिर्द्वि
तीयाक्षमताचलिङ्गं वाक्यं पदान्ये व
तुसंहतानि । साप्रक्रियावाक्यमित्य
पिचास्थानंक्रमोयोगबलंसमाख्या ॥
लक्षणायाम् ॥ बोधके ॥ बाधकत्वानर
हितमगृहीतग्राहिज्ञानंप्रमाणम् ॥
आयामस्तुप्रमाणंस्यादितिवाणिका
यैतु॰आयामोदैर्घ्यम् सयेनमीयते
तत्प्रमाणम् । तच्चकचित्तिर्यगव
स्थितस्यवस्तुन : । यथा । वस्त्रादे
र्हस्तादि : । क्वचिदूर्ध्वाधरदिगवस्थि
तस्य । हास्तिनमुदकम्॰ ऊरुद्वय-
मुपिवेचस्तथा ... प्रमीयते॰प्रमि
ता : ॥ अपिच । प्रमादिनोवर्णिय
त्ता : पिशुना : कालकौलुका : ।
संन्यासिनोपिदृश्यन्ते दैवसन्दूषि-
तामया : ॥

प्रमापक : । त्रि॰ प्रमाजनके ।

प्रमापणम् । न॰ निबर्हणे । मारणे ।
वधे ॥ णीञ् हि सायाम् । स्वार्थेण्य
त : । भावेल्युट् ॥

प्रमायुक : । त्रि॰ प्रमरणशीले ॥

प्रमित : । त्रि॰ ज्ञाते ॥ मापमाने ।
चादिक्षम्यं पिशा: कत्त रिचेतिक्त: ।
। यतिस्यतीतीत्वम् ॥

प्रमिताक्षरा । स्त्री॰ जगतीछन्दोभेदे ।
य॰ । प्रमिताक्षराएजससै : कथि

तपिचन्तोऽखिलानिमानानि । वा
क्यंतन्निगमानांमानंतस्थाद्यतीन्द्रि
यावगतौ ॥ मानंप्रबोधयन्तं बोधंमा
नेनयेबुभुत्सन्ते । एधोभिरेवदहनंत
यं वाञ्छन्तितेमहात्मान : ॥ येहो-
ऽनादिरमुष्यव्यञ्जकर्वेश : स्वयंप्रका
शात्मा । तदभिव्यक्तिमुदीक्ष्यप्रोक्तो
सौसूरिभि : प्रमाणमिति ॥ रूपा
णामवलोकेचक्षुरिवान्धतमसे दृष्ट
। तद्वद्द्रष्टावगतौ वेदघटन्योनवेद
कोवेत्तु : ॥ निगमेषुनिश्चितार्थंतन्त्रं
कथिदादिप्रकाशयति । तदिदमनु
वादमात्रप्रामाण्यंतस्यसिद्धमितिनकि
श्चित् ॥ अनुभूतौप्रमाणानांपरिनि
ष्ठासमाप्यते । ततस्तयैवयात्तमि :
... प्रमान्तरै : ॥
णे । गुरौच ... तर्कलि...

प्रमुख : । पुं॰ पुन्नागवृक्षे ॥ न॰ तदा
त्वे । तत्काले ॥ त्रि॰प्रथमे ॥ श्रे-
ष्ठे । मुख्ये ॥ प्रकृष्टंमुखमस्य ॥

प्रमुखत : । अ॰ सम्मुखे ॥

प्रमुद॰त् । त्रि॰ हृष्टे । आनन्दे ॥ य
था । आत्मन्येवमहत्तिपटे विविधल
गच्चित्रमात्मनालिखितम् । स्वयमे-
वकेवलमसौपश्यन्प्रमुदंप्रयातिपर
मात्मा ॥

प्रमुदित : । त्रि॰ हृष्टे ॥ प्रमोदतेस्म ।
मुदहर्षे । क्त : ॥

प्रमृतम् । न॰ कर्षणाद्यवृत्तौ ॥ प्रम

संस्पर्शं स्पृशतमितिमनुः । कार्ष-
पाश्वभूमिगतप्रचुरप्राणिमरणनिमि-
त्तत्वात्तद्धेतुः खफलकम् ॥ त्रि० प्र-
कर्षेणाकृष्टे ॥

प्रमृष्टः । त्रि० व्यामृष्टे ॥

प्रमेयः । त्रि० प्रमाविषये । प्रत्यक्षा-
दिप्रमाणैः परिच्छेद्ये ॥ यत्प्रमी-
यते तत्प्रमेयम् । यथाजीवब्रह्मैक्यम्
शुद्धचैतन्यं वेदान्तानांप्रमेयम् । आ
त्मशरीरेन्द्रियार्थबुद्धिमनः प्रवृत्ति-
दोषप्रेत्यभावफलदुःखापवर्गास्तु
प्रमेयम् ॥ इ० गोतमसूत्रम् । ९ ॥
प्रकृष्टंमेयम् ॥ प्रमीयते । माङ्०
। कर्मणियत् । ईद्यति । गुणः ॥ प्र-
मातुंयोग्योऽसौ ॥ प्रमाणाधीनाप्रमे
यसिद्धिः ॥ प्रमाणात्प्रमाणस्यप्रमे
योनिश्चितिस्तथा । यस्मान्निभ्यात्प्र
सिध्यन्तीतरत्सिद्धौकिमपेक्ष्यते ॥

प्रमेयत्वम् । न० ज्ञातत्वे । प्रमावि
षयत्वे ॥ भावे ० त्व ॥

प्रमेहः । पुं० शुक्रघटितरोगविशेषे ।
मूत्रदोषे । मेहे ॥ प्रकृष्टोमेहः ॥
अस्यनिदानम् । आस्यासुखं स्वप्नसु-
खं दधीनिग्राम्यौदकानूपरसाः प
यांसि । नवान्नपानं गुडवैकृतञ्च प्र
मेहहेतुः कफकृच्चसर्वम् ॥

प्रमोक्षः । पुं० मोचने ॥ प्रकर्षेणमु
च्यते । मुच्छ० । कर्मणिघञ् ॥

प्रमोचनः । त्रि० प्रमोचने ॥ प्रकृष्ट
मोचनकर्तरि ॥

प्रमोचनी । स्त्री० गवाक्ष्याम् । गोडु
म्बायाम् ॥

प्रमोदः । पुं० हर्षे ॥ मुद० । घञ् ।
प्रकृष्टोमोदः ॥ सक्षारवि० । उन्म
त्तसजगत्सर्वंधनधान्यसमाकुलम् ।
नित्योत्सवः प्रजाहृष्टाः प्रमोदेना
यतेप्रिये ॥ ४ ॥

प्रमोदनः । पुं० विष्णौ ॥ प्रमोदतीह
प्यतिस्वरूपानन्दानुभवात्० । मुद०
। अनुदात्तेतश्चहलादेरितियुच् ॥
ध्यायिनोयोगिनः प्रमोदयतीतिवा
सि । मुदेःप्रपूर्वात्णिजन्तात्कर्त
रिल्युट्० पौषादिकोयुजा ॥

प्रमोदितः । पुं० कुबेरे ॥ मुद० । क्त.
उदुपधाद्वेतिवाकित् ॥ त्रि० प्रमो
दयुक्ते ॥

प्रमोदी । त्रि० प्रकृष्टहर्षयुक्ते ॥

प्रमोदिनी । स्त्री० जिङ्गिनीवृक्षे ॥

प्रम्लोचा । स्त्री० अप्सरोविशेषे ॥

प्रयन् । त्रि० गच्छति ॥ प्रैति । इणः
शतरि० यणादेशः ॥

प्रयतः । त्रि० पवित्रे ॥ अहिंसारते ॥
प्रयच्छतिस्म । यम० । अकर्मकात्ता
नुकर्तरिक्तः । मलोपः ॥ यद्वा । प्र-
यतते । यतीप्रयत्ने । अच् ॥

प्रयतनम् । न० साधने ॥ प्रपूर्वाद्यतते
र्नपुंसकेभावेल्युट् ॥

प्रयतात्मा । त्रि० शुद्धबुद्धौ ॥ प्रयतआ

कचटतपगजडदबङञणनमाः॰ तद्य मा : यरलवा :॰ स्वरा: २८ एषा मल्पप्राणा: । खछठथफघझढधभा: एतद्यमा : शषसहा : ॰ अनुस्वार विसर्ग ≍क≍पाः २८ एषांमहाप्रा णा: । अइउऋलृएऐओऔ ६ एषामु दात्तानुदात्तस्वरिताः ॰ विवारसंवा रादयस्तु॰ वर्णोत्पत्तेः पश्चान्मू र्द्धि प्रतिहते निवृत्ते प्राणाख्ये वायौ तु त्पद्यन्ते ॰ इतिवाच्याइत्युच्यन्ते । गलबिलस्यसङ्कोचात्संवार : । तस्यैवविकाशाद्विवार : । एतौ चसंवृतविवृतरूपाभ्यन्तराभ्यांभिन्ना वेव । तयो : समीपदूरावस्थाना मकत्वाद्विषयभेदम् ॥

प्रयत्नवान् । त्रि॰ प्रतियत्ने । प्रकृष्ट यत्नविशिष्टे ॥ प्रयत्नोऽस्यास्ति । म तुप् ॥

प्रयस्त : । त्रि॰ सुसंस्कृते । घृतचतु र्जातादिद्रव्यान्तरेणप्रयत्नात्संस्कृते पक्वव्यञ्जनादौ प्रयस्यतेस्म । यसुप्र यत्ने । कर्म्मणिक्त : ॥

प्रयाग : । पुं॰ तीर्थविशेषे । भा स्करक्षेत्रे । अत्रमुण्डनंकर्त्तव्यम् । मुण्डनञ्चोपवासश्चसर्वतीर्थेष्वयंवि धि : । वर्ज्जयित्वागयांगङ्गांविशा लांविरजांतथा ॥ प्रयागेतीर्थयात्रा यांपितृमातृवियोगत : । कचानां वपनंकुर्याद्वृथानविकचोभवेत् ॥ गङ्गायांभास्करक्षेत्रे मातापित्रोर्गु रोर्मृतौ । आधानेसोमपानेचवपनं सप्तसुस्मृतमितिस्मृतिसमुच्चय- लिखितवचनं प्रयागावच्छिन्नगङ्गाय विधायकम् । गङ्गायांभास्करक्षेत्रेमु ण्डनंयोनकारयेत् । सकोटिकुल संयुक्तआकल्पंरौरवेवसेत् ॥ यज्ञे ॥ शतमखे । शक्रे ॥ अश्वे ॥

प्रयागभव : । पुं॰ इन्द्रे ॥

प्रयाज : । पुं॰ यज्ञाङ्गे ॥ दशप्रया जा : । यजेर्घञ्॰ प्रयाजानुयाजौ यज्ञाङ्गइतिकुत्वाभावोनिपात्यते ॥

प्रयाणम् । न॰ प्रस्थाने । गमने ॥ प्रपूर्वायातेर्ल्युट् ॥ उद्घाटितेन ववारेपञ्जरेविहगोऽनिल : । यत्ति ष्ठतितदाश्चर्यंप्रयाणेविस्मय : कु त : ॥

प्रयाणकाल : । पुं॰ अन्तसमये ॥ मौहूर्त्तिकाविदितेगमनसमये ॥ प्रयाणसमकाल : ॥

प्रयान् । त्रि॰ धावति ॥ यातेर्लट : शत्रादेश : ॥

प्रयात : । पुं॰ सौप्तिके । रात्रियुद्धे ॥ भृगौ ॥ न॰ गमने ॥ त्रि॰ गतेऽस्थिते । गया॰ इ॰ आ॰ ॥ प्रकर्षेणयात : ॥ याते : कर्मणि क्तोवा ॥

प्रयाम : । पुं॰ नीवाके । महर्घ्यार्हेतौ धान्यसंचये ॥ क्रयाहृते ॥ प्रयम

घम् । यमेर्घञ् ॥
प्रवासः । पुं० आयासी । क्रमे । श्रमे ॥ यसनम् । यसुप्रयत्ने । घञ् । पू क्लेशोयासः ॥
प्रयुक्तः । त्रि० प्रे रिते ॥ नियोजिते ॥ व्यापृयोगे ॥ युज्यतेस्म । युजिर्० । क्तः ।। प्रकर्षेणयुक्ते ॥ य० । युक्त प्रयुक्ताः परमर्मभेदिनः शराश्च्युता वं शमभवाभवन्निह । तथाविधाये नुविशुद्धवंशजा प्रजन्तितया प्रयुक्तव तेऽतिमन्त्रताम् ॥ प्रकर्षेणार्मणि ते ॥
प्रयुक्तिः । स्त्री० प्रयोजने ॥ प्रकृष्ट युक्तौ ॥
प्रयुतम् । न० नियुते । दशलचे ॥ १०००००० ॥
प्रयोक्ता । त्रि० उत्तमर्णे ॥ प्रवर्त्त के ॥ अनुष्ठातरि ॥ महाकवीत्र्विर्ति ग्रन्थित : प्रयोक्ते तिरघुः ॥
प्रयोगः । पुं० कार्मणे ॥ प्रयुक्तौ ॥ निदर्शने ॥ वशीकृती ॥ अश्वे ॥ अनुष्ठाने ॥ प्रकृष्टोयोगः ॥ शब्दे ॥ प्रयुज्यते प्रयोजनया ॥ युजिर्० घञ् ॥
प्रयोगविधिः । पुं० प्रयोगप्राशुभाव बोधकेविधौ ॥ सचाङ्गवाक्यैकवा क्यतापन्नः प्रधानविधिरेव । सहि साङ्गं प्रधानमनुष्ठापयन् विलम्बे प्रमाणाभावादविलम्बापरपर्यायप्र

प्रयोगप्राशुभावं विधत्ते । यथा० वेदं कृत्वावेदींकरोतीत्यादि । नचतद्वि लम्बे विधिमात्रबाधवद्दतिवाच्यम् । विलम्बे ह्यङ्गप्रधानविध्येकवाक्यता वगततत्साहित्यानुपपत्तिः । वि लम्बे नक्रियमाणयोः पदार्थयोरि दमनेनसहकृतमितिसाहित्यव्यवहा राभावात् । तथाविधाथौनियतं क्रमवाधीयमाणेभवति । अन्यथाहि किमेतदनन्तरमेतत्कर्त्तव्यम्० एत दनन्तरंवेतिप्रयोगविधेपापत्तेः । ध्वं सः प्रयोगविधिरेवाङ्गविषयप्रयोग प्राशुभावसिद्ध्यर्थंनियतंक्रममपिप दार्थविशेषपयतयाविधत्ते । अतएवा ङ्गानांक्रमबोधकोविधिः प्रयोगवि धिरित्यपिलक्षणम् । तत्रक्रमोनाम विततिविशेषः पौर्वापर्यरूपोवा । तत्रश्रुत्यर्थपाठादीनिषट्प्रमाणानि भवन्ति ॥
प्रयोगार्थः । पुं० प्रत्युत्क्रमे । प्रधान प्रयोगानुकूलेप्रयोजनानुष्ठाने ॥ प्र योजनम् । युजिर्० । घञ् । प्रयो गोर्थोऽस्य ॥ प्रयोगस्येति ॥
प्रयोगी । त्रि० प्रयोगवति ॥ प्रयोगोऽ स्यस्य । अतइनिठनौ ॥ प्रयोक्तरि । ऋत्विजि ॥
प्रयोग्यः । त्रि० अश्वादौ ॥ प्रयुज्यते । युजिर्० । ऋहलोर्ण्यत् ॥
प्रयोजकः । त्रि० प्रयोगकर्त्तरि । नि

योगकर्त्तरि । यः कर्त्तारंकारयति तस्मिन् ॥ प्रेरके । कर्त्तुर्व्यापारानुकूलव्यापारवति ॥ प्रयोजयति । युज्० । ण्वुल् ॥

प्रयोजनम् । न० कार्य्ये ॥ हेतौ ॥ सर्वस्यैवहिशास्त्रस्यकर्मणोवापिकस्यचित् । यावत्प्रयोजनंनोक्तंतावत्तत्केनगृह्यते ॥ सिद्धार्थंसिद्धसम्बन्धंश्रोतुंश्रोताप्रवर्त्तते । ग्रन्थादौतेनवक्तव्यःसम्बन्धःसप्रयोजनः ॥ फले ॥ यथा । वेदान्तानांप्रत्यग्ब्रह्मणोरैक्यप्रमेयगताज्ञाननिवृत्तिस्तत्स्वरूपानन्दावाप्तिश्चेतिप्रयोजनम् ॥ प्रयोजनमनुद्दिश्यनमन्दोपिप्रवर्त्तते ॥ युजिर्० । ल्युट् ॥ प्रयोजनंलक्षयति गोतम : । यमर्थमधिकृत्यप्रवर्त्ततेतत्प्रयोजनम् ॥ २४ ॥ अधिकृत्य० उद्दिश्य । तथाच० इष्टसिद्धीच्छाविषयत्वंप्रयोजनत्वम् । विषयत्वंसाध्यताख्यविषयताविशेष : ॥ कारणव्युत्पत्त्याप्रयोजके ॥

प्रयोजयिता । त्रि० नियोजयितरि ॥

प्रयोज्य : । त्रि० भृत्ये ॥ प्रयोक्तुंशक्यं ॥ प्रपूर्वाद्युजेर्ण्यत् ॥ प्रयोज्यनियोज्याविति० कवर्गाभावोनिपातनात् ॥ न० मूलधने ॥

प्ररूढ : । पुं० जठरे ॥ त्रि० बद्धमूले ॥ वृद्धे ॥ प्रकर्षेणारूढ : ॥ जाते ॥

प्ररोह : । पुं० उद्गमे । अङ्कुरे ॥ न्यग्रोधादौशाखावलम्बिन्यधोमूलेऽङ्कुरे ॥ प्रकृष्टोरोह : ॥

प्ररोही । पुं० नन्दीवृक्षे ॥

प्रलपनम् । न० प्रलापे ॥

प्रलपित : । त्रि० कथिते ॥ प्रपूर्वाल्लपेः कर्मणिक्त : ॥

प्रलब्ध : । त्रि० वञ्चिते ॥

प्रलम्ब : । पुं० दैत्यभेदे ॥ सचमनुष्यवध्य : । यथा । एकादशऋषभोरिष्ट : प्रलम्बनरकौतथा । इन्द्रश्चबलकेशीचपुर : प्रक्षोयधनुक : ॥ गवेष्टिश्चोगवाक्षश्चतालकेतुश्चवीर्यवान् । एतेमनुष्यवध्यास्तुदनो:पुत्रान्वया : स्मृता : ॥ त्रपुषे ॥ पयोधरे ॥ तालाङ्कुरे ॥ शाखायाम् ॥ हारप्रभेदे ॥ प्रलम्बने ॥ त्रि० लम्बमाने ॥

प्रलम्बघ्न : । पुं० रामे । बलदेवे ॥ प्रलम्बंहतवान् । मू० क : ॥

प्रलम्बभित् । पुं० बलभद्रे ॥ प्रलम्बंभिनत्ति । भिदिर्० । क्विप् ॥

प्रलम्बाण्ड : । पुं० दीर्घाण्डकोषिणि ॥ प्रलम्ब : अण्डोयस्यस : ॥

प्रलम्बित : । त्रि० प्रकर्षेणलम्बमाने माल्यादौ ॥

प्रलम्भनम् । न० मिथ्याफलाख्याने ॥ वञ्चने ॥

प्रलय : । पुं० मरणे ॥ मृत्यौ ॥ प्रकर्षेणलीयन्तेऽस्मिन्नितिव्युत्पत्त्यातत्त्व

नापचेत् ॥ पूरयास्यप्रलेहोयंविज्ञेयो वातनाशन : । श्लेष्मान्तकारकस्यैव मुखवैरस्यहृद्गुरु : ॥ शुक्लवर्णः प्रलेह : । घृतेवेसरधान्याकहिङ्गुभृष्ट धिसंयुते । वस्त्रपूतेऽर्द्धसम्पक्वेस्विन्नं मांसंविनि : क्षिपेत् । पीतवर्णस्तु । प्रलेह : पीतवर्णोपिकार्य : शुक्लप्रलेहवत् । विशेषोत्रविद्धेया : संमर्ग : कुङ्कुमस्यवा ॥ रक्तवर्णोपि । तप्तर्क्षे हिङ्गिमेहिङ्गु संयुतंकासमर्दकम् । धान्यकलवणाजाजीधौतंमांसखंतत्क्षिपेत् ॥ ततोऽर्द्धस्फुटितेमांसेदाडिमोबीजसंयुते । समपक्वेचातिमृदुनितन्नं शुण्ठीभिनि : क्षिपेत् ॥ ततश्चतार्यवस्त्रेण गालयेत्प्रयेदपि । रक्तवर्णप्रलेहश्च संसिद्धार्थंविनिक्षिपेत् । करमर्द्दंदाडिमस्यस्थानेशिवन्तुपूर्ववत् । हरितवर्णस्तु । मेथिकाकासमर्दाम्लकल्केनचकराविते । घृतेमांसंविनि : क्षिप्यपचेच्छुक्लप्रलेहवत् ॥ सिद्धेचगालयेद्वस्त्रे कृत्वा वर्णप्रयोजनम् । ताम्बूलंचकटवङ्गारंदेयहरितहेतुना । अत्रचौरचिद: सद्योनानावर्णप्रसाधित : । प्रलेहः कफवातघ्न : किञ्चित्पित्तकरोलघु : ॥ वटकप्रलेहोपि । माषसपिष्टिकासूक्ष्मा वेसवारेणसंयुता । यत्धाक्रियतेसस्यावटिकावटकादिकम् ॥ माषविम्बीफलाकारंलड्डुकावटकादिकम् । शृङ्गाटकफलाकारंयथावुद्धिप्रकारजम् ॥ कृत्वा हिवङ्गुधाधारेखेदितंघृतभाजितम् । सवेसवारजेतक्रे क्वथितेचमनोरमे ॥ नि : क्षिप्यवासयेदीपकुत्ता येलादिवासिते । एवम्मुद्गधाकार्योमाषमुद्गप्रलेहक : ॥ प्रलेहोवातजिद्बल्य : शुक्रमांसप्रदोरस : । प्रीणन : प्राणयुक्तानांशुक्रद : क्षीणरेतसाम् ॥ मत्स्यप्रलेहस्तु । मांसप्रलेहवत्कार्य : प्रलेहोमत्स्यसम्भव : । आदौतैलेपरंपक्वंसर्वमन्यत्तु पूर्ववत् ॥ वर्णस्यकारणेदेयंपूर्वोक्तंद्रव्यकंक्रियत् । उत्पलनंसुगन्धायदातव्यंपूर्वसम्भृतम् ॥ मत्स्यखण्डप्रलेहस्तु । सम्यक्प्रक्षालितंमत्स्यंवेसवारेणवेष्टितम् । तप्ततैलेक्षिपेत्खण्डंहिङ्गुसैन्धवमिश्रितम् । प्रलेहविधिवत्साध्योमत्स्यखण्डप्रलेहक : ॥

प्रवक्ता । त्रि० वाग्मिनि । वावदूके ॥ वेदादिवाचके ॥ यथा । जातिमात्रोपजीवीवाकामंस्याद्ब्राह्मणब्रुव : । धर्मप्रवक्ता नृपते नतुशूद्रकदाचनेति । उपदेष्टरि ॥ प्रकृष्टोवक्ता ॥

प्रवचनम् । न० आगमे । वेदे ॥ न० प्रकृष्टवचने । प्रोच्यते । वच० । ल्युट् ॥ अनेकवेदस्वीकरणे ॥ शिक्षादिवेदाङ्गेषु । अध्यापने ॥ ब्राह्मणस्यैवप्रवचनेऽधिकारोनक्षत्रियादेः

स्त्रस्य २० अव्याहाराचिसाङ्कृत य : ३ । कौण्डिन्यगोत्रस्य २१ कौण्डिन्यस्तैमितकौत्साः : ३ । गर्गगोत्रस्य २२ गार्ग्यकौस्तुभ माण्डव्याः : ३ । आङ्गिरसवशिष्ट बार्हस्पत्याः : ३ । अनाहकाख्य गोत्रस्य २४ गार्ग्यगौतमवशिष्टाः : ३ । अत्र्यगोत्रस्य २५ अत्र्यवशि सारस्वता : ३ । जैमिनिगोत्रस्य २६ जैमिन्युतथ्यसाङ्कृतय : ३ । हरितगोत्रस्य २७ कुत्सदधाङ्गि रोर्षाङ्गिरस्याः : ३ ॥ शाण्डि गोत्रस्य २८ शाण्डिल्यासितदे वलाः : ३ । वात्स्यगोत्रसावर्णगो त्री : २९ ३० और्वच्यवनभार्गव जामदग्न्याप्नुवत : ५ । आर्ष्टिषा यन गोत्रस्य ३१ आर्ष्टिषायनशा लङ्कायन शाकटायना : ३ । वैया घ्रपद्यगोत्रस्य ३२ साङ्कृति : १ । घृतकौशिकगोत्रस्य ३३ कुशिक कौशिकघृतकौशिका : ३ कैवास्त्रित् कुशिकाकौशिकबभ्रुवा : ३ । शक्ति गोत्रस्य ३४ शक्तिपराशरवशिष्ठाः : ३ काण्वयनगोत्रस्य ३५ का ण्वायनाङ्गिरसबार्हस्पत्यभरद्वाजा- जमीढाः : ५ । वासुकिगोत्रस्य ३६ अघोभ्यानन्तवासुकाय : ३ । गौतमगोत्रस्य ३७ गौतमाप्साराङ्गिरसबार्हस्पत्यनैध्रुवा : ५ के पाश्चित्गौतमाङ्गिरसावासा : ३ । शुनकगो० ३८ शुनकशौनकगृत्स मदा : ३ । सौपायनगोत्रस्य ३९ और्वच्यवनभार्गवजामदग्न्याप्नुव- त : ५ । प्रवरा : ॥ इतिधनञ्जय कृतधर्म्मप्रदीपेगोत्रप्रवरविवेक : ॥ न० गोत्रे ॥ अशुरण्ि ॥ त्रि० श्रे ष्ठे ॥ प्रव्रियते० होमधुर्य्याभ्यामुत् कोर्ष्यते । वृञ्० । प्रश्वृद्धित्वप् ॥ भवरया ेश ॥

प्रवरललितम् । न० अष्टिप्रभेदे ॥ य- था । यमौभस्तौगस्त्रप्रवरललितंनाम वृत्तम् ॥ भुजोत्क्षेप : शून्ये चलव- लयझङ्कारयुक्तस्खलत्पादन्यास : प्रकटिततुलाकोटिनाद : । स्मितंव क्त्रेऽकस्माद्द्रुतपटुघटाघोसिंहीस्वा हरीतीयादौहक्प्रवरललितंवल्गी तम् ॥

प्रवर्ग : । पुं० होमाग्नौ ॥

प्रवर्ग्य : । पुं० वैदिककर्मविशेषे ॥ म- हावीरे ॥

प्रवर्त्तक : । त्रि० प्रेरके । प्रवर्त्तनका रिणि ॥ प्रवृत्तिजनके ॥ यथा । प्र- वर्त्तकांमास्मसुवाचचोदनांनिवर्त्तकं नैनसुवाचभाष्यकृत् । ततस्त्वदिष्टो- नशिचोदनास्तिसाप्रवर्त्तिकायानभ वैदितिस्थिति : ॥ इतिसद्धेंपशा रीरकं ॥

प्रवर्त्तकत्वम् । न० प्रवृत्तिजनकत्वे ॥

प्राय : प्रवर्त्तकत्वं विधिवपसांखो-
कवेदयोर्दृष्टम् । सिद्धं बोधयतोर्थैक
धमेतत्प्रवर्त्तितत्वमस्यादे : ॥ ३८ ॥
विधिरेवनप्रवृत्तिं जनयत्यभिलषित
वस्तुबोधोपि । राजाभवतिसुतोभू-
दितिबोधेनप्रवृत्तिलोक : ॥
प्रवर्त्तनम् । न० प्रेरणे । याचा
पने ॥ प्रवृत्तौ ॥ आरम्भे ॥
प्रवर्त्तना । स्त्री० पर्यं पणायाम् ॥ उत्
कृष्टस्यनिकृष्टं प्रत्याज्ञायाम् ॥ प्र-
वृत्तिजनकत्वे । प्रवृत्तिहेतुव्यापा-
रे ॥ प्रवर्त्तकराजादिनिष्ठायाम् ॥
विलर्थे ॥ सर्वानुगतं प्रवर्त्तनासा-
मान्यं विध्यर्थ : । प्रेषणादयोवि-
शेषास्तु० अथ प्रकरणादिगम्या-
इतिबोध्यम् ॥
प्रवर्त्तयिता । त्रि० कर्त्तरि ॥
प्रवर्त्तित : । त्रि० जाते ॥ उत्पादि-
ते ॥ यथा । प्रवर्त्तितोदीपइवप्र-
दीपादितिरघु : ॥
प्रवर्द्धनम् । न० विवर्द्धने ॥
प्रवर्षण : । पुं० पर्वतविशेषे ॥ न०प्र-
कृष्टवर्षणे ॥ तन्नक्षत्रमाहवराहा
चार्य : । ज्यैष्ठ्यांनासमतीतायांपूर्वा
षाढादिसंस्पृष्टे नशुभमशुभंवावाच्यं
परिमाणंचाम्भसस्तज्ज्ञै : ॥ तत्प्र
माणार्थमाह । हस्तविशालं कुण्डक
मधिकृत्यास्वुप्रमाणनिर्देश : ॥ प
ञ्चाशत्पलमाढकमानेनमिनुयाज्-
जलं पतितम् ॥ पृथ्व्यादिप्रमाणमा
ह । येनधरित्रीमुद्राजनिताबाविन्द
वस्तृणाग्रेषु । दृष्टे नतेनवाच्यं परि
माणं वारिण : प्रथमम् ॥ मुद्राजनि
ता० विगतधूलिजाता । मतान्तरमा
ह । केचिद्यथाभिवृष्टं दशयोजनम-
ण्डलं वदन्त्यन्ये । गर्गं वशिष्ठपराशर
मतमेतद्द्वादशात्परम् । येपुचभेषु
भिवृष्टं भूयस्तेष्वेवप्रवर्षतिप्राय : ।
यदिनाप्यादिषुवृष्टं सर्वेषुतद्दाक्षिणा
दृष्टि : ॥ नक्षत्राणांप्रवर्षणमाणमा-
ह । हस्ताप्यसौम्यचित्रापौष्णधनि-
ष्ठासुषोडशद्रोणा : । शतभिषगैन्द्र
स्वातिषुचत्वार कृत्तिकासुदश ॥
श्रवणमघानुराधाभरणीमूलेषुदशच
तुर्युक्त : । फाल्गुन्यांपञ्चकृति : पु
नर्वसौविंशतिर्द्रोणा : । ऐन्द्राग्न्याख्ये
वैश्वे विंशति :सार्पेदशत्यधिका :
॥ आहिर्बुध्न्यार्यमणप्राजापत्येषु
पञ्चकृति : । पञ्चदशाजेपुष्ये चकी
र्त्तिताधान्विमेदशद्रोण ॥ रौद्रेष्टो-
डशकथितानिरुपद्रुतेष्वेते ॥
प्रवर्षणसमये । रविरविसुतकेतुपी
डितेभेक्षितिसुतत्रितयविघातिताहते
च । भवतिचनशिवंनचापिवृष्टि : शु
भसहितेनिरुपद्रवेशिवंचेति ॥
प्रवलाकी । पुं० भुजङ्गे ॥ चित्रमेख-
लके ॥
प्रवर्ह : । त्रि० प्रधाने । श्रेष्ठे ॥ प्रव-

ईति । ह्लह्लती । पथाद्यच् ॥

प्रवह : । पुं० वहिर्यानायाम् । पुरात्रहिर्गमने । वायुमात्रे । सप्तवायुम्तर्गतवायुविशेषे । सतु०आवहवायोरूर्ध्वस्थित : । सचित्वंप्रवहमिति : तस्यतुमध्यस्था : । भचक्रत्रा : खचरे : समेतायस्मादतस्तेनसमाश्चतोयम् । भपञ्जर : खेचरचक्रयुक्तोभ्रमत्ययवंप्रवहानिलेनेतिणितिरोमर्षिः । यस्माज्ज्योतींषिवहतिप्रवहस्तेनसस्मृत : । ० । वस्यार्थ : । यस्माज्ज्योतींषिप्रकर्षेण वहतितेनसवायु:प्रवह: स्मृत : । प्रवहस्येवभेदा : सर्वेवायुस्कन्धा : । इतिविष्णुपुराणेद्वितीयेंशे १२ अध्याय : । वायोर्हिसैतस्कन्धे । भतुजित्सत्यजित्सेनजिदमित्रावमित्रजित् । भूरिमित्रमुखैर्बैभिद्याभानी : प्रवहोगण : । प्रकृष्टोवह : । गोचरसचरेतिसाधु : । पुरतोगच्छन्प्रवहोवायु : ।

प्रवहणम् । न० कर्णीरथे । डयने । स्त्रियोवहनाययानविशेषे । चौडोला० इ० भा० । अधुना० पीनसखर्खरिया० इ० प्र० । प्रोह्यतेऽनेनवा । वहप्रापणे । ल्युट् ।

प्रवह्लिका । स्त्री० प्रहेलिकायाम् । पहेली० इ० भा० । प्रवह्लते० पाश्चादर्शनं । वहंवञ्चपरिमापणहिं

प्रादानेषु । क्रनुश्लिष्टसंज्ञयो : । दुर्विज्ञानार्थप्रश्नादिवाक्यरूपाहिसो

प्रवाक् । त्रि० वाग्मिनि ।

प्रवाचक: । त्रि० प्रकृष्टवक्तरि ।

प्रवाच्य : । पुं० पाठविशेषोपलक्षितेग्रन्थविशेषे । प्रोच्यते । वच० । ण्यत् । यजयाचेतिनकुत्वम् ।

प्रवाणी । स्त्री० तन्तुवायशलाकायाम् प्रकर्षेणव्रयतेयस्याम् । प्रपूर्वोवयते ल्युट् ।

प्रवाद : । पुं० परस्परवाक्ये । जनरवे । वादविशेषे । प्रकृष्टोवाद : ।

प्रवादित : । त्रि० शब्दिते ।

प्रवारणम् । न० निषेधे । काम्यदाने । महादाने । प्रव्रियते । वृञ्० चु० । ल्युट् ।

प्रवास : । पुं० खगृहाद्दूरगमने । विदेशस्थिती । विदेशे । प्रवसन्त्यस्मिन् । वस० । हलश्चेतिघञ् ।

प्रवासनम् । न० वधे । मारणे । यासच्छेदे । चु० । प्रपूर्वाच्चौरैल्युट् । प्रवासनायाम् ।

प्रवासी । त्रि० प्रवासविशिष्टे । प्रोषिते । पथिके । वस० । प्रपूर्वादस्मात् प्रेलपसदृमथवदवस : इतिसच्छीलादिषुधिनुण् ।

प्रवाह : । पुं० प्रवृत्ती । व्यवहारे । अम्बुवेगे । जलस्रोतसि । अविच्छिन्नसन्ततौ । अविच्छेदेनजलादि

प्रवृत्ती ॥ प्रवहणम् । वह० । घञ् ॥ प्रकृष्टाग्रे ॥

प्रवाहक : । पुं० राक्षसे ॥ त्रि० प्रकृष्टवहनकर्तरि ॥

प्रवाहण : । पुं० जीवलसूतराज्ञोपत्ये । वेदप्रसिद्धे राजर्षिविशेषे ॥

प्रवाहिका । स्त्री० ग्रहण्याम् । सङ्ग्रहणीरोगे ॥ वायुः प्रवृद्धोनिचितंबलासं नुदत्यधस्तादहिताशनस्य । प्रवाहतोल्पंबहुशोमलाक्तंप्रवाहिकांतांप्रवदन्तितज्ज्ञाः ॥ प्रवाहतः प्रकृष्टवलेनसशब्दंवायुसमानमार्गेणत्यजतः ॥ प्रवहति । वह० । ण्वुल् ॥ प्रवहणम् । प्रवाहयति० मुहुर्मुहुः प्रवर्त्तयतिवा । रोगाख्यायांण्वुल् ॥

प्रवाही । स्त्री० वालुकायाम् ॥

प्रविख्याति : । स्त्री० विख्यातौ । अतिप्रसिद्धौ ॥ प्रविख्यानम् । ख्या० क्तिन् ॥

प्रविततः । त्रि० विस्तृते ॥

प्रविदारणम् । न० सम्पराये । युद्धे ॥ अवदारणे ॥ दृविदारणे । ख्य-न्तादृभावेल्युट् ॥

प्रविर : । पुं० पीतकाष्ठे ॥

प्रविरल : । त्रि० घनेतरे ॥ प्रकर्षेणविरल : ॥

प्रविविघुः । त्रि० गुणादौप्रवेष्टुमिच्छौ ॥ यथा । कारयेत्खननशोधनमादौमातुरन्तिकमपिप्रविविघुः । आत्मशस्त्र्यनुगतः प्रविशेद्वासङ्कटेचगहनेचनलिष्टेदिति राजनीतौकामन्दकः ॥

प्रविवत्सत् । त्रि० प्रवासंकर्तुमिच्छति । वसेः सन्नन्तात्शतृ : शत्रादेशः ॥

प्रविश्लेष : । पुं० विधुरे । प्रकृष्टविश्लेषे ॥ प्रविश्लेषणम् । श्लिषआलिङ्गने । घञ् ॥

प्रविषा । स्त्री० अतिविषायाम् ॥

प्रविष्ट : । त्रि० कृतप्रवेशे ॥ प्रविश० । क्त : ॥ निविष्टे ॥

प्रवीण : । त्रि० निपुणे । विज्ञे । निष्णाते । शिक्षिते ॥ प्रकृष्टावीणाऽस्य ॥ यद्वा । वीणयाप्रगायति० प्रगीयतेवा । सत्त्वामितिणिजन्तात्० पचाद्यच्० कर्मणिघञ्वा ॥

प्रवीर : । पुं० योद्धृपुरुषे । सुभटे ॥ त्रि० उत्तमे ॥ प्रकृष्टोवीर : ॥

प्रवृद्ध : । त्रि० पण्डिते ॥ प्रकर्षेणवृद्ध : ॥ सुखादिराशिमन् ॥

प्रवृत्त : । त्रि० आरब्धे ॥ प्रवृत्तिविशिष्टे ॥ प्रकृष्टवर्त्तनविशिष्टे ॥ जाते ॥ प्रवर्त्तिस्म । वृतु : क्त : ॥

प्रवृत्ति : । स्त्री० प्रवाहे । अविच्छिन्नसन्ततौ । उदन्ते । वार्तायाम् । प्रवर्त्तने । वृत्तौ ॥ यथा : फलपवृत्तिं न्यांप्रयत्नसंचयायाम् ॥ अवन्त्यादिदेशे ॥ हस्तिमदे ॥ धर्ममार्गे ।

प्रवृत्तिक्रम : ... प्रयोग :

नितरांप्रयतमानतायाम् । रज : कार्ये चारब्धे ॥ गतौ ॥ प्रवर्त्तते व्याप्नोति० प्रवर्तनंवा । वृत्तु० । क्विप्० । क्तिन्वा । व्यायमतेयत्नवि शेषे ॥ अस्याःकारणम् । चिकीर्षा कृतिसाध्यताज्ञानम्० इष्टसाधनताज्ञानं०उपादानप्रत्यक्षम् । यथा प्रवृत्तिर्निवृत्तिस्तथाजीवनकारणम् । एवंप्रयत्नत्रैविध्यंतान्त्रिकैः परिदर्शितम् ॥ चिकीर्षाकृतिसाध्यसाधनत्वमतिस्तथा । उपादानस्य चाध्यक्षंप्रवृत्तौजनकंभवेत् ॥ इति ॥ प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ :। इति गोतमसूत्रम् ॥ १० ॥ यद्ज्ञानात् प्रवृत्तिःस्यात् तज्ज्ञानात्साकृती भवेत् ॥

प्रवृत्तिक्रम : । पुं० श्रुत्यादिभ्योदुर्बली प्रवृत्तेःक्रमे ॥ तथाहि । सहप्रयुज्यमानेषुप्रधानेषुसन्निपातिनामङ्गानामावृत्त्याऽनुष्ठानेकर्तव्येपि०द्विती यादिपदार्थानांप्रथमानुष्ठितपदार्था नांप्रथमानुष्ठितपदार्थक्रमात् : क्रम : । यथा० प्राजापत्यपश्वङ्गेषु० प्राजापत्याभिधेयस्वदेवीकरणप्रोक्षण लौघरण्वीरित्याद्यं नहतीयानिर्देशा नुसारिकार्यव्यसाध्यएकयाशलेनवि शिता : । अतस्ते पातज्ज्ञानाषोपाकरणनियोजनप्रभृतीनांसाहित्यं म म्पाद्यम् । तत्समानापत्यप्रयोगानां- प्रतिपन्नदेवताकत्वेनयुगपदनुष्ठाना दुपपद्यते । तद्ज्ञानास्योपाकरणा दीनांयुगपदनुष्ठानमशक्यम्० अत स्तेषांसाहित्यमव्यवहिताऽनुष्ठाना तूसम्पाद्यम् । तत्रैकस्योपाकरणं विधायापरस्योपाकरणंविधेयम्० एवंनियोजनादिकमपि । तथाच प्राजापत्यं पुकमाचित्यभोरारभ्य : एकंसर्वधानुष्ठायद्वितीयादि : मदा र्थस्तेनैवक्रमेणानुष्ठेय : सप्रवृत्तिक्रम : ॥ प्रवृत्ते : क्रम : ॥

प्रवृत्तिजनक : । त्रि० प्रवर्त्तके ॥

प्रवृत्तिज्ञ : । पुं० चारभेदे । वार्त्तिके । वार्त्तायने ॥ त्रि० प्रवृत्तिज्ञानविशिष्टे ॥

प्रवृद्ध : । त्रि० प्रौढे । एधिते । वृद्धियुक्ते ॥ प्रसारिते । प्रसृते ॥ प्रवर्धितस्म । वृधुवृद्धौ । गत्यर्थेति क्त : ॥

प्रवृष्ट : । त्रि० प्रवृष्टवति ॥

प्रवेक : । उत्तमे । प्रधाने । प्रमुखे ॥ प्रविच्यते । विचिरपृथग्भावे । घञ् ॥

प्रवेट : । पुं० शितशूके । यवे ॥

प्रवेणि : । स्त्री० कुथायाम् ॥ वेण्याम् प्रोषितभर्तृकादिधार्यकेशरचनाविशेषे ॥ वेणति । वेणृगतिज्ञानवादि ... गमनज्ञानचिन्तासु । इन् । ... उपसर्गान्तरव्यावृत्त्यर्थ : ॥

प्रवेणी । स्त्री॰ कुथायाम् । परिस्तोमे । गजपृष्ठस्थचित्रकम्बले । वेण्याम् । प्रकर्षेण वीयतेऽस्याम् । वीगत्यादिषु । वीज्याज्वरिभ्यो नि : । कृदिकारादक्तिन इति पाक्षिको ङीप् ॥

प्रवेल : । पुं॰ पीतमुद्गे । सोनामूंगा इ॰ भा॰ ॥

प्रवेश : । पुं॰ अन्तर्विगाहने । गृहाद्यन्तर्गमने । प्रवेशश्चतुर्धा । अपूर्वप्रवेश : सुपूर्वप्रवेश : द्वन्द्वाभयप्रवेश : वधूप्रवेश : इति भेदात् । तत्र वधूप्रवेशस्यान्वर्थसंज्ञकत्वात् तदन्ये पालयन्त्यामन्त्यन्ते । यथा । अपूर्वसंज्ञ : प्रथम : प्रवेशो यात्रावसाने तु सुपूर्वसंज्ञ : । द्वन्द्वाभयस्त्वग्निभयादिजात स्त्वेवंप्रवेशस्त्रिविध : प्रदिष्ट : ॥ भूरिपुष्पनिकरं सतोरणं तोयपूर्णकलशोपशोभितम् । धूपगन्ध बलिपूजितामरं प्राप्नुयाद् ध्वनियुतं विविधं गृहम् ॥ प्र॰ विश॰ । हलश्च इति घञ् ॥

प्रवेशनम् । न॰ प्रवेशे । सिंहद्वारे ॥ प्रविश॰ । ल्युट् ॥

प्रवेश्य : । त्रि॰ प्रवेशयितव्ये । प्रवेशनीये ॥

प्रवेष्ट : । पुं॰ भुजे । बाहौ । प्रवेष्टते । वेष्टवेष्टने । पचाद्यच् । हस्तिदन्तमांसे । गजपृष्ठतल्पने ।

प्रव्यक्त : । त्रि॰ उत्कर्षे । स्पष्टे । स्फुटे । प्रव्यक्त्यतेस्म । अञ्ज् व्यक्त्यादौ । क्त : । प्रव्यच्यतेस्मवा । अस्तु विशेषणे । क्त : ॥

प्रव्यथित : । त्रि॰ प्रपीडिते ॥ व्याकुलीकृते ॥ अतिभीते ॥

प्रव्रजन् । त्रि॰ संन्यस्यगच्छति ॥

प्रव्रजित : । पुं॰ प्रव्रज्याश्रमविशिष्टे । बुद्धभिक्षुशिष्ये । चेलुके । श्रामणेरे ॥ त्रि॰ निष्क्रान्ते ॥

प्रव्रजिता । स्त्री॰ मांस्याम् ॥ मुण्डीर्याम् ॥ तापस्याम् ॥

प्रव्रज्या । स्त्री॰ वैद्यावारक्तपटादौ ॥ प्रव्रजनम् । व्रज॰ । व्रजयजोर्भावे क्यप् ॥ सन्न्यासे ॥

प्रव्रज्यावसित : । पुं॰ सन्न्यासभ्रष्टे ॥

प्रव्राजी । पुं॰ प्रव्रजनशीले । सन्न्यासिनि ॥ शाण्डील्य वैराग्यातिशयशालित्वस् ॥

प्रशंसनीय : । त्रि॰ प्रशंसितुं योग्ये । शंसु॰ । अनीयर् ॥

प्रशंसा । स्त्री॰ प्रशंसने । वर्णनायाम् । ईडायाम् । स्तवे ॥ परोक्षरता । द्विप्रकाराहि प्रशंसा भवति । वस्तुनि विद्यमानगुणोत्कर्षपक्ष : प्रकार : स्तावकेन शब्दे न सम्यादिरो गुणोत्कर्ष : पर : प्रकार इति ॥

प्रशस्ता । पुं॰ समुद्रे ॥ प्रशीयते । शद्लृ शातने । प्रद्रुरगदोस्तुदचेति ह्निप् ॥

प्रशस्वरी । स्त्री० नद्याम् ॥ कौशी ॥

प्रशम : । पुं० उपशान्तौ ॥ प्रशमनम् । शम० । भावेघञ् ॥

प्रशमनम् । न० मारणे । वधे ॥ शम सायाम् ॥ प्रशान्तौ ॥ प्रशमयति । शम० । णिजन्तात्ल्युःभावेल्युट् ॥

प्रशमितः । त्रि० भपाकृते । राज्ञः कर्तव्ये ॥ रक्षापौरजनस्य॰देशनगरग्रामेषुगुप्तिस्तथा॰ योधानामपिसङ्ग्रह॰तुलयामानव्यवस्थापनम्, सान्त्वं सन्धिषु॰दानवृत्तिकरणीयागः समानार्जनम्॰कार्याख्येयमहीभुजां प्रशमनान्येतानिराज्येनव ॥

प्रशस्तम् । न० मङ्गले ॥ त्रि० श्रेष्ठे । शुभे ॥ प्रशंसनीये । अतिश्रेष्ठे । उत्तमे ॥ प्रशस्यतेस्म । शंसु० । क्तः । प्रपर्यायशस्तोवा ॥

प्रशस्तिः । स्त्री० प्रशस्तिलेखनप्रक्रियायां ॥

प्रशान्त : । त्रि० प्रकृष्टशमताविशिष्टे । परहिंसारहिते ॥ सर्वचसमबुद्ध्या रागद्वेषशून्ये । निर्विकारे ॥ स्वलाभेनापिसन्तुष्टे ॥ समोरजसो : घयात्रयविधेमशून्यत्वेनशुद्धसत्त्वरूपे चित्ते ॥ प्रकर्षेणशान्तः । प्रलयाभिराज्ञौ ॥

प्रशान्तचित्त : । त्रि० शान्ते । उपरतदर्पादिदोषे । समाहितमनसि ॥ प्रशान्तंचित्तंयस्य सः ॥

प्रशान्तवाहिता । स्त्री० समोरजसो : घयात्रयविधेमशून्यत्वेनशुद्धसत्त्वरूपं चित्तं प्रशान्तं । पूर्वपूर्वप्रशमसंस्कारपाटवेनतादृशचित्तस्याधिक्यं प्रशान्तवाहितेत्यर्थः ॥

प्रशान्तात्मा । त्रि० प्रशान्तचित्ते ॥

प्रशाम् । त्र० समानार्थे ॥

प्रशान् । त्रि० शांते ॥ प्रकर्षेणशाम्यति । शम० । क्विप् । अनुनासिकस्यक्विझलोरितिदीर्घः । मोनोधातोः ॥

प्रशासनम् । न० प्रकृष्टाज्ञायाम् ॥ शासु० । ल्युट् ॥

प्रशासिता । त्रि० प्रकृष्टशासनकर्ति ॥ ईश्वरे ॥ यथा । प्रशासितारंसर्वेषामणीयांसमणोरपि । रुक्माभंस्वप्नधीगम्यंविद्यात्तंपुरुषंपरम् ॥ देवतायागकर्तारंपितर : श्राद्धकारिणम् । नापुनुर्हेव्यकव्याभ्यांयदिनस्यात्प्रशासिता ॥

प्रशास्ता । पुं० ऋत्विजि ॥ मित्रे ॥ त्रि० शासनकर्तरि ॥ प्रशास्ति । शासु० । तृच् । अपहृन्नितिदीर्घः ॥

प्रश्न : । पुं० अनुयोगे । पृष्टायाम् ॥ प्रच्छनम् । प्रच्छ० । यजयाचेतिनङ् । छ्वोरितिशः । प्रश्नेचेतिलिङ्गात्सम्प्रसारणम् ॥

प्रश्नदूती । स्त्री० प्रहेलिकायाम् ॥

प्रश्नी । स्त्री० कुम्भिकायाम् । वारिपर्ण्याम् ॥

प्रश्रय : । पुं० प्रणये । प्रीत्याप्रार्थने ॥ प्रश्रयणाम् । श्रिअएरच् ॥

प्रश्रवम् । न० प्रवाहे ॥

प्रश्रित : । त्रि० विनीते ॥ प्रश्रमंशुश्रूषयाथि । श्रिञ्० । क्त : ॥

प्रश्लथ : । त्रि० शिथिले ॥

प्रश्लिष्ट : । त्रि० प्रकर्षेणाश्लिष्टे ॥

प्रश्लेष : । पुं० संयोगे ॥ प्रश्लेषणम् । श्लिष्० । घञ् ॥

प्रश्वास : । पुं० प्राणेनकोष्ठस्थवायोर्बहिर्निःसारणे । समाध्यङ्गपूरकविरोधिनि ॥ श्वासस्यविशेषे ॥ प्रश्वसनम् । प्रश्वस० । घञ्० ॥ श्रमापनये ॥

प्रष्टव्य : । त्रि० प्रश्ने ॥

प्रष्टा । त्रि० कथङ्कथिके । प्रश्नकर्तरि । पृच्छति । प्रच्छ० । तृच् । त्रयंतिलुप्तम् ॥

प्रष्ठ : । त्रि० अग्रगे ॥ श्रेष्ठे । काण्डाशिकोपधौ ॥ प्रतिष्ठते० गच्छति । ष्ठा० । आतश्चोपसर्गेइतिक : सुपिस्थइतिकोवा । प्रष्ठोग्रगामिनीति ष : । षत्वम् ॥

प्रष्ठवाट् । पुं० युगपार्श्वगे । दमनयाशीकरणारोपितकाष्ठयाहे ॥ प्रष्ठमग्रगामिनंवहति । वहश्चेतिण्वि : ॥ स्वामीतु०प्रष्ठमंपष्ठंयावद्वहतीतिविग्रहेरेफरेफिसंपठति०तत्पृषोदरादित्वंबोध्यम् ॥

प्रष्ठी । स्त्री० प्रष्ठभार्यायाम् ॥

प्रष्ठौही । स्त्री० बालगर्भिण्याङ्गवि । प्रथमगर्भधृतवत्याम् ॥ प्रष्ठंवहति । वहश्चेतिण्वि : । वाहऊठितिङीष् ॥

प्रसक्त : । त्रि० आसक्ते ॥ सन्तते । सर्वथासदेकपरे ॥ न० । सतते ॥ सक्ति । षञ्ज० । कर्मणिक्त : ॥

प्रसक्ति : । स्त्री० प्रसङ्गे ॥ प्रवृत्तौ ॥ अनुमितौ ॥ आपत्तौ ॥ प्र० षञ्ज० । स्त्रियाक्तिन् ॥ आसक्तौ ॥

प्रसङ्ग : । पुं० प्रसक्तौ । अन्योद्देशेनाऽन्यदीयस्यापिसङ्घानुष्ठाने ॥ अन्योद्देशेनप्रवृत्तावन्यस्यापिसिद्धौ ॥ यथा । दृष्टात्तुपरतेपापं स्पृष्टात्तुनिदिवंनयेत् । प्रसङ्गेनापियागङ्गामोक्षदाह्यवगाहिता ॥ शीलत्वादिवादौ । प्रसज्यतेपुरुषोयत्र । षञ्ज० । घञ् ॥ मैदेताविन्प्रसङ्गंनर्मविवर्थेनकर्मणा । नविद्यमानेष्वर्थेपुनात्त्यमपि यतस्तत : ॥ यतस्तत : पतितादि : ॥ प्रस्तावे ॥ प्रस्तावे ॥ य० । यथा च्युतोदारकथाप्रसङ्ग : ॥ पुन : पुन : प्रवृत्तौ ॥ प्रकृष्टसम्बन्धे ॥ सङ्गतिविशेषे ॥ स्म्रुतस्वेसत्युपोद्घातादिषटकभिन्नत्वमितितल्लक्षणम् ॥ स्म्रुतश्चोपेक्षानर्हत्वप्रसङ्गत्वम् । तदर्थस्तुस्मृतिविषयतापन्नत्वेसतिद्वेषविषयतानापन्नत्वमित्यनुमितिप्रन्थेगदाधरभट्टाचार्य : ॥ प्रकृष्ट.सङ्ग : ॥

मैथुने ॥

प्रसङ्गत्वम् । न० प्रसक्तस्योपिवाऽनर्हत्वे। प्रसक्तविषयतापन्नत्वेसति०हेयविषयतानापन्नत्वमितितदर्थः ॥

प्रसङ्ख्यानम् । न० आवृत्तौ ॥ आवृत्तिर्हिप्रसङ्ख्यानमित्युक्तेः ॥

प्रसज्य : । पुं० प्रसज्यप्रतिषेधे ॥ पर्युदास : सदृग्ग्राहीप्रसज्यस्तुनिषेध-कृत् ॥

प्रसज्यप्रतिषेध : । पुं० निषेधान्तरे ॥ अप्रधान्यंविधेर्यत्र प्रतिषेधेविधानता । प्रसज्यप्रतिषेधोयंक्रिययासहयत्रनञ् ॥

प्रसञ्जनम् । न० प्रसङ्गे ॥

प्रसत्ति : । स्त्री० नैर्मल्ये । प्रसादे । प्रसन्नतायाम् ॥

प्रसत्त्वा । पुं० प्रजापतौ । धर्मे ॥ मूढे ॥ प्रसीदतीति । षद्लृ० । प्रद्रुसदोस्तुट्वेति०दमपादीपाठात्सदेरपि क्वनिप् ॥

प्रसत्वरी । स्त्री० प्रतिपत्ती ॥ वमीरचेतिङीन्री ॥

प्रसन्न : । त्रि० चार्व्ये । स्वच्छे । निर्मले । चक्षक्षा० बाष्पी० इ० मा० ॥ सन्तुष्टे ॥ प्रसन्नयातुष्टे ॥ प्रसादवति ॥ प्रसादस्त । प्रसीदति स्मेति ॥ षद्लृ० गत्यर्थेतिक्त : ॥

प्रसन्नता । स्त्री० नैर्मल्ये । प्रसादे ॥ प्रसन्नस्यभाव : । तल् ॥

प्रसन्ना । स्त्री० सुरायाम् ॥ मद्यप्रभेदे ॥ प्रसन्नागुल्मवाताशौविबन्धानाहनाशिनी । शूलप्रवाहिकाटोपकफवातार्शसांहिता ॥ प्रसादविशिष्टायाम् ॥

प्रसन्नात्मा । पुं० शमदमाद्यभ्यासाच्छुद्धचित्ते ॥ प्रसन्न:रजस्तमोभ्यामक्षुभित : आत्मान्त : करणमस्य ॥ विष्णौ ॥ अवाप्तसर्वकामत्वात्प्रसन्नचात्मा स्वभावोऽस्य ॥

प्रसभ: । पुं० न० बलात्कारे ॥ प्रगतासभायस्मात् । सभाया:प्रगतोवा ॥

प्रसर : । पुं० प्रणये ॥ वेगे । जवे ॥ समरे । युद्धे ॥ विसर्पणे ॥ प्रसरंनलभन्ते हियावत्तूक्षवनमर्कटा : । नाभिद्रवन्तितावत् पिशाचावास्वगोचरे ॥ प्रसरणम् । सगती । वा० अप् । अधिकारेवर्तुसंज्ञायामितिघोवा ॥ प्रकर्षे ॥ समूहे ॥

प्रसरक : । पुं० पिप्पालि ॥ चवप्रसनयाइत्यपिपाठ : शब्दमालायाम् ॥

प्रसरणम् । न० आसारे । सैन्यानांसर्वतोव्याप्तौ ॥ तृणकाष्ठादिरितविसैन्यानामितस्ततोगमने ॥ सर्वतोगमने । पसर्ना०फैलना० इ० भा० ॥ सृ० । ल्युट् ॥

प्रसरणी । स्त्री० प्रसरण्यार्थे ॥ प्रसरति । सृ० । वर्तिसृम्यनि : । कृदिकारादक्तिनीप् ॥

प्रसारिका । स्त्री० सूक्ष्मधान्ये ॥

प्रसादः । पुं० अनुग्रहे । तुष्टिदाने । प्रीतिदाने ॥ यथा । सत्कीर्त्तिर्विमलंयशःसुकवितापाण्डित्यमारोग्यता॰वादेवाक्पटुताकुलेप्सुरतागाम्भीर्यसक्षोभ्यता । प्रागल्भंप्रसुतागुणे निपुणता यत्प्रसादाद्भवेत् तंवन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदमिति ॥ स्वास्थ्ये । चारीग्ये ॥ सौम्यतायाम् ॥ प्रसत्तौ । प्रसन्नतायाम् । नैर्मल्ये ॥ चित्तस्य प्रसन्नतायाम् । चित्तस्वच्छतायाम् ॥ देवनिवेदितद्रव्ये ॥ गुरूणां भुक्तावशेषे ॥ प्रसदनम् । पद्लृ० । भावेघञ् ॥ वैदर्भीरीतियुक्तकाव्यगुणे । काव्यशब्दभिन्नम् सिद्धार्थपदवत्त्वे ॥ यथा । ओजः प्रसादमाधुर्यगुणास्त्रितयमेव तः । गौडवैदर्भपाञ्चालारीतयः परिकीर्त्तिताः ॥ तत्र॰ व्यक्तार्थपदमाख्यं प्रसादः परिकीर्त्तितः । इतिलक्षणम् ॥ अपिच । शुष्केन्धनाग्निवत्स्वच्छजलवत्सहसैवयः । व्याप्नोत्यन्यत्प्रसादोसौसर्वत्रविहितस्थितिः ॥ अन्यत्इति॰ व्याप्यमरुचितम् । सर्वत्रेतिसर्वेषुरसेषु॰सर्वासुरचनासुच । गुणवृत्त्यापुनस्तेषांवृत्तिः शब्दार्थयोर्मता ॥ गुणवृत्त्याउपचारेण । तेषाम्॰ ओजआदिगुणानाम् । आकारेणोर्यस्येव ॥

प्रसादनः । पुं॰ भक्तकारे ॥ न॰ अन्ने ॥ त्रि॰ प्रसन्नताकारके ॥

प्रसादना । स्त्री॰ परिचर्यायाम् ॥ सेवायाम् ॥

प्रसादितः । त्रि॰ प्रार्थिते ॥ सौमनस्यकृते ॥

प्रसादी । त्रि॰ अनुग्रहशीले ॥ प्रसादगुणयुक्ते ॥ शीलेघिनिः । अस्त्ययेइनिर्वा ॥

प्रसाधनम् । न॰ वेशे । अलङ्कारस्वादिकृतशोभायाम् ॥ प्रसाध्यते अनेनाङ्गम् । साध॰ । करणेल्युट् ॥ प्रकृष्टनिष्पत्तौ ॥

प्रसाधनी । स्त्री॰ कङ्कतिकायायाम् ॥ सिद्धौ ॥ ङीप् ॥

प्रसाधिका । स्त्री॰ नीवारे ॥ वेशकारिण्याम् । अलङ्कर्त्र्याम् ॥

प्रसाधितः । त्रि॰ अलङ्कृते । भूषिते ॥ प्रसाध्यतेस्म । साधसंसिद्धौ ॥ स्वार्थण्यन्तः । क्तः ॥ प्रकृष्टनिष्पन्ने । निष्पादिते ॥

प्रसारः । पुं॰ प्रसरणे ॥ प्रसरणम् । सृ॰ । घञ् ॥ तृणकाष्ठादेः प्रवेशे ॥

प्रसारणम् । न॰ पञ्चविधकर्मान्तर्गतविस्ताररूपेकर्मणि ॥ यथा । उत्क्षेपणं ततोऽवक्षेपणमाकुञ्चनं तथा । प्रसारणञ्चगमनं कर्माण्येतानि

पश्चच ॥

प्रसारणी । स्त्री० गंधालिकायाम् । सरणायाम् । कुब्जप्रसारणीतिख्यातायाम् । गन्धभादालिया ० द्रु० गी० मा० ॥ प्रसारणीगुरुर्व्यायल सन्धानहृत्सरा । वीर्योष्णवायात हृत्तिशायातरक्तकफापहा ॥ बीयानाख्यविरायाख्य वातसङ्कोचितात्मनाम् । प्रसारयेद्यलोङ्गानितद्गुली पाप्रसारणी ॥ प्रसायतेरूपमनया । वारणे लिल्युट् ॥

प्रसारिणी । स्त्री० राजबालुलतायाम् ॥ प्रसारण्याम् ॥

प्रसारित : । त्रि० तते । विस्तारिते ॥

प्रसारी । त्रि० प्रसरणशीले । विसत्वरे ॥ प्रसरति० तच्छीलः । सप्तौ । प्रे सपद्रुसयवदयसहृतिघिनुण् ॥ चायते ॥ व्यामे ॥

प्रसितम् । न० पूये । त्रि० तत परे । घासक्ते ॥ प्रासायि । विप्रलब्धे । वार्ष्णेयित्त : ॥

प्रसिति । स्त्री० यज्वने ॥ बन्धनसाधनरज्जुनिगडादौ ॥ प्रसयनम् । पिञ्० । क्तिन् ॥

प्रसिद्ध : । त्रि० भूषिते ॥ ख्याते ॥ प्रसिद्ध्यति० प्रसिध्यते स्माऽऽ । पिधुस राद्धौगत्याया । कर्तरि० कर्मणिवात्त : ॥

प्रसिद्धि । स्त्री० टङ्कारे । ख्यातौ ॥ उत्कृष्टसिद्धौ ॥ प्रकृष्टासिद्धि : ॥

प्रसुप्त : । त्रि० निद्रिते ॥ प्रकर्षेण सुप्त : ॥

प्रसू : । स्त्री० अश्वायाम् ॥ जनन्याम् ॥ कन्दल्याम् ॥ वीरुधि । प्रसूते० प्रसूयते वा । पूङ्प्रसवे । सत्सूद्विषिक्विप् ॥

प्रसूका । स्त्री० वाजिन्याम् । वडवायाम् ॥

प्रसूतम् । न० कुसुमे । पुष्पे ॥ त्रि० सञ्जाते ॥ सूते ॥ प्रासविष्ट । पूङ्० । क्त : ॥

प्रसूता । स्त्री० जातसन्तानायाम् । जातापत्यायाम् । प्रजातायाम् ॥ टाप् ॥

प्रसूति : । स्त्री० प्रसवे । उद्भवे ॥ तनये ॥ दुहितरि ॥ स्वायम्भुव मनो : पुत्र्याम् ॥ प्रसवनम् । प्रसूयते वा । पूङ् । क्तिन् ॥ कारणे । प्रकर्षेण सूतिर्जन्म यस्मात ॥

प्रसूतिका । स्त्री० प्रसूतायाम् ॥ प्रासविष्ट । पूङ्० । सत्यर्थे तिल : । स्वार्थे कन् । सूतिकापुन्निवीतीत्वम् ॥

प्रसूतिजनम् । न० दु : खे । पीडामात्रे ॥ प्रसूतिजम् । पश्चान्याम जातायिसिद्ध : ॥

प्रसूनम् । न० फले । पुष्पे ॥ त्रि०

जाते ॥ प्रसूयते । षुञ् चभिषवे । सुञोदीर्घश्चेतिनः ॥ यद्वा । प्र सूयते स्म । षूङ्० । क्त ः। ओदि तश्चेतिनिष्ठानत्वम् ॥ स्वादयो दित : ॥

प्रसूनेषु : । पुं० कन्दर्पे । कामे ॥ प्रसूनानि इषवोयस्य ॥

प्रसृत : । पुं० । अर्द्धाञ्जलौ : निकुब्ज पाणौ । प्रस से० इ० भा० ॥ न० पलद्वये ॥ त्रि० सुप्रसारे । तते ॥ विनीते ॥ वेगिते ॥ निरूपते ॥ प्रकृष्टं सृतमस्य ॥ प्रसरतिस्म । सृ० । गत्यर्थेतिक्त : ॥

प्रसृता । स्त्री० जङ्घायाम् ॥ प्रसर तिस्म० प्रक्षिपते यया । सृ० । गत्यर्थेति० कर्मणिवाक्तः ॥ प्र कृष्टं सृतं गमन मनयावा ॥

प्रसृति : । स्त्री० आकुञ्चितपाणौ ॥ अर्द्धाञ्जलौ । प्रसृते ! प्रह्लाद्स् तिरस्य ।

प्रसृष्ट : । त्रि० प्रेषिते ॥ अनुज्ञा ते ॥

प्रसेक : । पुं० सेचने ॥ च्युतौ ॥ क्षर णे ॥ प्रसेचनम् । षिच० घञ् ॥

प्रसेदिका । स्त्री० क्षुद्रोपवने । वाटी चौ० इ० भा० ॥

प्रसेदिवान् । त्रि० प्रसन्ने ॥ सदेर्भाषा यांसदवसश्रुवःइतिक्वसुः ॥ वसुरादेः न्निटिधातोरितिदित्वम् । भ्रात एकहलमध्यइत्वे त्वाभ्यासलोपौ । व स्वेकाजाद्घसामितीडागम : । उ गित्वान्नुम् । सान्तेतिदीर्घ : ॥

प्रसेव : । पुं० वीणाङ्गे ॥ स्यूते । वस्त्र यणादिनिर्मिते॰थैला॰इतिख्याते ॥ सूत्रग्रथितभाण्डविशेषे। थोकडा० इ०गौड़०भा० ॥ दृतौ ॥ प्रसीव्य तेस्म । षिवु० । अकर्त्तरिचेतिघ ञ् ॥

प्रसेवक : । पुं० वीणाप्रान्तवक्रकाष्ठे । दण्डाध : शब्दगाम्भीर्यार्थकाष्ठभा ण्डे । ० वीणाञ्चितालावुफले । ० आकुम्भे ॥ सूत्रनिर्मितभाण्डे । थी तकार्टे । स्यूते । थोकडा०इ०गौड़ भाषा० ॥ प्रसीव्यते । षिवुसेवने । क्वुन् ॥

प्रस्कण्व : । पुं० ऋषिविशेषे ॥ प्रस्कण्व हरिश्चन्द्राद्दषीइतिसाधु : ॥

प्रस्कन्दनम् । न० विरेके ॥

प्रस्कन्नम् । त्रि० अपगते ॥ पतिते ॥ प्रकर्षेणस्कन्न : ॥

प्रस्तर : । पुं० पाषाणे । ग्रावणि । प स्तर०इ०भा० ॥ मणौ ॥ प्रस्तृणा ति । स्तृञ्० । पचाद्यच् ॥ दर्भमु ष्टौ ०इ०कर्ममीमांसका :॥ पल्लवा दीभिर्विरचितेतल्पे ॥ प्रस्तारे ॥

प्रस्तरिणी । स्त्री०गोलोमिकायाम् ॥

प्रस्तार : । पुं० पत्रनिर्मिततल्पे ॥ ब- धरने ॥ शय्यायाम् ॥ छन्द : प्रभृ

तोनांप्रभेदस्थापकेसङ्केतविशेषे ॥

प्रस्तीर्यते । स्तृ ञ० । प्रेस्त्रोऽयज्ञे इतिघञ् । भावेवा ॥

प्रस्तारितः। त्रि० प्रकीर्णे । विस्तीर्णे ॥

प्रस्तार्य्यर्म । न० नेत्ररोगभेदे ॥ तस्यलक्षणम् । प्रस्तारिर्म तनुस्तीर्णश्यावरक्तनिभंसिते । इतिमाधवकरः ॥ अपिच । समन्तादिस्तृतः श्यावोरक्तोवामांससञ्चयः । सन्निपातेनदोषाणांप्रस्तार्यर्म तदुच्यते ॥ तस्यौषधं यथा । कतकस्यफलंशङ्खं-त्र्यूषणंसैन्धवान्वितम् । फेनोरसाञ्जनंक्षौद्रं विडङ्गस्समनः शिला ॥ कुक्कुटाण्डकपालानिवर्तिरेषाव्यपोहति । तिमिरंपटलंकाचमर्म शुक्लं तथैवच ॥ कण्डूक्लेदार्बुदंहन्तिमलमाशुसुखावतीति ॥

प्रस्तावः । पुं० प्रसङ्गे ॥ प्रकरणे ॥ अवसरे ॥ प्रस्तवनम् । ष्टुञ० । प्रेद्रुस्तुस्रुवइतिघञ् ॥ पाञ्चभक्तिकस्यसाम्नोद्वितीयभक्तौ ॥ प्रारम्भे ॥

प्रस्तावना । स्त्री० आरम्भे ॥ प्रतिपाद्यशार्थस्यकथायाम् । सूत्रधारेणसहनटोविदूषकाणांपरस्परविचित्रभाषणे । तस्याउपायया । नटीविदूषकोवापिपारिपार्श्विकएववा । सूत्रधारेणसहिताः संलापंयत्रकुर्वते । चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखंतत्तुविज्ञेयंनाम्नाप्रस्तावनापिसेतिसाहित्यदर्पणः ॥

प्रस्तिरः । पुं० पल्लवादिरचितशय्यायाम् ॥

प्रस्तीतः । त्रि० ⎫ ध्वनिते ॥
प्रस्तीमः । त्रि० ⎭ संहते ॥ स्त्यैष्ट्यैशब्दसङ्घातयोः । क्तः । आत्वेकृते० संयोगादेरित्यस्यासिद्धत्वात्० पूर्वं० स्त्यः प्रपूर्वस्येतिसम्प्रसारणे पूर्वरूपेहलइतिदीर्घः । संयोगादिलक्षणस्यासिद्धत्वाच्छ्वयोरित्यनत्वम् । प्रस्त्योऽन्यतरस्यामिति०निष्ठातस्यमादेशेप्रस्तीमः ॥

प्रस्तुतः । त्रि० उपस्थिते ॥ प्रतिपन्ने ॥ प्रकरणप्राप्ते ॥ आधारभिन्ने ॥ प्रासङ्गिके ॥ निष्पन्ने ॥ प्रकार्षस्तुतिवृत्ते ॥

प्रस्तुतिः । स्त्री० दत्यसम्मतौ ॥

प्रस्तृतः । त्रि० आस्तरिते ॥

प्रस्तोता । पुं० ऋत्विग्विशेषे ॥ प्रस्तौति । ष्टुञ० । बहुलमन्यत्रापीतितृन् ॥

प्रस्तोभः । पुं० परिहासे ॥ प्रोत्साहे ॥

प्रस्तोभितः । त्रि० उपहसिते ॥

प्रस्थः । पुं० न० चतुष्कुडवपरिमाणे मानभेदे ॥ चत्वारः कुडवाः प्रस्थः ॥ आढकचतुर्थभागे । पर्वतैकदेशे । सानौ ॥ उन्नितवस्तुनि । द्विशरावपरिमाणे ॥ इ०वै०प० ।

वमने च विरेके च तथा शोणितमोक्षणे । अर्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥ अर्द्धत्रयोदशपलं सार्द्धषट्कम् ॥ विस्तारे ॥ यथा । दीर्घप्रस्थे समानश्चैव कुर्यान्मन्दिरं बुधस्तु ॥ प्रकर्षेण तिष्ठति । स्था० । आतश्चोपसर्गे इति कः । प्रतिष्ठन्तेऽस्मिन्ननेन वा । घञर्थे कः वा । प्रकर्षस्थितिविशिष्टे ॥

प्रस्थपुष्पः । पुं० क्षुद्रपत्रतुलस्याम् । मरुबके । मरुवा० इ० भा० ॥ प्रस्थे सानौ पुष्पति । पुष्प० । अच् ॥

प्रस्थानम् । न० विजिगीषोः प्रयाणे । यात्रायाम् । प्रव्रज्यायाम् । अभिनिर्याणे ॥ गमनमात्रे ॥ प्रपूर्वात् तिष्ठतेर्ल्युट् ॥

प्रस्थानविघ्नः । पुं० गमनव्याघाते ॥

प्रस्थापितः । त्रि० प्रतिष्ठिते । प्रेरिते । पठाया० इ० भा० ॥ प्रकर्षेण स्थापिते ॥

प्रस्थायी । त्रि० प्रस्थास्यति तस्मिन् ॥ स्था० । प्रे स्थश्चेति णिनिः ॥

प्रस्थिका । स्त्री० अम्बष्ठायाम् ॥

प्रस्थितः । त्रि० कृतप्रस्थाने । प्रस्था० । क्तः । यतिस्ततोतौम्वम् । निर्गच्छति ॥

प्रस्नः । पुं० स्नानार्थघटाख्यविशेषे ॥ प्रस्नान्त्यस्मिन् । स्ना० । घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् ॥

प्रस्फुटः । त्रि० प्रफुल्ले । प्रकर्षेण स्फुटः ॥

प्रस्फुटितः । त्रि० विकसिते । प्रकर्षेण स्फुटितः ॥

प्रस्फुरितः । त्रि० प्रज्वलिते ॥ प्रोल्लसिते ॥

प्रस्फोटनम् । न० शूर्पे । ताडने ॥ विकाशने ॥ प्रस्फोट्यतेऽनेन । स्फुट् । करणे ल्युट् । पचने ॥

प्रस्रवः । पुं० प्रवाहे ॥ स्रवणं स्रवः । स्रु गतौ ॥ भावेऽप् । प्रकृष्टः स्रवः ॥ क्षीरादिद्रवद्रव्यस्य क्षरणे ॥

प्रस्रवणः । पुं० किष्किन्धासमीपवर्तिनि गिरिविशेषे ॥ माल्यवत्पर्वते ॥ स्वेदे ॥ न० पर्वतस्थानभेदे स्वयमुच्छलितौ० पर्वतमूलाद्बहिः स्रवज्जले वा । उत्से । झर्ना० इ० भा० ॥ तज्जलगुणा यथा । प्रस्रवणजलं स्वच्छं लघु मधुरं रोचनं स्वादीपनकृदिति राजनिर्घण्टः ॥ स्रवन्त्यापोऽस्मात् । स्रु० । भीमादयो० इत्यपादाने ल्युट् । प्रकर्षेण स्रवणे ।

प्रस्रावः । पुं० मूत्रे । पिसाब० इ० भा० ॥ प्रस्रूयते । स्रु प्रस्रावे । प्रे द्रुस्तुस्रुवः इति घञ् ॥

प्रस्नुतः । त्रि० वहति ॥

प्रस्वानः । पुं० उच्चैःशब्दे । प्रकृष्टः स्वानः ॥

प्रस्वेदः । पुं० अतिशयघर्मे । तरी

यथा । चन्दनंकुङ्कुमंमांसीकर्पूरोशालिपत्रिका । जातीकक्कोलपूगानांलवङ्गस्यफलानिच ॥ अगुरुश्रीरकाःसर्वे : कुष्ठंतगरनालिका गोरोचनाप्रियङ्गुश्च चोलंमदनकांचनम् ॥ सरल : सप्तपर्णसलाचाचामलकीतथा । कर्पूरकःपद्मकश्चएतैर्हविःप्रसाधितम् । पुरुषेदमनाठौगैर्व्यथाशङ्कुलप्रहरंपरम् । पुमान्युवास्याच्छुकान्वः स्त्रीणांचाप्यनेव स्पष्टम् : ॥ स्त्रीवतगच्छतेकद्दस्या पितभतेसुतम् ॥ इतिगारुडे १८८ अध्याय : ॥

प्रहल. । त्रि० चितते ॥ क्षुण्णे ॥ प्रहन्यतेस्म । हन० । क्त : ॥ प्रकर्षेणहिंसिते० गते० च ॥

प्रहर । पुं० दिवसस्यचतुर्थांशे । अहोरात्रस्याष्टमभागैकभागे । यामे । पहर० इ० भा० ॥ प्रहियतेंढक्कादिरस्मिन् । हृञ् ० । पुंसिसंज्ञायामितिघ. ॥

प्रहरकुटवी । स्त्री० कुटुम्बिनीवृपे ।

प्रहरणम् । न० अस्त्रमात्रे । आयुधे ॥ प्रह्रियतेऽनेन । हृञ् ० । करणेति ल्युट् ॥ अस्त्रौप्रक्षेपेइतिकर्मसीमां सका : ॥ युद्धे ॥ प्रहारे ॥ स गये ॥ ऽ. ॥

प्रहरकलिका । स्त्री० शर्करीप्रभेदे । ननभनलगितिप्रहरणकलिका । यथा । व्यथयतिकुसुमप्रहरणकलिका प्रमदवनभवातवधनुषिततता । विरहविपदिमेशरणमिहततो० मधुमथनगुरुस्मरणमविरतम् ॥

प्रहरी । त्रि० प्रहरवति । पहरेवारी० इ० भा० ॥

प्रहर्त्ता । त्रि० प्रहारकर्त्तरि । मारके ॥ प्रहरति । प्रहृतृच् ॥

प्रहर्ष : । पुं० प्रमोदे ॥ प्रकृष्टोहर्ष : ॥

प्रहर्षण : । पुं० एकदेशे । बुधग्रहे ॥ त्रि० हर्षविशिष्टे ॥ हर्षकारके ॥

प्रहर्षणी । स्त्री० अतिजगतीप्रभेदे ॥ तस्यालक्षणंतथा । म्नौज्रौगस्त्रिदशयति : प्रहर्षणीयम् । अपिच । व्याघ्राभिमर्नषरगा : प्रहर्षणीयम् । इ० ॥ लक्ष्यंयथा । गोपीनामधरसुधारसस्यपानैरुत्तुङ्गस्तनकलशोपगूहनैश्च । आश्चर्यैरपिरतिविभ्रमैर्मुरारे : संसारेमतिरभवत्प्रहर्षणीह ॥ हरिद्रायाम् ॥

प्रहसनम् । प्रहासे ॥ आक्षेपे ॥ रूपकान्तरे ॥ हसे० । ल्युट् ॥

प्रहसन्ती । स्त्री० यूथ्याम् ॥ वासन्त्याम् ॥ प्रहसति । हसेहसने । लट : शतृ । उगित्वान्ङीप् । शप्श्यनोर्नित्यमिति नुम् ॥ प्रकर्षेणहसन्त्याम् ॥

प्रहस्त : । पुं० चपेटे । प्रतले ॥ प्रसृतोहस्त : । प्रादयोगतेतिसमास : ॥ रावणस्यसेनापतौ ॥

प्रहाण. । पुं० त्यागे ॥ कल्पद्रु० गल्ल

द्दीर्घ : । तथाच॰ उमापतिरितिक वेर्नामाचनिगूढम् । प्रहेलिकायाम् नेयार्थत्वदूरान्वयादिमदूषणमिति ज्ञेयम् ॥ प्रहेलयति॰ अभिप्रायंसूच ति । हिलभावकरणे । क्त न्शिल्पि संज्ञयोरितिक्तन् ॥

प्रह्लन्न : । त्रि॰ हृष्टे । प्रमुदिते । प्री ते । प्रह्लादितेस्म । ह्लादीसुखे च क्त : । रदाभ्यामितिनत्वम् । ह्लादो निष्ठायामितिह्रस्व : ॥

प्रह्लाद: । पुं॰ निनदे । शब्दे । हर्षे । प्रमो दे ॥ प्रह्लादे । परमभागवतेहिरण्य कशिपो : पुत्रे ॥ प्रकर्षेणाह्लादय- ति॰ आनन्दयति॰ परमसात्विकत्वे नसर्वान्॰ इति प्रह्लादोदैत्यानामध्ये भगव तोविभूति : ॥

प्रह्व : । त्रि॰ प्रवणे । नम्रे । नते । नम नशीले ॥ अनुकूले । प्रह्वयति । ह्वे ञ्स्पर्द्धायांशब्दे च । कविधौसर्व त्रप्रसारणिभ्योडइतिड : ॥ प्रह्वयतेऽ सौ । ह्वे ञ् । सर्वनिघृष्वेतिसा धु : । आकारवकारयोर्लोप : । च बाप्तेर्वा । आसक्तौ । शिरसानम्रे ॥ भवति । यथा । तदाप्रह्वा:सर्वे कार्येत्रिपानध्यन्तुमेशिवे॰ इतिदेवीभा गवतम् ।

प्रह्वत्वम् । न॰ शिरसानतौ ॥

प्रह्वीभूत: । त्रि॰ प्रणते । शिरसानम्रे । नमस्कृतवति ॥

प्रांशु : । त्रि॰ उच्चे । उन्नते । तुङ्गे ॥ प्रकृष्टांशवोऽस्य । जगतत्रयंक्रम मार्णेभगवतिवामने ॥ तोयेतुपति तेहस्तेवामनोभूद्वामन :। सर्वदेव- मयंरूपंदर्शयामासवैविभु : ॥ भू: पादो॰ द्यौ : शिरश्चास्यचन्द्रादित्यौ चचक्षुषी ॥ इत्यादिविश्वरूपंदर्शयि त्वा॰ तस्यविक्रमतोभूमि॰ चन्द्रादि त्यौस्तनान्तरे । नभ : प्रक्रममाणस्य नाभ्यान्तौसमवस्थितौ ॥ द्वितमाक्र ममाणस्यजानुमूलेव्यवस्थिताविति प्रांशुत्वंदर्शितं॰ म॰ पं॰ ॥

प्राकरणिक : । त्रि॰ प्रकरणागते ॥

प्राकाशिक : । पुं॰ विट्गे ॥ मायान- र्तके ॥ परदारोपजीविनि ॥ प्राका यति । कणहिंसायाम् । प्राङ्निर्पाण काय इतिनिपातनम् ॥

प्राकाम्यम् । न॰ महादेवस्याष्टविधैश्व र्यान्तर्गतैश्वर्यविशेषे ॥ स्वच्छन्दानु मतौ । अवसर्गे । स्वाच्छन्द्यानुमन ने॰ ॥ प्राकाम्यमिच्छानभिघात : । यतोभूमावुन्मज्जति॰ निमज्जतिच॰ यथोदके ॥ प्रकामस्यभाव: । ष्यञ् ॥

प्राकार : । पुं॰ वरणे ॥ साले । व- प्रोवर्यन्यचवा॰ इष्टकादिरचितवेष्ट ने ॥ अस्यपरिमाणं यथा । ऊर्द्ध विंशतिहस्तेभ्योनैवकुर्याद्गृहंगृही । ऊर्द्ध विंशतिहस्तेभ्य : प्राकारंनश्च भयदम् ॥ तस्यद्वारमानम् । प्रस्थेह

प्राक्तनिचम् । न० खदेशव्यवहितदे शावस्थितेराजनि ॥

प्राक्तनचक्षु: । पुं० एकविषयाभिनिवे शिनिनृपादौ ॥

प्राकृतिक : । पुं० वन्धविशेषे ॥ सच-प्रकृतावात्मज्ञानात्-येप्रकृतिमुपा सतेतेषांभवति । योगायुपुराणे-प्र-कृतिलयादिरुच्यते । पूर्णशतसह-स्रन्तुतिष्ठन्त्यव्यक्तचिन्तकाइति ॥ त्रि० प्रकृतिविकारे । प्रकृतिसम्ब न्धिनि ॥

प्राक्कूल : । त्रि० प्रागग्रे ॥

प्राक्तन : । त्रि० प्राग्भवे ॥ कालवा-चिभ्योऽव्ययात्ट्युट्युलौ ॥

प्राक्तनकर्म । न० अदृष्टे । भाग्ये ॥ पुराकृतकार्ये ॥

प्राक्फल : । पुं० पनसे ॥

प्राक्फल्गुनी । स्त्री० पूर्वफल्गुन्या-म् ॥

प्राक्फल्गुनीभव : । प्राक्फाल्गुन : । प्राक्फाल्गुनेय : । } पुं० बृहस्पतौ । जीवे । त्रिव

गिखण्डिजे ॥ तीक्ष्णतायाम् । प्र-खरत्वे ॥

प्रागभाव : । पुं० कार्यस्योत्पत्तेः पूर्व वर्त्तिनि-अभावविशेषे ॥ सच-अ-नादि , सान्तः । आकाशादावति-व्याप्तिवारणायसान्तइति, घटादाव-तिव्याप्तिवारणायानादिरितिताकिं काः ॥ विद्यमानस्येवघटस्यमृत्पिण्डे प्यभाव : प्रागभाव : आविर्भावज नकइतिसत्कार्य्यवादिन : ॥

प्रागल्भ्यम् । न० प्रगल्भतायाम् । प्रतिभातिशये ॥ यथा । प्रागल्भ्य हीनस्यनरस्यविद्या-शस्त्रंयथाकापु-रुषस्यहस्ते । मन्त्रिमुख्याद्यतिशरी रेष्वस्थटारावृत्दप्रगल्भा: ॥ स्त्रीणामयत्नजेभावविशेषे ॥ य० । प्रागल्भ्यौदार्यमाधुर्यशोभाधीरत्व-कान्तय: । दीप्तिश्च-यत्नजा-भाव-हावहेलास्त्रयोऽङ्गजा: ॥ इ० ॥ प्रग ल्भस्यभाव : । ष्यञ् । प्रागल्भ्यप राभिभवसामर्थ्यमितिगीताभाष्य-टीका ॥

प्रागुदीची । स्त्री० पूर्वोत्तरदिशि ॥

प्रागयनम् । न० अयतोनिःसरणे ॥

प्राग्ज्योतिष : । पुं० कामरूपे । नर-कासुरपुरे । अत्रैवस्थितिःब्रह्मा प्रा ङ्नक्षत्र ससर्ज ह । तत : प्राक् ज्योतिषाख्येयं पुरीशक्रपुरीसमा ॥

प्राग्भद्रपदा । स्त्री० पूर्वभाद्रपदनक्ष-त्रे ॥

प्राग्भाग : । पुं० पर्वतादेरग्रभागे ॥

प्राग्भार : । पुं० प्राकृतिविशेषे ॥ प-र्वताग्रभागे ॥ तटे ॥

प्राग्रहर : । त्रि० प्रधाने । श्रेष्ठे ॥ प्र कृष्टमग्रम् । प्राग्रं हरति । हरतेरनु द्यमनेच् ॥

प्राग्राटम् । न० घनेदधनि ॥

प्राग्र: । त्रि० परोर । श्रेष्ठे ॥ प्रकृ-ष्टीय: ॥

प्राग्वंश: । पुं० यज्ञागारगृहात्पूर्व गृहे । पत्नीशालाख्ये । हवि: शालाया: पूर्वभागीययजमानादीनांस्थित्यर्थगेहे ॥ प्राक्वति । अस्तु० । कर्त्विगादिनाक्रिन् । प्राग्०वंश: गोमंस्थूणावाऽन ॥ यत्रशालाया:पूर्वपश्चिमस्तम्भयोरधिसेपूर्वपश्चिमायते स्थाठे ॥

प्राघात: । पुं० युद्धे ॥ प्रकृष्टआघातोयस्मिन् ॥

प्राचार: । पुं० घृतादिक्षरणे । चीराते ॥ प्राघरणम् । घृक्षरणदीप्त्यो: । घञ् । उपसर्गस्यघञ्योर्तिदीर्घ: ॥

प्राघुण: । ) पुं० अति-
प्राघुणिक: । ) पुं० थी ॥
प्राघूर्ण: । पुं० ) पुं० अति-
प्राघूर्णिक: । ) थी ॥
प्राङ्क: । ) पुं० मधव-
प्राङ्ग: । ) पुं० वाद्ये ॥

प्राङ्गणम् । न० अङ्गने । चत्वरे । अजिरे । अंगना० आंगन० दू० भा० ॥ सूर्यविदस्तस्तदोषोयथा । अभद्रंसूर्यवेधंप्राङ्गणस्ततथैवचेति ॥ अभिव्यक्तिस्थाने । गृहाद्वहिस्थले ॥ प्रशस्तमङ्गम् । प्रकृष्टमङ्गनम् ॥

प्राङ्न्याय: । पुं० चतुर्दीप्तरान्तर्गतो पत्तरविशेषे ॥ यत्राभियुक्तएवंब्रूयात् । अस्मिन्नर्थेऽनेनाहमभियुक्तस्तत्रचायंव्यवहारमार्गे पराजित इति । उक्तासकात्त्यायनेन । आचारेणावसन्नोऽपिपुनर्लेखयतेयदि । सोभिधेयोजित: पूर्वंप्राङ्न्यायस्तुसउच्यते ॥ इ० ॥

प्राक् । अ० पूर्वदिशि ॥ पूर्वदेशे ॥ पूर्वकाले ॥ प्राचिदेशे० । प्राचोदेशात्० प्राग्देशोवा । दिक्शब्देभ्य: सप्तमीपञ्चमीप्रथमाभ्योदिग्देशकालेष्वस्तातिरिति० अस्ताति: । अञ्चेर्लुक् । पूर्वदिशि० कालेच ॥ इस्वस्तान्नभवति० पूर्वस्मिन्देशेवसतीति । नैषदोष: । देशविशेषणमेतत् । दू० भाष्यम् ॥ योऽस्मिदेशेनविशेष्यमाणोदेशोभवतितत: प्रत्ययो० नविशेषणादित्यर्थ: ॥ पूर्वस्मिन् ॥ अवान्तरे ॥ अये ॥ प्रभाते ॥ अतीते ॥

प्राञ्च् । त्रि० पूर्वदिशि ॥ पूर्वदेशे ॥ पूर्वकाले ॥ प्रकर्षेणाञ्चति । सुप्युपपदेअञ्चः कर्त्विगादिनाक्विन् । अनिदितामितिनलोप: । उगिदचामितिनुम् । संयोगान्तस्यलोप: । नुमोनस्य० क्विन्प्रत्ययस्येतिकुत्वेनङकार: ॥

प्राचिका । स्त्री० दंशे । डांस० इ० भा० ॥ पक्षिविशेषे ॥ प्राञ्चति । अञ्चु० । क्वुन् । इत्वम् ॥

प्राची । स्त्री० पूर्व्वस्यांदिशि । पूज्यपूजकयोरर्थे ॥ यत्रैवभानुस्तुवियच्छ देतिप्राचीतितांवेदविदोवदन्ति । तथा पुरः पूजकपूज्ययोश्च सदाङ्गमञ्चाः प्रपद्यन्तितस्यां ॥ प्राग्वस्यांऽञ्चशब्दः । प्रथमसञ्चतिया प्रीतिसूर्यम् । प्र+अञ्चु+ । ऋत्विगादिनाक्विन् । उगितश्चेतिङीप् ॥

प्राचीनम् । न० वृत्तौ । प्राचीरे ॥ त्रि० प्राग्भवे । पूर्वदिग्देशकालभवे ॥ प्राचि । प्राचीन । विभाषाऽञ्चेरदिक् स्त्रियामिति० खः ॥

प्राचीनपनसः । पुं० बिल्वे । गौडरीतक्याम् ॥

प्राचीनयोग्यः । पुं० वेदप्रसिद्धे सत्ययोग्याख्यमुनौ ॥ प्राचीनयोगस्य गोत्रापत्यम् । गर्गादित्वाद्यञ् । बहुत्वे प्राचीनयोगाः ॥

प्राचीनवंशः । पुं० कर्ममीमांसाप्रसिद्धे । मण्डपविशेषे ; यस्य मण्डपविशेषस्योपरिवंशाः प्रागग्रा भवन्ति सप्राचीनवंशइत्युच्यते ॥

प्राचीनबर्हिः । पुं० इन्द्रे ॥ पृथोः प्रपौत्रे० प्रचेतसांपितरि० राजर्षिविशेषे ॥ प्राचीनाग्राः कुशास्तस्यपृथिव्यांविश्रुतामुने । प्राचीनबर्हिरभवत् ख्यातो भुविमहाबलः ॥



प्राचीनशालः । पुं० वेदप्रसिद्धेमुनिविशेषे । औपमन्यवे ॥

प्राचीना । स्त्री० वनतिक्तिकायाम् । पाठायाम् । शाकनादि० द्र० गौ० मा० ॥ मातुल्याम् । रास्नायाम् ॥ प्राचिभवा । विभाषाञ्चेरदिगिति खः । टाप् । प्राग्भवायाम् ॥

प्राचीनामलकम् । न० वारिपद्मे । पानीयामलके ॥ प्राचीनामलकं दोषत्रयजिद्गरघाति च ॥

प्राचीनावीतम् । न० अपसव्ये । आक्षाद्वीवामकरे च दक्षिणांसे सति० दक्षिणस्कन्धापितयज्ञसूत्रे । विपरीतधृतयज्ञोपवीते ॥ तथाहि । सव्यंबाहुंसमुद्धृत्यदक्षिणे तुधृतंद्विजाः । प्राचीनावीतमित्युक्तं पित्र्येकर्मणियोजयेत् ॥ प्राचीनंप्रदक्षिणमावीयतेस्म । आङ्० । व्येञ्संवरणे । यजादित्वात् सम्प्रसारणम् । क्तः ॥ यद्वा । प्राचीनं प्रदक्षिणमाकलितम० आयैतिस्माया गम्यर्थइतिक्तः ॥

प्राचीनावीती । पुं० अपसव्यकरिणि ॥ वामपाणावुद्धृते दक्षिणस्कन्धस्थिते वामकक्षावलम्बे यज्ञसूत्रे वस्त्रे वा प्राचीनावीतीद्विजोभण्यते ॥ प्राचीनावीतमस्यास्ति । अतइनिठनाविति इनिः ॥

प्राचीपतिः । पुं० इन्द्रे ॥

प्राचीरम् । न० प्रान्ततोवृतौ । ग्रामादेरन्ते कण्टकादिवेष्टने ॥ दुर्गार्थं नगरादेः प्रान्तभागेवेणुकण्टकवेचादिमयीवृत्तिर्वेष्टनिर्कोतिकश्चिद्भरतः ॥ मृन्मय्यामपिवृतौ प्राचीरमुपचारादितिरस्ताम्यादयः ॥ प्राचीयते । प्राङ्पूर्वश्चिञ्चयने । शुसिधिमीनांदीर्घश्चेतिकन्दीर्घौ ॥

प्राचेतसः । पुं० प्राचीनबर्हिराजपुत्रेषु ॥ सान्तनित्यबहुवचनान्तोऽयम् ॥

प्राचेतसः । पुं० वाल्मीकिमुनौ । रामायणप्रवक्तरि ॥ प्रचेतसोऽपत्यम् । अण् ॥

प्राच्यः । पुं० शरावत्यानद्यामर्यादायाः प्रागदक्षिणदेशे ॥ देशान्तरे ॥ यथा । अङ्गावङ्गामद्गुरकाअन्तर्गिरिबहिर्गिराः । ततः प्रवङ्गामातङ्गामलयामल्लवर्त्तकाः ॥ सुह्मोत्तराः प्रविजयाभार्गवाङ्गेयमालवाः । प्राग्ज्योतिषाश्च पुण्ड्राश्च विदेहास्ताम्रलिप्तकाः ॥ साल्वामागधगोनर्दाः प्राच्याजनपदाः स्मृताः ॥ इ० मत्स्यपुराणम् ॥ त्रि० पूर्वदेशीये ॥ प्राच्यांभवः । द्युप्रागितियत् ॥

प्राट् । पुं० प्रश्नकर्त्तरि ॥

प्राजकः । पुं० सारथौ । सूते ॥

प्राजनम् । न० तोदने । वृषभादिप्रेरणदण्डे ॥ प्रवीयतेनेन । अज० । ल्युट् । वायावितिवीन ॥

प्राजापत्यः । पुं० प्रयागे ॥ जैनराजभेदे । त्रिपृष्ठे ॥ प्रजापतेरपत्ये । देवे ॥ असुरे ॥ विवाहविशेषे । का ये ॥ सहोभौचरतांधर्ममितिवाचानुभाष्यच । कन्याप्रदानमभ्यर्च्य प्राजापत्योविधिः स्मृतः ॥ पञ्चमवत्सरे ॥ नीरोगाश्चनिराबाधामानवाविगतक्लिषः । बहुक्षीरास्तथा गावः प्राजापत्ये वरानने ॥ पु० ॥ देवसर्गान्तरे ॥ प्रजापतेरपत्यम् । प्रजापतिर्देवताऽस्य । प्रजापतेरिदमर्थेवा । दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ॥ न० तपसि ॥ पुं० न० द्वादशाहसाध्ये व्रतविशेषे ॥ यथा० त्र्यहंप्रातस्त्र्यहंसायंत्र्यहमद्यादयाचितम् । त्र्यहंपरञ्चनाश्नीयात्प्राजापत्यंचरन्द्विजः ॥ अत्रग्रासपरिमाणमुक्तोयामाह पराशरः । सायंद्वाविंशतिर्ग्रासाः प्रातः षड्विंशतिस्तथा । अयाचितेचतुर्विंशः परंचानशनंस्मृतम् ॥ कुक्कुटाण्डप्रमाणश्चयावान्वाप्रविशेन्मुखम् । एतंग्रासंविजानीयाच्छुद्ध्यर्थंकायशोधनम् ॥ हविष्यञ्चान्नमश्नीयाद्यथाराचौतथादिवा । त्रींस्त्रीण्यहानिशास्त्रीयान्ग्रासान्षड्संख्याकृतान्यथा ॥ अयाचितं

तथैवाद्यादुपवासस्त्व्यहंभवेदिति ॥
पुं॰ रोहिणीनक्षत्रे । त्रि॰ प्रजा
पतिसम्बन्धिनि ॥

प्राजापत्या । स्त्री॰ यजुर्वेदीयोपाख्या
नप्रसिद्धायाम् । संन्यासग्रहणपूर्व
कर्त्तव्यप्रजापतिदेवताकसर्वस्वदक्षि
णायामिष्टौ ॥ यथा । प्राजापत्यांनिरू
प्येष्टिं सर्ववेदसदक्षिणाम् । आत्मन्य
ग्नीन्समारोप्यब्राह्मणः प्रव्रजेद्गृ
हादिति ॥

प्राजिता । पुं॰ सारथौ । यन्तरि ।
सूते ॥ प्राजति । अज॰ । तृच् ।
अजेर्भाविनत्यर्थीवा । वलादा-
वार्द्धधातुकेवेष्यतइतिवीभावेन ॥

प्राज्ञ : । पुं॰ कल्किदेवस्य ज्येष्ठभ्रात
रि ॥ परमात्मनि ॥ विदितवेदत
त्त्वप्रकरणार्थे॰ विवेकिनि ॥ प्रज्ञाव
धिनाशिस्वरूपानुभवरूपायस्यसप्रज्ञः
। प्रज्ञएवप्राज्ञः । प्रज्ञायण् ॥ शुकः
विशेषे । राजशुके । शतपत्रे । रा-
जसूया॰ इ॰ भा॰ ॥ कारणशरी
राऽभिमानिनिजीवे । मलिनसत्त्वप्र
धानाविद्योपाधिकजीवे ॥ भूतभविष्य
तिचविषयेज्ञातृत्वंतथासर्वस्मिन्नपि
वर्त्तमानेविषयेज्ञातृत्वमस्यैवेतिप्राय
शेनज्ञानातीति॰ प्रज्ञः । सएवप्राज्ञः
॥ सुषुप्तोपिविभूतपूर्वगत्याप्राज्ञउ
च्यते ॥ प्राज्ञंमन्य : त्रि॰ प-
ण्डिते ॥ पण्डितंमन्यमानःसर्वमूर्ख

दोषाख्यकोवलम् । तस्मान्मूर्खसह
स्रेषुप्राज्ञएकोविशिष्यतइतिविष्णु
शर्मा ॥ दृष्टे ॥

प्राज्ञता । स्त्री॰ विदत्त्वे ॥ यथा । पदं
पदार्थमेकंवाव्याहरेत्सुभाषितम् ।
मूर्खोपिप्राज्ञतांयातिमद्भिः सा
गरोयथा प्रति ॥

प्राज्ञमानी । त्रि॰ पण्डिताभिमानिनि ॥

प्राज्ञा । स्त्री॰ बुद्धिमत्याम् । धीमत्या
म् ॥ प्रज्ञाऽस्त्यस्याः । प्रज्ञाश्रद्धार्चा
भ्योणः । टाप् ॥

प्राज्ञी । स्त्री॰ सूर्यपत्न्याम् । प्राज्ञा
याम् ॥ प्रजानाति । ज्ञा॰ भावबोध
सर्गस्तिक : ॥ प्र॰ अण् ॥

प्राज्य: । त्रि॰ प्रचुरे । प्रभूते । पदभ्वे
॥ प्रवीयते । अज॰ ण्यत् । वा॰वी
भावेन ॥ प्राज्यसम्पन्ने ॥ प्रभूतमा
ज्यंयस्मात् ॥

प्राञ्जल:। त्रि॰ सरले ॥

प्राञ्जलि : । त्रि॰ बद्धाञ्जलौ । युतम
स्पुटकरपुटके ॥ अभिनवे ॥
प्रकृष्टोन्युब्जीकृतोऽञ्जलिर्येन॰यस्य
वा । प्रगत : अञ्जलिर्येनवा ॥

प्राड्विवाक:।पुं॰ अक्षदर्शके । विचारा
र्थराजनियुक्तपुरुषे । व्यवहारद्रष्टरि
: ऋणादानादीन्यष्टादशविवादपदा
निव्यवहारा : तेषांनिर्णेतरि । अ-
म॰ इति भरतसेनीभाषा ॥ प्रश्नने
। प्रच्छनेमायाम् । क्विप्विमृच्छि

समानश्चोदानव्यानौचवायव : । श रीरस्थास्त्वमे॰पूत्वमर : । इमेप्राणा दयपञ्चवायवः शरीरेतिष्ठन्तितेचनि यतस्थानस्थाः । यदाहु. । हृदिप्राणो गुदेपान : समानोनाभिसंस्थित : । उदान : कण्ठदेशेस्याव्यान : सर्व- शरीरगइति ॥ तेषांव्यापारास्- यथा । अन्नप्रवेशनं॰मूत्राद्युत्सर्गो ऽन्नविपाचनम् । भाषणादि॰निमे षादि॰तद्व्यापारा : क्रमादमो ॥ इति ॥

प्राणक : । पुं॰ सत्त्वजातीये । प्राणि मात्रे ॥ जीवकद्रुमे । चोले । अ- न्नविशेषे ॥ चोणि ॥

प्राणथः । पुं॰ वायौ ॥ तीर्थे ॥ प्रजा पतौ ॥ बलवति ॥ प्राणिति , घन॰ । मीत्थपिशगमियमिजीविप्राणि भ्योऽथ : ॥

प्राणद : । पुं॰ जीवकद्रुमे ॥ भगवति ॥ न॰ जले ॥ रक्ते ॥ प्राणान्ददा ति॰चेष्टयति । प्राणान्कालात्मना दाति॰खण्डयतिवा । प्राणान्दायय ति॰शोधयतिवा । प्राणान्दातिलु- नातिवा । आतइतिक : ॥

प्राणदा । स्त्री॰ हरीतक्याम् ॥ ऋद्धि- द्ये ॥ टाप् ॥

प्राणधारणा । स्त्री॰ असूनांधृत्यर्थमा हारे ॥ यथा । अयंप्रदायमूतेस्य : सीतावयवर्त्तिनो । तयोरप्यददा दूध्याचोमधुमांसस्वसम्भूतम् ॥ तयो स्तृप्तिमयोत्पादावीरयो : कृतमीच यो : । विविधव्यानकोपश्चाश्वकं साप्राणधारणामित्यार्थेरामायणे॰ अयोध्यावर्णनेदृष्टम् ॥

प्राणनम् । न॰ जीवने ॥ पुं॰ गले ॥ त्रि॰ आप्यायनकरे ॥

प्राणनाथ : । पुं॰ पत्यौ ॥ यमे । त्रि॰ प्राणाधिपे ॥ प्राणानांनाथः ॥

प्राणन्त : । पुं॰ रसाञ्जने ॥ वायौ ॥ प्राणात् । यन॰ । तृशिगन्दिजीवि प्राणिभ्य : पिदाशिषीतिझाष् ॥

प्राणन्ती । स्त्री॰ हिक्कायाम् ॥ क्षुति । छिक्कायाम् ॥ पित्त्वान्ङीप् ॥

प्राणपण : । पुं॰ अतिप्रयासे ॥ प्राणः पणोयस्मिन् ॥

प्राणप्रतिष्ठा । स्त्री॰ प्रतिमायांजीवन्या से । प्राणानांप्रतिष्ठा ॥

प्राणप्रद : । त्रि॰ प्राणदातरि ॥

प्राणप्रदा । स्त्री॰ ऋद्धिनामकौषधौ ॥ प्राणंप्रददाति । डुदाञ्॰ । क : ॥

प्राणभास्वान् । पुं॰ अब्धौ । समुद्रे ॥

प्राणभृत् । पुं॰ जीवे ॥ प्राणान्बिभ र्ति । डुभृञ्॰ । क्विप् । तुक् ॥

प्राणमय : । पुं॰ द्वितीयकोषे । कर्मे न्द्रियै : सहितेप्राणादिपञ्चके । क्रि याशक्तिमतिकार्यरूपे । अस्यक्रिया त्मकत्वेनरजोगुणकार्यत्वम् ॥ स्थूल- समष्टिकारणीभूतेऽपञ्चीकृतपंचमहा

भूततत्कार्यात्मकोहिरण्यगर्भसूत्रेऽमूर्तिराधौसूक्ष्मसमष्टौ ॥ पूर्वोद्दिष्टे वर्णयच्छन्नघाथार्याय : प्रवर्तक : । वायु : प्राणमयोनासावात्माचेतन्य वर्ज्जनात् ॥

प्राणरोध : । पुं० नरकान्तरे ॥

प्राणलय : । पुं० मरणे ॥ परमात्मनि । प्राणानांलये ॥ प्राणलयेजाते०स द्रूपविकल्पावपिमनसोनाशासेन वीनीभवतएव० प्राणमनसोर्दुग्धाम्बुवन्मिलितत्वात् । तदुक्तम् । दुग्धाम्बुवत्संमिलितावुभौतौतु ल्यक्रियौमानसमारुतौतौ । यत्रैव वायुस्तत्रमनःप्रवृत्तिर्यत्रमनस्तत्र प्रवृत्तिरिति ॥ प्राणलयेसद्रूपविकल्पलयेचसमाधिर्भवति ॥

प्राणवान् । पुं० जीवे ॥ प्राणोस्यास्य स्मिन्वा । मतुप् ॥

प्राणवित् । पुं० हिरण्यगर्भादिषु ॥

प्राणसंयम : । पुं० प्राणायामे ॥

प्राणसमा । स्त्री० पत्न्याम् ॥

प्राणस्पन्दनिरोध : । पुं० चित्तशान्त्युपाये ॥ यस्माद्वासनानामतिप्राबल्यात्०तास्त्यक्तुंनशक्नोति०तस्मात्प्राणस्पन्दनिरोधएवोपाय : । प्राणस्पन्दवासनयोश्चित्तप्रेरकत्वात्०तयोर्निरोधेचित्तशान्तिरुपपद्यते ।

प्राणहार : । पुं० ) वत्स नागे ॥ त्रि०

प्राणहारकम् । न० ) वत्सनाभके ॥

प्राणा । स्त्री० विहगो विशेषे ॥ साचा रूपवरुडयो : प्रसूः ॥

प्राणाचार्य्य : । पुं० वैद्ये ॥

प्राणात्यय : । पुं० आपत्काले ॥ प्राणानामत्ययोयस्मिन्स : ॥

प्राणादिपञ्चकम् । न० प्राणापानव्यानोदानसमानात्मके ॥

प्राणाधिनाथ : । पुं० पत्यौ ॥ प्राणानामधिनाथ : ॥

प्राणाधिप : । पुं० प्रिये । पत्यौ ॥

प्राणान्त : । पुं० प्राणावसाने ॥

प्राणापानौ । पुं० अश्विनीकुमारयो: ॥

प्राणायाम : । पुं० प्राणसंयमे । रेचकपूरककुम्भकलक्षणेप्राणनिग्रहोपाये ॥ तथाचयोगसूत्रम् । तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेद:प्राणायामइति । तस्मिन्नासनस्थैर्ये सतीत्यर्थ : ॥ प्राण : प्राणुदितोवायुरायामोस्यप्रखेदनम् । निरोधलक्षण : क्रतुदोषनुत् ॥ कनीयान्मध्यमोज्येष्ठ : सत्रालैर्द्वादशादिभि: ॥ उक्तंच । तालप्रादेशकोत्तेव : प्राणायामस्तुकन्यस: । मध्यस्तुर्विंशत्याचे छन्दर्द्विगुणो भवेत् ॥ सोपिध्यानतपोवेत : सगर्भोऽन्यस्तदुज्झित : । यथासगर्भ स्तीर्यायमनसोन तथेतर : ॥अपिच । सव्याहृतिंसप्रणवांगायत्रीं शिरसासह । त्रि : पठेदायतप्राण.प्राण

यामःसउच्यते ॥ सर्वपापहरं प्रोक्तं प्राणायामंद्विजन्मनाम् । ततस्त्व स्यधिकंनास्तितपः परमपावनम् ॥ यच्चविशेषोदेवीगीतायाम् । दृढ याकर्षयेद्वायुंवाद्यं षोडशमात्रया । धारयेत्पूरितंयोगीचतुः षष्ट्यातु-मात्रया ॥ सुषुम्णामध्यगंसम्यक्द्वा त्रिंशन्मात्रयाशनैः । नाड्यापिंगल यावैवरेचयेद्योगवित्तमः ॥ प्राणा-याममिमंप्राहुर्योगशास्त्रविशारदाः । भूयोभूयः क्रमात्तस्यबाह्यमेवंस-माचरेत् ॥ मात्रावृद्धिक्रमेणैवसम्य-क्द्वादशषोडश । जपध्यानादिभिः सार्धं सगर्भं तं विदुर्बुधाः ॥ तदपे तं विगर्भं चप्राणायामं परेविदुः । क्रमादभ्यसतः पुंसोदेहेस्वेदोद्गमो धमः । मध्यमः कम्पसंयुक्तोभू-मित्यागः परोमतः । उत्तमस्यगु-णावाप्तिर्यावच्छीलनमिष्यतइति ॥ अध्यात्मविदस्त्वाहुः । चित्तादिस र्वभावेषुब्रह्मत्वेनैवभावनात् । नि-रोधः सर्ववृत्तीनांप्राणायामः स उच्यते ॥ इति ॥ प्राणस्यवायुविशेष स्यायामोरोधः ॥

प्राणायामयज्ञः । पुं० अपानेजुह्वति-प्राणंप्राणेऽपानंतथापरे । प्राणापा नगतीरुद्ध्वाप्राणायामपरायणाः ॥ अपरेनियताहाराःप्राणान्प्राणेषु जुह्वतीतिभगवदुक्तेः ॥

प्राणिद्यूतम् । न० समाह्वये । पणपू-र्वानादिप्राणिसंयुगे ॥ प्राणिभिर्मेष कुक्कुटादिभिः द्यूतंद्यूतं ॥

प्राणी । पुं० प्राणविशिष्टे मनुष्यादौ ॥ चेतने । जन्मनि । जन्तौ । शरी-रिणि ॥ यद्वैनाशिकमतेॱक्षणगु णावया । बुद्ध्यादिषट्कंसङ्ख्या दिपञ्चकंभावनात्तथा । धर्माधर्मौ-गुणाएतेआत्मनः स्युश्चतुर्दशेति ॥ चयमिन्द्रियायाद्यधिष्ठाताॱपुण्यपा पाश्रयः । ज्ञानसुखादियोगलोमान सप्रत्यक्षविषयः । परदेहादौप्रवृ-त्त्यादिनानुमेयः । अहमित्याकार-प्रत्ययाश्रयः । मनोमात्रस्यगोचरः । विभुः परममहत्त्ववान् ॥ इति-भाषापरिच्छेदः ॥ प्राणाः सन्त्य-स्य । बराद्दनिठनाविति॰इनिः ॥

प्राणिमाता । स्त्री० गर्भदात्रीक्षुपे ॥

प्राणिहितः । त्रि० लोकहितकारि-णि ॥

प्राणिहिता । स्त्री० पादुकायाम् । पन हिया॰इ॰भा॰ ॥

प्राणीत्यम् । न० ऋणे ॥

प्राणेशः । पुं० पत्यौ ॥

प्राणेशा । स्त्री० भार्यायाम् ॥

प्राण्यङ्गोद्भवः । पुं० गन्धविशेषे ॥ यथा । मृगनाभिसमुद्भूतस्तत्कोषो द्भवस्तथा । गन्धः प्राण्यङ्गजः प्रो क्तोमोददःस्वर्गवासिनामिति ॥

प्रतिमुखेभाने । वाजिनी० पू० भा० ॥ यथा । साचित्वंप्रातिभाव्यञ्च दानंग्रहणमेवच । विभक्ताभ्रातर : कुर्युर्नाविभक्ता : परस्परम् ॥ इू०. ॥

प्रातिभासिक : । त्रि० प्रतिभासमात्र कालसिद्धे । नपुरस्तान्नपश्चात्स्थिते । यथाशुक्तिकायांरूप्यं रज्जौवासर्पः॥

प्रातिलोमिक : । त्रि० प्रतिकूले ॥ प्रतिलोमंवर्त्तते । तत्प्रत्यनुपूर्वमीप लोमकूलमितिठक् ॥

प्रातिवेश्य : । पुं० निरन्तरगृहवासिनि । पडौसी० इतिभा० ॥ प्रतिवेशमव : । यत् ॥

प्रातिशाख्यम् । न० वेदभाष्ये ॥ प्रतिशाखंभवम् । अव्ययीभावाद्वे तिञः ॥

प्रातिस्विकम् । न० आवेणिकेस्वीये ॥

प्रातिस्विक : । त्रि० असाधारणे । आवेणिके । स्वीये ॥

प्रातिहारिक : । पुं० मायाकारे । ऐन्द्रजालिके ॥ प्रतिहरणम् । ल्युट्० । भावेघञ् । प्रतिहारोव्याज : प्रयोजनमस्य । प्रयोजनमितिठक् ॥

प्रातीप : । पुं० प्रतीपपुत्रे । महाभीष्मे । शान्तनुराजे ॥

प्रातीपिक : । त्रि० प्रतिकूलेप्रतीपं वर्त्तते । तत्प्रत्यनुपूर्वमीपलोमकूल मितिठक् ॥

प्राथमकल्पिक : । पुं० शैक्षे । प्रथमारब्धवेदे ॥ प्रथमकल्पमध्यारम्भ : प्रयोजनंयस्य । प्रयोजनमितिठञ् ॥ यद्वा । प्रथमकल्पमधीते । विद्यालक्षणकल्पान्ताच्चे तिपत्तव्यमितिठक् ॥

प्राथमिक : । त्रि० प्रथमभवे ॥ प्रथमखव्याख्यात : प्रथमेभवेवाद्व्यत्पूर्वपथक् प्रथमाधुरपुरश्चरणनामाख्याताट्क् ॥

प्राथम्यम् । त्रि० प्रथमस्यभावे ॥

प्रादुर्भाव: । पुं० प्राकट्ये, आविर्भावे ॥

प्रादुष्कृत : । त्रि० प्रकटिते ॥

प्रादु : । अ० नामनि ॥ विष्णोर्दशप्रादुर्भावा : । इयमनाममीत्यर्थ : ॥ प्रकाशे ॥ प्राकाश्ये । स्फुटतायाम् । आविर्थे ॥ सम्भाव्ये ॥ इतीप्राप्नोति । अदिपत्यगे । या० उत् । आसस्याविस्पष्टानिव्यवाग्भवुम् । प्रातिवा असम्भवे ॥

प्रादेश: । पुं० तर्जन्यङ्गुष्ठसम्मिते । तर्जनीसहितवितताङ्गुष्ठे ॥ प्रदिश्यते । दिश० । हलश्चे तिघञ् । उपसर्गस्यघञ्यमनुष्ये बहुलमितिदीर्घ : ।

प्रादेशनम् । न० दाने ॥ दिशअतिसर्जने । प्राङ्पूर्व : । भावेल्युट् ॥

प्रादेशिक : । पुं० अव्याप्यवृत्तौ ॥

प्रादोष : त्रि० } प्रदोषसम्भिनि
प्रादोषिक : } ॥ निशाप्रदोषा
ब्यासे तिगैपिर्केर्थठञ् । पर्णेऽण् ।

प्रायुत्रि : । पुं० अनिपदे ॥

प्राधान्यम् । न० प्रधानतायाम् ॥ च गुणीभावे ॥ भावेष्यञ् ॥

प्राधीत : । त्रि० प्रक्रान्ताध्ययने ॥

प्राध्ययनम् । न० प्रकृष्टाध्ययने ॥

प्राध्वम् । त्रि० दूरपथे ॥ प्रह्वे । प्रगते ॥ बन्धने ॥ प्राध्वनति । ध्वमशब्दे । डमप्रत्यय : ॥

प्राध्वङ्कृत्य । अ० बन्धनेनानुकूलङ्कृत्वेत्यर्थे ॥ प्राध्वस्त्वबन्धने० इतिगतिसंज्ञा । कुगतीतिसमास : ॥

प्राध्वम् । अ० नम्र्मणि ॥ अनुकूले ॥ प्राध्वनति । ध्वन० डम् ॥

प्रान्त. । पुं० चरमे । अन्तभागे । शेष सीमायाम् । उपान्ते ॥ यथा । प्रान्तच्छायाविनिर्मुक्तानमनोज्ञाजलाशयाः । तस्माद्धीजलप्रान्ते प्वारामानृविनिवेशयेदिति ॥

प्रान्तर : । अ० प्रान्तभागे ॥

प्रान्तरम् । न० ग्रामश्चदूरे० इवल तादिशून्ये वर्त्मनि । दूरशून्यपथे ॥ विपिने । अरण्ये ॥ कोटरे ॥ प्रकृष्टमन्तरम्० व्यवधानमथवा शीवाचाच । प्रादिम्यइतिवहुव्री हि : ॥

प्रान्तशून्यम् । न० छायादिरहिते० दूरशून्येऽध्वनि ॥

प्रान्त्य : । त्रि० प्रान्तभवे ॥

प्रापणम् । न० नयने । प्राप्तौ ॥ प्रकर्षेणव्यापने ॥

प्रापणिक : । पुं० पण्यविक्रयिणि । प्रापणाय्यते । पण्य० । आकिरणि कपइतिकिकन् ॥ प्रपणोव्यवहारः प्रयोजनमस्यवा । तदस्यप्रयोजनमितिठञ् ॥

प्रापणीय : । त्रि० फलमाप्ये ॥ प्राप्ये ॥ प्राप्यते यत् । प्रपूर्वापधातो : कर्म्मण्यनीयर् ॥

प्रापय्य । अ० गमयित्वेत्यर्थे ॥

प्रापित : । त्रि० निवेशिते । नीते प्रकर्षेणस्थापित : ॥

प्रापिपयिषु : । त्रि० प्रापयितुमिच्छौ ॥ प्रापयते : सन्नन्तादुप्रत्यय. ॥

प्राप्रिय : । पुं० गन्धर्वगणविशेषे । यथा प्रयाच्यजनयत् पुत्रान् दिव्यान् वैगायनोत्सुकान् ॥ चतुर्दश देवगन्धर्वा : प्रायेया : परिकीर्तिता : ॥

प्राप्त : । त्रि० स्थापिते । प्रतिष्ठिते ॥ विन्ने । लब्धे ॥ यथा । प्राप्ते कर्म्मणिनाऽनेकोविधातुंशक्यते गुण : । अप्राप्ते तुविधीयन्ते वहवो प्ये कयत्नतइतिन्याय : ॥ समञ्जसे ॥ प्राप्यते स्म ॥ आप्लृ० । गत्यर्थाकर्मकेतिक्त : ॥ कर्त्तरिक्त इति स्वामी ॥

प्राप्तपञ्चत्वम् । त्रि० मृते ॥ प्राप्तं पञ्चत्वमनेन ॥

प्राप्तपात : । पुं० पडांशी : पारिया

स्त्रि वी ॥

प्राप्तभावः । पुं० त्वालोचे ॥ त्रि० लब्धसत्तादौ ॥ मनोहरे ॥ पण्डिते ॥

प्राप्तरूपः । त्रि० प्राज्ञे ॥ रम्ये ॥ प्राप्तोरूपम् । प्राप्तापन्ने चद्वितीय येतिसमासः ॥ प्राप्तरूपयेन वा ॥

प्राप्तव्यः । त्रि० प्राप्ये ॥ प्राप्यतेय त् । प्रपूर्वापधातोः कर्मणित व्यप्रत्ययः ॥

प्राप्तिः । स्त्री० महोदये । धनादि लब्धौ ॥ अधिगमे ॥ लाभे ॥ मूलान्तरे । अणिमाद्यष्टैश्वर्यान्तर्गतैश्वर्यविशेषे ॥ यतोऽङ्गुल्या पस्पृशतिचन्द्रमसम् ॥ प्राप्यणम् आप्लृ० । स्त्रियांक्तिन् ॥ स्फ ल्नादेकादशी ॥

प्राप्ता । त्रि० प्राप्तवति ॥ प्राप्नोति । क्तः ॥

प्राप्यः । त्रि० गम्ये । समासाद्ये । प्राप्तव्ये । आसङ्गन्ये ॥ प्राप्यते । आप्लृ० । ऋहलोर्ण्यत् ॥

प्रायोधिकः । पुं० उपः काले ॥ प्रायोधिकोमिपाठः शब्दमालायाम् ॥

प्राभञ्जनम् । न० स्वातिनक्षत्रे ॥ त्रि० प्रभञ्जनसम्बन्धिनि ॥

प्राभवम् । न० श्रेष्ठत्वे ॥

प्राभवत्यम् । न० प्रभवतोभावे । ष्यञ् ॥

प्राभाकरः । पुं० आत्मनोचित्रूपतादिनि० मीमांसकविशेषे ॥ प्रा भाकरास्तार्किकाश्चप्राहुरस्याविदात्मताम् । आकाशवद्द्रव्यमात्माश ब्दवत्तद्गुणश्चितिः ॥

प्राभूतिकः । त्रि० प्रभूतवादिनि ॥ प्रभूतमाह । आहौप्रभूतादिभ्य इतिठक् ॥

प्राभृतम् । न० उपढौकने । प्रदेशने । देवताभ्योमित्रादिभ्यश्चदीयमाने । भेट० इ० भा० ॥ प्राभ्रियतेऽत्र । भृञ् भरणे० डुभृञ् धारणपोषणयो र्वा । क्तः ॥

प्राभृतम् । न० कौशलिकायाम् । प्राभृते ॥

प्रामाणिकः । त्रि० प्रमाणलब्धे ॥ प्रमाणादागतः । ठक् ॥

प्रामाण्यम् । न० प्रमाणत्वे ॥ ज्ञान त्वयावाधितार्थविषयत्वम् प्रामाण्य मितिव्याख्यासारः ॥ मंवादाधीनं प्रामाण्यमितिताकिकाः ॥ स्वतःप्रामाण्य मितिमीमांसकाः ॥ प्रमाणस्यभावः ष्यञ् ॥

प्रामाण्यवादः । पुं० प्रमाकरणता कथने ॥ तद्वत्तितत्प्रकारकत्वरूप प्रमात्वकथने । चिन्तामणित्वाय ग्रन्थविशेषे ॥

प्रामादिकम् । त्रि० प्रमादादवगते ॥
प्रामाद्य : । पुं० वासके । वटरूषे ॥
प्रामीत्यम् । न० ऋणे ॥ मृतत्वे ॥
प्राय : । पुं० सन्न्यासवत्ति०मरणायान शने ॥ प्रायोपविष्टं गङ्गायामिति लक्ष्यम् ॥ बाहुल्ये ॥ यथा ॥ प्रायेणाकृतकृत्यत्वान्मृत्योरुद्विजते जनः । इति ॥ मृत्यौ । मरणे ॥ तुल्ये ॥ वयसि ॥ प्रायणम् । अय० । घञ् ॥ प्रकृष्टमयनम् । इण्० । एरच्वा ॥
प्रायत्यम् । न० पवित्रतायाम् ॥ प्रयत स्वभाव : । ष्यञ् ॥
प्रायश्चित्तम् । न० शुद्धिसम्पादककर्म विशेषे । अशुद्धत्वनिरसनेनशुद्धेरा पादके०पापक्षयसाधनेकर्मणि ॥ प्रायः पापंविनिर्दिष्टं चित्तं तस्यवि शोधनमितिस्मृत्युक्तेर्व्युत्पत्ति : ॥ अ-ङ्गिरासाङ्गिरा : । प्रायोनामतप : प्रोक्तंचित्तं निश्चयउच्यते । तपोनि-श्चयसंयुक्तं प्रायश्चित्तमितिस्मृतम् ॥ निश्चयसंयुक्तंपापक्षयसाधनत्वेनवि श्चितमित्यर्थः ॥ प्रायस्चित्तम् । पार स्कराद्वित्वात्साधु ॥ प्रायश्चित्तक-र्माणितु०पापक्षयसाधनानिचान्द्रा यणादीनि । विहिताऽकरणप्रतिषि द्धसेवारूपनिमित्तविशेषानुरूपाणि० प्रायश्चित्तकर्माणि । पापक्षयमात्रोद्दे शेनविहितानीतिवा ॥ पापानामनु रूपाणिप्रायश्चित्तानिकृदथा । यथा तवैतसंस्मृत्यप्रोक्तानिपरमर्षिभि : ॥ पापैगुरूणिगुरूणिखल्वान्यल्पं च तद्विद : ॥ प्रायश्चित्तानिमैत्रेयजगुः स्वायम्भुवादय : ॥ प्रायश्चित्तान्यशे षाणितप : कर्मात्मकानिवै । यानितेषामशेषाणांकृष्णानुस्मरणं पर मितिपराशर : ॥ प्रायश्चित्तमपापा नांवीदैधीनामसंस्मृतिरितिभागव तेव्यास : ॥
प्रायश्चित्तीय : । त्रि० प्रायश्चित्तयो ग्ये । प्रायश्चित्तसाधनत्वेनभव : । प्रायश्चित्तापापशोधनायश्रुति स्मृतिविहितायकर्मणे हितोवा । छाच्छ : ॥
प्राय : । अ० भूम्नि । बाहुल्यार्थे ॥ प्रायनम् । अय० । अमुन् ॥
प्रायिक : । त्रि० प्रायोभवे ॥
प्रायुर्वेषी । पुं० चोटके ॥
प्रायोज्यम् । त्रि० प्रयोजनार्हे ॥ यथा । प्रायोज्यं नविभज्येत । यदास्यप्रयोजनार्हंपुस्तकादितन्न-वैः : सवनद्विभजनीयम् ॥ इति दायभाग : ॥
प्रायोपविष्ट : । त्रि० प्रायोपवेशवि शिष्टे ॥ प्रायेणमृत्युपर्यन्तानशने न उपविष्ट : ॥ अचादित्यपुराणम् ॥ य० । समायुक्तोभवेद्यस्तुपातकै र्महदादिभि : । उविकित्स्यैर्महा रोगैः पीडितोवाभवेत्तु य : ॥

स्वयं देहविनाशस्य कालेप्राप्ते महा गतिः। आत्मज्ञानस्य स्वर्गादिमहा फलजिगीषया ॥ प्रविशेज्ज्वलनं दीप्तं कुर्यादनशनं तथा। एतेषा मधिकारोऽस्ति नान्येषां सर्ववस्तुषु॥ नराणामपि नारीणां सर्ववर्णेषु सर्वदा ॥ इति ॥

प्रायोपवेश : । पुं॰ सन्न्यासपूर्वकाऽनशनस्थितौ ॥

प्रारब्धम् । न॰ वर्त्तमानदेहारम्भके कर्म्मणि ॥ कर्म्म जन्मान्तरीयं यत् प्रारब्धमिति कीर्त्तितम्। दुर्बलं सबलं चेति प्रारब्धं द्विविधं विदुः ॥ दुर्बलस्य प्रतीकारः सनाद्भिस्तस्य सस्यतु ॥ अवश्यं भाविभावानां प्रतीकारो भवेद्यदि। तदा दुःखैर्न लिप्येरन् नलरामयुधिष्ठिराः ॥ आत्मानं सततं जानन्कालं नय महामते। प्रारब्धमखिलं भुञ्जन् नोद्वेगं कर्त्तुमर्हसि ॥ इच्छाप्रारब्धं परेच्छाप्रारब्धमनिच्छाप्रारब्धमिति भेदात्तत्त्रिविधं। तत्रस्वेच्छाकृतं भिक्षाटनादि॰ समाध्यवस्थायां शिष्यादिभिर्दीयमानं परेच्छाकृतम् समाध्यवस्थायां व्युत्थानदशायां वा आकाशफलपातवदकस्मादागमनं पाषाणपतनं कण्टकवेधादिकस्त्वनिच्छाकृतं प्रारब्धमिति विवेकः ॥ त्रि॰ प्रकर्षेणारब्धे ॥

प्रारब्धिः । स्त्री॰ गजबन्धनरज्जौ ॥

प्रारम्भ : । पुं॰ प्रकृष्टारम्भे ॥ प्रकर्षेणारम्भः ॥ प्रारम्भे कर्म्मणांशिप्रः पुण्डरीकाक्षरेवरिम् ॥

प्रारिप्सित : । त्रि॰ प्रकर्षेणारब्धुमीप्सिते ॥

प्रार्थनम् । न॰ प्रकर्षेणयाचने । प्रार्थनायाम् ॥

प्रार्थना । स्त्री॰ याच्ञायाम्। अर्थनायाम्। याचनायाम् ॥ प्रकृष्टार्थना ॥ अभियाते ॥

प्रार्थनीयम् । न॰ द्वापरयुगे ॥ त्रि॰ प्रार्थनाविषये ॥

प्रार्थित : । त्रि॰ याचिते ॥ शत्रुसंरुद्धे ॥ अभिहिते ॥ प्रार्थ्यतेस्म । अर्थयायाम्। क्तः ॥

प्रार्थ्यमान : । त्रि॰ याच्यमाने ॥

प्रालम्ब: । पुं॰ पयोधरे । त्रपुषे । न॰ आकण्ठलम्बमानमाल्ये ॥ प्रालम्बते । लम्बिअवस्रंसने । पचाद्यच् ॥

प्रालम्बिका । स्त्री॰ हेमविरचितेनाभिलम्बिनिमाल्ये ॥ प्रालम्बते । कपि। खुल् ॥

प्रालेयम् । न॰ मिहिकायाम् । हिमे ॥ प्रलीयन्ते पदार्थाश्चेति॰ प्रलयोहिमाद्रिः । ततआगतम्। अण् । केकयमित्रयुप्रलयानांयादेरियङ्ङियस्ययादेशः ॥ उदके ॥

प्रालेयांशुः । पुं॰ हिमांशौ । चन्द्रे ॥ प्रालेयानि॰ हिमानि॰ अंशवोऽस्य ॥

प्रालेयाचलः । पुं॰ हिमालये । मेनाधवे ॥

प्रावटः । पुं॰ यवे ॥

प्रावरः । पुं॰ प्राचीरे ॥

प्रावरणम् । न॰ संव्याने । उत्तरीयवस्त्रे ॥

प्रावादुकः । त्रि॰ शुष्कतर्कजल्पनशीले ॥

प्रावारः । पुं॰ उत्तरासङ्गे । उपरिवस्त्रे । उत्तरीये ॥ प्रव्रियतेऽनेन । वृञ्॰ । हलोऽसिराच्छादने॰ सू॰ घञ् । उपसर्गस्य घञीति दीर्घः ॥

प्रावारकीटः । पुं॰ कीटविशेषे ॥

प्रावृडत्ययः । पुं॰ शरदृतौ ॥

प्रावृतः । त्रि॰ निवीते । परिहितवस्त्रे ॥ आव्रियते स्म । वृञ्॰ । क्त॰ ।

प्रावृतिः । स्त्री॰ प्राचीरे ॥ शैवानामसतेः स्वाभाविक्यामशुद्धौ । मले । प्रथमपाशे ॥ प्रावृणोति॰ प्रकर्षेणाच्छादयति आत्मनो दृक्क्रिये॰ इ॰ प्रावृतिः ॥

प्रावृट् । स्त्री॰ वर्षाकाले । श्रावणभाद्रयोः ॥ वर्षणम्॰ वृट् । वृषु सेचने । सम्पदादित्वात् क्विप् । प्रकृष्टा वृट् च । नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वाविति दीर्घः ॥ प्रवर्षतीति वा ॥

प्रावृषा । स्त्री॰ वर्षाकाले । जलार्णवे ॥

प्रावृषायणी । स्त्री॰ कण्डूरायाम् । शूकशिम्बायाम् ॥ प्रावृषामेति॰ अयते वा । कर्मण्युट् । कृत्यचः इति णत्वम् । ङीप् ॥

प्रावृषिकः । पुं॰ मयूरे ॥ त्रि॰ प्रावृषि जाते ॥ प्रावृष एण्य ॥

प्रावृषिजः । त्रि॰ प्रावृषि जाते ॥ प्रावृट् शरत्कालदिवां जे॰ इत्यलुक् ॥

प्रावृषेण्यः । पुं॰ नीपे । कदम्बवृक्षे ॥ कुटजवृक्षे ॥ धाराकदम्बे ॥ त्रि॰ प्रावृट्कालभवे ॥ प्रावृड्देवतास्य॰ प्रावृषि भवो वा । कालेभ्यो भववत्॰ इति॰ प्रावृष एण्यः ॥ प्राचुर्ये

प्रावृषेण्या । स्त्री॰ रक्तपुनर्नवायाम् ॥ कपिकच्छ्वाम् ॥ प्रावृषि भवा । प्रावृष एण्यः । टाप् ॥

प्रावृष्यः । पुं॰ कुटजे ॥ धाराकदम्बे ॥ विकङ्कते ॥ न॰ ॥ वैदूर्यमणौ ॥

प्राट् । पुं॰ प्रश्नकर्तरि ॥ प्रश्ने ॥ पृच्छति । प्रच्छनं वा । प्रच्छ ज्ञीप्सायाम् । क्विब्वचिप्रच्छीति क्विब्दीर्घो न सम्प्रसारणञ्च । च्छ्वोः शूडिति श । प्राशौ॰ प्राशः प्राड्भ्यामित्यादि ॥

प्राशः । पुं॰ अवलेहे ॥

प्राशस्त्यम् । न॰ उत्तमत्वे ॥ बलवदनिष्टाननुबन्धित्वे ॥

प्राशितम् । न० पितृयज्ञे । नित्य-
श्राद्धे । त्रि० भक्षिते ।

प्राश्निकः । पुं० सभ्ये । त्रि० प्रश्नक
र्त्तरि ॥

प्रासः । पुं० कुन्तास्त्रे । भाषा० द्रु०
भा० । कौ० च० द्रु० गौ० भा० । प्रा
स्यते । अस्यु० । अकर्त्तरीति घञ् ।
प्रायोहस्तादिभ्येऽस्त्येद्रु० स्वामी ।

प्रासङ्गः । पुं० युगे । वत्सानां शिक्षा
र्थं काष्ठवि० । वत्सानां दमनकालेस्क
न्धे यत्काष्ठमासज्यते तत् । प्रस-
ज्यते । पञ्चमात् । घञ् । उपसर्ग
स्येतिदीर्घः ।

प्रासङ्ग्यः । पुं० युगयोढरि भृत्ये । यु
ग्ये । प्रासङ्गं वहति । तद्वहतीति
युगप्रासङ्गाभ्यामितियत् ।

प्रासादः । पुं० देवमन्दिरे । राजगृ-
हे । प्रसीदन्त्यस्मिन्मनांसि । ह
लश्चेति घञ् । उपसर्गस्य घञीति
दीर्घः । यथा । कृत्वाप्रभूत-
सलिलमारामान्विनिवेश्य च । देव-
तायतनं कुर्याद्यशोधर्माभिवृद्धये ।

प्रासादकुक्कुटः । पुं० पारावते ॥

प्रासिकः । पुं० कौन्तिके । प्रास-
प्रहरणमस्य । प्रहरणमितिठक् ॥

प्रास्तः । त्रि० प्रक्षिप्ते । निरस्ते ॥
प्रास्यतिस्म । अस्तु० । क्तः ।

प्रास्तारिकः । त्रि० प्रस्तारव्यवहर्त्तरि
। प्रस्तारेव्यवहरति । कठिनान्त

प्रस्तारसंस्थानेषुव्यवहरति० इतिठ-
क् ॥

प्रास्थानिकम् । त्रि० प्रस्थानकालोचिते
॥ प्रस्थानेभवम् । कालाट्ठञ् ॥ प्र
स्थानशब्दस्यगुणवृत्त्याकथञ्चित्का-
लेवर्त्तमानत्वात् ॥

प्रास्थिकम् । न० प्रस्थपरिमितव्रीह्या-
दियोग्यक्षेत्रे । प्रस्थस्यवापः ।
तस्यवापइतिठञ् । त्रि० आढकादि
पाचकादौ । प्रस्थंसम्भवति० तस्मि
न्सम्भवेइत्यदि० अवहरति० पच
तीत्या । सम्भवत्यवहरतीत्यादिना
ठञ् । टिड्ढेति-ङीपि० प्रास्थि-
कीवाल्याली । प्रस्थमुपसंहरति० पच
तिवेत्यर्थः ॥ प्रस्थेनक्रीते ॥ ठञ्
। प्रस्थपरिमाणमस्य । प्रास्थिकोरा
शि । तदस्यपरिमाणमितिठञ् ।

प्राह्ः । पुं० नृत्योपदेशे ।

प्राह्णः । पुं० पूर्वाह्णे ॥ प्रथमस्तराद
एवप्राह्णः । राजाहःसखिभ्यष्ट
च् । अह्नोऽह्नएतेभ्यइत्यह्नादेशः ।
अह्नोऽह्नादितिणत्वम् ॥

प्राह्णे । अ० पूर्वाह्णे ॥

प्राह्णेतनः । त्रि० पूर्वाह्णसम्बन्धि-
नि ॥ सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्य
इत्युट्युलौतुट्च ॥

प्रियः । पुं० धवे । पत्यौ । वृद्धिनामौ
षधौ । जीवकौषधे । प्रीतिविष
ये । आत्मनि । यथा । प्रियोह्या

त्मैवसर्वेषांनात्मनोऽन्यपरंप्रियम् । लोकेस्मिन्नात्मसम्बन्धाद्भवन्त्यन्ये प्रियाः शिवे ॥ प्राणबुद्धिमनः स्वात्मदाराऽपत्यधनादयः । यत्सम्पर्कात्प्रियायासन्नतः कोन्यपरः प्रियः ॥ प्रीणाति । प्रीञ् तर्पणे । इगुपधेतिकः ॥ न०प्रीतुस्तत्कालश्रुतिसुखेयाख्ये ॥ वि०हृद्ये । इष्टे । प्रीतिविषये । स्वेच्छयाप्रियादौ ॥ प्रीतिकरे ॥ सर्वः प्रियः खलुभवत्यनुरूपचेष्टः ॥ स्त्रे ॥ प्रीणयति शुश्रूषादिनास्वामिनम् ॥ प्रियोऽप्रियश्चकार्यवशाद्भवति । यथा । न कश्चित्प्रियःकोनाऽप्रियोवाभवत् चये । कार्यकार्यवशात्सर्वेभवन्त्येवाऽप्रियाः प्रियाः ॥

प्रियंवदः । पुं० खेचरे । गंधर्वविशेषे ॥ वि० प्रियवादि ॥ प्रियं वदति । वदत्यक्तार्यांवाचि । प्रियवशेवदः खच् । मुम् ॥

प्रियंवदा स्त्री० छन्दोविशेषे ॥

प्रियकः । पुं० प्रीतसालतरौ । जीवकें । असनकुसुमे । विजयसार० इ० भा० ॥ नीपे । धाराकदम्बे ॥ चित्रमृगे । कस्तूरीकृतीमृगविशेषे ॥ प्रियकोरोमभिर्युक्तोस्ट दशमसद्येघनैरितिवैजयन्ती ॥ स्त्री । चञ्चरीके ॥ प्रियङ्गौ ॥ कुङ्कुमे । काश्मीरजन्मनि ॥ प्रीणा ति । प्रीञ् । क्रुञ्शिविसंज्ञयोरितिक्वुन् ॥ यद्वा । प्रीणाति० प्रीयतेवा । इगुपधेतिकः । स्वार्थेकन् ॥

प्रियकारः । वि० प्रियङ्करे । प्रियं करोति । डुकृञ्० । चेमप्रियेष्वण् ॥

प्रियकृत् । पुं० नारायणे । भक्तानां प्रियंकरोति । क्विप् ॥ वि० प्रियकारिणि ॥

प्रियङ्करः । वि० हितकारिणि । प्रियकारके ॥ प्रियङ्करोति । चेमप्रियमद्रेणचेतिपक्षे खच् ॥

प्रियङ्करी । स्त्री० वृहज्जीवन्त्याम् ॥ श्वेतकण्टकार्याम् ॥ अश्वगन्धायाम् ॥

प्रियङ्गुः । स्त्री० राजिकायाम् । राजसर्षपे ॥ कणायाम् । पिप्पल्याम् ॥ मा० सर्षे ॥ स्वनामख्यातसुगन्धिवृक्षविशेषे ॥ प्रियकेः । श्यामायाम् । लतायाम् । फलिन्याम् ॥ प्रियङ्गुः शीतलातिक्ता तुवरानिलपित्तहृत् । रक्तातियोगदौर्गन्ध्यस्वेददाहज्वरापहा ॥ गुल्मतृड्विषमोहघ्नीतद्वदाम्रप्रियङ्गुका । तत्फलंमधुरंरूक्षं कषायंशीतलंगुरु । विबन्धाध्मानबलकृत्सङ्ग्राहिकफपित्तजित् ॥ प्रियंगच्छति ॥ मृगय्वादीनिपात

स्त्रिय : ॥ स्त्रित्॰ ढृवां ॥ प्रियमङ्ग
तिचा । अगिगली । खुल्तोया । कु:
पूर्वेत् । अकन्धादि : ॥ चाटुक्या
म् ॥

प्रियचिकीर्षु : । त्रि॰ प्रियकर्त्तु
मिच्छौ ॥

प्रियजन: । पुं॰ कृष्णलोके । प्रौढभा
वज्ञे ॥ यथा ॥ प्रौढभावानुविज्ञेय
स्तत्रापि प्रियजनोचस : ॥

प्रियजीव : । पुं॰ श्योनाकवृ
क्षे ॥

प्रियतम : । पुं॰ मयूरशिखावृक्षे ॥
आत्मनि । यथा । वित्तात् पुत्र :
प्रिय : पुत्रात् पिण्ड : पिण्डात्
तथेन्द्रियम् । इन्द्रियेभ्य : प्रिय:
प्राणश्चात्माप्रियतमपरात : ॥ त्रि॰
प्रेष्ठे ॥ अतिशयेनप्रिये ॥

प्रियता । स्त्री॰ हार्द्दे । प्रेमणि । स्ने
हे ॥ प्रीणातीतिप्रिय : । तस्य
भाव : । तल् ॥

प्रियतोषण : । पुं॰ षोडशबन्धातिरि
क्तरतिबन्धविशेषे ॥ यथा । नारी
पादौस्वहस्तेनधार्य्येत्स्तनोपरि ।
स्तनापीडकर : कामीचाभयेरत्
प्रियतोषण : । त्रि॰ प्रियस्यतुष्टि
कारिणि ।

प्रियत्वम् । न॰ प्रियतायाम् ॥ प्रिय
स्यभाव : । त्व : ॥ प्रीतिस्थर
ये ॥

प्रियदर्शन : । पुं॰ कीरे । शुकवि
हङ्गमे ॥ चौरिन्द्राद्रुमे ॥ त्रि॰ चक्षु
ष्ये । सुदर्शने ॥ प्रियंदर्शनम
स्य ॥

प्रियप्रायम् । न॰ चटुनि । चाटुनि
। प्रियवाक्ये ॥ इतिहेमच
न्द्र : ॥

प्रियमेषु : । त्रि॰ इष्टार्थोद्युक्ते ।
उत्सुके ॥

प्रियमधु : । पुं॰ एकपुण्डले । बल
देवे । अच्युताग्रजे ॥ प्रियंमधु
मद्यंयस्य ॥

प्रियरूप : । पुं॰ कामे ॥ न॰ अप्स
र : प्रभृतीनांरूपे ॥ त्रि॰ मनो
हररूपवति ॥

प्रियवर्णी । स्त्री॰ ग्रतमायाम् । गु
न्द्रायाम् । प्रियङ्गौ ॥

प्रियवल्ली । स्त्री॰ प्रियङ्गौ ॥

प्रियवादी । त्रि॰ तत्कालमधुरवाक्य
वक्तरि ॥ मनोज्ञवक्तरि ॥ यथा ।
कोतिभार : समर्थानांकिन्दूरंव्यव
सायिनाम् । कोविदेश : सुविद्या
नांक : पर : प्रियवादिनामिति ॥

प्रियव्रत : । पुं॰ स्वायम्भुवमनो : पु
त्रे । यथा । प्रियव्रतोत्तानपादौसुनौ
स्वायम्भुवस्यतु । तौपृथ्वींसुभकारीदौ
धर्मज्ञौक्षपितोरथ ॥

प्रियश्रवा : । पुं॰ भगवतिवासुदेवे ॥
प्रियंश्रवोयस्य : ॥

प्रियसख : । पुं॰ खदिरे ॥

प्रियसत्यम् । न॰ सूनृतवाक्ये ।

प्रियसन्देश : । पुं॰ चम्पकवृक्षे ॥ प्रिय संवादे ॥

प्रियसालक : । पुं॰ असनवृक्षे । पियं यसार॰ दृ॰ भा॰ ॥

प्रिया । स्त्री॰ भार्यायाम् ॥ नार्याम् । एलायाम् ॥ मदिरायाम् । मल्लिकायाम् । वार्त्तायाम् ॥ प्रियङ्गौ ॥ सध्याद्यसिप्रभेदे ॥ यथा । सोऽर्लह ष्यते । साप्रियाफण्ठे ॥ यथा । नीभिगोपालकम् । देवकीबालकम् ॥ सुगीतिनामानारम् । रोमगीति पाठगात् ॥ सुप्रतिष्ठाप्रभेदेऽपि । स गणै : प्रिया ॥ यथा । व्रजसुभ्रुवो विलसत्कला : । अभवन्प्रियामुररै रिण : ॥

प्रियाम्बु : । पुं॰ आम्रवृक्षे ॥ न॰ आ म्रफले ॥ इयगजे ॥

प्रियार्ह : । पुं॰ नारायणे ॥ सो इदेवे प्रियाणीदिपान्यर्हतिअर्पयितुयोग्योभ वतीतिसधा । कर्मण्यण् ॥ यथा॰ यद्यदिष्टतमंलोकेयच्चास्यदयितंगृहे । तत्तद्गुणवतेदेयंतदेवाक्षयमिच्छता ॥ इतिमार्कण्डेयपु॰ ॥ अपिच । यद्य त्ताम्प्रियद्रव्यं तत्तदिष्टायकल्पयेत् ॥

प्रियाल : । पुं॰ राजादने । पियाले । पारस्यफलंपक्वं मध्यं गौल्याल्लक्षं गुरु । राहोवंमधुरंमध्यं पित्तदाहार्ति

नाशनम् ॥ प्रीणाति । प्रीञ्॰ । वा॰ कालन् ॥

प्रियाला । स्त्री॰ द्राक्षायाम् ॥

प्रियोदितम् । न॰ प्रियवाक्ये ॥ प्रियस्तु तदुदितञ्च ॥ त्रि॰ प्रियवाक्यविषये ॥

प्रीण : । त्रि॰ पुरातने । प्रतने ॥ नष्ट पुराणेप्राप्तिरित्ति॰पैनसमुक्तित : स : ॥ प्रीते ॥

प्रीणनम् । न॰ तर्पणे । तृप्तौ ॥ प्रीञ् । स्वार्थण्यन्ताल्ल्युट्॰धुक्प्रीञो- रितिनुक् ॥

प्रीणयत् । त्रि॰ तर्पयति ॥ प्रीञोण्य न्ताल्लट : शतृशानचावित्यादिनाल ट : शत्रादेशे॰धूञ्प्रीञोर्नुग्वक्तव्य इतिनुगागम : ॥

प्रीणस : । पुं॰ गण्डके ॥

प्रीत : । त्रि॰ हृष्टे । मत्ते । तुष्टे ॥ नर्मणि ॥ प्रीयतेस्म । प्रीङ्प्रीणने । क्त : ॥

प्रीति : । स्त्री॰ मुदि । प्रमदे । हर्षे । सुरते ॥ इष्टदर्शनजन्यसुखे ॥ भोज नकालेऽनभिलषिताहित्ये । इष्टौ- त्कण्ठे ॥ विष्कम्भादिषुद्वितीययो गे ॥ तत्रजातस्यफलंयथा । प्रसूति कालेयदिप्रीतियोगोनरोधरोग : सु खवान्प्रमोदी । स्त्रीनुरागीविदुषां प्रपन्न : सुमार्गितोयन्द्रतिवित्तमेव ॥ रत्या : सपत्न्यांश्चप्रपत्न्याम् ॥

प्रेङ्खितः । त्रि॰ कम्पिते ॥ प्रेङ्खतिस्म । इखि॰ । क्तः ॥

प्रेङ्खोलनम् । न॰ दोलायाम् । दोलने ॥

प्रेङ्खोलितः । त्रि॰ दोलिते । तरलिते । लुलिते ॥ न॰ रतबन्धान्तरे ॥ सर्वतः कटिपरिभ्रमणीयदिप्रेङ्खपूर्वमिदमुक्तमारतम् ॥

प्रेतः । पुं॰ नरकस्थप्राणिनि ॥ भूतप्रभेदे ॥ स्वधर्मात्प्रच्युतोविप्रोदेहपातादूर्द्ध्वंवायवीयंदेहमापन्नउल्कामुखकटपूतनादिसंज्ञः प्रेतउच्यते । यथा । वान्ताश्युल्कामुखः प्रेतोविप्रोधर्मात्स्वकाच्च्युतः । इति ॥ भूतप्रेतपिशाचानांलोकायथा । अरीश्वरायेषभूतप्रेतपिशाचकाः । वर्जयित्वारुद्रगणांस्तेतथैवचरन्तिहि ॥ नोर्द्ध्वंविक्रमणेशक्तिस्तेषांसम्भूतपाप्मनाम् । अतऊर्द्ध्वंहिविप्रेन्द्रतामसाविकृतैनसः ॥ तेतुसूर्यादयः सर्वेविश्वरनृत्युवर्जिताः । इतिपाद्मेस्वर्गखण्डः ॥ वैदिकविधानेनौर्द्ध्वदैहिकाभावात्विष्णुदेशाद्वतहुनरकभोगान्ते प्रेतशरीरंभवतीतिपुराणेप्रसिद्धमस्ति ॥ त्रि॰ मृते ॥ अर्वाक्सपिण्डीकरणात्प्रेतोभवतिवैमृतः ॥ प्रैति । इण्॰ । गत्यर्थेतिक्तः ॥

प्रेतकार्य्यम् । न॰ मृतस्यदाहादिसपिण्डीकरणान्तकर्म्मणि ॥ यथा । असत्याप्रेतकार्य्याणिप्रेतस्यधनहारकः । वर्णानांयद्वधेप्रोक्तं तद्व्रतंनियतश्चरेत् ॥ इति ॥

प्रेतकाला । स्त्री॰ पितृपक्षारार्घ्यायांक्रियायाम् ॥ प्रकर्षेणइतः प्रेतः पितृणोकस्थएवोच्यते ॥

प्रेतगृहम् । न॰ श्मशाने ॥

प्रेततर्पणम् । न॰ मरणावधिसपिण्डीकरणपर्यन्तंप्रेतमुद्दिश्य खिलंजलदाने ॥

प्रेतनदी । स्त्री॰ वैतरिण्याम् ॥ प्रेतानांनरकस्थप्राणिनांनदी ॥

प्रेतपटहः । पुं॰ भवकदि । मृत्युभङ्गुरके । मृत्युकालेवाद्यनीयवाद्यविशेषे । भौर॰ द्व॰ भा॰ ।॰

प्रेतपतिः । पुं॰ यमे ॥ प्रेतराजि ॥ प्रेतानांपतिः ॥

प्रेतपिण्डः । पुं॰ मरणावधिसपिण्डीकरणपर्यन्तं ॥ तसम्प्रदानकपिण्डाकारान्ने ॥ यथा । नस्वधाश्चप्रयुञ्जीतप्रेतपिण्डेद्यथाविधि । भाषितेतत्रदैविकंयद्वदत्तस्यपूरकम् ॥ प्रेतपिण्डानदीयन्ते यस्यतस्यविमोक्षणम् । श्मशानिकेभ्यो देवेभ्यश्चाकल्पंनैवविद्यते ॥

प्रेतपुरम् । न॰ यमालये ॥

प्रेतमाता । स्त्री॰ काम्यादिषु ॥ कालीकरालीभद्राचभीषणाचैवभयोत्कटा । साधारणीदुराधर्षासप्ताः

प्रेतमातरः ॥

प्रेतराक्षसी । स्त्री॰ तुलस्याम् ॥

प्रेतवनम् । न॰ श्मशाने ॥

प्रेतवाहितः । त्रि॰ भूताविष्टे ॥

प्रेतशिला । स्त्री॰ पिण्डदानार्थगयास्थितप्रस्तरविशेषे ॥ यथा । शेयंप्रेतशिलाख्यातागयायांसाविधास्थिता । प्रभासेप्रेतकुण्डेचगयासुरशिरस्यपि ॥

प्रेतशौचम् । न॰ मृतसंस्कारादौ ॥

प्रेता । स्त्री॰ वैतरणीनद्याम् ॥ मृतायाम् ॥ प्रेतभावापन्नायाम् ॥

प्रेत्य । अ॰ अमुत्र । जन्मान्तरे ॥ देहंत्यक्त्वेत्यर्थे ॥ प्रकर्षेणइत्वा । इण्॰ क्त्वाप्रत्ययः । समासेऽनञ्पूर्वेल्यप् । तुक् ॥ व्यापत्त्यर्थे ॥

प्रेत्यभावः । पुं॰ पुनरुत्पत्तौ ॥ तथा चगौतमसूत्रम् । पुनरुत्पत्तिः प्रेत्यभावः ॥ १९ ॥ प्रेत्यमृत्वाभावोजननं॰प्रेत्यभावः । तच्चपुनरित्यनेनाभ्यासकथनात्॰ प्रागुत्पत्तिस्ततोमरणंततउत्पत्तिरिति । प्रेत्यभावोजननादिरपवर्गान्तः । एतच्चात्मनःस्थैर्यादवउपपद्यते॰इति॰प्रेत्येतिनञ्व्यर्थम् । तदीयमरणस्यतदीयजीवनादृष्टनाशस्तदीयचरमप्राणसंयोगध्वंसस्तदीयप्राणध्वंसोवा । तदीयोत्पत्तिस्तु॰तदीयविजातीयशरीराद्यप्राणसंयोगइति ॥

प्रेत्वा । पुं॰ वासवे ॥ वाते ॥ प्राणेषु ॥

प्रेत्वरी । स्त्री॰ पुरि ॥

प्रेमा । पुं॰ न॰ प्रियतायाम् । हार्दे । स्नेहे ॥ हर्षे ॥ नर्मणि ॥ रम्येषु दिदृक्षायाम् ॥ प्रियस्यभावः पृथ्वादित्वादिमनिच् । प्रियस्थिरेति प्रादेशः ॥ प्रेयस्त्वम् । प्रीङ्तर्पणे । मनिन्वा । नपुंसकलिङ्गम् ॥ गुणतन्त्राः प्रेमाणोनपरिचयतन्त्राः । पुंस्त्वमपि ॥ खेदवाचकमसत्यपि यथा । सर्वथाध्वंसरहितंसत्यपिध्वंसकारणे । यद्भावबन्धनंयूनोः स प्रेमापरिकीर्तितः ॥ इत्युज्ज्वलनीलमणिः ॥

प्रेमपरिप्लुतः । त्रि॰ प्रेमरसमग्ने ॥

प्रेमपातनम् । न॰ नेत्रजले ॥

प्रेमालिङ्गनम् । न॰ स्नेहेनपरिष्वङ्गे ॥ नायिकानायकयोरालिङ्गनविशेषे ॥ तल्लक्षणंयथा । नायकमथार्द्रं नायिकयैकपादेनवेष्टयित्वाद्वितीयपादंतस्याङ्गेपरिस्थापयित्वायदालिङ्गनंतदितिकामशास्त्रम् ॥

प्रेयान् । पुं॰ पत्यौ । प्रिये । दयिते । कान्ते ॥ कान्ते । त्रि॰ प्रियतरे । पद्मपुत्रादिलक्षणे ॥ अयमनयोरतिशयेनप्रियः । ईयसुन् । प्रियस्थिरेतिप्रादेशः ॥ न॰ सर्वान्तरे॰ब्रह्मात्मनि ॥

भिरुद्देशितास्वाद्दर्शनप्रयोगात् ॥

प्रोक्षितः । त्रि० निहते । यज्ञे हतपशौ । उपसम्पन्ने । यज्ञार्थमन्त्रैः संस्कृतमांसादौ ॥ यथा । भक्षयेत् प्रोक्षितंमांसं सकृद्ब्राह्मणकाम्यया । दैवेनियुक्तः श्राद्धेऽनियमेतुविवर्जयेत् । चारवाक्रामामिदामीतनप्रोक्षणापिचानासौख्यग्रामशागारते । यथा । चारवाः सर्वदेवत्या : प्रोक्षिताः सर्वशोमृगाः । अगस्त्येनपुरारावन्मृगयायेनपूज्यतेऽइति । सिक्ते ॥ प्रोक्षितेम्भ। उक्षा० ! क्तः । मन्त्रसंस्कृते ॥

प्रोच्छलत् । त्रि० उद्गच्छति । उच्छलत् ला०टू०श्रा० ॥

प्रोञ्छनम् । न० प्रवञ्चने । लोपने । पूछना०चू०भा० ॥

प्रोज्जासनम् । न० मारणे ॥

प्रोज्झित : । त्रि० त्यक्ते ॥

प्रोष्ठः । पुं० फटलोटी । पतद्ग्रहे ॥

प्रोतम् । न० ः स्मरी । वाससि ॥ त्रि० खचिते । व्याप्ते । गुम्फिते । ग्रथिते ॥ स्यूते । प्रविष्टे ॥ प्रगते । प्रतिछिते ॥ प्रक्षिप्ते ॥ पटेतिर्यक्तन्तौ ॥ वहिर्व्याप्ते ॥ प्रपूर्वादेञः कर्मणिक्तः । यजादित्वात्सम्प्रसारणम् ॥

प्रोतोत्सादनम् । न० छत्रे । वस्त्रकुटिरे ॥

प्रोत्फल : । पुं० स्थिरलाख्याने । तलवृक्षसदृशवृक्षविशेषे । छडी०छडा०डू०गौ०भा० ॥

प्रोत्फुल्ल : । त्रि०विकसिते ॥

प्रोत्साह : । पुं० प्रकृष्टोद्यमे ॥

प्रोथ : । पुं० अध्वगे ॥ स्फिचि । गाटकी । स्त्रीगर्भे ॥ घोणतिर्यक्ते ॥ महरे ॥ पुं०न०घोणायाम् । अश्वनासिकायाम् ॥ त्रि० अध्वगे ॥ प्रथिते ॥ प्रोथति । प्रोथपर्याप्तौ । पुंसो सिच : । प्रथवेवा । प्रकृष्टगतौ । स्थिरपृथुपृथयूप्रीणा० : डू०धक् । निपातनाद्गुण : ॥

प्रोथन : । त्रि० सीदति ॥

प्रोप : । पुं० सन्ताप

प्रोषित : । त्रि० प्रवासगते । विदेशस्थे । अपगते ॥

प्रोषितभर्तृका । स्त्री० विदेशस्थभर्तृकायाम् ॥ काम्यपरदशायां समागोऽलरहस्यम् । क्रीडागरोरसंस्कारस्वनेतुप्रोषितभर्तृका ॥ प्रोषितोभर्तायस्या : ॥ सोयादिप्रा यिकाभेदे ॥ देशान्तरगते पत्यौ सन्तापाकुलाप्रोषितभर्तृकेतिलक्षणम् ॥

प्रोष्ठ : । पुं० गवि ॥ शफर्याम् । प्रोष्ठीमत्स्ये ॥ प्रकृष्टयोष्ठोऽस्य । ओत्वोष्ठयो : समासेवा ॥

प्रोष्ठपद : । पुं० भाद्रमासे ॥

प्रोष्ठपदा । स्त्री० पूर्वभाद्रपदोत्तरभाद्रपदयो : ॥ प्रोष्ठोगौस्तस्येवपादायासाम् सुप्रातसुश्वसुदिवशारिकुक्षीत्यादिनावहुव्रीहावच् ०पक्षान्त्यनिपातित : ॥

प्रोष्ठपदी । स्त्री० भाद्राम्पूर्णिमायाम् ॥

प्रोष्ठपाद : । पुं० प्रोष्ठपदासुजाते ॥ सन्धिवेलेत्यादिनाऽण् । चे प्रोष्ठपदानामित्युत्तरशब्दस्याचामादेरची वृद्धि : ॥

प्रोष्ठी । स्त्री० शफरे । शफर्याम् । वैदरीमच्छी०सफरी०पोठी०पुठी०. इ०भा०प्र०मत्स्ये ॥ प्रोष्ठीतिनामकटु : स्वादु : शुक्रश्लेष्मकफवातजित् । स्निग्धास्यकण्ठरोगघ्नीरोचनीबलदु:स्मृता ॥ प्रकृष्टपोष्ठोस्या: । घोत्त्वोष्ठयो : समासेवा । नासिकोदरौष्ठेति०जातेरितिवाङीष् ॥

प्रोष्य । प० देशान्तरेउषित्वेत्यर्थे ॥

प्रोह : । पुं०गजाङ्घ्रौ । हस्तिपादे ॥ पर्वणि ॥ गजान्तरपर्वणि ॥ प्रोहशरणपर्वगौतित्रिकाण्डशेष: । त्रि०निपुणे •तर्के ॥

प्रौट : । पुं० वत्सरे ॥ त्रि० प्रगल्भे ॥ प्रवृद्धे । वर्द्धिते । प्रवित्ते निपुणे । प्रोहोतेस्म । वह० : क्त : सम्प्रसारणम् । प्रादूहेतिवृद्धि : ॥

प्रौढपाद : । पुं० आसनारोपितपादतले । आसनोपरिपादतलद्वयसंयोगपूर्वकोपवेशने ॥ वस्त्रादिनाबद्धपृष्ठजानुजङ्घारम्भे । वस्त्रादिद्वारापृष्ठजानुजङ्घाद्वयदृढवन्धनपूर्वकोपवेशने यथा । आसनारूढपादस्तुजानुनोर्जङ्घयोस्तथा । कृतावसक्थिकोयस्तुप्रौढपाद : सउच्यते ॥ स्नानमाचमनंहोमंभोजनंदेवताऽर्चनम् । प्रौढपादोन कुर्वीत स्वाध्यायंपितृतर्पणम् ॥ इति कात्यायन : ॥ अनेकोपाध्येशार्मिकभूमिसमेदूष्टकाष्ठसङ्कीर्णेभूताद्वतिबौधायनवचनात्तथाविधे आरूढपादोपिकुर्यात् । इत्याह्निकतत्वम् ॥

प्रौढा । स्त्री० नायिकाभेदे । चिरंव्याम् । प्रगल्भायाम् ॥ यथा । बालातुतरुणीप्रौढावृद्धाभवतिनायिका । गुणयोगेनरन्तव्या नारीवश्याभवेत्सदा ॥ त्रिंशद्वर्षादूर्द्ध्वंपञ्चपञ्चाशद्वर्षपर्यन्तंप्रौढावस्था । यथा । आषोडशीभवेद्बालातरुणीत्रिंशतास्मृता । पञ्चपञ्चाशतोप्रौढा भवेद्वृद्धातत : परम् ॥ आसांविभक्तकारणंयथा । अलङ्कारादिभिर्बाला तरुणीरतियोगत : । प्रेमदानादिभि : प्रौढा वृद्धाचदृढताडनात् ॥ आसांरमणे गुणदोषायथा । बालातुप्राणदाप्रो

ज्ञातरुणीप्रायाचारिणी । प्रौढाकरोतिसुरत्वकुशासरणदाम्भवेत् ॥ मुग्धादित्रिविधान्तर्गतप्रगल्भायांनायिकायाम् ॥ स्मरमन्दीकृतव्रीडाप्रौढासंपूर्णयौवना ॥

प्रौढि : । स्त्री॰ उत्साहे । प्रगल्भतायाम् ॥ उद्यमे । उद्योगे । क्रियदेतिकायाम् ॥ सामर्थ्ये ॥

प्रौष्ठपद : । पुं॰ भाद्रमासे । प्रौष्ठपदीपौर्णमास्यस्मिन् । सास्मिन्पौर्णमासीत्यण् ॥

प्रौष्ठपदिक : । पुं॰ प्रौष्ठपददेवताके ॥ प्रौष्ठपदोदेवतास्य । महाराजप्रौष्ठपदाट्ठञ् ॥

प्रौष्ठपदी । स्त्री॰ भाद्रपौर्णमास्याम् ॥ प्रौष्ठपदाभि : पूर्वभाद्रपदोत्तरभाद्रपदाभिर्युक्तापौर्णमासी । नक्षत्रेणयुक्त : कालइत्यण् । ङीप् ।

प्रौह : । पुं॰ प्रौढे ॥ प्रकर्षेणवह : । हृद्धि : ॥

प्लक्ष : । पुं॰ पर्कटिनि । पर्कट्याम् । पाखर॰ इ॰ प्र॰ वृक्षे ॥ प्लक्ष : कषाय : शिशिरोव्रणयोनिगदापह : । दाहपित्तकफास्रघ्न : शोथहारक्तपित्तहृत् ॥ गर्दभाण्डे । कन्दराले । गेंडो॰ इ॰ वृक्षे ॥ कुञ्जराशने । अश्वत्थे ॥ पर्करी । सर्पान्तरे॰ । प्लक्षति । प्लक्ष॰ । प्लक्षैरक्षोपमच्छाया प्रतिस : ॥ प्रक्षरति॰ पा॰ । घरसचलने । धन्यथापीतिड : । कपिलकादि : ॥ यद्वा । प्लक्ष्यते । प्लक्ष भक्षणे । कर्मणिघञ् । प्लक्षच्छयोगफलतिः । अच् ॥ द्वीपविशेषे ॥ जम्बुद्वीपस्यविस्ताराद्द्विगुणेनसमन्तत : । संवेष्टयित्वाक्षीरोदंप्लक्षद्वीपोव्यवस्थित : ॥ प्लक्षद्वीपेषुविप्रेन्द्रा : सप्तासन्कुलपर्वता : । ऋज्वायता : सुपर्वाण : सिद्धसङ्घनिषेविता : ॥ गोमेदइत्यस्यैवनामाभारम् ॥

प्लक्षसरस्वती । स्त्री॰ तीर्थविशेषे ॥

प्लक्षोदुम्बर : । पुं॰ तीर्थविशेषे ॥

प्लव : । पुं॰ प्लवने । प्लुतौ ॥ भेके । भेलके । डोंगा॰ इ॰ प॰ जलतरणसाधने ॥ भेके । दर्दुरे ॥ शत्रौ ॥ श्वपचे । चाण्डाले । पापे । मर्कटे ॥ जलकाके । कुलके ॥ प्रमणे । क्रमनिम्नमहीभागे । पर्कटीद्रुमे । कारण्डवखगे । शब्दे । प्रतिगतौ ॥ अभिप्लवनातौ । जलान्तरे ॥ जलकुक्कुटे । हंसादिजलचरपक्षिषु ॥ तेयथा । हंससारसकाचाक्षवकक्रौञ्चशरारिका : नन्दीमुखीसकादम्बाद्यबलाकाद्या : प्लवा : स्मृता : ॥ प्लवन्तेसलिलेयस्मात् तेतस्मात्प्लवा : स्मृता : ॥ प्लवा : पित्तहरा स्निग्धामधुरागुरवोहिमा : । वातश्लेष्मप्रदाश्चापिबलशुक्रकरा: सरा:

॥ ३५ नत्सरवि० । दुर्भिक्षंजाय तेसर्वामेदिनीपुष्पतिप्रिये । प्लवेपु र्वान्ततोयानि पीडितामानवाभुवि ॥ ३५ न० कैवर्तीमुस्तके गन्धद्रव्ये ॥ प्लुघते प्लुङ्, अच् ॥ यथा । प्लवनम् । प्लुङ्गतौ । ऋदोरप् । प्लुयतेऽनेनवा ॥

प्लवकः । पुं० खड्गधारादिनर्त्तके । किलवी ॥ चण्डाले ॥ प्लक्षे ॥ भेके ॥

प्लवगः । पुं० कपौ । वानरे ॥ भेके ॥ मण्डूके ॥ सूर्यस्यसारथौ ॥ शिरीषवृक्षे । सुमतिनाम्नोर्ऽहशिष्यस्यपत्नी ॥ प्लवेनगच्छति । गमूल० अन्येभ्योपीत्यन्येष्वपीतिवाडः ॥

प्लवगतिः । पुं० भेके । मण्डूकी ॥

प्लवङ्गः । पुं० प्लवगे । शाखामृगे । प्लक्षवृक्षे ॥ ४१ ॥ दनारे ॥ तृणधान्यानिपीडन्तेयौष्मे वर्षतिवासवः प्लवङ्गपीडिताः सर्वाः प्रजाश्चसुरवन्दिते ॥ ४१ ॥ प्लवनम्०प्लवः । सुक्षेप् । प्लवेनगच्छति । गमूल० । अन्येभ्योपीत्यन्येष्वपीतिवाडः । गमश्चेतिखच् खच्चडिद्वा । मुमागमः ॥ मृगे ॥

प्लवङ्गमः । पुं० मण्डूके ॥ शाखामृगे प्लवेनप्लुत्यागच्छति । गमूल० । गमश्चेतिखच् । मुमागमः ॥ मात्राछन्दोन्तरे ॥ यथा पटकलमादिगुरुं प्रथयद्भुसमन्ततम्० पयाधतः सततोपिचतुष्कलसङ्गतम् । नायकमथचतुर्थमितोगुरुमन्तधि०पदाधिकविंशतिः प्लवङ्गमकस्फी ॥ यथा । विष्णुविरचितदिशाकरवासवव न्दितम् । विघ्नतविषयविषादकमुनिजनसेवितम् । चञ्चलतातुष्णितस्वसुखंनहिवाञ्छथ० सङ्करपादसरोरुहः परिभावय ॥ इति ॥

प्लवनः । त्रि० प्रवणे । क्रमनिम्नभूमौ ।

प्लवमानः । त्रि० तरति ॥ तरत० तरता० इ० भा० ॥

प्लविकः । त्रि० भेकेनतरमाणे ॥ भेकेनतरतीतीद्व्यपष्ठन् ॥

प्लाक्षम् । न० प्लक्षफले ॥ प्लक्षस्यफलम् । प्लक्षादिभ्योण् । विधानसामर्थ्यात्तस्यफलेनलुक् ॥

प्लावनम् । न० द्रवद्रव्यस्योर्ध्वप्रापणे । उच्छलना० उपटाना० इ० भा० ॥ य० । तापनं घृततैलानांप्लावनंगोरसस्यच । तन्माचमुद्धरंशुध्येत्कठिनस्तुपयोदधि ॥ मज्जने । बहुतरजलसंयोगे ॥

प्लावितः । त्रि० जलादिमग्नस्थानादौ । सिक्ते ॥

प्लिहा । पुं० प्लीहरोगे । गुल्मे ॥ यथा । यकृत्प्लिहान्तायिमुखादिवचिपर्बितिधैवकम् ॥

प्लीहघ्नः । पुं० रोहिषे । रोहितके

। दाडिमपुष्पके । रोहडागाछ० इ० गौ० भा० प्र०ह्वे ॥

प्लीहा । पुं० गुल्मे । कुक्षिवामपार्श्वस्थमांसखण्डे । पिल्ही० तापतिल्ली इ० भा० । शोणितान्जायते प्लीहा वामतो हृदयादधः । रक्तवाहिशिराणांस मूलंख्यातोमहर्षिभिः ॥ विदाह्यभिष्यन्दिरतस्य जन्तोः प्रदुष्टमत्यर्थमसृक् कफश्च । प्लीहाभिवृद्धिं कुरुतः प्रवृद्धौ प्लीहसञ्ज्ञं गदमामनन्ति ॥ प्लेहति । प्लिहगतौ । श्वन्नुक्षन् पूषन् प्लीहन्नित्यादिनासाधुः ॥

प्लीहशत्रुः । पुं० दाडिमपुष्पे । रोहितवृक्षे ॥ स्वल्पफलाम्बुपायाम् ॥ शरपुङ्खे ॥ प्लीह्नः शत्रुः ॥ विभीतके कोकिलाक्षे ।

प्लीहघ्नी । स्त्री० अश्वत्थफलायाम् । हबुषायाम् ॥

प्लीहा स्त्री० प्लीहरोगे ॥ यकृत् प्लीहेत्यस्य दे० इतिप्रयोगात् ॥

प्लीहारिः । पुं० अश्वत्थवृक्षे प्लीहायामरिः ॥

प्लीहाशत्रुः । पुं० प्लीहघ्ने ॥ कोकिलाक्षे ॥

प्लुषिः पुं० अग्नौ । प्लोषति प्लुष० । प्लुषिकुषिशुषिभ्यः क्सिः ॥

प्लुतः । पुं० त्रिमात्रवर्णे ॥ न० अश्वगतिविशेषे ॥ त्वरयाभ्युन्नेनाश्वगतौ ॥ उत्पतने । तिर्य्यग्गतौ । त्रि० आप्लुते । प्रसृते ॥ कम्पगतियुक्ते स्रवणम् । प्लुतौ ॥ भावेक्तः ॥

प्लुतिः । स्त्री० प्लवने ॥

प्लुषः पुं० दहने ।

प्लुषिः । पुं० पुत्तिकायाम् । अल्पमक्षिके ॥

प्लुष्टः । त्रि० दग्धे ॥ प्लुष्यतिस्म । प्लुषदाहे । क्तः । यस्येतिनिट् ॥

प्लोषः । पुं० शोषे, दाहे ॥ प्लोषणम् प्लुष० घञ् ॥

प्सा । स्त्री० भक्षणे ॥

प्सातम् । त्रि० भक्षिते ॥ प्सायतेस्म । प्साभक्षणे । क्तः ।

प्सानम् । न० भोजने ॥

०○—‡—○०

फः । पुं० पवर्गद्वितीयाक्षरे ॥ यक्षसाधने । स्फारे । झञ्झावाते ॥ वर्द्धके । जृम्भायाम् ॥ स्फुटे । फलप्राप्तौ न० रूक्षोक्तौ ॥ फूत्कृतौ ॥ निष्फलभाषणे ॥

फक्किका । स्त्री० पूर्वपक्षे । असद्व्यवहारे । चोद्ये । फांकी० इ० भा० । न्यायसम्बन्धिव्याख्याविशेषे ॥

फञ्जिका । स्त्री० भार्ग्याम् । ब्राह्मणयष्टिकायाम् ॥ भनक्तिरोगान् । भञ्जो आमर्दने ॥ ण्वुल् । पृषोदरादिः देवताडे ॥ दुरालभायाम् ।

फञ्जिपत्रिका । स्त्री० आखुपर्ण्याम् ॥

फञ्जी । स्त्री० भार्ग्याम् ॥ मनक्तिरोगान् । भञ्जो० । अच् । पृ० । गौ० ङीष् ॥

फट् । अ० अनुकरणशब्दे ॥ विघ्ननिराकृतौमन्त्रे ॥

फटा स्त्री० फणे ॥ दम्भे ॥ स्फुटति । स्फुटविकसने । चु० । णिज भावे० पचाद्यच् । पृषोदरादि : ॥

फड्डिका । स्त्री० झिल्लिकायाम् ॥

फण : । पुं० फणायाम् ॥ फणति । फणगतौ । पचाद्यच् ॥ फटायान्तु फणाद्वयोरित्यमरः । शर्षोर्ध्वकायपंफणमितिस्त्रीस्वकाण्डे चन्द्रगोमी ॥

फणकर : । पुं० भुजङ्गे ॥

फणधर : । पुं० सर्पे ॥

फणधरधर : । पुं० शिवे ॥

फणभारी । फणाभृति ॥

फणभृत् ।<br>फणवान् । (पुं०) सर्पे ॥

फणा । स्त्री० सर्पविस्तृतमस्तके फटायाम् ॥ फणति । फण० अच् । टाप् ॥

फणाकार : । पुं० सर्पे । भुजङ्गमे ॥ फणाकरोऽस्य ॥

फणाधरः ।<br>फणाभरः । पुं० सर्पे कुम्भीनसे । द्विरसने ॥

फणावान् । पुं० श्वसनाशने । विषाऽऽस्ये । सर्पे ॥ फणास्त्यस्य । मतुप् ॥

फणिकेसर : । पुं० नागकेशरे ॥ फणिसंज्ञक : केसर : ।

फणिखेल : । पुं० भारतीपक्षिणि गरुड्योधनि । भार० द्रू०गौ०भा० ॥

फणिजिह्वा । स्त्री० महाशतावर्याम् ॥ महासमङ्गायाम् ॥ सारिकायाम् ॥

फणिज्झक : । पुं० प्रस्थपुष्पे । मरुवा० द्रू० भा० फणिजातोऽस्मात्०फणाभपत्रपुष्पत्वात् । फणीउज्झकोवर्णकोऽस्मिन्निति किंचित् । उभयत्रपृषोदरादि : ॥ स्त्री० रामदूत्याम् ॥

फणी । पुं० सर्पे ॥ फणास्त्यस्ति । व्रीह्यादित्वादिनि : ॥ सर्पिख्यामौषधौ ॥

फणिप्रिय : । पुं० वायौ ॥

फणिफेन : । पुं० अहिफेने ॥

फणिभुवनम् । न० पाताले ॥

फणिवल्ली । स्त्री० नागवल्याम् ॥

फणिहन्त्री । स्त्री० रास्नायाम् । गन्धनाकुल्याम् ॥

फणिहृत् । स्त्री० क्षुद्रदुरालभायाम् ॥

फणीश्वर : । पुं० अनन्ते ॥ फणिनामीश्वर : ॥

फण्ड : । पुं० जठरे ॥

फत्कारी । पुं० पक्षिमात्रे ॥

फरम् । न० फलके ॥

फलवकम् । न० पूगपात्रे ॥

गादुत्तम् २० ॥ नियतोत्तरभाविनि ॥ फलति फलनिष्पत्तौ० ञि फलाविशरणेषु । पचाद्यच् ॥ फलं द्विविधम् । सातिशयंनिरतिशयञ्च । तत्रसातिशयंस्वर्गादि० निरतिशयं मोक्ष : सचपरमानन्दस्वरूप : ब्रह्मणस्तद्रूपत्वात् ॥ फलंफलोपनेयोर्बोनिष्पत्तौभोगलाभयो : । सऊडरिकेशव: ॥ फलेच्छासाधनंसंक्रामति ।
फलक : । पुं० न० चर्मणि । फले । ढाल० इ० भा० ॥ फलति । ञिफला० । क्वात्रादिभ्योवुन् । पुं० दारुघटितदीर्घासने । फला० मट्टा० पटडा० इ० भा० ॥ काष्ठादिपट्टके ॥ यथा । पाण्डुभिस्विन्नफलकेभूमौ वाप्रथमंलिखेत् । जनाधिकतुसंशोध्य पश्चात्पत्रे निवेशयेत् ॥ इति ॥ मस्तिष्कखण्डे ॥ नागकेसरे ॥ रक्तकाष्ठपट्टे । यास्मैपफलकेस्थलेनिन्यादासांसिनिर्णक : । नववासांसि वासोभिनिर्ह्निर्णिज्यवासयेत् ॥
फलकपाणि : । त्रि० चर्मणि । फलकधारिणि । ढलैत० इ० भा० ॥ फलकंपाणौयस्य ॥
फलकी । पुं० फलु इ० गौ० प्र० मत्स्ये ॥ त्रि० फलकान्विते ॥
फलकीतीर्थम् । न० तीर्थविशेषे ॥
फलकृष्ण : । पुं० पानीयामलके ॥
फलकेशर : । पुं० नारिकेलवृक्षे ॥
फलकोषक : । पुं० अण्डकोषे ॥
फलग्राही । पुं० वृक्षे । त्रि० फलग्राहकत्तरि ॥
फलचमस : पुं० दधिमिश्रितवटत्वक्चूर्णे
फलचोरक : । पुं० चोरकनामगन्धद्रव्ये ॥
फलत्रयम् । न० द्राक्षापरूषकाश्मरीषु ॥ त्रिफलायाम् ॥ फलानांत्रये ॥
फलत्रिकम् । न० त्रिफलायाम् ॥ हरीतक्यादित्रये ॥ फलानांत्रिकम् ॥
फलद : । पुं० ईश्वरे ॥ वृक्षे त्रि० फलदातरि ।
फलपक्वास्त्रम् । न० परुषकफले ॥
फलपाक : । पुं० पानीयामलकी ।, करमर्द्दके ॥
फलपाकान्ता । स्त्री० धान्यकादल्याद्योषधौ ॥ फलपाकेनान्तोयस्या: ॥
फलपाकी । पुं० गर्दभाण्ड ॥
फलपुच्छ : । पुं० वरकालौ ।
फलपुष्पा । स्त्री० पिण्डखर्ज्जूर्य्याम् ॥ द्रोणपुष्पाम् । गुमा० इ० भा० ॥
फलपूर : । पुं० बीजपूरे । बिजौरा० इ० भा० । फलैनपूर्य्यते । पूरी० । इगुपधेतिक ॥ कर्म्मणिघञ्वा ॥
फलपूरक : । पुं० छोलङ्गे । बीजपूरे ॥
फलप्रद : । पुं० ईश्वरे । धर्मदानेन नष्टे पितृत्फलप्रदईश्वर : । यतोस्थितेनदातारंतंप्रगसंस्थितेदिवा :

॥ नापूर्वंफलदंतस्मिन्मानाभावा-
त्फलंपुनः । ईश्वरादेव्युपपन्नत्वा-
न्नैवापूर्वस्य कल्पकम् ॥ सेव्याद्दा-
प्यः फलप्राप्तिर्ह्यस्तेनत्वपूर्व्वतः ।
दानादिक्रिययासेव्याद्दोषात्तद्वत्
फलमयेत् ॥

फलप्रिया । स्त्री० प्रियङ्गौ ॥

फलभूमिः । स्त्री० कर्म्मफलभोगस्था-
ने ॥ यथा । भरताख्यैरावतानिवि
देहाश्चकुरून्विना । वर्षाणिकर्म्म
भूम्यः स्युः शेषाणिफलभूमयइति
हेमचन्द्रः ॥

फलमुख्या । स्त्री० पिण्डखर्ज्जूरे ॥ अज
मोदायाम् ।

फलमुद्गरिका । स्त्री० पिण्डखर्ज्जूरे ॥

फललक्षणा । स्त्री० प्रयोजनवत्त्वाल्लक्ष
णायाम् ॥ यथा व्यङ्ग्यस्यगूढागूढ
त्वाद्द्विधास्युः फललक्षणाः इति
साहित्यदर्पणः ॥

फलवान् । त्रि० फलिनि । फलसहित
वृक्षे ॥ फलिनि ॥ फलवत् सन्निधा
धावफलंतदङ्गम् ॥ फलान्यस्यसन्ति
। मतुप् ॥

फलवर्त्तुलम् । न० कालिङ्गे ॥

फलविषयः । त्रि० फलव्याप्ये । घना
त्मनि ॥

फलवृन्तकः । पुं० पनसे ॥

फलव्याप्यत्वम् । न० वाह्येन्द्रियसन्निकृ
ष्टार्थाकारबुद्धिवृत्त्यवच्छिन्न
चिदंशकर्म्मे० प्राबाध्याश्रयत्वं ॥ फलवृ
त्तिप्रतिबिम्बितचिदाभाससङ्गाप्य
त्वमित्यर्थः ॥

फलशाकम् । न० षड्विधशाकान्तर्ग
तफलरूपशाके ॥

फलश्रेष्ठः । पुं० आम्रे ॥ फलेषुश्रे
ष्ठः ॥ तद्वृत्ते ॥

फलषाडवः । पुं० दाडिमे ॥

फलशैशिरः । पुं० बदरवृक्षे ॥

फलश्रुतिः । स्त्री० कर्म्मप्रशस्तिनिमि
त्तप्रलोभनजनकवाक्ये । कर्म्मफलश्र
वणे ॥ यथा । फलश्रुतिरियंनृणांन
श्रेयोरोचनंपरम् । श्रेयोविवक्षया-
प्रोक्तंयथाभैषज्यरोचनम् ॥ अपिच ।
वेदोक्तमेवकुर्वाणोनिःसङ्गोऽर्पितमी
श्वरे । नैष्कर्म्यांलभतेसिद्धिंरोचना
र्थाफलश्रुतिः ॥

फलस्नेहः । पुं० अक्षोटवृक्षे ॥

फलहारी । स्त्री० काल्याम् ॥

फला । स्त्री० झिञ्झिरिष्टाक्षुपे ॥

फलाढ्या । स्त्री० काष्ठकदल्याम् ॥

फलाध्यक्षः । पुं० राजादने । क्षीरि
कायाम् । खिरणी० इ० भा० ॥
फलानामध्यक्षः ॥

फलादनः । पुं० शुके । कीरे । सूवा
इ० प्र० पक्षिविशेषे । त्रि० फलान्ये
वादनंयस्य तस्मिन् ॥

फलान्तः । पुं० वंशे ॥ फलेनफलैर्वा
अन्तोयस्य ॥

फलाम्ल: । पुं॰ अम्लवेतसे ॥ न॰ वृक्षाम्ले ॥

फलाशन: । पुं॰ शुकपक्षिणि ॥ त्रि॰ फलभक्षके ॥

फलासव: । पुं॰ फलरसविकृतीसुराप्रभेदे ॥

फलि: । पुं॰ फलुक इ॰ म॰ मत्स्ये ॥

फलिका । स्त्री॰ निष्पाव्याम् ॥

फलित: । पुं॰ वृक्षे ॥ न॰ शैलेये । शिलापुष्पे ॥ त्रि॰ सफले । सञ्जातफले ॥ फलानिसञ्जातान्यस्य । तारकादित्वादितच् ॥

फलितार्थ: । त्रि॰ निष्कृष्टार्थे ॥ फलितस्सारार्थश्च ॥

फली । त्रि॰ फलवति ॥ फलान्यस्यसन्ति । वनस्पति: ॥

फलिन: । त्रि॰ फलवति ॥ विद्यमानफले । फलान्यस्यसन्ति । फलबर्हाभ्यामिनच् ॥ पुं॰ पनसे फलवति वृक्षे च ॥ इति राजनिर्घण्ट: ॥

फलिनी । स्त्री॰ प्रियङ्गुवृक्षे । अग्निशिखावृक्षे ॥ नान्तलक्षणोङीप् ॥

फली । स्त्री॰ प्रियङ्गुवृक्षे ॥ गौरादित्वान्ङीष् फलिमत्ये ॥

फलीकरणम् । न॰ तुषे ॥

फलीश: । पुं॰ पारिशे ॥

फलूष: । पुं॰ लताप्रभेदे ॥

फलेग्रहि: । पुं॰ यथाकालफलधरे । अवन्ध्यवृक्षे ॥ त्रि॰ फलग्रहणकर्तरि ॥ फलानिगृह्णाति । अच्॰ । फलेग्रहिरात्मम्भरिश्चेति उपपदस्य एदन्तत्वं ग्रहेरिन्प्रत्ययश्च निपात्यते ॥

फलेन्द्र: । पुं॰ राजजम्बाम् । फरेंदा॰ इ॰ भा॰ ॥

फलेपुष्पा । स्त्री॰ द्रोणपुष्प्याम् ॥

फलेप्सु: । त्रि॰ सकामेजने ॥ फलंप्राप्तुमिच्छतीतितथा ॥

फलेरुहा । स्त्री॰ पाटलायाम् । पाटलिवृक्षे ॥ फलेरोहति । इगुपधेतिक: क: । तत्पुरुषेकृतीत्यलुक् ॥

फलोत्तमा । स्त्री॰ काकलीद्राक्षायाम् । निशींतायाम् । किसमिस॰ इ॰ भा॰ ॥

फलोत्पत्ति: । पुं॰ आम्रवृक्षे ॥

फलोदय: । पुं॰ लाभे ॥ त्रि॰ दिविशालये ॥ फलस्यउदय: षष्ठीत्वा ॥

फल्क: । पुं॰ विसारिताङ्गे ॥

फल्गु: । स्त्री॰ गयास्थनद्याम् । मलयाम् । काकोदुम्बरिकावृक्षे । गुला॰ घा॰ भाग॰ इ॰ प्र॰ रेणुप्रभेदे ॥ मिथ्यावाक्ये ॥ त्रि॰ तुच्छे । असारे ॥ यथा । धनमात्मगतिंला जगदेतत् तिफल्गु । धनलोभमपहाय नमप्यनयनाय ॥ फलतिनिष्फलाविशरणे॰ फलमिष्यतेवा । फलिपाटीति साधु: ॥

फल्गुतीर्थम् । न० गयानद्याम् ॥ सार्द्धक्रोशद्वयं मानं गयायांपरिकीर्त्तितम् । पंचक्रोशंगयाक्षेत्रं क्रोशमेकंगयाशिर : ॥ तत्रपिण्डप्रदानेन तृप्तिर्भवतिशाश्वती ॥ नागाज्जनार्दनाच्च यकूपाच्चोत्तरमानसात् ॥ एतद्गयाशिर : प्रोक्तं फल्गुतीर्थं तदुच्यते । तत्रपिण्डप्रदानेनपितॄणांपरमागति : ॥ पृथिव्यांयानितीर्थानियेसमुद्रा : सरांसिच । फल्गुतीर्थंगमिष्यंतिवारमेकंदिने दिने ॥

फल्गुदा । स्त्री० गयानद्याम् ॥

फाल्गुन : । पुं० अर्जुनपाण्डवे ॥ अर्जुनपादपे ॥ फलतिनिष्पादयति मास० फलेर्गुक्चेत्युनन्०गुगागमश्च । भि० फल्गुन्यांजाते ॥ अविशाफल्गुनीस्वयोर्लुक् । लुक्तद्धितलुकि ॥

फाल्गुनी । स्त्री० नक्षत्रविशेषे । पूर्वफाल्गुन्यो : ॥ काकोदुम्बरिकायाम् । फाल्गुन्यांजातायाम् । श्रविष्ठाफल्गुनीस्वयोर्लुक् । लुक्तद्धितलुकीतिस्त्रीप्रत्ययस्यचलुकि० फाल्गुन्यषाढाभ्यांटानौ टित्वात् ङीप् ॥

फल्गुवाटिका । स्त्री० काकोदुम्बरिकायाम् ॥

फल्गुवृन्तक : । पुं० श्योनाकवृक्षभेदे ॥

फल्गुस्रव : । पुं० दीलयाचायाम् ॥

फल्यम् । न० कुसुमे ॥

फल्यकी । स्त्री० फलिमत्स्ये ॥

फलफल : । पुं० सूर्पवाते ॥

फा: । पुं० वृद्धौ ॥ वर्द्धने ॥ सन्तापे ॥ निष्फलभाषणे ॥

फाटकी । स्त्री०स्फटिकायाम् । फटकिरी इ० भा० ॥

फाण्टि: । स्त्री० गुडे ॥ आरंभे ॥

फाणितम् । न० मत्स्यण्डाम् । राव इ० भा० यथा । इक्षोरसस्तुय : पक्व : किञ्चिद्गाढोबहुद्रव : । सएवेक्षुविकारेषुख्यात : फाणितसंज्ञया ॥ फाणितंगुर्वभिष्यन्दिबृंहणं कफशुक्रकृत् । वातपित्तश्रमान्हन्ति मूत्रबस्तिविशोधनम् ॥ फणयति । फाणगतौ । क्तस्य इट् ॥

फाण्ट : । त्रि० अनायासकृते ॥ पुं० न० कषायविशेषे ॥ क्षुण्णेौषधभागेतस्मादुष्णोदकेप्रक्षिप्य सद्योभिपुत्वपूतं यत्पीयतेतत्फाण्टमित्याहु : ॥ यथा । क्षिप्त्वोष्णतोयेमृद्वित : फाण्टद्रव्यभिधीयते ॥ अपिच । चूर्णानिपलेसम्यक्तप्तमुदकविनिःक्षिपेत् पात्रेचतुष्पलमितेततस्तुस्रावयेत्पलम् ॥ सोयंचूर्णद्रव : फाण्टोभिषग्भिरभिधीयते ॥ इति वै० प० ॥

फाण्टतिस्म । फण० । क्त : । क्षुब्धस्वान्तेतिसाधु : ॥ नवनीतभावात्प्रागवस्थापन्ने द्रव्ये ॥

फलाम्ल : । पुं० अम्लवेतसे ॥ न० वृ
क्षाम्ले ॥

फलाशन : । पुं० शुकपक्षिणि ॥ त्रि०
फलभक्षके ॥

फलासव : । पुं० फलरसविकृतीसुरा
प्रभेदे ॥

फलि : । पुं० फलुइ इ० प्र० मत्स्ये ॥

फलिका । स्त्री० निष्पाव्याम् ॥

फलित : । पुं० वृक्षे ॥ न० शैलेये ।
शिलापुष्पे ॥ त्रि० सफले । सञ्जात
फले ॥ फलानिसञ्जातान्यस्य । ता
रकादित्वादितच् ॥

फलितार्थः । त्रि० निष्कृष्टार्थे ॥ फलि
तश्चासावर्थश्च ॥

फली । त्रि० फलवति ॥ फलान्यस्यस
न्ति । फलादिनि : ॥

फलिन : । त्रि० फलवति ॥ विद्यम
नफले । फलान्यस्यसन्ति इनन्० इ०
अभ्यासिन् ॥ तत्रजातस्यफलम् । नियं
यद् : सज्जनवल्लभस्यपरोपकारीति
मवाप्यस्य । दातानितान्तंप्रमदाभि
लाषीस्यात्फाल्गुनेयस्यजनस्यजन्म
॥ अनन्तपुरे ॥ फलतिनिष्पादयति
। फल० । फलेर्गुक्चेतिउनन् । गु-
गागमश्च । ततः प्रज्ञाद्यण् ॥
यद्वा । फाल्गुनीपौर्णमास्यस्मिन्
विभाषाफाल्गुनीतिपचे०श्वण् ॥

फाल्गुनानुज : । पुं० सुरभौ । वसन्त
काले ॥ अर्जुनस्यकनिष्ठभ्रातरि ॥

रि ॥ फलानिगृह्णाति । ग्रह० ।
फलेग्रहिरात्मम्भरिश्चेति उपपदस्य
एदन्तत्वंग्रहेरिन्प्रत्ययश्चनिपात्य
ते ॥

फलेन्द्रः । पुं० राजजम्ब्वाम् । फरेंदा०
इ०भा० ॥

फलेपुष्पा । स्त्री० द्रोणपुष्प्याम् ॥

फलेप्सु : । त्रि० सकामेजने ॥ फलंप्रा
प्तुमिच्छतीतितथा ॥

फलेरुहा । स्त्री० पाटलायाम् । पाट
लिवृक्षे । फलेरोहति । इगुपधे-
तिकः : क : । तत्पुरुषेकृतीत्यलु
क् ॥

फलोत्तमा । स्त्री० काकलीद्राक्षायाम्
। निर्बीजायाम् । किस्मिस् ० इ०
भा० ॥

फलोत्पत्तिः । पुं० आम्रवृक्षे ॥
स्फाटविह्गे । फिङ्गा० फुदिङ्गिया
प्र० ख्याते ॥

फिरङ्ग : । पुं० रोगान्तरे ॥ देशान्तरे
म्लेच्छविशेषे ॥ तद्वासजने ॥ यथा
। पूर्वाम्नायेनवशतंषडशीति : प्रकी
र्तिताः । फिरङ्गभाषयामन्त्रास्तेषां
संसाधनात्कलौ ॥ अधिपामण्ड
लानाञ्चसङ्ग्रामेष्वपराजिता : ।
इङ्गरेजानवषट् पञ्चलण्ड्राश्चापि
भाविन : । इतिमेरुतन्त्रे २३ प्रका
श : ॥

फु : । पुं० मन्त्रके ॥ तुच्छवाक्ये ॥

फल्गुतीर्थम् । न० गयानद्याम् ॥ सार्द्धक्रोशद्वयमानं गयायांपरिकीर्त्तितम् । पंचक्रोशंगयाक्षेत्रं क्रोशमेकंगयाशिर : ॥ तत्रपिण्डप्रदानेन तृप्तिर्भवतिशाश्वती ॥ नागाज्जनार्द्दनाद्वै यकूपाच्चोत्तरमानसात् ॥ एतद्गयाशिर : प्रोक्तं फल्गुतीर्थं तदुच्यते । तत्रपिण्डप्रदानेनपितॄणांपरमागति : ॥ पृथिव्यांयानितीर्थानियेसमुद्रा : सरांसिच । फल्गुतीर्थंगमिष्यंतिवारमेकंदिनेदिने ॥

फल्गुदा । स्त्री० गयानद्याम् ॥

फाल्गुन : । पुं० फाल्गुनपाण्डवे ॥ अर्जुनपादपे ॥ फलतिनिष्पादयति फल० फलेर्गुकचेत्यन् न० गुगागमश्च ॥ त्रि० फल्गुन्यांजाते ॥ सुविडाफल्गुनीत्यपील्पु । फ फ त- [illegible] नी ' फुफ्फुसद्वयं । दूषुरसपाकमलवद्य : शोणितमलास्तत्र : उण्डुक: सघाल्लदेशेव्यवस्थित : पुरीषाधानम् । फुफ्फुस : हृदयस्यवामपार्श्वेफुफ्फुस इतिख्यातइतिविजयरचित : ॥

फुल्लति : । स्त्री० फलने ॥

फुल्ल : । त्रि० विकसिते ॥ पुष्पे ॥ यथा । श्रीफल्लस्यांश्रियंदेवीफुल्लै : सम्पूजयेत्सदा ॥ फुल्लति । त्रिफला । ञीत: क्त : । आदितश्चेतीडभा

फाल्यम् । न० कुसुमे ॥

फाल्यकी । स्त्री० फलिमत्स्ये ॥

फाफाख : । पुं० सूर्पजवाते ॥

फा: । पुं० स्रष्टौ ॥ वर्द्धके ॥ सन्तापे ॥ निष्फलभाषणे ॥

फाटकी । स्त्री०स्फटिकायाम् । फटकिरी इ० भा० ॥

फाणि: । स्त्री० गुडे ॥ करंभे ॥

फाणितम् । न० मत्स्यण्डयाम् । राय० इ० भा० यथा । इक्षोरसस्तुय : पक्व : किंचिद्गाढोबहुद्रव : । सएवेक्षुविकारेषुख्यात : फाणितसंज्ञया ॥ फाणितंगुर्वभिष्यन्दिबृंहणकफशुक्रकृत् । वातपित्तश्रमान्हन्तिमूत्रवस्तिविशोधनम् ॥ फणति । फाणगतौ । क्तान्त:क्त :॥

फाण्ट : । त्रि० अनायासकृते ॥ पुं० फे [illegible] त्रायुविशेषे ॥ कुसुमौषधजाते ॥ फूत्कारवम् । भृणोऽसिपुल्यपू-

फोत्कारिणी । स्त्री० तन्त्रविशेषे ॥

फेन : । पुं० डिण्डीरे । अब्धिकफे । समुद्रफेने ॥ तरलद्रव्योपर्युत्थितबुद्बुदाकारवस्तुनि झाग० इ० भा० ॥ स्फायते । स्फायी० फेनमीनाविति निपातनात्साधु : ॥

फेनक : । पुं० फेने ॥ पिष्टविशेषे ॥

फेनका । स्त्री० जलपक्वतण्डुलचूर्णे

फेनदुग्धा । स्त्री० दुग्धफेनीक्षुपे ॥

फेनल : । त्रि० फेनवति । फेनिले ॥

फेनोऽस्यास्तिन्वास्ति । फेनादिल-
च्चेतिचकारात्तच् ॥

फेनवान् । त्रि० फेनिले ॥ फेनोऽस्यास्ति
न्वास्ति । फेनादिलच्चेत्यचान्यतर
स्यामित्यनुवृत्तेः पक्षेमतुप् ॥

फेना । स्त्री० क्षुपविशेषे । सातलाया
म् ॥

फेनायम् । न० बुद्बुदे ॥

फेनायमान : । त्रि० फेनसदृमति ॥
फेनायतेतिवत्तत्स्यमितिक्यङ् ॥

फेनवाही । पुं० वस्त्रे ॥

फेनाग्नि : । पुं० इन्द्रे ॥

फेनिका । स्त्री० पक्वान्नविशेषे । फेनी
इ० भा० ॥ यथा समितायाघृता
दायायवर्त्तीर्दीर्घाः समाचरेत् । ता
सुसन्निहितादीर्घाःपीठस्योपरिधार
येत् ॥ विन्यसेद्‍विस्तनैस्तायवैकामर्थ्य-
टीभवेत् । ततश्छुरिकयातान्तुसंख
ण्डामेवमवर्तयेत् ॥ ततस्तुवेल्लयेद्भूयः
शङ्कीनचलेपयेत् तत : संवृत्तता
लोमुर्विदूधीतपृथक्पृथक् ॥ पुन-
स्तांविस्तयेल्लोमुर्यथास्याम्मण्डलाकृ-
ति : । ततस्तांसुपचेदाज्ये भवेयुस्य
पुटाः स्फुटाः ॥ सुगन्धखण्डकैरस्या
तदुद्धूलनमाचरेत् । सिद्धेयाङ्के नि
कानाम्नीमठकैनसमागुणैः ॥ ततः
किञ्चिन्नघुरियमुविशेषोयमुदाहृतः ॥

फेनिल : । अरिष्टभूरुहे । रीठा० इ०
भा० ॥ मदनद्रुमे ॥ न० मदनफले

॥ बदरफले ॥ त्रि० सफेने ॥ फे
नोऽस्यास्ति । फेनादिलच्चेतिइ
लच् ॥

फेरः । पुं० शृगाले ॥

फेरण्ड : । पुं० शृगाले ॥

फेरव: । पुं० शृगाले ॥ अधमे । रा-
क्षसे ॥ फे० इति० अव्यक्तोरवोऽस्य
॥ त्रि० धूर्त्ते ॥ हिंस्रे ॥

फेरुः । पुं० जम्बुके । शृगाले । फे०
इत्यव्यक्तं रौति रुधातोः । मितद्रा
दित्वात्० डु : ॥

फेलम् । न० [illegible] भुक्तसमुज्झि
फेलक : पुं० [illegible] ते । उच्छि
ष्टे ॥

फेला । स्त्री० भुक्तोज्झिते ॥ फेल्यते ।
फेलगतौ । गुरोश्चेत्य : ।

फेलि : । भुक्तोज्झिते ।

फेलिका । स्त्री० [illegible] उच्छिष्टे । फ

फेली । [illegible] ट० । इ० भा०

—:०(—)०:—

पवयोरैक्यमभेददर्शनात् ॥

ब : । पुं० पवर्गस्यतृतीयाक्षरे ॥ वरु
णे ॥ सिन्धौ ॥ भगे ॥ तोये ॥
वपने ॥

बंहिमा । पुं० बहुलतायाम् ॥ बहुल
स्यभाव : । पृथ्वादित्वादिमनिच् ।
प्रियस्थिरेतिबहुलस्यबंहित्यादेशः

बंहिष्ठ : । त्रि० अत्यन्तबहुले ॥ अयमे
षामतिशयेनबहुल : । अतिशायने

तमविष्ठनाविलीष्ठन् । प्रियस्थिरेति वंह्रिश्चादेश : ॥

वंहीयान् त्रि० बहुलतरे ॥ अयम नयोरतिशयेनवहुल : । द्विवचन विभज्योपपदेतरबीयसुनावितीयसु निप्रियस्थिरेतिवंह्यादेश : ॥

वक : पुं० कङ्के । बगला० इ० प्र० पचिति ॥ वचस्मांसमुपस्तु । शरा रिवकङ्काकाच टाल्दूहा : वकमा-पडा : ॥ इ० ॥ वकपुष्पे । शिव मल्ल्याम् । अगस्तिद्रुमे । यथा । सितपीतनीललोहितकुसुमभेदाञ्च तुर्विधोऽगस्ति : । मधुरस्तिमिरघ्नो ष्मकासविनाशनश्चभूतघ्न : ॥ तथाचराजनिर्घण्ट : । अगस्तिशि-शिरगौल्यं निर्दोषचक्षुष्यम् । वलासकासवैवर्ण्यभूतघ्नस्वकावच भिति ॥ श्रीदे । कुबेरे । रक्षोविशे षे । योभीमसेनहत: । असुरविशेषे ॥ सचश्रीकृष्णेनहत : ॥ वक्ति । व-क्रिभौटिल्ये गतौच । पच् । बाय सघात्वर्थानिलत्वान्नुम् । ववयो रैक्यम् । यद्वा याति । वायसिवा । वागतिगन्धनयो: । चोवैशोयर्ष्व वा क्रन् । आतोलोप : ॥ वैति० वा-यतिवा । मूलविभुजादित्वात्कः । वक्तिवा । वचेरन् । न्यङ्क्वादि । ॥

वकचिञ्चिका । स्त्री० मत्स्यविशेषे० । वकाच्याम् ॥

वकजित् । पुं० भीमसेने ॥ श्रीकृष्णे ॥

वकनिसूदन : । पुं० श्रीकृष्णे ॥ भीमसेने ॥

वकपुष्प : । पुं० वकवृक्षे ॥ न० अग स्तिकुसुमे ॥

वकवृत्ति : । पुं० वकसमानवृत्तनिच शिठे यथा । यापमिहनोविकर्म-स्वामवैडालवतिकान्शठान् । हैतु, कान्वकवृत्तीवर्वाङ्मात्रेणापिना-र्चयेत् ॥

वकवैरी । पुं० श्रीकृष्णे ॥ भीमसेने ॥

वकव्रतचर : । पुं० वकव्रतिनि ॥ वक व्रतंचरतीति० तथा । चरेष्ट : । वकोऽभिप्रायेयमीनमनन्यदृष्टिसयामि ध्यानिमीत : सन्नेवं शीलोमत्स्यीति गौणोवकव्रतशब्द : तन्मनुस्तु । अधोदृष्टिर्नैष्कृतिक : स्वार्थसाधनत त्पर : । शठोमिथ्याविनीतश्चवकव्रत चरोद्विज : ॥ इ० ॥

वकव्रती । पुं० वकव्रतचरे । वकव्रत वति ॥

वकाची । स्त्री० वकचिञ्चिकायाम् ॥

वकारि : । पुं० श्रीकृष्णे ।

वकुल : । पुं० श्रीधुगन्धे । सिंहलीगन्धे । मोलसरीति० प्र० वृक्षे । वङ्कते वक्रिगत्यर्थे । उ० उलच् । आगम शास्त्रस्यानित्यत्वान्नुम् । वकुलस्तु वरोऽनुष्ण : कटुपाकरसोगुरु : । कफपित्तविषश्वित्रकृमिदन्तगदाप-

ह : । पश्चवस् ।

वकुला । स्त्री० कटुकायाम् ॥

वकुली । स्त्री० काकोल्याम् ॥

वकूल : । पुं० वकुले ॥

वकेरुका । स्त्री० बलाकाभिदि ॥ वा सावर्ण्ये तयाख्यायाम् ॥

वकोट : । पुं० शुक्लवायसे । वके ॥

वठर : । पुं० अम्बष्ठे शठे ॥

वणिग्वन्धु : । पुं० नीलीवृक्षे ॥

वणिग्भाव : । पुं० सत्यानृते । वाणिज्ये ॥ वणिजोभाव : । ष्यञ् ॥

वणिग्वह : । पुं० उष्ट्रे ॥

वणिज्०ग् । पुं० वाणिजके । वाणिज्यकारिणि । क्रयविक्रयकर्त्तरि । वैदेहके सार्थवाहे । नैगमे । क्रयविक्रयके । वाणिज्ये ॥ करणान्तरे ॥ पणते पण० । वेरिष्यादिश्चव: ॥ दैर्घ्ये ॥

वणिक् । स्त्री० वणिज्यायाम् ॥

वणिज : । पुं० बवादिकादशकरणान्तर्गतषष्ठकरणे । तज्जातफलंयथा । प्राज्ञ: कृतज्ञोगुणवान्गुणज्ञोवणिग्जनप्राज्ञमनोरथ : स्यात् । यस्यप्रसूतौवणिजाभिधानंभाण्डप्रधानं द्विदिवंविशति ॥ वणिजि ॥

वणिज्यम् । न० वाणिज्ये । ष्यन्तरे । वणिजांकर्मभावोवा । दूतवणिग्भ्यांश्चेति०य : दूतिकाग्रिका । भाष्ये तु०दूतवणिग्भ्यांश्चेतिनास्ति

व ॥

वणिज्या । स्त्री० वाणिज्ये ॥ ष्यन्तरे वणिजांभाव: । दूतवणिग्भ्यांश्चेति य : वणिज्याशब्द : स्वभावात्स्त्रीलिङ्ग : ० सावपद्यावप्रत्ययोमतुक्संयोसिमाश्वः । भाष्ये तुवार्त्तिकमेवनास्ति ॥ वणिक्कर्मणि ॥

वण्ठ : । पुं० असहायगमने ॥ अकृतोद्वाहे ॥ खर्वे ॥ कुन्तायुधे ॥ भृत्ये । वांठ० इ० भा० ॥ वण्ठते । वठि । अच् ॥

वण्ड : । त्रि० विकृतलाङ्गूले । वाँडा इ० भा० ॥

वदर : । पुं० कोलिवादपे ॥ वदरस्य पत्रलेपोज्वरदाहविनाशन : । तथा विस्फोटकमसूरीविध्वंसिनोपशामयत्यदम् ॥ वदतिस्थिरीभवति० छिन्नस्यापिपुन : प्ररोहणात् । वदस्थैर्ये । वा० अर : ॥ देवसर्षपवृक्षे ॥ कार्पासशाखि । विनौला० कपासिया० वाडया० इ०भा० ॥ न० कोलिफले ॥ कार्पासीफले ॥ वदर्या : फलम् । फलेलुगितिविकाराद्यवयवप्रत्ययस्यलुक् ॥ लुक्तद्धितलुकोति० स्त्रीप्रत्ययस्यलुक् ॥ सेविफले ॥ क्षुद्रवदरे । झाडीबेर इ० झडवेरी० इ० भा० ॥ गोपघोण्टायाम् ॥ वदरस्याद्य । कर्षाभे । वदर्याम् ॥

वदरफली । स्त्री० भूवदर्याम् ॥

बदरवल्ली । स्त्री० ) भूबदर्याम् ॥

बदरा । स्त्री० गृष्टी । वराहक्रान्तायामोषधौ ॥ कार्पास्याम् ॥ एलापर्ण्याम् ॥ विष्णुक्रान्तायाम् । टाप् ॥

बदरामलकम् । न० प्राचीनामलके ॥

बदरि : । स्त्री० कोलिवृक्षे ।

बदरिकम् । न० तीर्थविशेषे ॥

बदरिकाश्रम : । पुं० न०तीर्थविशेषे । नारायणाश्रमे । व्यासाश्रमे ॥

बदरी । स्त्री० कोलवृक्षे ॥ कपिकच्छ्वाम् ॥ कार्पास्याम् ॥ गौरादित्वान्ङीप् ॥ बदरीफले ॥ बदर्या : फलम्, हरीतक्यादिभ्यश्चेति० विकारार्थे लुप् ॥ .

बदरीखण्ड : । पुं० बदरीणांसमूहे ॥ इष्टकादिभ्य : खण्ड : ॥

बदरीच्छदा स्त्री० ग्रन्थिपर्ण्याम् ॥ पृश्नि कोलिवृक्षे ॥

बदरीपत्रकम् । न० नखीनामगन्ध द्रव्ये ॥

बदरीवासनम् । न० तीर्थविशेषे ॥ तत्रबदरिकाश्रम : ॥

बदरीफला । स्त्री० नीलशेफालिकायाम् ॥

बदरीशैल : । पुं० अलकनन्दाया : पश्चिमतीरेहिमाचलैकदेशे ॥

बदरीषण्ड : पुं० बदरीखण्डे ॥ बदरीणांषण्ड : समूह : ॥

बदर्याश्रम : । पुं० नारायणाश्रमे ॥

बद्ध : । त्रि० कीलिते । संयते । कारागारादौनिगडिते । बध्यते स्म । बधबन्धने । क्त : ॥ मोक्षाख्यत्वे० सुखदुःखादिधर्मवति० मायादेकेतयंप्रतिसंसारिणीवेयगी॥

बद्धगुदम् । न० उदरामयविशेषे । तन्निदानंयथा । यस्यान्त्रमन्नैरुपलेपिभिर्वांबालाश्मभिर्वापिहितंयथा वत् । सञ्चीयतेतत्रमल : सदोषात्शनै: शनै : सङ्करवच्चनाडयाम् ॥ निरुध्यतेतस्यगुदेपुरीषं निरेतिकृच्छादपिचाल्पमल्पम् । हृन्नाभिमध्येपरिवृद्धिमेति तच्चोदरबद्धगुदंवदन्ति ॥

बद्धफल : । पुं० करञ्जवृक्षे ।

बद्धमुष्टि : । त्रि० कृपणे ॥

बद्धमूल : । त्रि० दृढमूले । उत्पाटनानर्हमूले । बद्धोमूलोयस्यस : ॥

बद्धमौन : । त्रि० नि : शब्दे ॥

बद्धरसाल : । पुं० विविधराजाम्रमगधाख्यसमासे । सभ्याम्रे । मन्मथानन्दे ॥

बद्धशिख : त्रि० शिशौ । यामे ॥ संयतचूडेनरे ॥ यथा । सशोपवीतिनाभाव्यं सदाबद्धशिखेनतु । विशिखोव्युपवीतश्चयत्करोतिमतत्कृतमिति ॥ बद्धाशिखायस्य ॥

वद्धशिखा । स्त्री॰ उच्चटौषधौ ॥
वध : । पुं॰ प्राणवियोगफलकव्यापारे । प्रमापणे । मारणे । हननम् । हन॰ । हनश्चवधदृत्युप् ॥ पुरुषप्रद वधस्तुयथा, एकस्मयचनिघनेप्रव र्त्ते दुष्टकारिणाम् ।. बहूनांभवति चे मं तस्यपुरुषप्रदोषधः ॥ रुकात्त चौसुरापश्चब्रह्महागुरुतल्पग : । आत्मानं घातयेदस्तुतत्रपुरुषप्रदो वधः ॥ इति ॥ अपिच । भेकस्या र्थे बहून्हन्यादितिशास्त्रे सुनिश्चयः एकं हन्याद्बहूनांहिनपापीतेन जायते ॥ इति वामनपुराणे ५५ अध्याय : । पारिभाषिकवधस्तु । यवनं द्रविणादानं स्थानान्निर्याणं तथा । एषहिब्रह्मबन्धूनांबधोनान्यो स्तिदैहिक : ॥ इ॰ ॥ करचरणा दिच्छेदनादिरूपे ताडने ॥ सप्तम तारायाम् ॥
वधक . पुं॰ व्याधे । मृत्यौ ॥ वध कर्त्तरि । वद्धक॰ इ॰ मा॰ ॥ त्रि॰ हिंस्रे ॥ हन्ति । हन॰ । रा बुल् । बहुलं तगीतिसह्वुनिवधा देश : ॥ वधहिंसायांवा । तदा॰ सनियध्वोर्य तिहर्द्धिनिपेध : ॥
वधत्रम् । न॰ आयुधे ॥ वध्यतेऽनेन । वध॰ । अमिनक्षियजिवधिपति भ्योऽत्रन् ॥
वधस्थली : स्त्री॰ वधस्थाने ॥
वधस्थानम् । न॰ आघातने । सूना याम् ॥ वधस्यस्थानम् ॥
वधाङ्गकम् । न॰ कारावेश्मनि ॥
वधार्ह : । त्रि॰ हननयोग्ये ॥ वध्ये ॥
वधी । त्रि॰ वधकर्त्तरि ॥
वधिर : । त्रि॰ एडे । श्रवणशक्तिहीने बहरा॰ इ॰ भा॰ ॥ वाधिर्य निदा नन्तु । यदाशब्दवहं वायुः स्रोतमा वृत्यतिष्ठति । शुद्धश्च प्माम्भितोवा पिवाधिर्य न्तेनजायते ॥ औषधं यथा॰ । कर्णशूलेकर्णनादेवाधिर्ये क्ष्वेडएवच । चतुर्ष्वपिचरोगेषुसा मान्यं भेषजं स्मृतम् ॥ शृङ्गवेरञ्च मधुचसैन्धवं तैलमेवच । कदुष्णं कर्णयोर्धार्य मेतत्स्याद्वेदनापहम् ॥ इ॰ ॥ वाधिर्य बालहृद्धोत्थं चिरोत्थञ्चविवर्जयेत् ।. बध्नाति कार्यं म॰ बध्यते वा वन्धवन्धने । इषिमदिमुदोतिकिरच् ॥ भिन्नु ककचर्णे ।. हितं मितं मनोरम्य वच : शोकापहञ्चयत् । श्रुत्वापौ नशृणोतीववधिर : सप्रकीर्त्ति त : ।
वधोद्यत : । त्रि॰ परवधायोद्युक्ते । सन्नद्धे । आततायिनि ॥
वध्य : । त्रि॰ वधार्हे । शीर्षच्छेद्ये ॥ किम्त्वयानश्रुतंलोकेऽवध्या : प्रभु योषित : । हीनवर्णापमुक्तायात्वाऽध्या

त्सणग्रहणायसघापितैवस्तुनि ॥ वध्नाति । बंध० । ल्युट् ॥

बंधकी । स्त्री० पुंश्चल्याम् ॥ हस्तिन्याम् वध्नातिमनोयत । बंधबंधने ॥ ल्युल् । गौ० ङीष् ॥ पञ्चपुरुषगामिन्याम् ॥

बंधनम् । न० वधे । बंधनक्रियायाम् । । उद्दाने । वधे । बांधना० इ० भा० ॥ निमित्ते ॥ यथा । अप्रकाशेऽइमित्युक्तिर्यत्प्रकाशैकबंधना । स्वप्रकाशतमात्मानमप्रकाश : कथंस्पृशेत् ॥ अहंनप्रकाशे० नभासेत्युक्तिर्वचन० यत्प्रकाशैकबंधना० स्वप्रकाशस्वरूप प्रकाशमयएवबंधनं निमित्तयस्या : सातथोक्ता ॥ नप्रकाशइतिव्यवहारअप्रकाशानुभवनिमित्तत्वादित्यर्थ: । तंप्रकाशस्वयमेवभासमानमात्मानमप्रकाशोऽज्ञानंकथस्पृशेत् आवृणुयात्नकथंचिदित्यर्थ : । त्रि० आसक्याम् । बंधनसाधनेरज्जुनिगडादौ ॥ यथा । बंधनानिखिलसन्तिवहूनिप्रेमरज्जुकृतबंधनमन्यत् । दारुभेदनिपुणोपिषडङ्घ्रिर्निष्क्रियोभवतिपङ्कजकोशे ॥ बध्यतेऽनेनास्मिन्वा । बंध० । ल्युट् ॥

बंधनवेश्म । न० कारागारे ॥

बंधनालय : । पुं० कारायाम् । बंधनागारे ॥ बंधनस्यआलय : ॥

बंधस्तम्भ : । पुं० आलाने । हस्तिबंधनस्तम्भे ॥ बंधस्यबंधनस्यस्तम्भ: ॥

बंधित्रम् । न० कामदेवे ॥ चर्मव्यजने ॥

बंधु: । पुं० बंधूके । बंधुजीवके ॥ मित्रे । सम्यागसहने । भ्रातरि ॥ सगोत्रे । बांधवे । ज्ञातौ ॥ हितकारिणि ॥ संसारबंधनान्मोचनहेतुरात्मैवबन्धुर्नान्य : ॥ सम्बन्धोपकर्त्तरि ॥ बध्नातिस्नेहेनमनोय : बध्यतेऽस्मिन्नृत्वादिरितिवा । बंध० । शृस्वृस्निहीत्यु : ॥ यथा । ऋतुर्थभवने वर्षीहत्तानारे ॥ भवयशोभितसङ्गतकार्य : सुहृत्सुसन्ततपङ्क्तिकवर्य : । मन्नगरामनिविष्टिसबंधु राजतिभूपतिसत्तदिबंधु : ॥ यथा । अधितवासरनायकचन्द्र : कामिसम्पूर्णसमाहितनन्द्र: । दर्पितलोलतडित्करवाल : सोयमुपैतिघनाघनकाल : ॥

बंधुजीव : । पुं० बंधूकवृक्षे । माध्याह्निके । दुपहरिया० फूल० इ० भा० ॥ बंधुरिवजीवंजलमस्य ॥

बंधुजीवक : । पुं० बंधूके ॥ स्वार्थेक:

बंधुता । स्त्री० बंधुसङ्घे ॥ बंधूनांसमूह : । ग्रामजनबंधुभ्यस्तल् ॥

बंधुर : । पुं० स्त्रीचिह्ने ॥ तैलफल्के ॥ बंधूके ॥ बधिरे ॥ हंसे ॥ विडङ्गे ॥ ऋषभौषधौ ॥ न० मुकुटे । बंधने ।

॥ त्रि० उन्नतानते ॥ रम्ये ॥ नम्रे ॥ वध्नाति । बंध० । मद्गुरादयश्चेतिसाधु : ॥
वंधुरा : । पुं० मूषिक०सतुषु ॥
बंधुरा । स्त्री० पण्ययोषायाम् ॥
वंधुल : । पुं० असतीपुत्रे ॥ वंधून्लाति । चातश्चतिक : ॥ त्रि० नम्रे ॥ सुन्दरे ॥
वंधूक : । पुं० पीतसालके । सर्जके । प्रियके । विजयसार०इ०भा० ॥ पें यासाल०इ०गौ०भा० ॥ न० पुष्पद्दुपवि० । रक्तके । वंधुजीवके । दो पहरिया०मंक्रेनिया० इ० भा० ॥ बाँदुली० इ० गौ० भा० ॥ वं-धूक : कफकृद्ग्राहीवातपित्तहरो लघु : ॥ वध्नातिचित्तम् । वंध० । उलूकादयश्च्यूक : ॥ वधूमि । व न्धूक०इ०भा० ॥ यथा । बंधूकोबंधुजीवेस्यात्पधूमेस्यान्नपुंसकमितिहह चन्द्र : ॥
वन्धूकपुष्प : । पुं० पीतसाले । वीजकतरौ । विजयसार० इ० भा० ॥ वन्धूकस्येवपुष्पाण्यस्य ॥ वीजके ॥
वंधूर : । पुं० विवरे ॥ त्रि० शोभने ॥ नम्रे ॥ वध्नाति । बंध० । खर्जूरादित्वादूर : ॥ उन्नतानते ॥ बंधूरबंधुरौरम्येनम्रेध्वंसेतुबंधुरइतिरभस : ॥
वन्ध्य : । त्रि० अफले । अवकेशिनि । निष्फले । ऋतुप्राप्तावपिफलरहिते ॥ वृक्षादौ ॥ वंधेसाधु : । तत्रसाधुरितियत् ॥ वंधनीये ॥
वन्ध्या । स्त्री० अप्रजस्त्रियाम् । बांझ इ० भा० ॥ अपत्यशून्यायांगवि । वशायाम् ॥ रूपलीविशेषे ॥ यथा । वन्ध्याचहपलीज्ञेयाहपलीचमृतप्रजा । अपराहपलीज्ञेयाकुमारीयारजस्वला ॥ वलाख्यगंधद्रव्ये । वा-ध्यालके ॥ वध्नाति । बंध० । यत् । अघ्न्यादित्वाद्यावा ॥ योनिरोगविशेषे ॥
वन्ध्याकान्द : । पुं० वन्ध्याकर्कोटक्याम् । बांझखखसा० इ० भा० ॥
वन्ध्याकर्कोटकी । स्त्री० विषकण्टकिन्यामोषधौ । ककोडी०खखसा० इ० भा० ॥ वन्ध्याकर्कोटकीलघ्वीकफनुद्व्रणशोधनी । सर्पसर्पहरीतीक्ष्णाविसर्पविषहारिणी ॥
वभस : । त्रि० भक्षणशीले ॥
वभ्रु : । पुं० वैश्वानरे । अग्नौ ॥ शूलपाणौ । शिवे ॥ नकुलध्वजे ॥ त्रि-ष्णौ ॥ विशाले ॥ नकुले । स्थूलपुष्पछोरताभेचोपधभेदे : सनाकुल : ॥ मुनिभेदे ॥ देशभेदे ॥ यादवविशेषे ॥ सितावरशाके ॥ त्रि० पिङ्गले । पिङ्गलवर्णवति ॥ विभर्ति० भरतिवा । कुभृञ्० भृञ्०वा । कुर्भश्चेति०कुर्द्विश्च ॥ खलतौ ॥
वभ्रुज : । पुं० ब्राह्मणे ॥

तुवन्यतरस्यामितिपक्षेऽग्नि : ॥
वलिपुष्ट : । पुं॰ काके ॥ वलिनापुष्ट : ॥
वलिपोद्की । स्त्री॰ उपोदकायाम् ॥
वलिप्रिय : । पुं॰ लोध्रद्रुमे ॥
वलिभ : । त्रि॰ वलिमे । अरयाश्चच मंत्वि ॥ वलिरस्यसंकोचोस्यास्ति । तुन्दिवलिवटिभ्यः : ॥
वलिभुक् । पुं॰ वायसे ॥ वलिंभुङ्क्ते । भुजपालनाभ्यवहारयो : । क्विप् ॥
वलिमन्दिरम् । न॰ पाताले ॥ वलेर्मन्दिरमच ॥
वलिमुख : । पुं॰ वलिमुखे ।
वलिशम् । न॰ वडिशे । मत्स्यवेधने । वलिनोमत्स्यान् श्यति । शोतनूकरणे । आतोनुपसर्गेतिक : ॥
वलिष्ठ : । त्रि॰ बलवत्तमे ॥ अतिशयेनबलवान् । मतुपश्चाम्मतुपमादिष्ठन्प्रत्यय : । विन्मतोर्लुगितिमतुपोलुक् ॥ प्रायश्चित्तं विनाप्नोत्यत्त्वमेवमृगुदमामसा । चकारायावलिष्ठेनसत्रीजारेणदुष्यति ॥
वलिष्णु : । त्रि॰ अपमानिते ॥
वलिसद्म । न॰ रसातले । पाताले । वले : सद्म ॥
वलिश : । पुं॰ विष्णौ ॥
वली । स्त्री॰ वलौ । त्वगूर्मौ । चर्मतरङ्गे ॥
वलीकम् । न॰ नीध्रे । पटलप्रान्ते । कांची॰इ॰गौ॰भा॰ । पराक्लो॰इ॰भा॰ ॥ वलति । आवृणोतिभित्त्यादि । वलसंवरणे । वलीकादयश्चेतिकीकन् ॥
वलीमुख : । पुं॰ वानरे ॥ वलीयुक्तंमुखमस्य ॥
वलीयान् । त्रि॰ अतिशयेनबलयुक्ते ॥
वलीवर्द : । पुं॰ वृषे । बैल॰वरध॰वर्धा॰इ॰भा॰ ॥ वरत्रम् । वरदैःप्याम् । सम्पदादित्वात्क्विप् । ईश्वरदृष॰ईवरी । तौददाति । घा तस्तुतिक : । अतिशयितंबलमस्य । अतस्तुनि : । वलीचासौ॰ईवर्दश्च ॥ तीर्थयात्रायांतदारूढस्यदोषोयथा- मात्स्ये । वलीवर्दसमारूढः शृणुतस्यापियत्फलम् । नरकेवसतेघोरेगवांक्रोधेदिरुणे । सलिलञ्चनगृह्णन्तिपितरस्तस्यदेहिनइति ॥
वलु : । स्त्री॰ हस्तिदन्तालिकायाम् ॥
वलूक : । पुं॰ पद्ममूले । पक्षिविशेषे ॥ वलते । बल॰ । वलेरूक : ॥
वलूल: त्रि॰ बलवति ॥ बलमस्त्यस्य । बलादूल : ॥
वल्मिक : । पुं॰ न॰वल्मीके ॥
वल्मीकि : । पुं॰ न॰वल्मीके ॥
वल्मीक : । पुं॰ न॰वामलूरे । नाकौ । पिपीलिकादिकोटविशेषकृतेमृत्स्तूपे । वावी॰इ॰भा॰ ॥ न॰ रोग

विशिपे । अस्यलक्षणं । यथा । शीर्वांसकक्ष्याकरपाददेशेसमीयस्वेवाश्रिभिरेवदीर्येः । ग्रन्थिः सवल्मीकवदल्पियाणांजातः क्रमेणैवगतप्रवद्धिः ॥ मुखैरनेकैःस्रुतितोदवद्भिर्विसर्पवत्सर्पतिचोन्नताग्रैः । वल्मीकमाहुर्भिषजोविकारंनिष्प्रत्यनीकंचिरजं विशेषात् ॥ वाल्मीकिमुनौ ॥ वलन्तेप्राणिनोऽत्र । श्लीकादयश्चेति कीकन्नन्तोनिपातितः ॥

वल्मीकशीर्षम् । न० स्रोतोञ्जने ॥

वल्मीकिः । पुं० वल्मीके ॥

वल्मीकूटम् । न० वल्मीके ॥

वल्यः । पुं० बुद्धभिक्षुपे । अमवे ॥ न० प्रधानधातौ । रेतसि ॥ त्रि० बलकरे ॥

वल्या । स्त्री० अतिबलायाम् ॥ अश्वगन्धायाम् ॥ गिमृडीक्षुपे ॥ प्रसारिण्याम् ॥

वल्लः । पुं० गुञ्जात्रयपरिमाणे । द्विगुञ्जे परिमाणे ॥ सार्द्धगुञ्जायाम् ॥ वल्लते । वल्लसंवरणे सञ्चरणे च । प० अच् ।

वल्लकः । पुं० निष्पावे । राजसिम्बाम् ॥

वल्लकी । स्त्री० वीणायाम् । विपञ्चाम् ॥ वल्लते । वल्ल० । क्वुन् । गौरादित्वान्ङीष् ॥ सावकोहचे ॥

वल्लभः । त्रि० दयिते । प्रिये ॥ अध्यक्षे ॥ न० कुलीनाश्वे । सल्लक्षणतुरङ्गमे ॥ अध्यक्षोऽत्रगवाध्यक्ष इतिस्वामी ॥ वल्लते॰वल्ल्यतेवा । वल्ल० । रासिवल्लिभ्यांचेत्यभच् ॥

वल्लभपालः ।
वल्लभपालकः । पुं० ) उत्तमाश्वपाले ॥ अश्वरक्षके ॥

वल्लभा । स्त्री० प्रियायाम् । प्रेयस्याम् ॥

वल्लरम् । न० वल्लरे ॥

वल्लरि । स्त्री० मञ्जर्याम् ॥

वष्कयः । पुं० तरुणवत्से । वरिडा० बू० भा० ॥ वष्कते । वष्कगतौ । भा० अयन् ॥

वष्कयणी । स्त्री० वष्कयिण्याम् ॥

वष्कयिणी । स्त्री० तरुणवत्सायाङ्गवि० । वाखडी० बू० भा० ॥ वष्कयस्स अवत्स : । सोऽस्त्यस्याः । अतइनिठनावितीनिः । षट्कुष्वादिति णत्वम् । ङीप् ॥

वहिः । अ० वाह्ये ॥ वहति । वह० इस् ॥ ववयोरभेदः ॥

वहु । त्रि० त्र्यादिसङ्ख्यासु ॥ विपुले । भूयसि ॥ वंहते । वहिवृद्धौ ॥ लङ्घिवंह्योर्नलोपश्च उः ॥ स्त्रियां० वह्वादित्वात्॰पाक्षिकोङीषभावः । ङीपक्षे० बह्वी ॥

वहुकः । पुं० कर्कटे ॥ अर्के ॥ दात्यू

वे । नलखातके ॥ त्रि०बहुभिःक्री से ॥ सङ्ख्यायाअतिशदन्तायाः कन् ॥

बहुकण्टकः । पुं० क्षुद्रगोक्षुरे ॥ यवासे । हिन्ताले ॥

बहुकण्टका । स्त्री० अग्निदमन्याम् ॥

बहुकण्टा । स्त्री० कण्टकार्याम् ॥

बहुकन्दः । पुं० शूरणे ॥

बहुकन्दा । स्त्री० कर्कट्याम् ॥

बहुकरः । पुं० वक्रग्रीवे ॥ उष्ट्रे ॥ त्रि० खलपू ॥ स्त्रियांबहुकरा ॥ बहुकार्यकर्तरि ॥ बहुकरोतिभुवसं नाहि । किंयत्तद्बहुपुक्षोऽच्विधानमिष्यते ॥

बहुकरी । स्त्री० बहुकरभार्यायाम् ॥ पुंयोगलक्षणोङीष् ॥ सम्मार्जन्याम् ॥

बहुकर्णिका । स्त्री० आखुकर्ण्याम् ॥

बहुकूर्चः । पुं० मधुनारिकेरके ॥

बहुगमः । पुं० बुधे ॥ बहुदमते । अमूर्त० । ईषिषमिभ्यान्तिषः ॥

बहुगन्धम् । न० त्वचे ॥ पुं०कुन्दुरुके ॥

बहुगन्धदा । स्त्री० कस्तूर्याम् ॥

बहुगन्धा । स्त्री० चम्पककलिकायाम् ॥ यूथिकायाम् ॥ कृष्णजीरके ॥

बहुगर्ह्यवाक् । त्रि० कुत्सितबहुभाषिणि ॥ जल्पाके ॥ बहुगर्ह्यावागस्य ॥

बहुग्रन्थिः । पुं० झावुके ॥ बहवोग्रन्थयोयस्मिन् ॥

बहुच् । पुं० प्रत्ययविशेषे ॥ सचप्रकृतेः पूर्वंभवति० प्रकृतेर्लिङ्गंचभजते । स्यादीषदसमाप्तौतुबहुच्प्रकृतिलिङ्गकः ॥

बहुच्छिन्ना । स्त्री० कन्दगुडूच्याम् ॥

बहुतन्त्रीः । त्रि० बहुतन्त्रीविशिष्टे ॥ यथा । बहुतन्त्रीःकायः । बहुतन्त्रीर्वीणा । बहुतन्त्रिशरीरम् । बहवस्तन्त्र्योयस्मिन् । नाडीतन्त्र्योःस्वाङ्गे०इ०नकप् ॥

बहुतन्त्रीकः । पुं० बहुतन्त्रविशिष्टे । यथा । बहुतन्त्रीकः पटः । बहुतन्त्रीकावीणा । बहुतन्त्रीकंवासः । बहवस्तन्त्र्योयस्मिन्कप् ॥

बहुतरकणिश । पुं० रागीधान्ये ॥

बहुता । स्त्री० बहुत्वे ॥

बहुतिक्ता । स्त्री० काकमाच्याम् ॥

बहुतिथः । त्रि० बहुसङ्ख्याके ॥ बहूनांपूरणः । तस्यपूरणेडट् । बहुपूगगणसङ्घस्यतिथुक् ॥

बहुतृणम् । न० तृणकल्पे ॥ ईषदसमाप्तं तृणम् । विभाषासुपोबहुच पुरस्तात् ॥

बहुत्वम् । न० बहुतायाम् । बहोर्भावः । तस्यभावस्त्वतलौ ॥

बहुत्वक्षः / बहुत्वक् । पुं० भूर्जद्रुमे ॥

बहुदुग्धः । पुं० गोधूमे ॥

बहुदुग्धा । स्त्री० वशायाम् । बहुक्षीरायांगवि ॥ बहुदुग्धंयस्याम् ॥

वहुदुग्धिका । स्त्री॰ स्नुहीवृक्षे ॥

वहुधा । अ॰ अनेकप्रकारे ॥ वहव : प्रकारा: । सङ्ख्याया विधार्थे धाच् ॥ यथा । वहुवारान्॰ इति॰ क्रियाभ्या वृत्तिगणने॰ विभाषावहोर्धाऽविप्रकृष्टकाल इतिधा । वहुधावहुकृत्वोवा दिवसस्य भुङ्क्ते ॥

वहुधान्य : । पुं॰ वत्सरविशेषे ॥ सुभिक्षंक्षेममारोग्यं प्रशान्ता : पार्थिवा : प्रिये । सस्यैरोपचसंवित्तं वहुधान्ये वरानने ॥ १२ ॥ अतिशय धान्यविशिष्टे ॥

वहुधारम् । न॰ वज्रे ॥

वहुनाडि : । त्रि॰ काये ॥ नाडीतन्त्र्यो : स्वाङ्ग इति न कप् ॥

वहुनाडीक : । त्रि॰ स्तम्भे ॥ दिवसे ॥ वह्वीनाड्योयस्मिन् । कप् ॥

वहुनाद : । पुं॰ शङ्खे ॥

वहुनामा । पुं॰ असङ्ख्यातनामनि परमेश्वरे ॥ वहूनिनामानियस्य ॥ सर्वाण्येतानिनामानिपरस्यब्रह्मणो हरेरितिपुराणोक्ते : ॥

वहुपट् । त्रि॰ ईषदूनेपटौ । वहुपु स्त्रंसुदर्भे ।

वहुपत्र : पुं॰ पलाण्डौ अ॰ अभ्रके ॥ त्रि॰ अनेकपत्रयुक्ते ॥

वहुपत्रा । स्त्री॰ तरुणीपुष्पे ॥

वहुपत्रिका । स्त्री॰ भूम्यामलक्याम् ॥ मेथिकायाम् ॥ महाशतावर्याम् ॥

वहुपत्री । स्त्री॰ लिङ्गिन्याम् ॥ गृहकन्यायाम् ॥ तुलस्याम् ॥ जतुकाकायाम् ॥ वृहत्याम् ॥ गोरक्षदुग्धायाम् ॥

वहुपर्ण : । पुं॰ सप्तच्छदवृक्षे ॥ त्रि॰ अनेकपत्रयुक्ते ॥

वहुपर्णिका । स्त्री॰ आखुकर्ण्याम् ॥

वहुपर्णी । स्त्री॰ मेथिकायाम् ॥

वहुपात् । पुं॰ वटवृक्षे ॥ ॥ वहव : पादाअस्य । सङ्ख्यासुपूर्वस्य ॥

वहुपाद : । पुं॰ वटवृक्षे ॥

वहुपुत्र : । त्रि॰ अनेकसुतविशिष्टे ॥

वहुपुत्रा । स्त्री॰ भूम्यामलक्याम् ॥

वहुपुत्री । स्त्री॰ शतमूल्याम् ॥

वहुपुष्प : । पुं॰ पारिभद्रवृक्षे ॥

वहुपुष्पिका । वहुपुष्पी । स्त्री॰ } धातक्याम् ॥

वहुप्रज : । पुं॰ मुञ्जतृणे ॥ शूकरे ॥ त्रि॰ अनेकसन्तानयुक्ते ॥

वहुप्रतिज्ञ : । पुं॰ अनेकपदसङ्कीर्ण पूर्वपक्षविशिष्टव्यवहारे ॥ त्रि॰ अनेकप्रतिज्ञायुक्ते ॥

वहुप्रद: । त्रि॰ अतिदातरि । वदान्ये । दानशौण्डे । वहुप्रददाति । प्रेदाज्ञ इतिक : ॥

वहुप्रसू : । स्त्री॰ कुमिलायाम् । वहु सन्तानप्रसवकारिण्याम् ॥

वहुफल : । पुं॰ कदम्बे । नीपे ॥ वि

भगालम् । न० नृकरोटिकायाम् । नृमस्तके ॥ भनक्ति । भञ्जो चामर्दने । बाहुलकात्कालन् । नलोपः । न्यङ्क्वादित्वात्कुत्वम् ॥

भगाली । पुं० चन्द्रमौलौ । सदाशिवे ॥ भगालमस्यास्ति । इनिः ॥

भगिनी । स्त्री० सहोदरायाम् ॥ स्वसरि ॥ भगं कल्याणम् ० इच्छा वात्सल्यस्याः । इनिः । ङीप् ॥

भगिनीपतिः । पुं० आवुत्ते ॥ भामे । । भगिन्याः पतिः ॥

भगीरथः । पुं० सूर्यवंशीयनृपतिविशेषे । दिलीपात्मजे ॥ योहि गङ्गांस्वर्गादानीयभागीरथीतिसंज्ञां चकार ॥

भगोलः । पुं० नपञ्जरे । नक्षत्रचक्रे ॥

भगो । अ० ) हेभगवन्०

भगोः । अ० ) इतिसम्बोधने ॥

भग्नः । त्रि० पराजिते ॥ स्फुटिते । फूटा०इ०भा० ॥ मङ्गे । तोडा० इ०भा० ॥ यथा । चिरकालोषितंजीर्णंकीटनिष्कासितंधनुः । किञ्चित्रं यदि रामेण भग्नं क्षत्रियकान्तिके ॥ भञ्जः क्तः ॥ न०रोगविशेषे । अस्थिविश्लेषलक्षणे ॥

भग्नपादर्चम् । न० पुष्करादिवर्जनवचपटौ ॥ यथा । पुनर्वसूत्तराषाढाः कृत्तिकोत्तरफल्गुनी । पूर्वभाद्रः विशाखे च षडेते पुष्कराः स्मृताः ॥ भग्नपादर्चसंयोगात् द्वितीया द्वादशी यदि । सप्तमी चार्कमन्दारे वायते मारजो ध्रुवम् ॥

भग्नपृष्ठः । पुं० सम्मुखे ॥ इ०वि० शेषः ॥

भग्नसन्धिः । पुं० शरीरस्थसन्धिस्थानभग्नरोगविशेषे ॥ तस्यौषधं यथा । अभयात्रिफलाव्योषः सर्वैरेभिः समीकृतैः । तुल्यो गुग्गुलुनायोज्यो भग्नसन्धिप्रसारकः ॥

भग्नसन्धिकम् । न० घोले ॥

भग्नात्मा । पुं० चन्द्रमसि ॥

भग्नाश्रः । त्रि० हताशे ॥

भग्नी । स्त्री० भगिन्याम् ॥

भङ्कारी । स्त्री० दंशे ॥

भङ्क्ता । त्रि० भङ्गकर्त्तरि ॥ भनक्तिः । भञ्जो० । तृच् ॥

भङ्गः । पुं० तरङ्गे । वीच्याम् । कल्लोलिन्याम् ॥ भज्यते । भञ्जो० । कर्मणिघञ् ॥ जयविपर्यये । पराजये । भञ्जनम् । घञ् ॥ भेदे ॥ रोगविशेषे ॥ रोगजन्ये ॥ स्फोटने ॥ कौटिल्ये ॥ भये ॥ विच्छित्तौ ॥ वणनिर्याणे । न० खण्डे ॥

भङ्गवासा । स्त्री० हरिद्रायाम् ॥

भङ्गसार्थः । त्रि० कुटिले ॥

भङ्गा । स्त्री० शणाख्यशस्यान्तरे । मा

तुलान्याम् ॥ इन्द्राशने । विजया याम् । भाव० प्र० भा० । भङ्गाफ ल्हरीतिक्षायाग्निपाचनी लघु । तीक्ष्णोष्णापित्तलामोहमदवाग्- वह्निवर्द्धनी ॥ भज्यतेऽनया । भञ्जो० । भकर्तरि वेतिल्युट् इति वा० घञ् । टाप् ॥ विदरायाम् ॥

भङ्गाकटम् । न० भङ्गारजसि ॥ चला सूतिरिति० कटच् ॥

भङ्गान : । पुं० मत्स्यविशेषे । दोर्घज ङ्गले । भाव० प्र० गौ० दे० भा०

भङ्गिः । स्त्री० भङ्गौ ॥ वीच्याम् ॥ विच्छेदे ॥ कौटिल्यप्रभेदे । विभ ङ्ग्याम् ॥ विन्यासे । भङ्गे ॥ व्याजे ॥ छलनिभे ॥ नानाविधशब्दरचना वैदग्ध्यविशेषाभङ्गयश्रुतिव्याख्या- तार: ॥ भङ्गस्याकरणम् । तत्करोती- तिण्यन्तादिञ् : ॥

भङ्गिमा । पुं० भङ्ग्याम् ॥ यथा । अ धरैकजनं चारुलोकाम्बुजरङ्गिमा । प्राणनायकिमेतत्ते वेशविन्यास- भङ्गिमा ॥

भंगी । स्त्री० विभङ्ग्याम् । कौटि- ल्ये । अगमनोहरविन्यासे ॥ जा- नामिमानमुखसांगिवचोविभंगीभं- गीधराननयनयोरपिमातुरोंच । आ- भीरनन्दनमुखाम्बुजसगर्शसीवंशी रवोयदिनभासवशीकरोतोत्युरट :

भगुर : । पुं० नद्यावर्त्ते । त्रि० कुटि ले । वक्रे ॥ नश्वरे ॥ भज्यतेऽवश्यमे व । भञ्जो० । भञ्जभासमिदोघुरच् । कर्मकर्त्तर्येव ॥

भंगुरा । स्त्री० अतिविषायाम् ॥ प्रिय ङ्गौ ॥

भङ्ग्यम् । न० भांगीने ॥ भङ्गायाभव नंक्षेत्रम् । विभाषातिलमाषोमाभ ङ्गाणुभ्य इ०प्रत्ययत् ॥ भङ्गार्हे । भ ङ्गमर्हतीति । दण्डादिभ्याद्यत् ॥

भचक्रम् । न० राशिचक्रे । यथा । भ्रमावर्त्तीभचक्रेऽस्मिन्भ्रुवौनाभीव्य वस्थित : । आराचक्रे स्थिन्दुभीसीभ्र श्चरीवमनेऽधरा : ॥ राहु : केतुरग स्त्यमनन्तवायव्ययराश्रय : । यदादि त्युसमुद्रासुमेरोर्भूगोलकोसमा ॥ छा यामयैस्तद्वाराद्धि : ध्वान्तदितरहा हिनम् । सूर्येन्द्वोरुपरागस्तुगोलच्छा ययाभवेत् ॥ अन्योन्ययोर्मयोरेवक्रा रणात् । यासमोचोंतुजायेतेतभास. पूर्वपश्चिमी ॥ तत्पुण्यफलाद्भाग : क्षीराब्धोस्तुविष्णुनैत्यार्थ दक्षिपुरा रार्धभेदनामाध्याय : ॥ अथभचक्र भ्रमणव्यवस्थामाहसिद्धान्तशिरोम णौ ॥ निरक्षदेशेक्षितिमंडलोपगौ ध्रुवौनर : पश्यतिदक्षिणोत्तरौ । तदाश्रितंखेजलयन्त्रवत्सदाभ्रमद्भ चक्रंनिजमस्तकोपरि ॥ उदग्दिशंया तियथायथानरस्तथातथाखान्नतमृक्ष मंडलम् । उदग्ध्रुवंपश्यतिचोन्नतं

दुभयमतनिष्णातोभट्टाचार्य : ॥

भट्टार : । त्रि० पूज्ये । भटति । भट । क्विप् । भट्चासौतारश्च । पृषोदरादि : ॥ भट्टं करुणतिवा । कर्मण्यण् ॥

भट्टारक : । पुं० नाट्यभाषा० नृपे ॥ नाट्योक्त्या० देवे ॥ तथा० तपोधने ॥ त्रि० पूज्ये ॥ भटति : भटपरिभाषणे । क्विप् । भट्चासौतारकश्च । पृषोदरादित्वात्० ष्टुत्वनिषेधोन ॥ भट्टंस्वामित्वम्० करुणतिवा । कर्मण्यण् । तत : स्वार्थक : ॥

भट्टारकवार : । पुं० आदित्यवारे ॥

भट्टि : । पुं० सनाम्नाप्रसिद्धे रामकथाश्रयेमहाकाव्ये ॥

भट्टिनी । स्त्री० नाट्योक्त्याऽकृताभिषेकायांराजयोषायाम् । ब्राह्मण्याम्

भड : । पुं० सर्वसङ्करजातिविशेषे ॥ सत्तुलेटात्तीवरकन्यायांजात : । यथा । लेटस्तीवरकन्यायांजनयामास पञ्चनरान् । माल मल मातरश्च भडकोलश्चकन्दरम् ॥ ब्र० व० वै० पु० ॥

भडाग्नि : । पुं० अग्निविशेषे ॥ भड भडइतिशब्दयुक्ते वह्नौ ॥

भडिल : । पुं० शूरे ॥ सेवके ॥ भडइतिसौत्रोधातु : । सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्यइलजिति० इलच् ॥

भणित : । त्रि० कथिते । शब्दिते ॥

भणिति : । स्त्री० वाचि ॥

भण्टाकी । स्त्री० वार्ताक्याम् ॥ भण्यते० भक्ष्यते ऽ। भटभृतौ० भवश्च्येवा । पिनाकादयश्चेतिसाधु : ॥ बृहत्याम् ॥

भण्टिका । स्त्री० बृन्ताकि । भटा० भण्टा० इ० भा० ॥

भण्टुक : । पुं० श्योनाकवृक्षे ॥

भण्ड : । पुं० चाटुवटौ । अश्लीलभाषिणिमाड० इ० भा० ॥ भण्डते । भण्डिकल्याणे० पचाद्यच् ॥

भंडक : । पुं० खञ्जनखगे ॥

भंडनम् । न० कवचे ॥ युद्धे ॥ खलीकारे ॥

भडहासिनी । स्त्री० वेश्यायाम् ॥

भंडि : । स्त्री० वीच्याम् ॥

भंडिका । स्त्री० मञ्जिष्ठायाम् ॥

भंडिर : पुं० भंडिले ॥ . शिरीषवृक्षे ॥ रलयोरैकत्वम् ॥

भण्डिल: पुं० । शिरीषवृक्षे । भण्डते । भडिकल्याणे० परिभाषणे वा । सलिकलीति० इलच् । त्रि० दूते । शुभे ॥ शिल्पिनि ॥

भण्डी । स्त्री० मञ्जिष्ठायाम् ॥ भण्डति । भण्डचाभण्डने । पचाद्यच् । गौ० ङीष् ॥ शिरीषवृक्षे ।

भण्डीतकी । स्त्री० मञ्जिष्ठायाम् ॥

भण्डीर : । पुं० कोविदारे । न्यग्

माल्यवल्लालधिमध्यवर्त्ति यत् तत् भद्रतुरगजनुर्धा :॥ इ० सिद्धान्तशिरोमणि : ॥

भद्रदन्तिका । स्त्री० दन्तीवृचभेदे । कैवर्त्तिकायाम् । जयावलायाम् ॥

भद्रदारु : । पुं० न० देवदारुणि ॥ न० सरलवृचे ॥ भद्रदारु ॥

भद्रदार्व्वादिक : । पुं० औषधगणविशेष ॥

भद्रनामा । पुं० काष्ठकुट्टकपक्षि ॥

भद्रनामिका । स्त्री० त्रायमाणौषधि । वहला० गौ० दे० भा० प्र० ॥

भद्रनिधि : । पुं० महादानविशेषे ॥

भद्रा । स्त्री० सुभगायाम् ॥ भद्रः पतिर्यस्या : । इतिविग्रहे० नित्यं सपत्न्यादिषु इतिसूत्रेण नकारादेशे० नामसञ्ज्ञयोर्ङीप् ॥

भद्रपदा : । स्त्री० प्रोष्ठपदासु । पूर्वभाद्रपदोत्तरभाद्रपदनचत्रयो : ॥ भद्रं पदं यासाम् ० ता : । पथादौ पादपूरणं ॥

भद्रपर्णी । स्त्री० गम्भार्याम् ॥ भद्राणि पर्णान्यस्या : । पाककर्णेतिङीप् ॥ प्रसारण्याम् ॥

भद्रपीठ : । पुं० सिंहासने ॥

भद्रबलन : । पुं० बलरामे ॥

भद्रबला । स्त्री० लताविशेषे । प्रसारण्याम् । माटबलायाम् । भद्रं बलमस्या : ॥ बलायाम् ॥

भद्रमल्लिका । स्त्री० येज्ञौलिमल्लिकाख्ये ॥

भद्रमञ्जी । स्त्री० अपराजितायाम् ॥

भद्रमुञ्ज : । पुं० शरे । इचुर्दर्भे । सरकण्डा० इ० भा० ॥

भद्रमुस्त : । पुं० भद्रमुस्तके ॥ भद्रचासौमुस्तकश्च ॥

भद्रमुस्तक : । पुं० नागरमुस्तके ॥ भद्रश्चासौमुस्तश्च ॥

भद्रमुस्ता । स्त्री० भद्रमुस्तके । गुन्द्रायाम् ॥

भद्रयव म् । न० कुटजफले । कलिङ्गे । इन्द्रयवे ॥ यशस्कारबीजत्वाद्यवम् । भद्रञ्चतद्यवञ्च ॥

भद्ररेणु : । पुं० ऐरावतहस्तिनि ॥

भद्रवट : । पुं० तीर्थविशेषे ॥

भद्रवत् । न० देवदारुणि ॥

भद्रवती । स्त्री भद्रमय्याम् ॥ काटफले ॥

भद्रवर्मा । पुं० नवमालिकायाम् नवाल्याम् । नवारा० इ० भा० ॥

भद्रवल्लिका । स्त्री० गोपवल्ल्याम् । अनन्तमूल० इ० भा० प्र० ॥

भद्रवल्ली । स्त्री० मल्लिकायाम् ॥ माधवीलतायाम् ॥ लताविशेषे । शारिवीरी । अष्टापदिकायाम् ।

मदनमाली॰इ॰ हारमाली॰इ॰ च॰गौ॰दे॰भा॰ ॥

भद्रश्रयम्। न॰ चन्दने ॥

भद्रश्री :। पुं॰ चन्दनवृक्षे ॥ भद्राश्रीरस्य ॥

भद्रसोमा। स्त्री॰ गङ्गायाम् ॥

भद्रा। स्त्री॰ रास्नायाम् ॥ कृष्णायाम् ॥ व्योमनद्याम् ॥ यथा। भद्रा तथोत्तरगिरीन् उत्तरांश्च तथाकुरून् गत्वोत्तरमम्भोधिमभ्येति च महामुने। प्रसारिण्याम् ॥ कट्फले ॥ अनन्तायाम् ॥ तिथिभेदे। द्वितीयासप्तमीद्वादशीषु ॥ जीवन्त्याम्। अपराजितायाम् ॥ नील्याम् ॥ बलायाम् ॥ शम्याम् ॥ वचायाम् ॥ दन्त्याम् ॥ हरिद्रायाम् ॥ श्वेतदूर्वायाम् ॥ काश्मर्याम् ॥ सारिवाविशेषे ॥ गवि ॥ काकोदुम्बरिकायाम् ॥ बुद्धशक्तिविशेषे। तारायाम् ॥ छायागर्भजात सूर्यकन्यायाम् ॥ श्रीकृष्णभगिन्याम् ॥ सुभद्रायाम्। दुर्गायाम् ॥ यथा। भद्रास्याद्भद्रकर्त्री॰इति ॥ विष्ट्याम् ॥ यथा। शुक्ले पूर्वार्धेऽष्टमीपञ्चदश्योर्भद्रैकादश्यांचतुर्थ्यां परार्धे। कृष्णेऽन्त्यार्धेस्यात्तृतीयादशम्यो : पूर्वेभागेसप्तमीशम्भुतिथ्यो : ॥ विष्टायविपरीताविष्टिस्तां चवर्जयेत्। विष्टिशेषेनिहन्त्यहे चिप्रक्षेकार्यं जयावहम् ॥

भद्राकरणम्। न॰ मुण्डने

भद्राक्ष :। त्रि॰ शोभननेत्रे ॥

भद्रात्मज :। पुं॰ खड्गे ॥

भद्राश्व :। पुं॰ अष्टादशजम्बूद्वीपान्तर्गतद्वीपविशेषे

भद्रासपर्णिका। स्त्री॰)

भद्राली। स्त्री॰) गन्धाल्याम् ॥

भद्रायती। स्त्री॰ कट्फलवृक्षे ॥

भद्राश्वम्। न॰ भुवोन्नवर्षान्तर्गतवर्षविशेषे। इलावृतवर्षे। भद्राश्वमाख्यवत्प्राच्यांवर्षं भद्रजनाकुलम् ॥

भद्रासनम्। न॰ नृपासने ॥ भद्रञ्च तदासनञ्च ॥ तृतीययोगाङ्गविशेषे तद्यथा। सीवन्या : पार्श्वयोन्यं स्वेद्गुल्फयुग्मं सुनिश्चलम्। तद्यथाव : पादपार्श्वौ पाणिभ्यांपरिबन्धयेत् ॥ भद्रासनं समुद्दिष्टं योगिभि : सारकल्पितम् ॥

भद्रेश्वर :। पुं॰ केत्यग्रामस्थशिवे ॥ शिवप्राप्त्यर्थं दुर्गाराधितहिमालयस्थप्राचीनशिवलिङ्गे ॥

भद्रैला। स्त्री॰ स्थूलैलायाम् ॥

भद्रोदनी। स्त्री॰ बलायाम्। परिचारा॰इ॰भा॰ ॥ नागबलायाम् ॥

भन्दम्। न॰ कल्याणे ॥ प्रसादे च ॥

भन्दिल : । पुं० दूते न० शुभे । क म्पे ॥

भन्धुक : । पुं० मारसवर्णाल्पाल्पतरे शविशेषे ॥

भयङ्कर : । पुं० मयचचक्रे ॥

भपति : । सुधांशौ ॥ भानांप ति : ॥

भस : । पुं० भूमे ॥

भम्भरालिका । स्त्री० मक्षिकायाम् । द्रु मि ॥

भम्भराली । स्त्री० मक्षिकायाम् ॥ द्रुमि ॥

भम्भासार : । पुं० मगधराजविशेषे । श्रेणिके ॥

भयम् । न० घोरे । भयङ्करे ॥ कुब्जक प्रसूने ॥ प्रतिभये । दरे । भीः । भीतौ । भिषि । साध्वसे । अना गतप्रतिकूलप्रतिसन्धाने ॥ तद्यथा नियया । रौद्रशक्त्यातुजनित चि त्तवैक्लव्यं भयम् । व्याघ्रादिदर्शना धीनचित्तवृत्तिविशेषे ॥ भयम् ॥ गर्भवासादिदु : खरूपम् । रागवि षयस्य विनाशके समुपस्थितेतन्निवा रणासामर्थ्यं सात्मनो मन्यमानस्य दै न्यात्मकचित्तवृत्तिविशेष : ॥ सर्वान् विषयान् परित्यज्य ज्ञानमार्गैकधर्मो वितव्यमितित्रास : ॥ अनिष्टेष्टेभूपनि पाते तत्परिहाराशक्यत्वेसात्मज्ञानम् ॥ परत : स्वानिष्टसम्भावनायाम् । भयं द्वितीयाभिनिविष्टत : स्यात् ॥ यथा व्याघ्रादिभेति । व्याघ्रादीनत्वे नखीयमरणं सम्भावयतीति । बिभे त्यस्मात् । ञिभीभये । धञ्ज्विधौ भयादीनामुपसङ्ख्यानं नपुंसके क्तादिनिवृत्त्यर्थम् ॥ बिभेत्यनेनेति विग्रहे० एरज्जित्यरणेऽच् ॥ भयं द्विविधम् । दैवम् । मानुषञ्च । यथा उल्कामकन्दका : । हुताशनोनल व्याधिर्दुर्भिक्षं मरणं तथा । इतिप ञ्चविधं दैवं मानुषव्यसनं तत : ॥ आयुक्तकेभ्यश्चौरेभ्य : परेभ्योराजव ल्लभात् । पृथिवीपतिलोभाच्च नरा णां पञ्चधा भयमिति ॥ आगते भये अभीतवत्स्थातव्यम् । यथा । ता वद्भयस्य भेतव्यं यावद्भयमनागतम् । उत्पन्ने तु भये तीव्रे स्थातव्यं तै रभी तवत् ॥ पुं० रोगे ॥

भयङ्कर : । पुं० डुण्डुलपक्षिणि । त्रि० भयोत्पादके । भैरवे । दारु णे । भीषणे । भयानके ॥ भयं क रोति । मेघर्त्ति भयेषु कृञःखच् इति खच् । मुमागम : ॥ पुं० याचायो गान्तरे ॥ यथा । एकर्क्षगौ शुक्रजी वौ सावातामन्योन्यसप्तगौ । भयङ्क राख्योयोगोयं यातुर्भीति प्रदाय क : ॥

भयडिण्डिम : । पुं० सङ्ग्रामपट हे ॥

भयद्रुत : । त्रि॰ कान्दिशीके । भीत्यापलायिते ॥ शद्रुद्रुतवत् । द्रुगतौ । कर्त्तरि क्त : । भयात्द्रुत : । पंचमीतियोगविभागात्समासः ॥

भयनाशिनी । स्त्री॰ भयनाशकर्त्र्याम् । विद्यायाम् ॥ त्रायमाणालता॰ म् ॥

भयभीत : । त्रि॰ त्रासेनातङ्किते ॥ यथा । एकतोभयभीतस्यप्राणिन : प्राणरक्षणम् । नातोगुरुतमोधर्मः कश्चिदन्योस्तिवेभूत॰ ति ॥ वह्निपुराणे शिविराजोपाख्याने ॥

भयभ्रष्ट : । त्रि॰ भयद्रुते ॥

भयानक : । पुं॰ व्याघ्रे ॥ राहौ । शृङ्गाराद्यष्टरसान्तर्गतरसे॰ ॥ त्रि॰ भयानके । भीषणे ॥ बिभेत्यस्मात् । त्रिभी॰ आनक : भीङ् भियह्रस्वानक : ॥

भयापह : । पुं॰ राजनि ॥ परमेश्वरे ॥ भयं संसारजमुमुक्षूणामपहन्तीति । हन॰ । अन्येभ्योपिदृश्यतइतिड : । भयमपवद्व्याधा । व्याधिपिहन्यतिड : ॥ त्रि॰ भयापहारककर्त्तरि ॥

भयावह : । त्रि॰ भयङ्करे ॥

भर : । पुं॰ अतिशये । भरति । भृञ् । पचाद्यच् ॥ भरणं भर : । पुं सीतिघोषा ॥ अस्यद्रव्यवाचित्वेपि पुंस्त्वमेव । घञन्तत्वना : पुंसी तिवचनात् ॥ चन्द्रि ॥ भं नक्षत्रं राति । रा॰ क : । यवे ॥ भरे ॥ शेतेभराभराक्रान्तो यत्रैषनारायण : स्वयम् । लक्ष्मीयन्त्रोनजानन्ति : सहांपरवेदनाम् ॥

भरट : । पुं॰ कुम्भकारे ॥ भृत्यके ॥ किंकरे । डुभृञ्॰ शनिटेव्यादिना॰ रटच् ॥

भरणम् । न॰ वेतने । भृतौ । मूल्ये ॥ भ्रियते ऽनेन । भृञ्॰ ल्युट् ॥ पोषणे ॥ यथा । भरणं पोष्यवर्गस्यप्रशस्तंस्वर्गसाधनम् । नरकं पीडनेचाऽस्यतस्माद्यत्नेनतं भरेत् ॥ पुं॰ भरणीनक्षत्रे ॥

भरणी । स्त्री॰ द्वितीयनक्षत्रे । यमदेवते ॥ तच्चत्रतारात्मकम् ॥ यथा ॥ सदायकीर्त्तिर्हि महाप्रवादोनानाविनोदै श्चविनीतकाल : । जनो विलासीचपल:खल : स्यात् प्रायिताधीतोभरणीषुजात: ॥ माणिप्रणीत. । प्रायिणि । भिस : ॥ घोषके ॥ टित्वान्ङीप् ॥

भरणीभू : । पुं॰ राहुग्रहे ॥

भरणीय : । त्रि॰ पोष्ये । भरणायोग्ये ॥

भरण्ड. । पुं॰ स्वामिनि । कृमौ ॥ नृपे ॥ वृषे ॥ भरति । भृञ्॰ । अण्डन् कृसमवृञ : । इत्यण्डन् ॥

भरण्डा । स्त्री॰ भ्रमौ ॥

भरण्यम् । न० वेतने । मूल्ये ॥
भरणे साधु । तत्रसाधुरितिय
त् ॥
भरण्यभुक् । त्रि० वैतनिके । कर्मक
रे । मूल्येनकर्म्म कुर्वति ॥ भरण्यं
वेतनंभुङ्क्ते । क्विप् ॥
भरण्या । स्त्री० वेतने ॥
भरण्याह्वा । स्त्री० रामदूतीतिगौ०दे०
ख्यातायांपूर्व्वपुष्प्याम् ॥
भरण्युः । पुं० शरण्ये ॥
भरत : । पुं० नाट्यशास्त्रे ॥ नाट्य
कारादिशास्त्रस्यसूत्रकारे०मुनौ ॥
रामानुजे ॥ शबरे ॥ क्षेत्रे ॥ भरता
त्मजे ॥ देवर्षिविशेषे ॥ तन्तुवा
ये ॥ नटे ॥ भरतस्यमुनेः शिष्यः ।
तस्येदमित्यण् । संज्ञापूर्वकत्वान्न
वृद्धि : ॥ यद्वा । बिभर्ति स्वाङ्ग ।
कुभृत्र० । भृमृदृशीयजप० ॥ च
न्द्रवंशीयनृपविशेषदुष्यन्तस्यपु
त्रे । शाकुन्तलेये । दौष्यन्तौ । सर्व
दमने ॥ निरुक्तिश्चास्यश्रीभागवते ।
माताभस्त्रापितुः पुत्रोयेनजातः
सएवसः । भरस्वपुत्रं दुष्यन्तमाव
मंस्थाः शकुन्तलाम् ॥ इति ॥ ऋ
षभदेवादिन्द्रदत्तजयन्त्यांकन्याया
मुत्पन्नशतपुत्रान्तर्गतज्येष्ठपुत्रे ॥
यथा । अथाहभगवानृषभदेवः स्वं
वर्षंकर्मक्षेत्रमनुमन्यमानः प्रदर्शि
तगुरुकुलवासोलब्धवरैर्गुरुभिरनु

ज्ञातोगृहमेधिनांधर्माननुशिक्षमा
णोजयन्त्यामिन्द्रदत्तायामुभयविधं
कर्मसमाम्नाय मभियुञ्जन्नात्मजा
नामात्मसमानानांशतंजनयामास
। येषांखलुमहायोगीभरतोज्येष्ठ :
श्रेष्ठगुणआसीत्०येनेदंवर्षंभारतमि
तिव्यपदिशन्तीति ॥ पावकस्यपुत्रे ॥
भरतखण्डम् । न० भारतवर्षान्तर्गत-
कुमारिकाखण्डे ॥
भरतज्ञ : । त्रि० नाट्यशास्त्रज्ञे ॥
भरतपूर्वज : । पुं० गाङ्गेये । भीष्मे ॥
भरतपुत्रक : । पुं० शैलूषे । नटे ॥
भरतप्रसू : । स्त्री० कैकेय्याम् ॥
भरताग्रज : । पुं० श्रीरामचन्द्रे ॥
भरथ : । पुं० लोकपाले ॥ बिभर्ति ।
कुभृत्र० । भृञशिदिभ्यश्च : ॥
भरद्वाज : । पुं० मुनिविशेषे ॥ व्याघ्रा
टे । भारद्वा०गौ०दे०भा०प्र०पक्षि-
णि । भरद्वाज०द्र०भा० ॥ गुरोः पु
त्रे । उतथ्यपत्न्याम्ममतायांबृह
स्पतेर्वीर्याज्जातेमुनिविशेषे ॥ यस्य
नामनिर्वचनं यथाविष्णुपुराणे ।
मूढेभरद्वाजमिमं०भरद्वाजंबृहस्पते: ।
यातौयदुक्त्वापितरौभरद्वाजस्तत-
स्त्वयम् ॥ इति ॥ भरन्धारयोपा-
जोऽस्य ॥ यद्वा । भरद्वाजस्यापत्य-
म् । ऋष्यण् । संज्ञापूर्वकत्वाद्वृ
द्ध्यभाव : ॥
भरवान् । पुं० शिवे ॥ भरयन्त्रीमत्व

स्य । मतुप् ॥ भरसहिष्णौ ॥

भरिणी । स्त्री॰ हरिद्वर्णे इरा॰द्ध॰ भा॰ ॥

भरितः । पुं॰ हरिद्वर्णे ॥ त्रि॰तद्वति ॥ भृते ॥ पुष्टे ॥ परिपूर्णे । भरा॰ द्द॰भा॰ ॥ भरः सञ्जातोऽस्य । ता॰ रकतच् ॥

भरिता । स्त्री॰ हरितायाम् ॥

भरिमा । पुं॰ भरणे ॥ कुटुम्बे ॥ भरति॰विभर्त्ति वा । भृञ्॰डुभृञ्॰ वा । हृभृधृसृस्तृशृभ्य इमनिच् ॥

भरुः । पुं॰ स्वर्णे । कनके । हरे । शिवे ॥ भर्त्तरि । स्वामिनि ॥ भरति॰बिभर्त्ति वा । भृञ्॰डुभृञ् वा । भृमृशीतृचरित्सरितनिधनि मिमस्जिभ्य उः ॥

भरुजः । पुं॰ श्रृगालशावे ॥

भरुटम् । न॰ निष्क्वाथपक्वमांसे ॥

भरुटकम् । न॰ भृष्टामिषे ॥

भर्गः । पुं॰ स्मरहरे । शिवे ॥ भर्जति । भृज्जीभर्जने । पुं॰ अच् । न्यङ्क्वादित्वात् कुत्वम् ॥ भृश्यन्ते पापादयोऽनेनेति वा । इत्यर्थे तिघञ् । भृज्यन्ते॰ पच्यन्ते जगद नेनेति वा ॥ संवित्मण्डलगतादि त्यरूपे पुरुषे ॥ चिन्तयामोवयं भर्गं धियोयोनः प्रचोदयात् । ध र्मार्थकाममोक्षेषु बुद्धिवृत्तीः पुनः पुनः ॥ अपिच । भस्ज पाकेभवेद्धातुर्यस्मात् पाचयते ह्यसौ । भ्राजते दीप्यते यस्माज्जगच्चा न्ते हरत्यपि ॥ कालाग्निरूपमास्था यसप्तार्चिः सप्तरश्मिभिः । भ्राज ते यत् स्वरूपेण तस्माद्भर्गः सउच्य ते ॥ भे तिभीषयते लोकान् रेति रञ्जयते प्रजाः । गच्छागच्छत्यजस्त्रं योभगवान् भर्ग उच्यते ॥ इतियो गियाज्ञवल्क्यः ॥

भर्गः । न॰ तेजसि ॥ भर्जते । भृज्जीभर्जने । अञ्च्यञ्जियुजिभृ ज्जिभ्यः कुश्चेत्यसुन्॰ कवर्गश्चा न्यादेशः । भर्गसी॰ इत्यादि ॥ स्वरूपभूते तेजसि ॥

भर्ग्यः । पुं॰ शिवे ॥ भर्जते । भृ ज्जी॰ । ऋहलोर्ण्यत् । चजोरिति कुत्वम् ॥

भर्जनम् । न॰ भृष्टौ । भूनना ॥ इ॰ भा॰ ॥

भर्जितः त्रि॰ दग्धे ॥ भृज्जी॰ । क्तः ॥

भर्त्तव्यः । त्रि॰ भरणीये । पोषणीये ॥ वृद्धौचमातापितरौसाध्वीभार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा॰भर्त्तव्यामनुरब्रवीत् ॥

भर्त्ता । पुं॰ स्वामिनि । नाथे । पत्यौ । परिवृढे । नेतरि ॥ विष्णौ ॥ प्रपञ्चस्याधिष्ठानत्वेभरणात् ॥ बिभर्त्ति स्वाध्यस्तं सर्वमधिष्ठान

तयाधारयति सत्तास्फूर्त्तिप्रदाने नपोषयतियेति विभर्त्ति धारणमो प्रणाद्यात् तृच् ॥ त्रि॰ धातरि । धारके ॥ सुखसाधनसम्प्रदातरि ॥ देहेन्द्रियमनोबुद्धीनां सतानां॰ चैतन्याभासविशिष्टानां॰स्वसत्तया स्फुरणेन धारयितरि ॥ बिभर्त्ति भरतिवा । डुभृञ्॰ भृञ्॰वा । तृच् ॥

भर्तृदारक : । पुं॰ नाट्योक्त्यायुव राजे । ध्रियते । दृङ् आदरे॰ तुदादि : । ण्वुल् । भर्तूराज्ञो दारक : ॥

भर्तृदारिका । स्त्री॰ नाट्योक्तौराज कन्यायाम् ॥ भर्त्तूराज्ञोदारि का ॥

भर्तृप्रपञ्च : । पुं॰ औपनिषदमन्ये वेदान्तानांव्याख्यातृविशेषे ॥

भर्तृस्थानम् न॰ तीर्थविशेषे ॥ यत्रकार्त्तिकेयस्तिष्ठति ॥

भर्तृहरि : । पुं॰ व्याकरणकारिका कर्त्तरिस्वविविशेषे ॥ स्वनामप्र सिद्धे काव्यकर्त्तरिराजविशेषे ॥ सचविक्रमादित्यराजभ्राता ॥

भर्त्सनम् । न॰ अपकारगिरि । चौ रोसित्वं घातयिष्यामित्वामित्याद्य पकारार्थवचने ॥ भर्त्सतर्जसन्तर्ज ने । ल्युट् ॥

भर्त्सपत्रिका । स्त्री॰ मरानोल्वा म् ॥

भर्त्सित : । त्रि॰ धधिक्षिप्ते ॥

भर्म्मन् । न॰ ॥ स्वर्णे ॥ भृतौ ॥ नाभौ ॥

भर्म्मकम् । न॰ रोगविशेषे ॥ विड ङ्गे ॥ कलधौते । सुवर्णे ॥

भर्म्मण्या । स्त्री॰ गर्भिणाशुल्के ॥

भर्म्म । न॰ भारे ॥ काञ्चने ॥ भृतौ । भरणे । पोषणे । कुमारभृत्या कुशलैरधिष्ठितेभिषग्भिराप्तै रथ गर्भभर्मणीति रघु : । अत्रगर्भेहेम प्रभृतिघृतमक्षिनाथधृतःशाश्वतः ॥ नाभौ ॥ धुस्तूरे ॥ बिभर्त्ति॰ भरतिवा । भ्रियतेऽनेनवा । डुभृ ञ्॰भृञ्॰ । मनिन् ॥

भलता । स्त्री॰ प्रसारण्यामोषधौ । राजबलायाम् ॥

भलन्दन : । पुं॰ कान्यकुब्जदेशीय नृपविशेषे ॥

भलूक : । पुं॰ भालूके ॥ भलते । भलाभलपरिभाषणहिंसादानेषु ॥ उलूकादयश्चेतिसाधु : ॥

भल्ल : । पुं॰ भल्लूके । शस्त्रे ॥ पुं॰ न॰ शस्त्रभेदे । भाला॰ इ॰भा॰ ॥ बाणविशेषे ॥ स्त्रदृढोदितफलो भल्लद्रतियादव : ॥ भल्लते । भल्ल॰ । पचाद्यच् ॥ न॰ भद्रे । शिवे ॥ पु॰ त्रि॰ श्री ॰ ॥

भल्लक : । पुं॰ भल्लूके ॥ संज्ञायां

कन् ॥

भल्लपुच्छी । स्त्री॰ गवेधुकायाम् ॥

भल्लाट : । पुं॰ न॰ शशिध्वजराजपुरे

भल्लात : । पुं॰ भल्लातके ॥

भल्लातक : । पुं॰ अग्निमुख्याम् । अ रुष्करे । शोथकृति । श्लिला॰ इ॰ भा॰ । भल्लातकफलंपक्वं स्वादुपाकरसंलघु। कषायंपाचनंस्निग्धं तीक्ष्णोष्णं छेदिभेदिनम् ॥मेध्यंवह्निकरंहन्तिकफवातव्रणोदरम् ॥ कुष्ठार्शोग्रहणीगुल्मशोफानाहज्वरक्रिमीन् ॥ तन्मज्जामधुरोवृष्योबृंहणोवातपित्तहा । वृन्तमारुष्करंस्वादुपित्तघ्नं केश्यमग्निकृत् ॥ भल्लातक : कषायोष्ण : शुक्रलोमधुरोलघु : । वातश्लेष्मोदरानाहकुष्ठार्शोग्रहणीगदान् ॥ हंतिगुल्मज्वरश्वित्रवह्निमान्द्यक्रिमिव्रणान् ॥ भल्लइवातति अत॰ । क्वुन् ॥

भल्लातकी । स्त्री॰ वीरवृक्षे । अग्निमुख्याम् । भल्लातकी ॥ गौरादित्वान्ङीष् ॥

भल्लिका । स्त्री॰ ) भल्ला
भल्ली । स्त्री॰ )तके ॥

भल्लु : । पुं॰ भल्लुके ॥ भल्लते । भल्ल॰ बाहुलकादु : ॥

भल्लुक : । पुं॰ दुर्धीपे । ऋक्षे । रीछ भालू॰ इ॰ भा॰ संज्ञायांकन् ।

भल्लूक : । पुं॰ ऋक्षे । भल्लुके ॥ भल्लते । भल्ल॰ । उलूकादित्वात्साधु : ॥ श्योनाकप्रभेदे ॥ कुक्कुरे ॥

भव : । पुं॰ ईशे । शिवे । शङ्करे । हरे ॥ क्षेमे । श्रेयसि ॥ समृद्धौ ॥ यस्यावतारोभूतानांक्षेमायचभवायच ॥ संसारे ॥ अपामार्गस्तिक्षायं विरुद्धफलदोभव : । प्रत्यग्दृश्यायिमोक्षायसंसारायपराग्दृश्याम् ॥ सत्तायाम् ॥ प्राप्तौ । भद्राप्तौ ॥ उद्भवे । जन्मनि ॥ लग्नादेकादशे ॥ भवति॰ भवतेर्वासर्वम् । भू प्राप्तौ । पचाद्यच् । अन्तर्भावितण्यर्थोवा ॥ जन्मनितु॰ भावे॰ ऋदोरप् ॥ भ॰ फलविशेषे । भव्ये । चालता॰ इ॰ गौ॰ दे॰ भा॰ चि॰ क्षेमान्विते ॥

भवघस्मर : । पुं॰ दावानले ॥

भवच्छिद् । त्रि॰ संसारनिवर्तके ॥ भवच्छिनत्ति । छिदिर्॰ । सत्सूद्विषेत्यादिना॰ क्विप् ॥

भवान् । त्रि॰ युष्मदर्थे॥ भाति । भादीप्तौ भातेर्डवतु : ॥ लिंगत्रयेरूपन्तु । भवान्॰ भवती॰ भवदिति॥ पूज्ये ॥ सति । विद्यमाने ॥ भवतेर्लट : शत्रादेशे । भवन्॰ भवन्तीभवत्॰ इतित्रिलिंगेरूपंबोध्यम् ॥ जायमाने ॥

भवती । स्त्री॰ विषाक्तवाणे ॥ पूज्यायाम् । दीप्तिमत्याम् ॥ उगितश्चेति ङीप् ॥

भवदारु। न॰ देवदारुवृक्षे ॥

भवदीयः। त्रि॰ भवत्के । भवतामयम् । भवतष्ठक्छसाविति॰छस् ॥

भवनम्। न॰ अगारे । मन्दिरे । गृहे । भावे ॥ भवन्त्यत्र । भू॰ । ल्युट् । राशौ ॥ क्षेत्रे ॥

भवनाशनः। पुं॰ आत्मगोशीर्षे ॥

भवनाशिनी। स्त्री॰ सरयूनद्याम् ॥

भवनीयः। त्रि॰ भवितव्ये ॥ उत्पत्तव्ये ॥

भवन्त। पुं॰ कालसामान्ये ॥ वर्तमानकाले ॥ भवति॰भूयाद्वा ॥ भू॰ । तृभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्चेति॰झच्॰ सचषित्।

भवन्ति। पुं॰ वर्तमानकाले ॥ भवति । भू॰ । भुवोझिच् ॥

भवन्ती। स्त्री॰ पूर्वाचार्यप्रणीतसंज्ञायाम् ॥ यथा । अक्षिर्भवन्तीपरोऽप्रयुज्यमानोप्यस्तीत्यादिभाष्यम् ॥ षित्वान्ङीष् ।

भवभावनः। त्रि॰ संसारकारणे । भवः संसारस्तस्यभावनत्वेन ॥ तत्पुरुषे ॥

भवभूतिः। पुं॰ भोजराजस्य सभास्थे कविविशेषे । मालतीमाधवादिनाटककर्तरि । भूगर्भे ॥ महादेवस्यैश्वर्ये ॥

भवरत्। पुं॰ प्रेतपटहे ॥

भवाघनाशिनी। स्त्री॰ गङ्गायाम् ।

भवात्मजा। स्त्री॰ मनसादेव्याम् ॥

भवादृक्षः। त्रि॰ भवादृशे ॥ भवानिवपश्यति॰भवन्तमिववा । दृशिर् प्रेक्षणे । त्यदादिष्विति च॰ कसोपि वाच्यइति॰क्सः ॰ । आसर्वनाम्नइत्यत्र॰दृग्दृशवतुष्विति वार्तिकादाकारोन्तादेशः ॥

भवादृक्। त्रि॰ भवादृशे ॥ भवानिवपश्यति॰भवन्तमिववा । दृशिर्॰ । त्यदादिष्विति क्विन् । आसर्वनाम्नः ॥

भवादृशः। त्रि॰ युष्मत्सदृशे । भवद्विधे ॥ भवानिवपश्यति॰भवन्तमिववा । दृशिर्॰त्यदादिषुदृशोनालोचनेकञ्चेति॰कञ् । आसर्वनाम्नः इत्याकारोन्तादेशः ॥

भवानी। स्त्री॰ पार्वत्याम् । दुर्गायाम् ॥ भवस्यस्त्री । इन्द्रवरुणभवशर्वेत्यादिना॰ङीषानुकौ । परदेवतायाम् ॥ एतैवशक्तिः परमेश्वरस्याभिन्नाचतुर्धाव्यवहारकाले । भोगेभवानी पुरुषेषु विष्णुः कोपेषु काली समरेषु दुर्गा ॥ चट्टलपीठवासिन्याम्बायाम् ।

भवानीगुरुः। पुं॰ हिमालये ॥

भवानीपतिः। पुं॰ महादेवे ॥

भवापवर्गः। पुं॰ मोक्षे ॥ भवस्यापवर्गः नाशः ॥

भवाभीष्टः। पुं॰ गुग्गुलौ ॥

भवाब्धिः । पुं० संसाररूपसमुद्रे ॥ भवाब्धितरणोपायः कुलमार्गोहिनापरः ॥

भवायना । स्त्री० गङ्गायाम् ॥

भविकम् । न० भव्ये । कुशले ॥ भवो भद्रमस्यास्ति । अतइनिठनाविति ठन् ॥ त्रि० तद्वति ॥

भवितः । त्रि० अतीतोत्पत्तिके । भूते ॥

भवितव्यम् । त्रि० भवनीये ॥ भवितव्यं भवत्येव नारिकेलफलाम्बुवत् । गन्तव्यं गतमित्याहुर्गजभुक्तकपित्थवत् ॥

भवितव्यता । स्त्री० नियतौ । भाग्ये । अर्थानामनर्थानाञ्चावश्यंभावित्वे । कालभार्यायाम् ॥

भविता । त्रि० भविष्यौ ॥ भवनशीलः भू० । तृन्निति तृन् ॥

भविनः । त्रि० काव्यकर्त्तरि ॥

भविलः । पुं० भव्ये ॥ भवति । भू० । सलिकल्यनीत्यादिना० सूत्रेण ॥ विङ्गे । विदूषके ॥

भविष्णुः । त्रि० भवितरि । भूष्णौ ॥ भवनशीलः । भुवयतिभविति इति इष्णुच् ॥

भविष्यम् । न० पञ्चशताधिकचतुर्द्दशसहस्रश्लोकात्मकपुराणविशेषे ॥ यथा । चतुर्द्दशं भविष्यं स्यात् तथा पञ्चशतानि च तिस्रीभागवतम् ॥ चमिच । चतुर्द्दशसहस्राणिसद्यः पञ्चशतानि च । भविष्यं परिसंख्यातं मुनिभिस्तत्त्वदर्शिभिरितिदेवीभागवतम् ॥ त्रि० भविष्यत्काले ॥

भविष्यत् । त्रि० आगामिकाले । वर्त्तमानप्रागभाव प्रतियोगिनिकाले ॥ वर्त्तमानकालोत्तरकालीनोत्पत्तिकत्वे । अनागते । प्रवत्स्ये ॥

भव्यः । पुं० कर्म्मरंगतरौ ॥ न० अस्थनि ॥ फलविशेषे चालता० इ० गौ० दे० प्र० । वर्म्मरङ्गस्थोधनी ॥ भव्यं स्वादुकषायाम्लं हृद्यमास्य विशोधनम् । तदेवपक्वं दोषघ्नं गुरु ग्राहिविषापहम् ॥ पुं० न० रसभेदे ॥ त्रि० शुभे ॥ सत्ये ॥ सौम्ये ॥ भाविनि ॥ जनिष्यमाणे ॥ भवति० भाव्यमनेनवा । भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्याविति ० कर्त्तरि० भावे वायततासाधुः ॥

भव्या । स्त्री० उमायाम् । करिकणायाम् ॥

भषः । पुं० कुक्कुरे ॥ भषति । भष० । अच् ॥

भषकः । पुं० कुक्कुरे । शुनि ॥ भषति । भषधैन्ये । क्वुन् ॥

भषणम् । न० वुक्कने । श्वरवे ॥

भष॰ल्युट् ॥
भषा । स्त्री॰ स्वर्णचीर्याम् ॥
भषी । स्त्री॰ शुन्याम् ॥ भषतिभाष्य म॰। भषशब्दे। पचाद्यच् । भष हितिपाठात् । टिड्ढे तिङी प्॥
भसट् । स्त्री॰ भास्करे ॥ योनौ ॥ जघने ॥ काले ॥ मांसे ॥ कारण्ड वखगे ॥ प्लवे । मेलके । वमस्ति । भसभर्त्सनदीप्त्योः । अट् भसोदिः ॥
भसन : । पुं॰ भ्रमरे ॥
भसम : । पुं॰ काले ॥
भसितम् । न॰ भस्मनि ॥
भसूचक : । पुं॰ देवज्ञे ॥
भस्त्रका । स्त्री॰ चर्मप्रसेविका याम् ॥
भस्त्रफला । स्त्री॰ ओषधिविशेषे ॥ भर्ववफलान्यस्याः । पाककर्णेति प्राप्तङीष्बाधिता॰सम्भस्त्राजिने तिटाप् । ङ्यापोरितिह्रस्वः ॥
भस्त्रा । स्त्री॰ अग्निदीपकचर्मनिर्मितयन्त्रविशेषे । चर्मप्रसेविकाया म् ॥ जलादिनीयते येनलोहादि ध्मायते तया । चर्मचोविकृतिः सावभस्त्राधात्वे प्रकीर्तिता ॥ भस्यते ऽनया । भसदीप्तौ । ष्ट्रयामा शुभसिभ्यस्त्रन् । तितुत्रेतिनेट् । अजादित्वाट्टाप् ॥
भस्त्राका । स्त्री॰ भस्त्रिकायाम् । भस्त्रा यां ॥
भस्त्रिक : । त्रि॰ भस्त्रयाजलाहरणक र्त्तरि । भिस्ती॰इ॰भा॰ ॥ भस्त्रया हरति । भस्त्रादिभ्य : ष्ठन् ॥ स्त्री॰- भस्त्रिकी । षित्वान्ङीष् ॥
भस्मक : । पुं॰ रोगविशेषे ॥ तस्य निदानसम्प्राप्तिपूर्वकं लक्षणं । य था । कट्वादिरूक्षान्नभुजांनराणांमो षे कफे मारुतपित्तवृद्धौ । अतिप्रवृद्धः पवनान्वितोऽग्नि भुक्तं क्षणाद्भस्म करोतियस्मात् । तस्मादसौभस्मक संज्ञकोऽभूदुपेक्षितोयं पचते धा तून् ॥ भस्मसोपद्रवमाह्रिष्टं यथा । तृट्स्वेददाहमूर्च्छादीन् कृत्वेयात्य भिसम्भवात् । पक्वान्नमाशुधात्वा दीन्सद्यस्तिमं नाशयेद्भवम् ॥ इ॰
भस्मकार : । पुं॰ रजके ॥
भस्मगन्धा । स्त्री॰ रेणुकायाम् । हरे णौ ॥
भस्मगन्धिका । स्त्री॰ हरेणुनामौषधौ । रेणुकायाम् ॥ भस्मनोगन्धः । भस्म गन्धोस्त्यस्याः । अतइनि । ठनावि तिठन् । टाप् ॥
भस्मगन्धिनी । स्त्री॰ रेणुकायाम् । ह रेणुनाम्न्यौषधौ ॥ गन्धद्रव्यमेतदिति स्वामी ॥ भस्मगन्धोस्त्यस्याः अत इनिठनावितीन् । ङीप् ॥
भस्मगर्भ । पुं॰ तिनिशद्रुमे ।

भस्मगर्भा । स्त्री० कपिलवर्णपुष्पायां शिंशपायाम् ॥ रेणुकानामगन्धद्रव्ये । औषधिभेदे ॥ भस्मगर्भेयस्याः शुक्लसारत्वात् ॥

भस्मतूलम् । न० ग्रामकूटे ॥ पांशुवर्षे ॥ हिमे ॥

भस्म । न० काष्ठादेरग्निकृतविकारे । शिवाङ्गभूषणे । भूतौ । भसिते । विभूतौ ॥ बभस्ति ॥ भसभर्त्सनदीप्त्योः । सर्वधातुभ्योमनिन् । विनाभस्मत्रिपुण्ड्रेणविनारुद्राक्षमालया । पूजितोपिमहादेवोनस्यात् तस्यफलप्रदः ॥ जठरोगविकारे ॥

भस्मरोहा । स्त्री० दग्धारुहवृक्षे ॥

भस्मविधमः । पुं० कर्पूरे ।

भस्मसात् अ० भस्मीभावे ॥ कृत्स्नं भस्मसम्पद्यते । विभाषासातिकार्त्स्न्ये ० इतिसातिः प्रत्ययः ॥

भस्मस्नानम् । न० सप्तविधस्नानान्तर्गतस्नानभेदे ॥ यथा । पावकेनभस्मनास्नानमाग्नेयं पौरवः स्मृतम्

भस्माह्वयः । पुं० कर्पूरे ॥

भस्मितः । त्रि० दग्धे ॥

भा । स्त्री० भासि ॥ प्रभायाम् । रुचौ । दीप्तौ । रोचिषि ॥ ज्ञाने । चैतन्यरूपे ॥ यथा । स्वभारूपस्यविश्वस्य भानंभासन्निरीक्षिता । कदाचिन्नावकल्पेतभावाद्वैतनसर्वगः ॥ भाति भादीप्तौ । इगुपधज्ञाप्रीकिरःकः इत्यादिना कः । टाप् ॥

भाकुटः । पुं० भेकुटी० द्र० शौ० दे० भा० प्र० मत्स्ये ॥

भाकूटः । पुं० शैलप्रभेदे ॥ मत्स्यविशेषे । भेकुटी० द्र० भा० ॥ भाकूटो मधुरः शीतोवृष्यः श्लेष्मकरीगुरुः । विष्टम्भजनकश्चापिरक्तपित्तहरास्मृतः ॥

भाकोषः । पुं० सूर्ये ॥

भाक्तः । त्रि० औपचारिके । गौणे । लाक्षणिके ॥ भक्तसम्बन्धिनि ॥ अन्नेनपोष्ये ॥ भाक्तिके ॥ भक्तमस्मै नियुक्तं दीयते । भक्तादणन्यतरस्यामित्यण् । न० शालिधान्ये ॥ भक्ते साधु । भक्ताण्णः इतिणः ॥

भाक्तिकः । त्रि० अन्नेनपोष्ये । भाक्ते ॥ भक्तमस्मै नियुक्तं दीयते । भक्तादणन्यतरस्यामितिपक्षेठक् ॥

भागः । पुं० अंशे । वण्टके । स्तोकिसमांशांशे ॥ रूप्यार्द्धके भाग्ये ॥ एकदेशे ॥ भज्यते । भजसेवायाम् । कर्मणिघञ् ॥ भागाः । भागाःस्वर्या-द्विषयांशसूक्ष्मांशा । घञ् ॥ राशेस्त्रिंशभागैकभागे ॥ त्रिंशांशकस्तथाराशेर्भागइत्यभिधीयते ज्योतिः ॥

भागत्यागः । पुं० जहदजहल्लक्षणायाम् विरुद्धांशपरित्यागे ॥

भागत्यागलक्षणा । स्त्री० जहदजहल्लक्षणायाम् । अंशान्तरपरित्यागेना-

भाज्य : । त्रि॰ भागार्हे । भाजनीये ॥
भाटक : । पुं॰ न॰ व्यवहारार्थं दत्त गृहशकटादिसम्बन्धे । भाडा॰ इ॰ भा॰ ॥
भाट्ट : । पुं॰ भावनविदचिद्रूपत्वादिनिभट्टाचार्यमतानुसारिणि मीमांसके । स ह्येवं मन्यमुत्मेत्थ द्रव्यबोधस्वरूपताम् । आत्मनोभ्युपैतिभाट्टाश्चिद्रूपत्वमितिव्यवस्थिते : ॥ जडीभूत्वातदात्मानंस्मरितोवृत्तमिति सदा । विनाशडहमनुभूतिं नत्रयं चिद्रूपमद्यते ॥ द्रष्टृदृष्टे रलोपश्चेत : सुप्तीततस्त्वयम् । अप्रकाशप्रकाशाभ्यामात्माखद्योतवद्युत : ॥
भाण : । पुं॰ नाटकादिदशरूपकान्तर्गतरूपकविशेषे ॥
भाण्ड : । पुं॰ गर्दभाण्डवृक्षे ॥
भांण्डम् । न॰ पात्रे । घटकर्कादि भाजनमात्रे ॥ पण्यद्रव्ये । वणिङ्मूलधने ॥ भूषायाम् । भूषणे ॥ अश्वभूषायाम् । तुरङ्गाणांमण्डने ॥ नदीकूलद्वयमध्ये ॥ भण्यति । भणशब्दे । अमन्ताड्ड : । ॥ भणतिवा । ड : । प्रज्ञाद्यण् ॥ यद्वाभन्दते । भदिकल्याणे सुखे च । अच् । पृषोदरादि : ॥ भण्डहण्डी । भंडीवा॰ इ॰भा॰ ॥
भाण्डपुट : । पुं॰नापिते ॥ भाण्डे-पुटा : यस्य : ॥
भाण्डपुष्प : । पुं॰ सर्पविशेषे । फौकुटिकाहले ॥
भाण्डागारम् । न॰ गृहविशेषे । अन्नादिद्रव्याधारगृहे ॥ भाण्डानामागारम् ॥ धनागारे ॥
भाण्डागारिक : । त्रि॰ भाण्डागारिनियुक्ते । भण्डारी॰इ॰भा॰ ॥ भाण्डागाराट्ठन् ॥
भाण्डागारी । त्रि॰ भाण्डारिणि । भाण्डागारवति ॥ भाण्डागारमस्यास्ति । इनि : ॥
भांडारी । पुं॰ भांडागाराध्यक्षे । खनामख्याप्रसिद्धे । यथा क्षुधितस्य, पित : क्वासीविद्यार्थी क्षविकारक: । भांडारीयप्रवासीयसमसुतान् प्रबोधयेत् ॥
भाण्डि : । पुं॰नापितक्षुराद्याधारे ॥
भाण्डिक : । पुं॰ ) नापिते ॥
भाण्डिवाह : । पुं॰ )
भाण्डीर : । पुं॰ वटवृक्षे । व्रजमण्डलान्तर्गतगोकुलस्थवटवनमध्ये द्वितीयवटवने ॥
भातम् । न॰ प्रभाते ॥ भा । क्त ॥ दीप्ते ॥ त्रि॰ तद्वति ॥
भाति : । स्त्री॰ शोभायां ॥
भानु : । पुं॰ आदित्ये । सूर्ये ॥ भाति । भादीप्तौ । कमिगमीतितु: ॥
भाद्र : । पुं॰ नभस्ये । प्रौष्ठपदे । भा

द्रपदेमासि ॥ भाद्रीपौर्णमास्यस्मिन् । सास्मिन् पौर्णमासीत्यण् ॥ चत्रजातस्यफलम् । नभस्यमासिखलुजन्मयस्यधीरोमनोज्ञसवराङ्गनानाम् । रिपुप्रमाथीकुटिलोऽतिमर्मोप्रपन्नभक्तांसभवेत्सहास : ॥ यवगोः प्रसवेनारद : । भानौसिंहगतेचैवयस्यगो : सम्प्रसूयते । मरणंतस्यनिर्दिष्टं षड्भिर्मासैर्नसंशयः ॥ प्रसूतांसतृणादेवतांसांगांविप्राय दापयेत् । पश्चाच्छान्तिं प्रकुर्वीत यथान्तिर्यास्तोक्षयाम्नेति ॥

भाद्रपद : । पुं० वर्षर्तुद्वितीयमासि । भाद्रे ॥ भद्रपदाभियुक्तापौर्णमास्यस्मिन् । सास्मिन् पौर्णमासीत्यण् ॥

भाद्रपदा । स्त्री० प्रोष्ठपदासु । भद्रपदासु । पूर्वभाद्रपदानक्षत्रे० उत्तरभाद्रपदानक्षत्रेच ॥ भद्रमेन० ॥ भाद्रम् । भाद्रपदंयासां०ता : ॥

भाद्रमातुर : । पुं० सतीतनये । भद्रमातुरपत्यम् । मातुरुत्संख्यास्मभद्रपूर्वाया : ॥

भानम् । न० आभासे । प्रतीतौ ॥ प्रकाशे । साक्षात्कारे ॥ नहिभानाद्दतेसत्त्वं नर्तेमानंचितोऽपित : । चित्सत्त्वं दीपिना ध्यातादवेतेनाद्दमद्वय : ॥ भाति । भा० । ल्युट् ॥

भानु : । पुं० किरणे । मयूखे । अंशौ । करे । रवौ । सूर्ये । हंसे । सहस्रांशौ ॥ दिने ॥ भाति । भा० । दाभाभ्यांनु : ॥ यद्वा । भाति० चतुर्दशभुवनमध्ये अग्न्यादिस्वयंप्रकाशेभ्य : अधिकंदीप्यतेवा । पूर्ववत् । अर्कवृक्षे । प्रभौ ॥ राजनि ॥ वृत्तार्हत्पितृविशेषे ॥

भानु : । स्त्री० भानुमत्याम् ॥

भानुफला । स्त्री० रम्भायाम् । कदल्याम् । भानुरिवफलान्यस्या : अजादि : ॥

भानुमान् । पुं० सूर्ये ॥ भानवोविद्यन्तेऽस्य । मतुप् ॥ त्रि० दीधितियुक्ते । सकिरणे ॥

भानुमती । स्त्री० विक्रमादित्यनृपस्य पत्न्याम् ॥ यथा । देवगुरो : प्रसादेन जितायैमेसरस्वती । तेनाहंनृपनाम्नाभिभानुमत्यास्तितथेति वररुचि :

भानेमि : । पुं० गभस्तिहस्ते । सूर्ये ॥

भाम । त्रि० नक्षचकान्तौ ॥ भेच्छाभियाभयस्ययस्य : ॥

भाम : । पुं० क्रोधे ॥ रवौ ॥ दीप्तौ रुचौ । मयूखे । भगिनीपतौ ॥ यथा । यदोभगिन्द्देशोभामदर्गांवांसवयाम्सना । पुरुपादवद्वारं सुदद्रोधिसिरा सुता : भाति । भा० । घञ् । मिमुद्भुत्वचिद्भायायाप्ति चिरोभ्योमन्निविभन् ॥ भामते भान्क्रोधे । घञ्वा

भामक : । पुं॰ भगिनीपतौ ॥ स्वार्थे क : ॥

भामा । स्त्री॰ कोपनायांयोषिति ॥ सत्यभामायाम् । विनापिप्रत्ययमितिपूर्वपदलोप : ॥

भामी । त्रि॰ क्रोधिनि ॥

भामिनी । स्त्री॰ कोपनायाम् ॥ यथा भामते । भाम॰ । आवश्यके णिनि : । ग्रहादिणिनिर्वा ॥ स्त्रीत्वे ङीप् ॥

भामिनीविलास : । पुं॰ जगन्नाथमिश्रपण्डितराजकृते विलासपद्यात्मके ग्रन्थविशेषे ॥

भार : । पुं॰ वीवधे ॥ विष्णौ । विंशतितुलापरिमाणे । पलानांद्विसहस्रे । अष्टसहस्रतोलकात्मके ॥ द्विगुणीभूतसहस्रा ॥ तामेवभारंजानीयाद्पाशीभारचतुष्टयम् ॥ भ्रियते । भृञ् भरणे । अकर्तरि चकारकेसंज्ञायामितिघञ् ॥

भारण्ड : । पुं॰ उत्तरकुरुदेशजातपक्षिविशेषे ॥

भारत : । पुं॰ छागवाहने । वह्नौ ॥ नटे ॥ भरतस्यमुने : शिष्य : । अण् ॥ भरतात्मजे ॥ भरतवंशोद्भवे ॥ महाकुलप्रसूते ॥ भरतस्यराज्ञोऽयम् । तस्येदमित्यण् ॥ सङ्ग्रामविशेषे ॥ भरतायोद्धारोऽस्यसङ्ग्रामस्य । सङ्ग्रामेप्रयोजनयोद्धृभ्यइत्य ण् ॥ त्रि॰ ज्ञानभिरते ॥ भा ज्ञानम् । तत्ररत : ॥

भारतम् । न॰ व्यासप्रणीतलक्षश्लोकात्मकमहाभारतसंज्ञके॰ इतिहासे ॥ तस्यश्रवणादिफलंयथा । भारतं शृणुयान्नित्यं भारतं परिकीर्त्तयेत् । भारतं भवने यस्य तस्य हस्तगतो जय : ॥ योगोशतं कनकशृङ्गमयं ददातिविप्रायवेदविदुषे चबहुश्रुताय । पुण्यां च भारतकथां शृणुयाच्च नित्यं तुल्यं फलं भवति तस्य च तस्य चैव ॥ नवनीतं यथादध्नो द्विपदां ब्राह्मणोयथा । ह्रदानामुदधिः श्रेष्ठो गौर्वरिष्ठाचतुष्पदाम् । यथैतानी तिहासानां तथाभारतमुच्यते । यश्चैनं श्रावयेच्छ्राद्धे ब्राह्मणान्पादमन्तत : । अक्षय्यमन्नपानं वै पितॄंस्तस्योपतिष्ठते ॥ इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति । कार्ष्णं वेदमिमं विद्वान्श्रावयित्वार्थमश्नुते । भ्रूणहत्याकृतं चापि पापं नश्यादसंशयम् ॥ इति । जम्बुद्वीपनवखण्डान्तर्गतवर्षविशेषे ॥

भारतवर्ष : । पुं॰ न॰ जम्बुद्वीपस्य नववर्षान्तर्गतवर्षविशेषे । यथा । हिमाद्रेर्दक्षिणं वर्षं भरतायददौ पिता । तस्मात्तु भारतं वर्षं तस्य नाम्ना महात्मन : ॥ तस्य नवभागा यथा

भारतस्यास्य वर्षस्य नव भेदान्निबोध
मे । समुद्रान्तरिताज्ञेयास्ते त्वगम्याः
परस्परम् ॥ इन्द्रद्वीपः कशेरुमांस्ता
म्रवर्णो गभस्तिमान् । नागद्वीपस्तथा
सौम्यो गान्धर्वो वारुणस्तथ ॥ अयन्तु
नवमस्तेषां द्वीपः सागरसंवृतः
। योजनानां सहस्रं वै द्वीपोऽयं दक्षि
णोत्तरात् ॥ पूर्वे किराता यस्यान्ते
पश्चिमे यवनाः स्थिताः । ब्राह्मणाः
क्षत्रियावैश्याः शूद्राश्चान्तः स्थि
ताद्विज ॥ इज्यायुद्धवणिज्याद्यैः
कर्मभिः भक्तपावनाः । तेषां
संव्यवहारश्चएभिः कर्मभिरिष्यते
। स्वर्गापवर्गप्राप्तिश्च पुण्यं पापं च-
वै तथा । महेन्द्रो मलयः सह्यः
शुक्तिमानृक्षपर्वतः ॥ विन्ध्यश्च-
पारियात्रश्च सप्तैवात्र कुलाचलाः
तेषां सहस्रशश्चान्ये भूधरा ये समीप
गाः ॥ विस्तारोच्छ्रायिणो रम्या विपु
लाश्चित्रसानवः । कोलाहलः स
वैभ्राजो मन्दरो दर्दुराचलः ॥ वा
तन्धमो वैद्युतश्च मैनाकः सुरसस्त
था । तुङ्गप्रस्थो नागगिरिर्गोधनः
पाण्डुराचलः ॥ पुष्पवोर्ज्जयन्तो
श्चरैवतोर्बुदएवच । ऋष्यमूकः
सगोमन्तः कूटशैलः कृतः स्मरः
॥ श्रीपर्वतश्चकोरश्च शतशोन्येऽल्प
पर्वताः । तैर्विमिश्रा जनपदाम्ले
च्छार्यादिभागशः । तैः पीय



न्ते सरिच्छ्रेष्ठा यास्ताः सम्यङ्निबो
धमे । गङ्गासरस्वतीसिन्धुश्चन्द्रभा
गातथापगा । यमुनाचशतद्रुश्चवि
तस्तैरावतीकुहूः । गोमतीधूतपा
पाचबाहुदाचदृषद्वती ॥ विपाशा
देविकाचक्षुर्विशालागण्डकीतथा
। कौशिकीचापराविप्र हिमवत्पाद
निःसृताः ॥ वेदस्मृतिर्वेदसि
नीराचिब्न्नौसिन्धुरेवच । वेणाच
चन्दनाचैवसदानीरामहीतथा ॥
पाराचर्मण्वतीलूपीविदिशावेत्रव-
त्यपि । शिप्राह्यवन्तीचतथापारिपा
त्राश्रयाः स्मृताः ॥ शोणोमहान
दश्चैवनर्मदासुरसाक्रिया । मन्दा
किनीदशार्णाचचित्रकूटातथापगा ॥
चित्रोत्पलाचतमसाकरतोयापिशा
चिका । तथान्यापिप्पलश्रोणीवि-
पाशावञ्जुलानदी ॥ सरोरुहाशुक्ति
मतीमङ्कुलोत्रिदिवाक्रतुः । ऋक्ष-
पादप्रसूताश्चैतथान्यावेगवाहिनी ॥
शिप्रापयोष्णीर्निर्विन्ध्यातापीचनि
षधावती । वेण्यावैतरणीचैवसिनी
वालीकुमुद्वती । तोयाचैवमहागौ
रीदुर्गाचान्तःशिवातथा । विन्-
ध्यपादप्रसूतास्तानद्यः पुण्यजलाः
शुभाः ॥ गोदावरीभीमरथीकृष्णा-
वर्णातथापगा । तुङ्गभद्रासुप्रयोगा-
बाह्याकावेर्यथापगा । सह्यपादवि
निष्क्रान्ताइत्येताः सरिद्वराः ॥

कृतमालाताम्रपर्णी पुष्पजात्युत्प
लावती । मलयाद्रिसमुद्भूतानद्य :
शीतजलास्त्विमा : ॥ पितृसोमर्षि
कुल्याचइक्षलाचित्रिदिवाचया ।ला-
ङ्गूलिनीवंशकरामहेन्द्रप्रभवा: स्मृ
ता : ॥ ऋषिकाचकुमारीचमन्दगा
मन्दवाहिनी । कृपापलाशिनीचै-
वशुक्तिमत्प्रभवा : स्मृता : ॥ स-
र्वा : पुण्या: सरस्वत्य : सर्वागङ्गा-
समुद्रगा : । विश्वस्यमातर : सर्वा:
सर्वा : पापहरा : स्मृता : ॥ अ-
न्या : सहस्रशश्चोक्ता : क्षुद्रनद्यो-
द्विजोत्तम । प्रावृट्कालवहा : स-
न्तिसर्वकालवहाश्चया : ॥ मत्स्या :
कुशूला : कुल्याश्चकुन्तला : काशि
कोशला : ॥ अर्बुदाश्चकलिङ्गाश्च-
मकाश्चवृकै : सह । मध्यदेशजनप-
दा : प्रायशोऽमीप्रकीर्त्तिता: ॥ सह्य
स्योत्तरेर्धे वत्रगोदावरीनदी ।
पृथिव्यामपिकृत्स्नायां सप्रदेशोम-
नोरम : ॥ गोवर्द्धनपुर रम्यं भार्ग-
वस्यमहात्मन : ॥ वाह्लीकावाटधा
नाश्चआभीरा : कालतोयका : ॥
अपरान्ताश्चशूद्राश्चपह्लवाश्चर्मखण्डि-
का : । गान्धारायवनाश्चैवसिन्धु
सौवीरमद्रका : ॥ शतद्रुहाःकलिङ्गा
श्चपारदाहारभूषिका : । माठरा-
श्चहतका : कैकेयादशमालिका: ॥
क्षत्रियोपनिवेशाश्चवैश्यशूद्रकुलानि
च । काम्बोजादरदाश्चैववर्वराश्च-
ह्वलौकिका: ॥ चीनाश्चैवतुषारा-
श्चपह्लवाबाह्यतोदरा : । आत्रेया :
सभरद्वाजा : प्रस्थलाश्चदशेरका :॥
लम्पका : स्तनपाराश्चचूलिकाजा-
ङ्गलै : सह । अवधाश्चालिमद्राश्च-
किरातानाञ्चजातय : ॥ तामसाहं-
समार्गाश्चकाश्मीरास्तङ्गणास्तथा ।
चूलिकाहुहुकाश्चैवऊर्णादार्वास्त-
थैवच ॥ एतेदेशाह्युदीच्यास्तु प्रा-
च्यान्देशान्निबोधमे । अन्ध्राश्च
सुदृगरकाश्चमर्गिरिवहिर्गिरा: ॥ त
थाङ्गवङ्गावङ्गेयामलदामलवर्त्तिका:
ब्रह्मोत्तरा : प्रविजया भार्गवाश्चेय
मर्दका : । प्राग्ज्योतिषाश्चमद्रा-
श्चविदेहास्ताम्रलिप्तका : । मल्ला-
मगधगोमेदा : प्राच्याजनपदा :
स्मृता : ॥ अथापरेजनपदादक्षिणा
पथवासिन : । पाण्ड्याश्चकेरलाश्चै
वचोला : कुल्यास्तथैवच ॥ सेतुका
मूषिकाश्चैवकुमारावामवासिका: ।
महाराष्ट्रामाहिषिका: कलिङ्गाश्चै-
वसर्वश : ॥ आभीरा : सह
चैषीकाआटव्याशवराश्चये । पु-
लिन्दाविन्ध्यमौलेया वैदर्भादण्ड-
कै : सह ॥ पौरिकामौलिकाश्चैव
अश्मकाभोगवर्द्धना : । तैलिका :
कुन्तलाश्चान्ध्राउद्भिदानलकारका:
॥ दाक्षिणात्यास्त्विमेदेशा० अपरा

न्तान्निबोधमे । सौपारिकाः का
लनदाद्मास्तालीयकैः सह । का
रस्करलोहजङ्घावानेयाराजभद्र-
काः । तोसलाः कोशलाश्चैवत्रै पु
राविदिशास्तथा ॥ तुषारास्तुम्बरा
श्चैवपाटवोनैषधैः सह । पुलिन्दा-
स्तुर्याक्षाधरूपमांस्तामसैः सह ।
तथाकुरुमिनर्यं वसर्वेचै वकरस्कराः
नासिकाख्याश्चयेचान्ये येचै वान्तर-
नर्मदाः । भारुकच्छाः समाहेयाः
सर्वेसारस्वतैः सह । कच्छीयाश्च-
सुराष्ट्राश्चआवन्त्याश्चार्बुदैः सह ॥
इत्येतेह्यपरान्तायश्चणुविन्ध्यनिवा
सिनः । मलजाश्चकरूषाश्चमेकला-
श्चोत्कलैः सह । उत्तमर्णादशार्णा
श्चभोजाः किष्किन्धकैः सह ।
अनूपास्तुण्डिकेराश्चवीरहोत्राश्चवन्त
यः । एतेजनपदाः सर्वे विन्ध्य
पृष्ठनिवासिनः ॥ अतोदेशान्प्रव
क्ष्यामिपर्वताश्रयिणश्चये । निहांरा
हंसमार्गाश्चकुपथास्तङ्गणाः खशाः
। कुत्साः प्रावर्णाश्चैवऊर्णादर्वाः
सहूहुकाः । निगर्तामालवाश्चै
वकिरातास्तामसैः सह । कृतत्रे
तादिकश्चात्रचतुर्युगकृतोविधिः ।
एततुभारतंवर्षंचतुः संस्थानसंस्थि
तम् । दक्षिणेपरतोह्यस्यपूर्वेणचम
होदधिः ॥ हिमवानुत्तरेणास्यका
र्मुकस्ययथागुणः । तदेतद्भारतं
वर्षंसर्वबीजंद्विजोत्तम ॥ देवत्वमम
रेशत्वं देवत्वं मर्त्यतांतथा । मृगपश्व
श्वरचरायोनीस्तद्वत्सरीसृपाः ॥ स्था
वरत्वाञ्चसर्वेषामतोब्रह्मन्शुभाशु
भैः । प्रयान्तिकर्मभूर्ब्रह्मन्नान्या
लोकेषुविद्यते ॥ देवानामपिविप्रर्षे
सदैवैषमनोरथः ॥ अपिमानुष्यमा
प्स्यामोदेवत्वात्प्रच्युताः क्षितौ ।
मनुष्यः कुर्वतेतत्तु यन्नशक्यं सुरा
सुरैः ॥ स्वकर्मनिगडग्रस्तैः स्वकर्म
क्षपणोत्सुकैः । नकिञ्चित्क्रियते
कर्मसुखलेशोपबृंहितैः ॥ इतिश्री
मार्कण्डेयपुराणे भारतखण्डवर्णनं
नामाध्यायः ॥

भारतिः । पुं॰ दशनामसन्न्यासिनां
मध्ये सन्न्यासिविशेषे ॥ यथा । ना
नाशास्त्रेषुयोविद्वान्नानाकर्मविशा
रदः । सद्देष्टदेवीभावेनभावयेद्यो
दिवानिशम् । सएवभारतिर्वीरोम
हाज्ञानीजितेन्द्रियः इति ॥

भारती । स्त्री॰ वचने । सरस्वत्याम् ।
अर्थपरिज्ञानफलाहिभारती गरुडो
र्मिनिपक्षिविशेषे । भार॰ इ॰ गौ॰
दे॰ भा॰ प्र॰ ॥ ब्राह्म्यामोषधौ ।
नाट्यवृत्तिप्रभेदे । शृङ्गारेकौशिकी
वीरेसात्वत्यारभटीपुनः । रसेरौद्रे
चबीभत्से वृत्तिः सर्वत्रभारती ।
भारतीवृत्तिस्तुसंस्कृतप्रायोवाग्व्या
पारोनराश्रयः । विभक्ति । दुभृञ

भारीष्टी । स्त्री॰ भारवाहिकायाम् ॥

भार्गव : । पुं॰ गर्वे । मतङ्गजे । धन्विनि । धानुष्के ॥ शुक्राचार्ये । परशुरामे ॥ भृगोरपत्यम् । अपत्य । बहुत्वे॰तल॰ऋचिभृगुकुत्स वसिष्ठगौतमाङ्गिरोभ्यश्चे ति॰लुकि॰ भृगव : ॥

भार्गा : । पुं॰ भू॰भारतवर्षमध्ये प्राच्यदेशान्तर्गतदेशविशेषे ॥

भार्गवप्रिय : । पुं॰ हीरके ॥ शुक्राधिष्ठातृदेवताकत्वात् ॥

भार्गवी । स्त्री॰ पार्वत्याम् ॥ श्रियि ॥ कृष्णदूर्वायाम् ॥ श्वेतदूर्वायाम् ॥ नद्यन्तरे । भृगोरियम् । तस्येदमित्यण॰ङीप् ॥

भार्गी॰ । स्त्री॰ ब्राह्मणयष्टिकायाम् । भञ्ज्याम् । भारङ्गी॰इ॰भा॰ ॥ यथा । भार्गी रूक्षाकटुस्तिक्ताऽरुच्योष्णापाचनीलघु : । दीपनीतुवरागुल्म रक्तनुन्नाशयेद्ध्रुवम् । शोथकासकफश्वासपीनसज्वरमारुतान् ॥ भर्जनम् । भ्रस्जपाके । घञ् । भ्रस्जो रोपधयोरमन्यतरस्याम्॰इतिरमागम : । चजोरितिकुत्वम् ॥ भृज्जीभर्जिवा । घञ् । भर्गो रूपस्या ॰ । ज्योत्स्नादिभ्यउपसङ्ख्यानमित्यण् । ङीप् ॥

भार्धाक्षी । स्त्री॰ वनकार्पास्याम् ॥

भार्य्य : । त्रि॰ भरणीये ॥ भृ॰ऋहलो

ण्यत्॰वा । ण्यत् ॥

भार्य्या । स्त्री॰ जायायाम् । द्वितीयायाम् । पाणिगृहीत्याम् ॥ साभार्या याप्रियं ब्रूयात्सभार्यायस्तुजीवति । सभीर्वातिगुणोयस्यधर्मीयस्यसजीवति । गुणधर्मविहीनोयोनिष्फलं तस्यजीवनम् । भ्रातुर्ज्येष्ठस्यभार्या याशुरुपत्न्यनुजस्यसा । यवीयसस्तुया भार्याज्ञ्याज्येष्ठस्यसास्नुषा ॥ भर्याकान्तास्याभार्या । भर्तुर्योग्या । डुभृञ्॰भृभर्त्सनेवा । ऋहलोर्ण्यत् । टाप् ॥

भार्याट : । पुं॰ अन्यार्थस्त्रीदातरि ॥

भार्याटिक : । पुं॰ स्त्रीजिते ॥ ऋष्यन्तरे ॥ मुनिभेदे ॥

भार्यापती । पुं॰ सपोत्न्याजायायाम् - स्त्रो : । दम्पत्यो : ॥ भार्याचपतिश्चतौ । राजदन्तादि : । नित्यद्विवचनान्तोयम् ॥

भार्याह : । पुं॰ श्वेतविशेषे ॥ मृगप्रभेदे ॥ क्रौञ्चयावरभार्यायांचोत्पादके ॥

भालम् । न॰ महसि । तेजसि ॥ ललाटे ॥

भालदर्शनम् । न॰ सिंदूरे ॥

भालदृक् । पुं॰ शिवे । भाललोचने ॥

भालाङ्क : । पुं॰ कारपचे । ककचे

नन्तरितसजातीयप्रत्ययप्रवाहरूपा याम्॥ भावनातिङ्प्रत्ययवाच्येति मीमांसका॥ उत्पादनायाम्॥ ० उत्पत्त्यर्थाद्भवतेर्ण्यन्तात्० युच्। त्रिविधाभावनायथा। त्रिविधाभावनाविप्रविप्रसमे, तन्निबोधमे। ब्रह्माख्याकर्मसंज्ञाच तथाचैवोभयात्मिका॥ ब्रह्मभावात्मिकाह्येका कर्मभावात्मिकापरा। उभयात्मिकातथैवान्यात्रिविधाभावभावना॥ सनन्दनाद्योब्रह्मभावभावनयायुता। कर्मभावनयाचान्ये देवाद्याः स्थावराचरा:॥ हिरण्यगर्भादिषुचब्रह्मकर्मात्मिकाद्विधा। बोधाधिकारयुक्तेषुविद्यतेभावभावना॥ इति विष्णुपुराणे ६ अंशे ७ अध्याय.॥ त्रिविधभावनाश्रयजीवात्मकत्वात्तदुपचारेणत्रिविधाभावनेत्युच्यते। एतद्विवरे: स्थूलंरूपम्। अत: परस्यप्राप्त्युपायत्वात्० तत्प्रधर्ममनःसम्भार्यमितिभाव:। भावनानाम ध्यानविशेषणायासना। तांत्रिविधामपिसहस्रादिश्रुति०वक्ष्यत्येति। तामेनविषयत्रैविध्येनविविनक्ति० ब्रह्मभावनात्मिकेति॥। भावभावना०भावोवस्तु०तद्विषयाभावनात्रिविधा। तत्रनयब्रह्मैवभावयाम:। वयंकर्मैवकुर्म:। वसन्तमयमिदमनुसन्दध्महइत्येवंत्रिविधाभावना। भावनायुक्तान्जीवानुदाहरति०सनन्दनादयइतिद्वाभ्याम्। इतितट्टीका॥

भावबोधक:। पुं० अनुभावे॥ भावस्यरत्यादेर्बोधक: सूचकोगुण: क्रियादिरनुभाव:। अनुभाव्यतेप्रतीतिविषयतांनीयतेरत्यादिरनेनेति० अनुभाव:। घञ्॥ तत्ररतेरनुभावा: लोचनचातुर्यभ्रूक्षेपादय:। हासस्यचकपोलाकुंचना:०नासोत्फुल्लनादयोऽनुभावा: ०एवमन्यत्रानुसन्धेयम्॥

भावरूपम्। न० हर्म्ये॥

भाववृत्त:। पुं० ब्रह्मणि॥ भाव. सृष्टि: ० तत्रवृत्त: प्रवृत्त:॥

भाववृत्ति:। स्त्री० घटाद्याकारवृत्तौ।

भावशुद्धि:। स्त्री० अन्त: करणशुद्धौ॥ ब्रलियाक्षयुक्तानांसर्वदास्थिरचेतसाम्। निद्रालस्य प्रसक्तानांभावशुद्धि: कथंभवेत्इतिमहानिर्वाणतंत्रे च॥

भावसंशुद्धि:। स्त्री० हृदयस्यकामक्रोधलोभादिमलनिवृत्तौ। पुनरशुद्ध्यत्वादरहित्वेनसाम्यत्वेनविधिष्टायाम्॥ परै: सहव्यवहारकालेमायाराहित्ये॥

भावसरोरुहम्। न० हृदयकमले॥

भावाट:। पुं० भावके॥ साधुनिवेशे॥ कामुके। नटे॥

भावानुगा। स्त्री० छायायाम्॥

भावार्थ : । पुं॰ सत्तारूपे । परमार्थे ।

भावालीना । स्त्री॰ छायायाम् ।

भावाव : । त्रि॰ विश्वचानरि । भावा न॰ श्रवरि । श्रव॰ । कर्मख्याप ।

भावावबोध : । पुं॰ श्रभिप्रायपरिज्ञाने । यथा । भावावबोधविहितोन दुनोतिदीपदृति ।

भाविकम् । न॰ श्रलङ्कारविशेषे । यथा । प्रत्यचादूवयत्रावा : क्रियन्ते भूत भाविन : । तद्भाविकम् । भूताच भाविनश्चेतिद्वन्द्व : । भाव : कवेरभिप्रायोऽस्तीति॰ भाविकम् । उदाहरणम् । श्रासीदञ्जनमत्रेतिपश्यामितनलोचने । भाविभूष णसम्भारांसाचात्कुर्वेतवाकृतिम् । श्रवाद्येभूतस्य॰ द्वितीयेभाविनोद र्शनम् ।

भावित : । त्रि॰ वासिते । संस्कृते । प्राहितहिङ्ग्वादिगन्धे व्यञ्जनादौ । प्राप्ते । चिन्तिते । साव्यतेस्म । भूप्राप्तौ । चाधृषाद्वे तिनाणिजन्त : । क्त : । भुधीयकल्यानपूतिशान्ता- त्॰कोवा । सपादितेशुद्धे ।

भावितत्वम् । न॰ सस्कृतत्वे ।

भाविताम्मा । त्रि॰ शुद्धचित्ते ।

भावित्रम् । न॰ त्रैलोक्ये । भवति । भू॰ । भूवादिगृभ्योणित्रन् ।

भावी । त्रि॰ भविष्यति । भविष्यत्काले । वर्त्तमानप्रागभावप्रतियोगि- त्वितिकै । भू॰ । भुवश्चेति॰इन्नि- णित् । भवितुंयोग्ये ।

भाविनी । स्त्री॰ नारीविशेषे । भाव : शृङ्गारचेष्टाविशेषोविद्यतेऽस्या : । श्रतइनि । ङीप् । वर्त्तमानप्रा- गभावप्रतियोगिन्याम् ।

भावुक : । पुं॰ भाव्योक्त्याभगिनीप तौ । न॰भविके । कल्याणे । म- ङ्गले । शुभे । शीलम् । भूप्राप्ती । लषपतपदेत्युक्ञ् । त्रि॰मङ्गल- वति । रसविशेषभावनाचतुरे । उत्पत्तिशीले । भवनाश्रये । भवति य : । कर्त्तरि॰उकञ् ।

भाव्यम् । त्रि॰ कार्ये । दिभावनीये । भवितव्ये । भवति । भू॰ । चाहु खकात्कर्त्तरियत् । यथा । कृत- सकरर्यनाशिदेवाधिष्ठितकर्म्म । भाषीत्यन्तश्च यत्राव्य तत्तत्त्वामाय- बाधक । इति । न॰ऋऋण्यभवि तव्ये । श्रोरावश्यके । इतिण्यत् । साध्ये । भाव्यते भूश्तैर्थ्यता त्तकार्य णियत् ।

भाषणम् । न॰ वचने । यथा । स- ल्लापोभाषणंमिथ : इति । भाषव्यक्तायां वाचि । ल्युट् । नन्धपाञ्चधा मिकै सद्द्समाचरेत ।

भाषा । स्त्री॰ व्याहरे । उक्तौ । वच ने । भाष्यते प्रबोध्यप्रयोजकवृद्व व्यवहारेणावुच्यते । भाष॰ । गु

भाषा

दीर्घत्यप्रत्ययः । टप् । शास्त्रीयाष्टादशभाषायथा । संस्कृता१ प्राकृता २ उदीची ३ महाराष्ट्री ४ मागधी ५ मिश्रार्द्धमागधी ६ शकाभीरी ७ श्रवन्ती ८ द्राविडी ९ ओड्रीया १० पाश्चात्या ११ प्राच्या १२ बाह्लिका १३ रन्तिका १४ दाक्षिणात्या १५ पैशाची १६ आवन्ती १७ शौरसेनी १८ । एतासांलक्षणोदाहरणानिप्राकृतलङ्केश्वरव्याकरणे द्रष्टव्यानि । अथभाषाविभागः । पुरुषाणामनीचानांसंस्कृतं स्यात्कृतात्मनाम् । शौरसेनीप्रयोक्तव्यातादृशीनाञ्चयोषिताम् ॥ आसामेवतु गाथासु महाराष्ट्रीं प्रयोजयेत् । अत्रोक्तामागधीभाषा राजान्तःपुरचारिणाम् । चेटानांराजपुत्राणांश्रेष्ठिनाञ्चार्द्धमागधी । प्राच्या विदूषकादीनांधूर्त्तानांस्यादवन्तिका । योधनागरिकादीनांदाक्षिणात्या हिदीव्यताम् । शकाराणांशकादीनांशाकारींसम्प्रयोजयेत् । बाह्लीकभाषादिव्यानांद्राविडीद्रविडादिषु । आभीरेषुतथाभीरीचाण्डालीपुक्कसादिषु ॥ आभीरीशावरी चापिकाष्ठपत्रोपजीविषु ॥ तथैवाङ्गारकारादौपैशाचीस्यात्पिशाच वाचः । चेटीनामप्यनीचानामपि स्यात्शौरसेनिता ॥

भाषा

बालानांषण्डकानांचनीचग्रहविचारिणाम् । उन्मत्तानामातुराणांसैव स्यात्संस्कृतंक्वचित् ॥ ऐश्वर्येण प्रमत्तस्यदारिद्र्योपस्कृतस्यच । भिक्षुबन्धधरादीनांप्राकृतंसम्प्रयोजयेत् । संस्कृतंसम्प्रयोक्तव्यलिङ्गिनीषूत्तमासुच । देवीमन्त्रिसुतावेश्यास्वपिकैश्चित्तथोदितम् ॥ यद्देशंनीचपात्रन्तुतद्देशंतस्यभाषितम् । कार्यतश्चोत्तमादीनांकार्योभाषाविपर्ययः ॥ योषित्सखीबालवेश्याकितवाप्सरसांतथा । वैदग्ध्यार्थंप्रदातव्यंसंस्कृतञ्चान्तरान्तरा ॥ एषामुदाहरणान्याकरेषुबोद्धव्यानि । भाषालक्षणानिभाषार्णवे ॥ इतिसाहित्यदर्पणे ६ परिच्छेदः ॥ संस्कृतंप्राकृतंभूतभाषाऽपभ्रंशिकागिरः । नाटकेनियताःशस्ताःसत्भाषासारदाः ॥ भाषाऽभिभाषाभेदेनप्राकृतन्तु चतुर्विधम् । मागध्यवन्तिकाप्राच्याशौरसेन्यर्द्धमागधी । बाह्लीकादाक्षिणात्याचभाषाःसप्तप्रकीर्त्तिताः ॥ शकाराभीरचाण्डालशवरद्रमिडौद्रजाः । वनौकसौविजातीनांविभाषाः सप्तकीर्त्तिताः ॥ कैकेयीशौरसेनीपञ्चालोपाख्यमागधी । द्राविडीपांचदेशीचभूतभाषाप्रकीर्त्तिताः ॥ वैदर्भीमागधीनाटीयाम्योदीच्योपनागरी । पाञ्चालोपदमपभ्रंशभाषा

स्य देशभेदतः ॥ इतिसङ्गीतदामोदर ॥ आसामुदाहरणंमुरारेरनर्घराघवे॰ भवभूतेरुत्तरचरिते॰ कालिदासस्याभिज्ञानशाकुन्तलेऽवलोकनीयम् ॥

भाषापादः । पुं॰ चतुष्पाद्व्यवहारान्तर्गतप्रथमपादे । तस्यलक्षणंयथा । अर्थवद्धर्मसंयुक्तंपरिपूर्णमनाकुलम् । साध्यवद्वाचकपदंप्रकृतार्थानुबन्धिच ॥ प्रसिद्धमविरुद्धंयन्निश्चितंसाधनक्षमम् । संक्षिप्तंनिखिलार्थञ्चदेशकालाविरोधिच ॥ वर्षर्तुमासपक्षाहोवेलादेशप्रदेशवत् । स्थानावसथसाध्याख्याजात्याकारवयोयुतम् ॥ साध्यप्रमाणसङ्ख्यावदात्मप्रत्यर्थिनामच । परात्मपूर्वजानेकराजनामभिरङ्कितम् ॥ क्षमालिङ्गात्मपीडावत्कथिताहर्तृदायकम् । यदावेदयतेराज्ञेतद्भाषेत्यभिधीयते ॥ इतिमिताक्षरा ॥ अस्यविवरणंभाषाशब्देकल्पद्रुमेद्रष्टव्यम् ॥

भाषितम् । न॰ वचने । वचसि ॥ यथा । आचारः कुलमाख्यातिदेशमाख्यातिभाषितम् । सम्भ्रमःस्नेहमाख्यातिवपुराख्यातिभोजनम् । इतिचाणक्यः ॥ भाषणम् । भाष॰ । भावेक्तः ॥ त्रि॰ कथिते । उक्ते । अभिहिते । भाष्यतेस्म । भाषेःकर्मणिक्तः ॥

भाष्यम् । न॰ चूर्णाम् ॥ सूत्रोक्तार्थप्रपञ्चके । सूत्रानुकारिभिर्वाक्यैःसूत्रार्थस्वपदानांपिवर्णनपरे॰ ग्रन्थविशेषे ॥ तथाचभरतः । सूत्रार्थोवर्ण्यतेयत्रपदैःसूत्रानुसारिभिः । स्वपदानिचवर्ण्यन्तेभाष्यंभाष्यविदोविदुरिति ॥ त्रि॰ कथनीये ॥

भाष्यकारः । पुं॰ श्रीशङ्कराचार्ये ॥ महाभाष्यकर्तरिमुनौ । गोनर्दीये । पतञ्जलौ । चूर्णिकृति ॥ महाभाष्यकारस्यकुमारीयधियावुभौ । नैवशब्दाम्बुधेःपारंकिमन्येजडबुद्धयः ॥ भाष्यंकरोति । डुकृञ्॰ । कर्मण्यण् ॥

भाष्यकृत् । पुं॰ भाष्यकारे ॥

भाः । स्त्री॰ प्रभायाम् । दीप्तौ ॥ प्रभावे ॥ मयूखे ॥ कृष्णायाम् ॥ भासते । भासदीप्तौ । भाजभासेतिक्विप् । भाः॰ भासौ॰ भासः ॥

भासः । पुं॰ प्रभायाम् ॥ विहगविशेषे । शकुन्ते । गृध्रे । कुक्कुटे ॥ गोष्ठे ॥ व्याप्यव्यापकतादिप्रतिभासे ॥

भासनम् । न॰ दीप्तौ ॥ प्रकाशने ॥ यत्प्रकाशवदिदंजगत्चिज्जडोभयात्मकंभासते । यद्यपिशब्दस्पर्शादिविषयभासनार्थेन्द्रियाधिष्ठानितया विषयेतन्यस्य॰ चित्तगतव्यवहारस्य॰ उपादानतयाचैतन्य पूर्वकमेवजडं

भासते । तथा सति पश्चाज्ज्ञायमानस्य जडस्य प्रथमतो भासमानचैतन्यमेव भास्वरूपमिति निश्चित्य जडमुपेक्ष्य चिन्मात्रं चिन्तयेदिति जीवन्मुक्तिप्रकरणम् ॥

भासन्त : । पुं० भासपक्षिणि । शकुन्ते । सूर्य्ये । भे । नक्षत्रे ॥ चन्द्रे ॥ त्रि० रम्ये । सुन्दराकारे ॥ भासते । भास० । तृभूवहिवसिभासिसाधीति झच्प्रत्ययः ॥

भासन्ती । स्त्री० नक्षत्रे । ङीप् ॥

भासमान : । त्रि० प्रकाशमाने ॥

भासित : । त्रि० प्रकाशिते ॥

भासु : । पुं० सूर्य्ये ॥

भासुर : । पुं० स्फटिके । वीरे ॥ प्रमाणनिरपेक्षस्वयंभासनशीले० आत्मनि ॥ न० कुष्ठौषधे ॥ त्रि० भासनशीले । दीप्तियुक्ते ॥ भासते तच्छील : । भास० । भञ्जभासमिदो घुरच् ॥

भासुरपुष्पा । स्त्री० वृश्चिकाल्याम् ॥

भास्कर : । पुं० आदित्ये । प्रभाकरे ॥ यथा । सदा यजन्ति यज्ञेन सदा दानं ददन्ति च । सदा च शम्भुभक्ताश्च नित्यं ये ऽर्चन्ति भास्करमिति भविष्यपुराणम् । अग्नौ । वह्नौ । भा : करोति । दिवाविभेति ट : । कस्कादित्वात् : । तेन विसर्ग



नीयजिह्वामूलीयौ सकारस्तेन भवत : वीरे । अर्कवृक्षे ॥ न० सुवर्णे ॥

भास्करलवणम् । न० प्रयोगे ॥

भास्करप्रिय : । पुं० पद्मरागमणौ । चुन्नी० इति केचित् ॥

भास्करेष्टा । स्त्री० आदित्यभक्तायाम् ॥

भास्मन : । त्रि० भस्ममये ॥ भस्मनो विकार : । अण् । अन्निति प्रकृतिभावात्तद्धितस्य इतिटिलोपेन ॥

भास्वान् । पुं० सूर्य्ये । अर्कवृक्षे । दीप्तौ । प्रभायाम् ॥ भास : सन्त्यस्य । तदस्यास्तीति मतुप् ॥ त्रि० भास्वरे । दीप्तिविशिष्टे । प्रकाशवति ॥

भास्वर : । पुं० दिने ॥ न० कुष्ठौषधौ । कुठ० इ० भा० ॥ त्रि० प्रकाशवति । भासनशीले ॥ भासते० तच्छील : । भासदीप्तौ । स्थेशभासपिसकसो वरच् ॥

भि : सटा । स्त्री० भिक्षाटायाम् ॥

भिक्षा । स्त्री० भृतौ । याच्ञायाम् । अर्थनायाम् । सेवायाम् । भिक्षितवस्तुनि । अनयासमा नाभवेद् भिक्षेति शातातप : । समवेत्त्वधिकमपि देयमिति० भिक्षात्वभिलषेद्याद्विधिवद् ब्रह्मचारिणे । इत्यनुशासनभट्ट : ॥ यदैव यतिब्रह्मचारिणोरुपस्थितिस्तदैव०

कुर्वीत तत्रैकंसर्वं सद्ग्रासवर्ज्जये-
त् ॥ एकरात्रस्थितिर्ग्रामेपञ्चरात्रस्थि
ति : पुरे तथातिष्ठेद्यथाप्रीतिर्द्वे
षोवानास्यजायते । प्राणयात्रानिमि
त्तश्चव्यं गारे भुक्तवज्जने। कालेप्रश-
स्तवर्णानांभिक्षार्थं पर्यटेद्गृहान्।
भिक्षा : क्रोधस्तथादर्पमोहलोभा
दयश्चये । तांस्तुदोषान्परित्यज्यपरि
व्राण् निर्ममोभवेत् ॥ अभयं सर्व
सत्त्वेभ्योदत्त्वायश्चरतेमुनि : । नत
स्यसर्वभूतेभ्योभयमुत्पद्यतेक्वचित्।
कृत्वाग्निहोत्रं स्वशरीरसंस्थं शारीर
मग्निंस्वमुखेजुहोति। विप्रस्तुभैक्ष्योप
नीतैर्हविर्भिश्चितानिमासव्रजतिस्वलो
कान् ॥ मोक्षाश्रमं यश्चरते यथोक्तं शु
चि: सुसङ्कल्पितबुद्धियुक्तः । अनिन्धन
ज्योतिरिवप्रशान्तं सब्रह्मलोकं श्रय
तिद्विजाति : ॥ इतिविष्णुपुराणे
३ अंशे ८ अध्याय : ॥ अपिच
। चतुर्विधाभिक्षवस्तुकुटीचरबहूद
कौ । हंस : परमहंसश्चयोय : प
श्चात् सउत्तम : ॥ एकोभिक्षुर्य
थोक्तः स्याद्द्वावेवमिथुनं स्मृत
म् । त्रयोग्राम : समाख्यातऊर्ध्वं
न्तुनगरायते ॥ नगरंनहिकर्त्त
व्यं ग्रामोवामिथुनं तथा । राजादि
वार्त्तातेषांस्याद्भिक्षावार्तापरस्परम्
इतिस्मृति : ॥ पुनश्च । यश्चित् :
षण्डक : पंगुरन्धोवधिरएवच ।

मुग्धश्चमुच्यतेभिक्षु : षड्भिरेतैर्न
संशय : ॥ अत्रस्वजिह्वादिपदव्या
ख्यानं यथा स्थानेद्रष्टव्यम् ॥ अपि
च । ननिन्दांनस्तुतिं कुर्यान्नक
ञ्चिन्मर्मसु स्पृशेत् ॥ नातिव्याधि
र्भवेत्तद्वत्सर्वत्रैवसमोभवेत् ।
नसम्भाषेत्स्त्रियं कांचित्पूर्वदृ
ष्टाञ्चनस्मरेत् । कथाञ्चवर्जयेत्
तासांनपश्येल्लिखितामपि ॥ इति ।
भिक्षणशील: । भिक्षायाञ्चायाम् ।
सनाशंसभिक्षउ : ॥ वृद्धभिक्षु
कौ॥ श्रावणीवृषे ॥ कोकिलाक्षे ॥
भिक्षुक : । त्रि० याचके । अर्थिनि॥
भिक्षुसङ्घाटी । स्त्री० चीवरे ॥
भिण्ड : । पुं० भिण्डावृषे ॥ )
भिण्डक : । पुं० )
भिण्डा । स्त्री० शाकवृक्षविशेषे ०
तत्फलेच । चवसभम्भे । सुवासि
। कर्पर्णी । वृत्तबीजं भिण्डी०
० इ० भा० ॥ भिण्डीस्तोयायामि
पौचतथारुचिकरासृता ॥
भिण्डीतक : । पुं० भिण्डायाम् ॥
भित्तम् । न० खण्डे ॥ भिद्यतेस्म ।
भिदिर्विदारणे । क्त : । भित्त श
ब्दमितिनिष्ठातकारस्यनत्वाभावो
निपात्यते । यथा । भित्तं तिष्ठति
० खण्डमित्यर्थ : ॥
भित्ति : । स्त्री० कुड्ये । कांथ० कांध०
कास्य० भीत ० इ० भा० ॥ भिद्य

ते । भिदिर् ० । क्तिन् ॥ प्रदेशे ॥ प्रशस्ते ॥ मतल्लिकोद्घमिश्राः स्युः प्रकाण्डमुल्लमित्यादतिगम रत्नमहोदधिः ॥

भित्तिका । स्त्री० भित्ती ॥ गल्लिकायाम् । पल्ल्याम् ॥ भिनत्ति ०भित्तीति वा । भिदिर् ० । क्तिभिदिलतिभ्यः किदिति ० तिकन् ॥

भित्तिचौरः पुं० चौरविशेषे । कुड्याच्छेदिनि । सींधचोर० इ० भा०

भित्तिपातनः पुं० महामूषिके । चूंस० इ० भा० ॥

भिद् । स्त्री० प्रभेदे ॥ भिनत्तिभिदिर् ० । सम्पदादिषु ० अन्यतोपिदृश्यतइतिक्विप् ॥ त्रि० भेदकारिणि ॥

भिदकः । पुं० खड्गे ॥ न० वज्रे ॥

भिदा । स्त्री० भेदे ॥ वस्त्रादेर्विदारणे । विदरे । स्फुटने । फाडा० फटा ० फाडना ० इ० भा० ॥ भेदनम् । भिदिर् ० । भिदादयङ् । टाप् ॥ धन्याकी ॥

भिदिः । पुं० वज्रे ॥ भिनत्ति । भिदिर् ० । कृगृशॄपृकुटिभिदिछिदिभ्यश्चेति ० इः सचकित् ॥

भिदिरम् । न० वज्रे ॥ भिनत्ति । भिदिर् ० । इषिमदमुदिखिदीत्यादिनाकिरच् ।

भिदुः । पुं० पवौ ॥ वज्रे ॥ भिनत्ति । भिदिर् ० । पृभिदिव्यधीतिकुः ।

भिदुरम् । न० कुलिशे वज्रे ॥ भिनत्ति । भिदिर् ० । विदिभिदिच्छिदेः कुरच् ॥ न० प्लक्षवृक्षे । त्रि० भिन्ने ॥

भिदेलिमः । त्रि० भेत्तव्ये ॥ भिद्यते कर्मकर्त्तरि भिदेः केलिमर् ॥

भिद्यः । पुं० नदे । भिनत्तिकूलम् । भिदिर् ० । भिद्योद्ध्यौनदे ० इति० तत्तपवादः कर्त्तरिक्यप्निपात्यते ॥

भिद्रम् । न० शतधारे । वज्रे भिनत्ति । भिदिर् ० स्फायीतञ्चीत्यादिनारक् ॥

भिन्दिः । स्त्री० आपाधिकायाम् ॥ भिनत्ति । भिदिरवयवे । सर्वधातुभ्य इन् ॥

भिन्दिपालः । पुं० क्षेपणीये । सृगे ॥ गोफण ० इ० भा० ॥ भिन्दिं पालयति । पालरक्षणे । कर्मण्यण् ।

भिन्नः । त्रि० भेदविशिष्टे । दारिते । भेदिते । खण्डितावयवे । अन्यवस्तुङ्गते ॥ फुल्ले ॥ विकृते । भिद्यतेस्म ॥ भिदिर् ० । क्तः । रदाभ्यांनिष्ठातो नः पूर्वस्यचदइति० दकारतकारयोर्नौ ॥ न० अन्यायवचने । पुं० न० क्षतरोगविशेषे ॥ तल्लक्षणं यथा । शक्तिकुन्तेषुखड्गाग्रविषाणैराशयोहतः । यत्किञ्चित्प्रस्रवेत्तद्धि भिन्नमित्यभिधीयते ॥ आशयः कोष्ठः ॥

भिन्नक : । पुं॰ क्षपणे । बौद्धे । त्रि॰ ईषद्भिन्ने । अनन्त्यन्तगतौ क्षादि तिकन् ॥

भिन्नगात्रिका । स्त्री॰ कर्कटीविशेषे । फूट॰ इ॰ भा॰ ॥ भिन्नं गात्रमस्या.

भिन्नदर्शी । त्रि॰ अज्ञे । कुतार्किके । अविद्यामोहितात्मान : पुरुषाभिन्नदर्शिन : ॥ भिन्नं द्रष्टुं शीलंयस्य । णिनि : ॥

भिन्नधी : । त्रि॰ भिन्नमतौ ॥

भिन्नभिन्नात्मा । पुं॰ चणके ॥

भिन्नयोजनी । स्त्री॰ पाषाणभेदवृक्षे ॥

भिन्नार्थक : । त्रि॰ अन्यस्मिन् । भिन्नार्थकान्यतरएकत्वान्यतरावपि इत्यमर : । भिन्न : अर्थोयस्य. ।

भिया । स्त्री॰ भये ॥ ञिभीभये । भिदादित्वादङ् । टाप् ॥

भिरिण्टिका । स्त्री॰ श्वेतगुञ्जायाम ॥

भिल्ल. । पुं॰ म्लेच्छजात्यन्तरे । भील इ॰ भा॰ ॥ यथाह । हेमचन्द्र : । मालाभिल्लाकिराताश्च सर्वेपिम्लेच्छजातय. इति ॥ सवर्णात्क्षत्रकन्यायां तीवराज्जात : । यथा । पुलिन्दमेदभिल्लाश्च पुक्कसोभग्नपालक : । कुन्दकारोडोमचर्मकारोविरूपस्तया ॥ एतैवैतीवराज्जाता : कन्यायां ब्राह्मणस्यचे तिप॰ पद्धति : ॥

भिल्लगवी । स्त्री॰ गवय्याम् ॥

भिल्लतरु : पुं॰ लोध्रे ॥

भिल्ली । स्त्री॰ लोध्रे ॥

भिषक्पाश : । पुं॰ निन्द्यवैद्ये ॥ कुत्सितोभिषक् । याप्ये पाशप् ।

भिषक्प्रिया । स्त्री॰ गुडूच्याम् ॥

भिषग्जितम् । न॰ औषधे ।

भिषग्भद्रा । स्त्री॰ भद्रदन्तिकायाम् ।

भिषङ्माता । स्त्री॰ वासके ॥

भिषक् । पुं॰ वैद्ये ॥ शैलोक्तिप्रशमनेरोगाणामपुनर्भवे । ज्ञानंचतुर्विधंयस्य सराजार्होभिषक्तम. ॥ दण्डनीयोयथा । अज्ञातौषधमन्त्रस्तु यश्चव्याधेरतत्त्ववित् । रोगिभ्यो ऽर्थसमादत्ते सदण्डाश्चौरवद्भिषक् ॥ भिषजोन्नस्याभोज्यत्वं यथा । शूद्रान्नवाज्ञखीभुक्त्वातथाहरनावतारिण । चिकित्सकस्याक्रूरस्यतयास्त्रीमृगयोर्विनाम् ॥ यौगिकान्नं सूतिकोन्न भुक्त्वामासव्रतोभवेत् । ब्रतीयावकेन । सवर्णव्यमितिप्राय श्चित्तविवेक : ॥ अपिच । यूयंचिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिन्द्रियम् । विष्ठावार्द्धुपिकस्यान्नशस्त्रविक्रयिणोमलम् ॥ इतिमानवे ४ अध्याय : ॥ भिषज्यति । भिषज्रुग्जये । कण्ड्वादि : । क्विप् ॥ ञिभेतिवा । ञिभी॰ । भिय । पुग्भस्वश्चेत्य वि : ॥

भिक्षटा । स्त्री॰ दग्धिकायाम् दग्धान्ने । भिक्षांटीकते । टीकृगतौ ।

श्वन्धे श्योपीतिड : । ड्यापोरितिह्र स : ॥

भिस्सा । स्त्री० अन्ने । भोदने । भक्ते ॥ वभस्ति । भसदीप्तौ । वाहुलकात्स न्दसिवक्तुलमितीत्वम् । व्राह्मण भिस्से तिभाष्यप्रयोगाल्लोकेपि ॥ य द्वा । भेदनम्०भित् । सम्पदादि त्वात्क्विप् । भिदंस्यति । योचन्न कर्मंणि । भातोनुमे तिकः । पृषो दरादिः ॥

भिस्साराडम् । न० शाल्यूके । भसौंड० हू० भा० प्र० कान्दे ॥

भीः । स्त्री० भये ॥ ञिभीभये । सम्प दादित्वात्क्विप् ॥

भीतम् । न० भये त्रि० भययुक्ते ॥ वि भेति । ञिभी० क्तः ० ॥

भीतभीत : । त्रि० अतिशये नभीते । भीतप्रकारे ॥

भीति : । स्त्री० भये ॥ ञिभीभये । क्तिन् ॥ काम्ये ॥

भीम : । पुं० अम्लवेतसे ॥ शिवे ॥ पीठविशेषे ॥ यथा । भीमेश्वरोभी मपीठे शिवाभीमेश्वरीतथेत्यागम . ॥ सर्वसम्प्रतिमन्नुपराक्रमेपाण्डुतन ये । वृकोदरे ॥ त्रि०भयहेतौ । घो रे ॥ भयानके ॥ विभेत्यस्मात् । भी मादयोऽपादाने० भिव . मुगवेति मक् ॥

भीमकर्मा । पुं० भीमसेने ॥ भीमं० हिडम्बवधादिरूपंकर्मास्य ॥

भीमनाद : । पुं० सिंहे ॥

भीमनिर्ह्राद : । पुं० राक्षसान्तरे ॥

भीमपूर्वज : । पुं० भीमाग्रजे । युधि ष्ठिरे ॥

भीमरथ : । पुं० तामसमनुवंशजाता सुरविशेषे । हरिणाकूर्मरूपेणहतो भीमरथोऽसुरइतिगारुडे गयामाहा त्म्ये ८६ अध्याय : ॥

भीमरथी । स्त्री० जनानामवस्थाविशे षे ॥ यथा । वैद्यकेसप्तसप्ततिकेवर्षे सप्तमेमासिसप्तमी । रात्रिर्भीमरथी नामनराणामतिदुस्तरा ॥ नराणां दुरितक्षमेतिपाठ : ॥ तामतीत्यन रोयोसौ दिनानि यानिजीवति । क्रतुभिस्तानितुल्यानिसुवर्णशतदक्षि णै ॥ गति : प्रदक्षिणविष्णोर्लक्ष्य नमस्कारावधम् । ध्याननिद्रासुधा पानं भीमरथ्या : फलश्रुति : ॥ न दीविशेषे ॥

भीमविक्रान्त : । पुं० करिमोचले । सिंहे ॥ भीमश्चासौविक्रान्त : ॥ त्रि० भयानकविक्रमवति ॥

भीमशासन : । पुं० यमे ॥ भीमंशास नयस्य ॥

भीमसेन: । पुं० मध्यमपाण्डवे । भी मोहकोदरे ॥ कर्पूरप्रभेदे । भीम सेनौकापूरइतिभाषा । यथा । पो तासोभीमसेनस्तदनुशितकर : शङ्ख

रायामसंज्ञ: । यांग्र : विष्णोऽन्न सारस्तदनुश्चिमयुगावालुकानूटिका च। पद्मादस्माक्तुपारस्तदुपरिसृप्तिमः शीतल: पश्चिकाख्याक्रस्रो रिभे दागुपरसमश्वसावेसहस्रो नहस्या : ॥

भीमसुता । स्त्री॰ दमयन्त्याम् ॥

भीमा । स्त्री॰ दुर्गायाम् ॥ रोचनाख गन्धद्रव्ये ॥ कशायाम् ॥

भीमाकाली । स्त्री॰) दुर्गायाम् ॥
भीमादेवी ।

भीमाख्यानम् । न॰ तीर्थविशेषे ॥

भीमेश्वरी । स्त्री॰ भीमपीठस्थायाम् ॥

भीमैकादशी । स्त्री॰ माघशुक्लैकादश्याम् ॥ भैम्याम् ॥

भीर: । त्रि॰ भयदे ॥ भियंराति । रा । क: ॥

भीरु: । पुं॰ इक्षुभेदे ॥ यथा । भीरुः स्वेषाकर: स्यादुरविदाहीगुरुः स्मृत : इति । व्याघ्रे ॥ शृगाले ॥ त्रि॰ पार्थे । कातरे ॥ भीरुके ॥ चर्ची । इत्यौक॰ इ॰ आ॰ ॥ रणे शौरी : स्वर्गाभाव : ॥ बिभेति । ञिभीभये । भिय : क्रुकनावि ति॰ क्रु : ॥ स्त्री॰ भयशीलायाम् । वरयोषिति ॥ कण्टकारिकायाम् ॥ शतावर्याम् ॥ छायायाम् ॥ दाया याम् ॥ स्त्रीमात्रे ॥

भीरुक: । पुं॰ इक्षुभेदे । भीरुरि॰ इ॰ दे॰ आ॰ प्र॰ ॥ शतावरीदम

मनोमधुरोरसपाकयो: । सुशीतोपृंह णीयस्य : पौण्ड्रकोभीरुकस्तथा ॥ पेषके ॥ न॰ वने ॥ त्रि॰ भयशीले । भीरुके । चर्चौ ॥ बिभे ति । ञिभी॰ । क्रुकन् ॥

भीरुहृदय : । पुं॰ मृगे ॥

भीरू : । स्त्री॰ भयशीलायांयोषिति ॥ ऊङुतश्चेत्यूङ् ॥

भील : । पुं॰ भिल्ले ॥ भियंलाति । ला॰ क:॰ ॥

भीलभूषणा । स्त्री॰ गुञ्जायाम् ॥

भीलुक : । त्रि॰ भयप्रकृतिकजने । चर्ची ॥ बिभेति । ञिभी॰ । भिय : क्रुक्लुकनाविति क्लुकन् ॥

भीषण : पुं॰ भयानकरसे ॥ शल्लक्याम् ॥ कुन्दुरुके ॥ कपोते ॥ हिन्ताले ॥ भैरवविशेषे ॥ त्रि॰ गाढे ॥ दारुणे ॥ भीकरसान्विते ॥ भीषयते । ञिभी॰ । नन्द्यादि त्वाल्ल्यु: । भियोहेतुभयेषुगिति षुक् ॥

भीष्म : । पुं॰ गाङ्गेये । पाण्डवानां पितामहे ॥ रुद्रे ॥ राक्षसे ॥ भया नकरसे ॥ त्रि॰ भयङ्करे । भयद रे ॥ बिभेत्यस्मात् । ञिभी॰ । भिय : षुग्वेति॰मक्॰ प्रत्ययाद्य॰

भीष्मक : । पुं॰ रुक्मिणीपितरि ॥

भीष्मजननी । स्त्री॰ गङ्गायाम् ॥

भीष्मपञ्चकम् । न० कार्तिकशुक्लपक्षीयैकादश्यादि पूर्णिमान्तपञ्चतिथि कर्तव्यव्रतविशेषे ॥

भीष्मरत्नम् । न० हिमालयोत्तरदेशजातशुक्लवर्णप्रस्तरविशेषे । भीष्मपाषाणे ॥

भीष्मसूः । स्त्री० गङ्गायाम् ॥ भीष्मं सूते । सूङ्० । क्विप् ॥ शान्तनोर्महिषीभूत्वाभीष्मं सुतमसूयत । तस्मात्साभीष्मसूः प्रोक्तागङ्गार्ण्णलोकपावनी ॥

भीष्माष्टमी स्त्री० माघशुक्लाष्टम्याम् । तत्रभीष्मस्यतर्पणंकर्त्तव्यम् ॥

भीसटम् । न० श्रेमाल्के ॥

भुक्तम् । न० भक्षणे ॥ त्रि० भक्षिते । खादिते । अभ्यवहृते । अशिते ॥ भुज्यतेस्मभुज० । क्त भुक्तोब्राह्मणा इत्यत्रतुसुक्तमेषामस्तीत्यकारोमत्वर्थीयोनतुकर्त्तरिक्तः । सकर्मकेभ्यस्तस्यविधानाभावात् ॥ यद्वोत्तरपदलोपोत्रद्रष्टव्यः । भुक्तान्नाभुक्ता । अत्रान्नस्यभुक्तत्वंब्राह्मणेसूपचर्य्यते ॥

भुक्तसमुज्झितः । त्रि० फेलायाम् ॥ पूर्वम्भुक्तम्० पश्चात्समुज्झितम् । पूर्वकालैकेतिसमासः ॥

भुक्तिः । स्त्री० भोजने । भोजनम् । भुजपालनाभ्यवहारयोः । स्त्रियां क्तिन् ॥ भोगे । यथा । भुक्तिस्त्रिपुरूपोसिध्येदिति ॥

भुक्तिप्रदः । पुं० मुद्गे ॥ त्रि० भोगदातरि ॥

भुक्तोज्झितः । त्रि० फेलायाम् ॥ पूर्वंभुक्तम्०पश्चादुज्झितम् । पूर्वकालैकेतिसमासः ॥

भुग्नः । त्रि० रोगादिनाकुटिलीकृते कग्णे ॥ नम्रे ॥ भुज्यतेस्म । भुजो कौटिल्ये । क्तः । ओदितश्चेति नत्वम् ॥ भुजतिस्मवा । गत्यर्थेतिक्तः ॥

भुजः । पुं० स्त्री० करे ॥ बाहौ ॥ अस्यशुभाशुभलक्षणंयथा । बाहवस्वल्पलाश्चहस्वगन्धिन्यूरोमिका । अन्यथाअर्थहीनानामसौनिःस्वस्य रोमशौ । मिशांसौचैवमल्लाल्लौधि ह्रौचविपुलौभुजौ । आजानुलम्बि नौबाहूवृत्तौपीनौनरेश्वरे ॥ निःस्वानांरोमशौह्रस्वौचछौकपिकारम भौ । इति ॥ भुज्यतेऽनेन । भुज पालनाभ्यवहारयोः । भुजन्युब्जौ पाण्युपतापयोरितिसाधुः ॥ यद्वा । भुजति । भुजकौटिल्ये । इगुपधेतिकः ॥ चतुष्कलविशेषगुरुसंज्ञायाम् ॥ ० ॥ पुं० ॥

भुजकोटरः । पुं० कक्षे ॥

भुजगः । पुं० सर्पे ॥ भुजः सन्गच्छति । अन्यत्रापीतिडः ॥ भुजेनकौटिल्येनगच्छतिवा ।

भुजगदारणः । पुं० गरुडे ॥

भुजगभोगी । ० मयूरे ॥

भुजगराजः । पुं० शेषाहौ ॥ भुजगा नां राजा । टच् ॥

भुजगशिशुभृता । स्त्री० वृहतीछन्दः प्रभेदे ॥ भुजगशिशुभृतानौमः । यथा । वृन्दाटनिकटचारीभुजगशिशुभृतायासीत् । मुररिपुदयितेनावीवजजनसुखदासा ऽभूत् ॥

भुजगान्तक । पुं० गरुडे ॥

भुजगाभोजी । पुं० मयूरे ॥

भुजगाशनः । पुं० पक्षिविशेषे । गरुडे ॥ भुजगानश्नाति । अश० । ल्युः । । भुजगाशनं यस्या ।

भुजङ्गः । पुं० अहौ । सर्पे ॥ पिङ्गे ॥ भुजं नकौटिल्यं नगच्छति । गमे : सुपिखच् खच्चिडिद्वाच्य इतिडित्वमचे टिलोपः ॥ सीसके ॥

भुजङ्गघातिनी । स्त्री० सर्पाख्याम् । मुल्याख्याम् । कङ्कालिका० दू० गी० दे० भा० ॥

भुजङ्गजिह्वा । स्त्री० महासमङ्गायाम् ॥ सर्परसनायाम् ॥

भुजङ्गप्रयातम् । न० जगतीछन्दः प्रभेदे ॥ भुजङ्गप्रयातं चतुर्भिर्यकारैः ॥ यथा । सदारात्मजज्ञाति भृत्योविहायत्वमेतं दृन्दं जीवितं लिप्समानः । मयाक्लिशितः कालिये त्वं कुकृत्यं भुजङ्गप्रयातं द्रुतं सागराय ॥

भुजङ्गभुक् । पुं० मयूरे ॥ भुजङ्गं भुङ्क्ते । भुज० । क्विप् । गरुडे ॥

भुजङ्गमोजो । पुं० राजसर्पे ॥

भुजङ्गमः । पुं० सर्पे । भुजं नयौ टिल्यं नगच्छति । गमेः सुपिखा च्यद्वतिखच् । खचडिद्वाच्यइति डिद्भावे टिलोपाभावः ॥ न० सीसके ॥

भुजङ्गलता । स्त्री० नागवल्ल्याम् ॥

भुजङ्गविजृम्भितम् । न० उत्कृतिछन्दः प्रभेदे ॥ वसौशाश्वैश्छेदो मेतं ममतनयुगलसलगैर्भुजङ्गविजृम्भितम् ॥ यथा । शैलोद्दण्डव्यस्तुतपादप्रपातविकटसटनभरोरस्तु सारतालकमाकर्मद्रुमकाण्डः श्रुतितरलनवकिसलयतरङ्गितशरं भुजम् । नसत्रागत्रीभिर्मल्लधामुकुलितकरकमलयुगळतस्तिरच्युत : पायात्परं छिन्दन्कालिन्दीहृदस्सनिलवसतिहुण्डभुजङ्गविजृम्भितम् ॥

भुजङ्गसङ्गता । स्त्री० वृहतीछन्दः प्रभेदे ॥ सजरैर्भुजङ्गसङ्गता ॥ यथा । तरलात्तरङ्गरिङ्गितैर्यमुनाभुजङ्गसङ्गता । कथमितिर-

स्वाचारकाश्यपल : सदैवताहरि : ॥
भुजङ्गहा । पुं॰ श्रीकृष्णसन्दन ध्वजे । गरुडे ॥
भुजङ्गाक्षी । स्त्री॰ रास्नायाम् ॥ भुजङ्गान् पचति । अनूप्याप्तौ । कर्मण्यण् ॥ यद्वा । भुजङ्गोक्षियस्याः । फणोदर्शनादित्यच् । जातेरिति॰ गौरादित्वाद्वा॰ङीष् । भुजङ्गशब्द श्चभुजङ्गादिसदृशैलक्षणा ॥
भुजङ्गाख्यः । पुं॰ नागकेसरे ॥
भुजशिरः । न॰ स्कन्धे ॥ भुजस्यशिरः ॥
भुजा । स्त्री॰ दाहौ ॥ करे ॥ भुजाद्याप् ॥
भुजाकण्टः । पुं॰ कामाङ्घ्री । नखे ॥
भुजान्तरः । पुं॰ वक्षसि ॥ भुजान्तरम् न॰ क्रोडे ॥ भुजयोरन्तरम् ॥
भुजिः । पुं॰ वह्नौ ॥ भुनक्ति॰ भुज्यतेवा । भुज॰ । भुजेः किचेति॰ इः ॥
भुजिष्यः । पुं॰ स्वतन्त्रे ॥ हस्तसूत्रे । दासे ॥ भुङ्क्ते॰ स्वाम्युच्छिष्टम्॰ भुज्यतेवा । भुज॰ । रुचिभुजिभ्यां किष्यन् ॥
भुजिष्या । स्त्री॰ दास्याम् ॥ गणिकायाम् ॥ टाप् ॥
भुज्युः । पुं॰ भोजने ॥ वह्नौ ॥ भुनक्तिपालयतिसर्वाणिभूतानि । भुजमृङ्भ्यांयुक्त्युकाविति युक् । भोजनेत्र ॥ भाजने ॥ स्थपिविशेषे ॥
भुञ्जन् । त्रि॰ भोगकर्तरि । भुञ्जाने ॥ भुजेः॰लटः शतृ ॥
भुञ्जानः । त्रि॰ भुञ्जति । यथा । त्रिपुधामसुयद्भोग्यं भोक्तायच्चप्रकीर्तितः । वेदैतदुभयंयस्तुसभुञ्जानोनलिप्यत इति । त्रिपुधामसुजाग्रदादिषु ॥ भुजेः कर्त्तरिलटः शानच् ॥
भुरिक् । स्त्री॰ पृथिव्याम् । बिभर्ति॰ भरति मनुष्यादीन् । भृञ्॰ । भृञउच्चेति॰ इक्प्रत्ययः
भुवनम् । न॰ सलिले ॥ नभी ॥ गगने ॥ जने ॥ पिष्टपे । जगति ॥ भूरादिसर्वलोके ॥ चतुर्दशभुवनानियथा । भूर्भुवः स्वर्महश्चैवजनश्चतपएवच । सत्यलोकश्चसप्तैतेलोकास्तुपरिकीर्त्तिताः । अतलंसुतलंचैव वितलञ्चगभस्तिमत् । महातलंरसातलंपातालंसप्तमंस्मृतम् ॥ इति ॥ भवन्त्यस्मिन् भूतानि॰ इति भुवनमयंलोकः ॥ भूयते । भूप्राप्तौ । भूसूधूभ्रस्जिभ्यश्छन्दसीतिक्युन् ॥ यद्वा । भवन्ति॰ उत्पद्यन्तेऽनेकस्मिन्नेत्युट् । संज्ञापूर्वकत्वाद्गुणाभावः ॥
भुवनकोषः । पुं॰ भूगोले ॥
भुवनकोषवित् त्रि॰ । चतुर्दशभुवना

निवसन्ति० इतितात्पर्य्यार्थाभित्ते ॥ कल्पनामात्रमेतत् । तेषामदृष्टत्वात् । नचवचनेभ्यस्तद्दर्शनम् । तेषांसद्योविप्रतिपत्तिदर्शनात् ॥

भुवनेश्वरः । पुं० एकाम्रके ॥

भुवनेश्वरी । स्त्री० महाविद्याविशेषे । साम्यावस्थमायोपाधिकब्रह्मरूपिण्याम् ॥ मणिद्वीपाधिवासिन्याम् ॥ यथा । पाशाङ्कुशवराभीतिधरांदेवीं चिदात्मिकाम् । वन्देसमन्दहसितां मणिद्वीपाधिवासिनीम् ॥ आयुधस्थानानिवामाधः करमारभ्यदक्षिणाधःकरपर्य्यन्तम् । तदुक्तं मन्त्रमहोदधौ । दक्षिणेचाङ्कुशंदद्याद्वामेपाशंप्रदापयेत् । अभयंदक्षिणेदद्याद्वरंवामेप्रदापयेदिति । इत्यपटव्यामपिभुवनेशीध्याने । दक्षेऽङ्कुशाभयेप्रोक्तेवामेपाशमथेष्टदमिति ॥

भुवन्युः । पुं० भानौ ॥ सूर्य्ये ॥ ज्वलने । वह्नौ ॥ शशलाञ्छने । शशिनि ॥ भवति । भू० । कन्युच्प्रत्यये चिपेश्वेति० बाहुल० । कन्युच् ॥

भुवर् । अ० अन्तरिक्षे । गगने ॥ पञ्चाम्यप्रतिरूपकमव्ययम् । भवति । भू० । भूरञ्जिभ्यांकिदित्यसुन् । उवङ् ।

भुवर्लोकः । पुं० भूरादिसप्तलोकान्तर्गत द्वितीयलोके ॥ यथा । भूमिसूर्य्यान्तरंयत्रसिद्धादिमुनिसेवितम् । भुवर्लोकस्तुसोप्युक्तोद्वितीयोमुनिसत्तम ॥ अपिच । त्रिलोकीभुवर्लोकोभ्युदयान्योमहीतलात् ॥ भूपृष्ठादारभ्यभ्रुवपर्य्यन्तंइति० ज्योतिश्चक्रावलम्बनभूतध्रुवपर्य्यन्तपरस्तदवलोकायोभुवर्लोकाहृत्यर्थः ॥

भुविः । न० अब्धौ । समुद्रे ॥ भवत्यस्मिन् । भू० । भुवः किदिति० इन् ॥

भुशुण्डी । स्त्री० अस्त्रान्तरे । अस्त्रविशेषे ॥ यथा । वृक्षौघैशैलचप्राण्यथ हस्तोद्यतकर्णिका । भ्रमतेचानतानीयासाभुशुण्डीमिगद्यते ॥

भू । अ० रसातले ॥

भूः । स्त्री० स्थानमात्रे ॥ एकाक्षरे ॥ व्याहृत्यन्तरे ॥ धरण्याम् । भूमौ ॥ दृष्ट्वात्मविजयव्यग्रान्नृपान्हसति भूरियम् । अहोमांविजिगीषन्तिमृत्योःक्रीडनकानराः ॥ भवति० भवनंवा । भू० सत्तायाम् । भावेक्विप् ॥ भवन्त्यस्यांसर्व्वमित्यधिकरणेबहुलवचनाद्वाक्विप्रत्ययेके ॥ भवन्त्यस्माद्भूतानीत्यपादानेवाक्विपित्येके ॥ उत्पत्तौ ॥

भूकः । पुं० न० काले ॥ छिद्रे ॥ अन्धकारे ॥ भवति॥भू० । मूकभूशुम्भिभ्यः कक् ।

भूकदम्बः । पुं० अलम्बुषवृक्षे । कोकसिम० इ० गौ० दे० भा० ॥

भूकादम्बक : । पुं० यवान्याम् ।

भूकदम्बिका । स्त्री० महाश्रावणिकायाम् ॥ मुण्डायाम् ॥

भूकन्द : । पुं० महाश्रावणिकायाम् ॥

भूकम्प : । पुं० उत्पातविशेषे ॥ स-यथा । यामद्वयमाद्यभूकम्पोहिमाद्री नामनिष्टद : । अनिष्टद: क्षितीशानांसन्ध्ययोरुभयोरपि ॥ इतिच शिव : ॥ यदाविकुम्भतेनन्तोमदाघू-र्णितलोचन : । तदाचलतिभूरेषा साद्रिद्वीपाब्धिकानना ॥ भुव: कम्पो भूकम्प: ॥ केचित्विकुम्भोगज : प्र-चलितिप्रासादिभि : कथ्यते चापि मीनकुलीरभेचतुष्पमिसम्प चलतुक-च्छप : । यूकीकुम्भधरेमृगेन्द्रमिथुने-कन्यास्वगेपन्नगस्ते धामैकात्मीयदि प्रचलतिक्षौणीतदाकम्पते ॥ कच्छपेमरणंज्ञेयंमरणं चापिपन्नगे । सर्वमसुखदर्श्चैवपृथिव्यां चलितेगजे ॥ प्रथितनरेश्वरमरणंव्यसनान्यास्तेय मारुतयो : । क्षुद्रयमतिवृष्टिभि रुपपीडान्ते जनाश्चापि ॥ त्रिचतुर्थपञ्चमदिनेमासेषदोभिपचकै। भवतियदाभूकम्प:प्रधाननृपनाशनंकुरुते।सचायंभूमिजोत्पातविशेष:॥यथा । चरस्थिरभवंभौमंभूकम्पमपिभूमिजम्। जलाशयानांवैकृत्यंभौमंतदपिकीर्तितम् ॥ भौमंयाप्यफलंज्ञेयंचिरेणपरिपच्यते ॥ अपिच । चितिकम्पमाहुरेके बृहदन्तर्जलनिवासिसत्त्वकृतम् । भूभारखिन्नदिग्गजविश्रामसमुद्भवंचान्ये ॥ अनिलोऽनिलेननिहत : क्षितौपतन्सस्वनंकरोत्यन्ये । केचित्त्वदृष्टकारितमिदमन्ये प्राहुराचार्या : ॥ गिरिभि : पुरासपक्षैर्वसुधाप्रपतद्भिरुत्पतद्भिश्च । आकम्पितापितामहमाहामरसदसिसव्रीडम् ॥ भगवन्नाममयैतत्त्वयाकृतंयदचलैरितिव्रीडया । क्रियतेऽचलैश्चलद्भि: 'शक्ताहंनाऽस्यखेदस्य ' । तस्या : सगद्गदगिरं किञ्चित्स्फुरिताधरंविनतमीषत् । साश्रुविलोचनमाननमवलोक्यपितामह : प्राह ॥ मन्युंहरेन्द्रधात्र्या : क्षिपकुलिशंशैलपक्षभङ्गाय । शक्र:कृ-तमित्युक्त्वामाभैरितिचवसुमतो माह ॥ किन्त्वनिलदहनसुरपतिवरुणा : सदसत्फलावबोधार्थम् । प्राग्द्वित्रिचतुर्भागेषुदिननिशो : कम्पयिष्यन्ति ॥ अतोविशेषोद्रष्टव्यो वाराहांसुविचक्षणै : ॥

भूकर्बुदार : । पुं० ) श्लेष्मान्तके ।

भूकर्बुदारक : । पुं०) भूशेलौ । छोटा लसोडा० इ० भा० । भूकर्बुदा रोमधुर : कृमिशूलापह : परम् । वातप्रकोपन : किञ्चित्शीतल : सर्पमारक : ॥

भूकल : । पुं० दुर्विनीताश्वे ।

भूकश्यप : । पुं॰ वसुदेवे ॥

भूकाक : । पुं॰ खल्पकाके । क्रौञ्चे । नीलकपोते ॥

भूकुम्भी । स्त्री॰ भूपाटल्याम् ॥

भूकुष्माण्डी । स्त्री॰ विदार्याम् ॥

भूकेश : । पुं॰ शैवले ॥ वटे ॥

भूकेशा । स्त्री॰ राक्षस्याम् ॥

भूकेशी । स्त्री॰ वनस्पते ॥

भूक्षित् । पुं॰ सूचीरोमणि । शूकरे ॥

भूखर्जूरी । स्त्री॰ क्षुद्रखर्जूर्याम् । भूयुक्तायाम् ॥ भूखर्जूरीतुमधुरा शिशिरादाहपित्तनुत् ॥

भूगरम् । न॰ विषे ॥

भूगर्भ : । पुं॰ भगवति । भूर्गर्भे यस्य भूःसर्वभूताश्रयभूतागर्भ इवान्तर्वर्ति नीयस्य भूस्ताग र्भोऽस्येतिवा॥ भवभूतिनामनि॰ कवौ ॥

भूगोल : । पुं॰ ज्योतिःशास्त्रप्रसिद्धे भुवनकोषे । भौम्यं यथासर्वरसं विभाज्य राज्यं यथाराजविवर्ति तस्य । सभानभातीनसुवभूद्दीनागोखानभि च्चोगणकस्तयैव ॥ यादृग्व्याकर णं विनैव विदुषांधृष्टःप्रविष्टः सभां जल्पन्नल्पमतिः स्मयात्पटुवटुभ्रू भङ्गवक्रोक्तिभिः । ह्रीतः सन्नुपहा सतेतिगणकोगोलानभिज्ञस्तथाज्यो तिर्वित् सदसिप्रगल्भगणकप्रश्नप्र पञ्चोक्तिभिः ॥

भूचर : । त्रि॰ भूमिचारिणि ॥

भूच्छायम् । न॰ अंधकारे ॥ भुवः छाया । छायाबाहुल्ये॰ इति क्लीवता ॥

भूजन्तु : । पुं॰ भूनागे ॥

भूजम्बू : । स्त्री॰ गोधूमे ॥ विकङ्कत फले ॥ भूमिजम्ब्वाम् ॥

भूत : । पुं॰ देवयोनिविशेषे ॥ स च अधोमुखोर्ध्वमुखादिपिशाचभेदोक्त द्रानुचरोबालग्रह : ॥ कुमारे ॥ कृष्णाचतुर्दश्याम् ॥ योगीन्द्रे ॥ प्रत्येगवविशेषेषु । न॰ क्ष्मादौ । पृथिव्यप्तेजोवाय्वाकाशेषु ॥ पि शाचादौ । जन्तौ । युक्ते । न्याय्ये । वस्तुतत्त्वानुसरणे ॥ त्रि॰ उचिते ॥ प्राप्ते ॥ वित्ते ॥ सत्ते । सत्ये । प्राणिनि । कालविशेषे । वृत्ते । अतीते । गते । परमार्थे । विद्यमानेवस्तुनि । अतीतोत्पत्तिके । जाते ॥ समे ॥ उपारमदस्यपद भूतशब्द : समार्थ इतिशाब्दिका : । यथा पितृभूत : । देवभूतोयमि ति भूव मपिविद्यमाने ॥ भवन धर्मिणि ॥ भाव्यते स्म । भूप्राप्तौ । आधृयादेतिणिजभाव : पचे॰ क्त : ॥ भूतिरस्यास्तिवा । अर्श आ द्यच् ॥ अभवद्वा । भुवोगत्यर्थेति॰ भूतार्थे कर्त्तरिक्त : ॥ अर्द्धर्चा दि : ॥

भूतकृत् । पुं॰ धातरि । द्रुहिणे ।

भूतानि करोति । डुकृञ्० । क्विप् । तुक् ॥ सर्ट्टे ॥ भूतानि कृन्तति० छिनत्ति । कृतीछेदने । क्विप् ॥ कृञोतिछिनत्तिवा । कृञ्० । क्विप्तुक् ॥ विष्णौ ॥ रजोगुणसमाश्रित्यविरिञ्चिरूपेण ० भूतानिकरोतिइतितथा ॥

भूतकेश : । पुं० तृणविशेषे । गोलोम्याम् । श्वेतकेशाम् ॥ भूतानांकेशइव । भूत : केशोस्या ॥

भूतकेशी । स्त्री० भूतकेशे ॥ शेफालिकायाम् ॥ नीलसिंदुवारे ॥

भूतक्रान्ति : । स्त्री० भूतावेशे ।

भूतगण : । पुं० पृथिव्यादिपञ्चके ॥ भूतानांगण : ॥

भूतगन्धा । स्त्री० मुरानामगन्धद्रव्ये ॥

भूतग्राम : । पुं० देहेन्द्रियसङ्घातकारे यपरिणतेपृथिव्यादिभूतसमुदाये ॥ सच० जरायुजाण्डजस्वेदजोद्भिज्जभेदाच्चतुर्विधोभवति । भूतानांपृथिव्यादीनांग्राम : ॥

भूतघ्न : । पुं० भूर्जवृक्षे ॥ उष्ट्रे ॥ लशुने ॥ त्रि० भूतनाशके ॥

भूतघ्नी । स्त्री० तुलस्याम् ॥ मुण्डितिकायां ॥

भूतचतुर्दशी । स्त्री० कार्त्तिकस्यास्यचतुर्दश्याम् । यमचतुर्दश्याम् ॥

भूतजटा । स्त्री० जटामांस्याम् ॥ गन्धमांस्याम् ॥

भूतत्वम् । न० वर्त्तमानध्वंसप्रतियोगिसमयवृत्तित्वे ॥ बहिरिन्द्रियग्राह्ययोग्यविशेषगुणवत्त्वे ॥ पृथिव्यादयस्सुजातिविशेष : ॥

भूतदर्शनम् । न० परमार्थदर्शने ॥

भूतद्रावी । पुं० भूतादृश्यत्वे ॥ रक्तकरवीरे ॥

भूतद्रुम : । पुं० श्लेष्मातकवृक्षे ॥

भूतधृक् । पुं० भूतानामपकारके ॥ भूतान्निद्रुह्यति । द्रुह० । सत्सूद्विषेतिक्विप् ॥ भूतधृक्कोलभेतराम् ॥

भूतधात्री । स्त्री० भूमौ ॥ भूतानां धात्री ।

भूतनाथ : । पुं० शिवे ॥ भूतानां नाथ : ॥ भूतैर्न्नाथ्यन्ते० तान्युपतापयति० तेभ्यआशास्ते० ताभमीष्टमितिवाभूतनाथ : ॥

भूतनायिका । स्त्री० दुर्गायाम् ॥

भूतनाशन : । पुं० श्वेतसर्षपे ॥ सर्षपे ॥ भल्लातके ॥ न० रुद्राक्षे ॥ भूतान्नाशयति । णशअदर्शने ण्यन्त् ॥

भूतपति : । पुं० महादेवे ॥ भूतानां पति : ॥

भूतपंची। स्त्री॰ तुलस्याम्॥
भूतपुष्पः। पुं॰ श्योनाकवृक्षे॥
भूतपूर्णिमा। स्त्री॰ आश्विनपूर्णिमायाम्। शारद्याम्। कोजागरायाम्॥
भूतपूर्वः। त्रि॰ अतिक्रान्ते॥ पूर्वं भूतः। सुप्सुपेतिसमासः। भूतपूर्वेचरडितिनिर्देशात्भूतशब्दस्य पूर्वनिपातः॥
भूतप्रादुर्भावः। पुं॰ अतिक्रान्तोत्पत्तौ॥ भूतस्यप्रादुर्भावः॥
भूतभावनः। पुं॰ सर्वभूतपितरि। ईश्वरे। भूतानिभावयतिजनयति॰ प्रापयतिवा। भवतीत्यस्माद् युच्॥
भूतभृत्। पुं॰ विष्णौ॥ भूतानि बिभर्त्ति धारयति॰ पोषयतिवा॰। डुभृञ्॰। क्विप्। तुक्॥
भूतभैरवः। पुं॰ भैरवविशेषे॥ भौतज्वरापहेचूर्णविशेषे॥ यथा। पलाशातिफलव्योषविषफलाजीरकंघनः। समिश्रईसितायुक्तं चूर्णंभौतज्वरापहमिति॥
भूतमाता। स्त्री॰ शब्दादिषु। पृथिव्यादिषुविषयेषु॥
भूतमार्गी। स्त्री॰ चीडानामगन्धद्रव्ये॥
भूतयज्ञः। पुं॰ पञ्चमहायज्ञान्तर्गतबलिरूपवदेवकर्म्मणिभूतेभ्योबलिहरणे॥
भूतयोनिः। पुं॰ परमात्मनि॥ भूतानांयोनिः।
भूतलिका। स्त्री॰ पृक्कायाम्॥
भूतवासः। पुं॰ कलिद्रुमे॥ भूतानांवासः। भूतानांवासोस्मिन्वा॥
भूतविक्रिया। स्त्री॰ अपस्माररोगे॥
भूतवित्। पुं॰ लोकायतिके॥ सच पृथिव्यप्तेजोवायवश्चत्वारि॰ तानिचत्वारिभूतानिजगत्कारणानीति वास्ववति॥
भूतविद्या। स्त्री॰ भूततन्त्रे॥ यथा। भूतविद्यानाम॰ देवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां॰ शान्तिकर्मबलिहरणादिग्रहोपशमनार्थमितिसुश्रुतः॥
भूतवृक्षः। पुं॰ शाखोटवृक्षे। श्योनाकवृक्षे॥ कलिद्रुमे॥
भूतवृक्षकः। पुं॰ शाखोटे॥ वङ्गभाषा सेओड़ा॰ इ॰ भा॰॥
भूतवेशी। स्त्री॰ श्वेतशेफालिकायाम्। श्वेतसुरसायाम्। श्वेतनिर्गुण्ड्याम्॰ सु॰ भा॰। भूतानिविशन्ति। विशप्रवेशने। कर्मण्यण्॥
भूतब्रह्मा। पुं॰ देवले।
भूतसञ्चारः। पुं॰ भूतोन्मादरोगे। भूतक्रान्तौ। ग्रहावेशे॥
भूतसञ्चारिणी। स्त्री॰ कृष्णचतुर्दश्याम्॥
हरवे॥

भूतसञ्चारी । पुं॰ दावानले ॥

भूतसर्ग : । पुं॰ भूतसृष्टौ । देवासुरभेदेनभूतानांसृष्टौ ॥ यथा । ब्राह्म : प्राजापत्यस्तथैन्द्रस्तथैवच । गान्धर्वोयक्षकौबेरोरक्षः पैशाचमानुषः ॥ स्थावर : पाशवोमार्ग : स्वार्थः शाकुनिकस्तथा । चतुर्दशविधोह्येषभूतसर्ग : प्रकीर्तित : ॥

भूतसार : । पुं॰ श्योनाकप्रभेदे ॥

भूतसृट् । पुं॰ ब्रह्मणि ॥

भूतहन्त्री । स्त्री॰ वंध्याकर्कोटक्याम् । नीलदूर्वायाम् ॥

भूतहर : । पुं॰ गुग्गुलौ ॥

भूतहारि न॰ देवदारुणि ॥

भूता । स्त्री॰ कृष्णचतुर्दश्याम् ॥ यथा । स्कान्दे । ब्रह्माण्डोदरमध्येनयामितीर्थानिसन्तिवै । पूजिताभिभवन्त्यत्रभूतायांपारणेकृते ॥ भविष्य । शिवरात्रिव्रतेभूतांकामविद्धांविवर्जयेत् ॥

भूताङ्कुश : । पुं॰ गौ॰ दे॰ खनामप्रसिद्धे वृक्षे । चवके । कशेरुणि ॥ भूताङ्कुशस्तीक्ष्णगन्ध : कटुरुष्णश्चयोत्कट : । भूतग्रहादिदोषघ्न : कफवातनिकृन्तन : ॥

भूतात्मा । पुं॰ देहेपृथिव्यादिभूतारब्धत्वात् । भूतान्येवात्मास्वभावोयस्य : । परमेष्ठिनि । द्रुहिणे । हिरण्यगर्भे ॥ भूतानांव्याप्यपार्थिवत्वात् । इति ॥ सदाशिवे ॥ जीवात्मनि ॥ विष्णौ ॥ भूतानांप्राणिनामात्मा । अन्तर्यामी ॥

भूतादि : । पुं॰ सर्वजगत्कारणे । तामसाहङ्कारे ॥ भूतानामादि : ॥ परमेश्वरे ॥ भूतानांभवनधर्मकाणामुत्पत्तिमतांसर्वेषामादि : कारणं कर्त्तुपादानोभयात्मकमितियावत्॥

भूतादिसर्ग : पुं॰ भौतिकसर्गे ॥ भूतादे : सर्ग : ॥

भूतारि । न॰ हिङ्गुनि॰ ॥

भूतार्त्त : । त्रि॰ भूताविष्टे ॥ भूतेनऋतोर्दोष : । ऋतेचतृतीयासमास इतिसूत्रे : ॥ भूतेनचार्त्तोवा ॥

भूतार्थ : । पुं॰ सिद्धार्थे ॥

भूतार्थवाद : । पुं॰ प्रमाणान्तरविरोधस्तुतिरहितार्थबोधकेवेदवाक्ये ॥ यथा । इन्द्रोवृत्रायवज्रमुदयच्छदित्यादि : ॥

भूताली । स्त्री॰ भूपाटल्याम् ॥ सुपल्याम् ॥

भूतावास : । पुं॰ विभीतके । एरण्ड॰ इ॰मा॰ ॥ भूतानामावास : ॥ आकाशादावाश्रये॰वासुदेवे ॥ भूतान्यभिमुख्येनवसन्त्यत्र ॥ यस्मिन्स्थिभूतानिभूतावासस्ततोभवान् । इतिहरिवंश : ॥ शाये ॥

भूताविष्ट : । त्रि॰ पिशाचग्रस्ते ॥ भ

न्॰ । मूलविभुजादित्वात्कः ।

भूनागः । पुं॰ उपरसविशेषे । चिति नागे ॥

भूनिम्बः । पुं॰ क्षुपविशेषे । किराततिक्ते । चिरायता॰ इ॰ भा॰ ॥ भुवोनिम्बइव ॥

भूनीपः । पुं॰ भूमिकदम्बे । भूकदम्बे । लघुपुष्पे ॥ निकदम्बाः कदम्बास्तद्वृक्षादोषहराहिमाः । कषायतिक्ताः पित्तघ्नावीर्यवृत्तिकराः परा: ॥

भूनेता पुं॰ राज्ञि । भुवोनेतानायकः ॥

भूपः । पुं॰ राजनि ॥ भुवंपाति । पारक्षणे । कातोनुपसर्गेकः । १६ संख्यायाम् ॥

भूपतिः । पुं॰ नृपे । राज्ञि ॥ भूपचौयस्यपत्नीसतुभवसिकथंभूपती रामचन्द्रः । इतिरामायणेकैकयी वाक्यम् ॥ भुवः पतिः ॥ वटवृक्षौषधे ॥

भूपदः । पुं॰ वृक्षे ॥ भुविपदान्यस्य ।

भूपदी । स्त्री॰ मल्लिकायाम् । बेलो॰ इ॰ भा॰ ॥ भुविपदमस्याः । गौरादिः ॥

भूपलाशः । पुं॰ वृक्षविशेषे । विशाखी इ॰ गौ॰ दे॰ भा॰ ॥ भुवः पलाशः ॥

भूपाटला । स्त्री॰ भूपाटल्याम् ॥

भूपाटली । स्त्री॰ भूकुम्भ्याम् । रक्तपुष्पिकायाम् ॥ भुवः पाटली ॥

भूपालः । पुं॰ राज्ञि ॥ भुवंपालयति । पालरक्षणे । कर्मण्यण् ॥ यथा । राज्यंपालयतीनित्यं सत्यधर्मपरायणः । निर्जित्यपरसैन्यानिक्षितिंधर्मेणपालयेत् ॥

भूपुत्री । स्त्री॰ सीतायाम् ॥ भुवः पुत्री ॥

भूपेष्टः । पुं॰ राजादनीवृक्षे ॥

भूबदरी । स्त्री॰ लघुबदर्याम् । क्षितिबदर्याम् । झडबेरी॰ इ॰ भा॰ ॥

भूभर्ता । पुं॰ नृपे ॥ भुवोभर्ता । षष्ठ्यर्थभर्तृशब्दस्ययाजकादित्वात् याजकादिभिश्चेतिसमासः । तेन॰ च पांसृष्टा॰ अव्ययभर्तेतिवत्॰ तत्काभ्योकर्तरीति॰नसमासनिषेधः ॥

भूभुक् । पुं॰ राज्ञि ॥ भुवंभुनक्तिपालयति । भुज॰ । क्विप् ॥

भूभृत् । पुं॰ पर्वते । गोत्रे । गिरौ ॥ महीपतौ ॥ भुवंबिभर्ति । डुभृञ॰ । क्विप् तुक् ॥

भूमा । पुं॰ बहुत्वे ॥ भूमामहान्निरतिशयंब्रह्मेतिपर्यायाः ॰ इतिभाष्यम् । सकलसांसारिकव्यवहाराभावोपलक्षितेतत्त्वे । ब्रह्मणि ॥ यत्रनान्यद्विजानातिनान्यच्छृणोतिच । नान्यत्पश्यतियस्मिन्वैसभूमाप्रोच्यतेश्रुतौ ॥ योभूमासोऽमृतः प्रोक्तः सुखंनाल्पे विचारय ॥ बहोर्भावः । पृथ्वादिभ्यइमनिच्

। बहीलोंयोभूचवहो : ॥ त्रि॰ बहुत्वविशिष्टे ॥

भूमय : । त्रि॰ मृदात्मके । भूमिमये

भूमयी । स्त्री॰ सूर्यपत्न्याम् । छायायाम् ॥

भूमि:। स्त्री॰ स्थानमात्रे वसुन्धरायाम् । क्षितौ । अचलायाम् । रसायाम् । स्थिरायाम् ॥ विष्णुर्भूमिमभ्यज्योवाच । सर्वाधाराभवशुभेसर्वे : सम्पूजितासुध्यम् । मुनिभिर्मनुभिर्देवै:सिद्धैर्दानवादिभि: ॥ अम्बुवाचीत्यागदिनेगृहारम्भप्रवेशने । वापीतडागारम्भे चगृहेचकृषिकर्मणि । तवपूजांकरिष्यन्तिमद्वरेण सुरादय : । मूढायेनकरिष्यन्तियास्यन्तिनरकंचते । इति ॥ अम्बुवाचीत्यागदिनेगृहारम्भप्रवेशने । तद्विन्नदिनेतवपूजांकरिष्यन्तीत्यन्वय: । अस्या : गुणामहाभारते मोक्षधर्मे यथा । भूमेस्थैर्यंगुरुत्वञ्चकाठिन्यं प्रसवार्थता । गन्धोगुरुत्वं शक्तिश्च सङ्घात : स्थापनाधृति : ॥ इति ॥ अस्यार्थ : । स्थैर्यमचाञ्चल्यम् १ । गुरुत्वं पतनप्रतियोगीगुण: २ । काठिन्यम् ३ । प्रसवार्थता॰ धान्याद्युत्पत्तिसामर्थ्यता ४ । गन्ध ५ । गुरुत्वं पिण्डपुष्टि ६ । शक्ति : गन्धग्रहणसामर्थ्यम् ७ सङ्घात : । स्निग्धावयवत्वम् ८ । स्थापना॰मनुष्याद्याश्रयत्वम् ९ । धृति : पाञ्चभौतिकेमनसियोधृत्यंश: १० । इति ॥ षष्टिवर्षसहस्राणिस्वर्गेतिष्ठति भूमिद: । उच्छेत्ताचानुमन्ताचतान्यिनरकंवसेत् ॥ योगिनामवस्थाविशेषे ॥ यथा । निरुद्धे चेतसिपुरा सविकल्पसमाधिना । निर्विकल्पसमाधिस्तुभवेदत्रत्रिभूमिक : ॥ व्युत्तिष्ठतिस्वतस्त्वाद्येद्वितीयेपरबोधित । अन्तेव्युत्तिष्ठतेनैवसदाभवतितन्मय : ॥ एवंप्रागभूमिसिद्धावप्युत्तरोत्तरभूमये । विधेयाभगवद्भक्तिस्तांविनासानसिध्यति ॥ भवन्त्यस्यांभूतानि । भूसत्तायाम् । भुव . क्विदिति॰ मि : ॥

भूमिकदम्ब: । पुं॰ कदम्बविशेषे । भूनीपे । भूमिजे । लघुपत्रे । हस्तपुष्पे । विषघ्ने ॥

भूमिकन्दली । स्त्री॰ कन्दल्याम् । द्रोणपर्ण्याम् ॥

भूमिका । स्त्री॰ रचनायाम् ॥ वेशान्तरपरिग्रहे । रूपान्तरस्वीकारे यथा । हेमचन्द्र : । पाचाधिनाथ्येऽधिकृतास्तत्तद्वेशास्तुभूमिका : । इति ॥ ज्ञानिनामवस्थाविशेषे ॥ यथाहु : । ज्ञानभूमि : शुभेच्छाख्याप्रथमासमुदाहृता । विचारणा द्वितीयाख्यात् तृतीयातनुमानसा । सत्त्वापत्तिश्चतुर्थीस्या ततोऽसंसक्ति

नामिका ॥ पदार्थभावनाषष्ठीसप्तमी तुर्यगास्मृतेति । भूमिकानामचित्तस्यावस्थाविशेषः । अत्रभूमिकाचितयंब्रह्मविद्यासाधनमेव॰ नतुब्रह्मविद्याकोटावन्तर्भावः॰ भेदस्यतत्त्वमुर्त्तिरहसत्वात् । यश्चतुर्थभूमिकांप्राप्तः सब्रह्मविदित्युच्यते । पञ्चमभूमिर्निर्विकल्पासदात्मस्थाः स्वयमेवव्युत्तिष्ठति॰ सोयम्ब्राणोब्रह्मविद्वरः षष्ठभूमौपार्श्वस्थबोधितोव्युत्तिष्ठति॰ सोयंब्रह्मविद्वरीयान् । तदेतद्भूमिद्वयंसुषुप्तिरितिचाभिधीयते ॥ असम्प्रज्ञातप्रतिपादकानियोगशास्त्राणिसप्तमभूमिकाप्राप्तंयोगिन्यवमयम्यस्यन्ति॰ सोयमीदृशोयोगीव्युत्थानरहितोनिर्विकल्पकसमाधिस्थः परमहंसः सप्तमभूमौब्रह्मविद्वरिष्ठइतिचोच्यते॥ इति ॥ भूमिकापञ्चकमप्याहुः । यथा॥ क्षिप्तमूढविक्षिप्तमेकाग्रंनिरुद्धमिति ॥ तत्र॰ आसुरसम्पल्लोकशास्त्रदेहवासनासुवर्त्तमानंचित्तं क्षिप्तभूमिकानिन्द्रातन्द्रादिग्रस्तंचित्तंमूढभूमिका कदाचिद्ध्यानयुक्तंचित्तंक्षिप्ताद्विशिष्टतयाविक्षिप्तभूमिका । तत्रक्षिप्तमूढयोः समाधिस्वशङ्कैवनास्ति॰ विक्षिप्तेतुसमाधिस्वभद्धातदितरत्भूमिकाद्वयंसमाधिः ॥ एकाग्रेमनसिसद्भूतमर्थप्रद्योतयति॰ क्लेशान्क्षिणोति॰ कर्म्मबन्धनानिश्लथयति॰ निरोधमभिमुखीकरोति॰ इतिसम्प्रज्ञातोयोगः एकाग्रभूमिका । सर्ववृत्तिनिरोधरूपासम्प्रज्ञातसमाधिः॰ निरुद्धभूमिकेति ॥

भूमिकुष्माण्डी । स्त्री॰ लताविशेषे । विदार्य्याम् ॥

भूमिखर्ज्जूरिका । स्त्री॰ क्षुद्रखर्ज्जूर्य्याम् ॥ भूमिखर्ज्जूरिकास्वादीदुरारोहान्दुष्पदा । अयस्कम्पफलाकाकर्कटीखादुमस्तका ॥ पिण्डखर्ज्जूरिकास्त्वन्यासादेशेपश्चिमेभवेत् ॥

भूमिखर्ज्जूरी । स्त्री॰ भूमिखर्ज्जूरिकायाम् ॥

भूमिगृहम् । न॰ वश्यातलागृहे ॥

भूमिचम्पकः । पुं॰ पुष्पवृक्षविशेषे । ताम्रपुष्पे । सन्धिवल्ली । द्रुघ- वे भूँइचाँपाः॰ इ॰ भा॰॥ भूच म्पा॰ इ॰ भा॰ ॥ अस्यमूलंव्रणपाककारकम् ॥

भूमिच्छत्रम । न॰ शिलीन्ध्रे ॥

भूमिजः । पुं॰ नरकासुरे । अङ्गारके । कुजे । भौमे ॥ भूमिकादम्बे ॥ मनुष्ये ॥ न॰ गौरसुवर्णे ॥ भूमेर्भौवाजातः । जनी॰ । डः ॥

भूमिजगुग्गुलु । स्त्री॰ आशापुरसम्भवे । दैत्यमेदजे । महिषासुरसम्भवे । आशापुरीगुग्गुल॰ इ॰ भा॰ ॥

सिक्तोसीकाटुरुषाय कायवोतहरस्त था । उमाप्रियश्चभुतघ्नोमेध्यः सौ रभ्यदायकः ॥

भूमिलम्बुः । स्त्री० भूमिजम्बुका याम् । भाद्रेय्याम् ॥ भूमेर्लम्बुः ॥

भूमिजम्बुका । स्त्री० क्षुद्रजम्बाम् । नादेय्याम् ॥ ह्रस्वत्वात्स्वार्थेकन् ॥ यद्वा भूमिलग्नाजम्बुका । शाकपा र्थिवादिः । भूमिलग्नफलत्वात् ॥

भूमिजम्बुः । स्त्री० क्षुद्रजम्बाम् । ह्रस्वफलायाम् । भ्रमरेष्टायाम् । पिकभक्ष्यायाम् । काकजम्बाम् ॥

भूमिजा । स्त्री० जनकात्मजायाम् । सीतादेव्याम् ॥ भूमेर्जाता । जनी० । डः । टाप् ॥

भूमिजीवी । स्त्री० विशि ॥

भूमिदानम् । न० दानोत्तमे । यथा । इत्युभिः सप्ततांभूमियश्गोधूम शालिनीम् । ददातिवेदविदुषेसग भूयोभिजायते । भूमिदानात्परं दानं नभूतंनभविष्यतीति ॥

भूमिदेवः । पुं० ब्राह्मणे । भूदेवे ॥ भूमेर्भूमौवादेवः ॥

भूमिपः । पुं० राजनि ॥

भूमिपक्षः । पुं० वाताश्वे ॥

भूमिपिशाचः । पुं० तालवृक्षे ।

भूमिपिशाची । स्त्री० माधवीलताया म् ॥

भूमिपुत्रः । पुं० चारे । मङ्गले ॥ भूमेः पुत्रः ॥

भूमिमण्डः । पुं० अष्टपादिकायाम् । मदनमाली० धावरमाली० धृ० गो० दे० भा० ॥

भूमिमण्डपभूषणा । स्त्री० माधवील तायाम् । अतिमुक्ते । पुण्ड्रके ॥

भूमिमान् । त्रि० भूमिविशिष्टे । यवादित्वाद्वत्वं न ॥

भूमिरक्षकः । पुं० वाताश्वे ॥

भूमिलाभः । पुं० मृत्यौ । भूमेर्लाभो येन । भूमिप्राप्तौ ॥

भूमिलेपनम् । न० गोमये ॥ भूमेर्लेप नंयेन ॥ भूमेर्लेपे ॥

भूमिवर्द्धनः । पुं० न० शवे ।

भूमिसम्भवा । स्त्री० सीतायाम् ।

भूमिसुरः । पुं० ब्राह्मणे । नरकासुरे । भूमेः सुतः ।

भूमिसुता । स्त्री० जानक्याम् ।

भूमिस्पृक् । पुं० मानवे । वैश्ये । चौरविशेषे । पङ्गौ । खञ्जे ॥ भूमिं स्पृशति । स्पृशस्पर्शे । स्पृशोऽनुदकेक्विन् ।

भूमी । स्त्री० भूमौ । क्षितौ ॥ भवन्ति भूतान्यस्याम् । भूवः किदिति मिः । कृदि कारादक्तिन इति ङीष् ॥

भूमीन्द्रः । पुं० नृपे । राजनि ॥

भूमिरुहः । पुं० वृक्षे । यथा । दीर्घा स्तापयुतायथाशिरसिणीत्रामाद्या यासरायामिन्दयपन्नायथाकुलवधू

दृष्टि : सरोषाप्रिये । छायावाञ्छा तमानवोढवनितावाणीवभूमीरुहा निष्पन्दा : सुचिराद्यथामिलितयो र्यूनोर्मिथोदृष्टय : ॥

भूमीसह : । पुं० द्रुमान्तरे । हारहा तौ ॥ भूमीसहस्तुशिशिरोरक्तपित्त प्रसादन : ॥

भूम्यामलकी । स्त्री० क्षुपविशेषे । बहुपुष्पायाम् । जटायाम् । अध्यण्डायाम् । तामलक्याम् । भुँइआमला इ० भा० ॥

भूम्यामली । स्त्री० तमाल्याम् । चारव्याम् । भूम्यामलक्याम् । भुइँआमला इ०गौ०दे०भा० ॥ अवनेली० इ० भा० ॥

भूम्याहुल्यम् । न० कुटकोसौ । क्षुपे । मार्कण्डीये । महौषधे । भुजितखण्ड० । इ० भा० ॥

भूय : । अ० अधिकारे ॥ पुनरर्थे ॥

भूयान् । त्रि० बहुतरे । प्रचुरे ॥ अपरिमितमहिमनि ॥ अयमनयोरतिशयेनबहु : । द्विवचनविभज्योपपदेतरवीयसुनाविति० ईयसुन् । बहोर्लोपोभू चबहो : ॥ स्त्री० भूयसी अतिमहत्याम् । ङीप् ॥

भूयिष्ठ: । त्रि० प्रचुरे । बहुतमे ॥ अयमेषामतिशयेनबहु: । अतिशायने इष्ठन् । इष्ठस्ययिट्चेति० बहो:परस्येष्ठस्य लोप :० यिडागमश्च० बहो: स्थाने भूरादेशश्च ॥

भूयुक्ता । स्त्री० भूमिखर्जूर्याम् ॥

भूयोभूय: । वारंवारमर्थे ॥ यथा । भूयोभूयोभाविनोभूमिपालान्नत्वानत्वायाचतेरामचन्द्र : । सामान्योयं धर्मसेतुर्नृपाणां कालेकालेपालनीयोभवद्भिरिति ॥

भू : । अ० रेफान्तमव्ययम् । भूर्लोके ॥

भूरि : । पुं० वासुदेवे ॥ हरे ॥ परमेष्ठिनि ॥ न० सुवर्णे ॥ त्रि० प्राज्ये । प्रचुरे ॥ भवति० भूयतेवा । भुवस्तायाम्० प्राप्नोपैः । अदिशदिभूशुभिभ्य : क्रिन् ॥

भूरिगन्धा । स्त्री० मुरानामगन्धद्रव्ये । गन्धाढ्यायां ॥

भूरिगम : । पुं० खरे । गर्दभे ॥

भूरिदावा । पुं० बहुदातरि ॥

भूरिपथ : । पुं० उखयाणत्वयो ॥

भूरिपलितदा । स्त्री० पाण्डुरफल्याम् ॥

भूरिपुष्पा । स्त्री० शतपुष्पायाम् ॥

भूरिप्रेमा । पुं० चक्रवाके ॥

भूरिफेना । स्त्री० सप्तलायाम् । चर्मकषौषधौ ॥ भूरय : फेनायस्या : ॥

भूरिबला । स्त्री० अतिबलायाम् ॥ भूरिबलंसामर्थ्यंयस्याम् ॥

भूरिभाग : । त्रि० महद्भाग्ये ॥

भूरिमल्ली । स्त्री० अम्बष्ठायाम् ॥

भूरिमाय : । पुं० शृगाले ॥ भूरयो मायायस्य ॥

भूरिरस : । पुं० इक्षौ ॥ ॥

भूरिश : । अ० बहुप्रकारार्थे । बहुधा चस्कारकाद्न्यतरस्याम् ॥

भूरिश्रवाः । पुं० चन्द्रवंशीयसोमदत्त पुत्रे ॥ त्रि० बहुयशोविशिष्टे । भूरिप्रचुरश्रवोयशोयस्य : ॥

भूरुण्डी । स्त्री० श्रीहस्तिन्याम् । हस्तिकर्णपलाशायाम् ॥ शाकविशेषइति-ख्यातो । भुवरुण्डयति० चार्कोट यति । रुटिलुटिस्ते यकारो० इत्य च० साधमीयायांङ्स्त्री० रुडिलुडी त्यपरे० इतिपाठान्तरमुणन्यस्तम । कर्मण्यण् ॥

भूरुट् । त्रि० भूरुहे ॥ भुविरोहयति । रुहजन्मनिप्रादुर्भावे । क्विप् ॥

भूरुह : । पुं० वृक्षे ॥ रोहति । रुह-०। इगुपधेतिक : । भुविरुह : सप्तमीसमास : ॥

भूर्ज्ज : । पुं० मृदुत्वचि । भूतद्रे । रथापत्रे । भोजनपत्र इतिभाषा ॥ र्जोभूतयरस्रे प्रकर्षकल्पित्तर-न्नजित् । कषायोराचमन्यमेदोविषहर, मर : ॥ ऊर्जनमूर्ज : ऊ-र्जबलप्राणनयो : । घञ् । भूऊर्जोऽस्य ॥

भूर्ज्जकण्टक : । पुं० संकरजात्यन्तरे । प्रात्याद्ब्राह्मणात्सवर्णायामुत्प-न्ने । भाजन्ये ॥

भूर्ज्जपत्र : । पुं० ) खनाख्यप्रसि-
भूर्ज्जपत्रक: । पुं० ) द्वे । मृदुत्वचि ॥

भूर्मि : । स्त्री० भूमौ । पृथिव्याम् । मरुभूमौ ॥ विभर्त्ति । डुभृञ्० । घृषिपृश्निपार्ष्णिचूर्णिभूर्णीति० नि मस्वं इत्वं निपात्यतथ ॥

भूर्लोक : । पुं० अन्तरीक्षादधोलोके । सप्तद्वीपसमुद्रसन्निवेशविशिष्टे ॥ पृथिव्याम् । मर्त्यलोके ॥ तस्यलक्ष-णं । यथा । पादगम्यन्तुयत्किञ्चित् वस्त्वस्तिपृथिवीमयम् । सभूर्लोकः समाख्यातोविस्तारोस्यमयोदित :॥ इ० वि० पु० २ अंशे ५ अध्याय :॥ विस्तारोमयोदितइति । सर्वतो लो कालोकावधि : पञ्चाशत्कोटि प्रमाण : ॥ भू : सत्ताकोलोया : ॥

भूलग्ना । स्त्री० शङ्खपुष्प्याम् ॥

भूलता । स्त्री० किञ्चुलुके ॥

भूवायु । पुं० आवहाभिधपवने । भूमेर्द्विहोदशयोजनान्यवगाह्यमभ्रमुद्विद्युदाद्यवस्थितिरभोवहि : ॥

भूशय : । पुं० नकुलगोधादौ ॥ वि-ष्णौ ॥ लङ्काप्रतिमार्गान्वेषणार्थं समुद्र प्रतिमार्गाय तद्तुकूलतटे भूमौशेतेदाशरथिरूपेणेतिभूशय । अधिकरणेशेतेरित्यच्प्रत्यय : त थाचरामायणम् । तत सागरवे-लायांदर्भानास्तीर्यराघव । चन्द्र-

तिंप्राङ्मुखःकृत्वाप्रतिशिष्य महो दधेरिति ॥

भूशिलु : । पुं॰ भूकर्बुदारे ॥

भूषणम् । न॰ अलङ्कारे । तद्धारणफलं यथा भूषणं भूषयेदङ्गं यथायोग्यविधानतः । शुचिसौभाग्यसन्तोषदायकं काञ्चनं स्मृतम् ॥ यद्दृष्टिहरं पुष्टिकारं दुःस्वप्ननाशनम् । पापदौर्भाग्यशमनं रत्नाभरणधारणम् ॥ माणिक्यं तरणेः सुजात्यममलं मुक्ताफलं शीतगोर्माहेयस्य च विद्रुमो निगदितः सौम्यस्य गारुत्मतम् । देवेज्यस्य च पुष्परागमसुराचार्यस्य वज्रं शनेर्नीलं निर्मलमन्ययोश्च गदिते गोमेदवैदूर्यके ॥ वास : स्रगम्बररत्नानां धारणं प्रीतिवर्द्धनम् । रक्षोघ्नमर्थ्यं मोजश्च सौभाग्यकरमुत्तमम् ॥ भूष्यति ऽनेन । भूष अलङ्कारे । ल्युट् ॥ भूषयतिवा । क्रुधमण्डार्थेभ्यश्चेति भूषेर्युच् ॥ यतोनांभूषणंज्ञानं सत्वोपोऽहिदिनन्मनाम् । उद्यमः शत्रुहननभूषणं भूतिमिच्छतामिति पारिभाषिकम् ॥

भूषा । स्त्री॰ अलङ्क्रियायाम् । अलङ्कारसाध्यशोभायाम् ॥ भूषणम् । गुरोश्चेत्यत्व : ॥

भूषित : । त्रि॰ अलङ्कृते । मण्डिते ॥ भूष्यतिस्म भूष॰ । क्त : । इट् ॥ भूमावुषित ॥ भुविउषित : स्थितः

भूषिता । स्त्री॰ अलङ्कारैरलङ्कृतायाम् । मण्डितायाम् ॥ टाप् ॥

भूष्णु : । त्रि॰ भविष्णौ । भवनशीलः । भू॰ । ग्लाजिस्थश्चग्स्नुः ॰ चात् भुवः । क्ङितिचेत्यत्र गकारप्रश्लेषाद्गुणाभाव : ॥

भूसुत : । पुं॰ भौमे । मङ्गलग्रहे ॥ नरकासुरे ॥

भूसुता । स्त्री॰ सीतायाम् । जानक्याम् ॥

भूसुर : । पुं॰ ब्राह्मणे ॥

भूस्तृणम् । न॰ भूतृणे । अस्यपर्यायागुणाश्चयथा । गुह्यबीजश्चभूतीकंसुगन्धंगोमयप्रियम् । भूस्तृणन्तु भवेच्छत्रामालातृणकमित्यपि ॥ भूस्तृणंकटुकंतिक्तं तीक्ष्णोष्णं रोचनं लघु । विदाहिशोधनंरुच्यमनिल्यं सु खशोभनम् ॥ अवष्यं बहुविट्कञ्च पित्तरक्तप्रदूषणम् ॥ इति ॥ भुवः तृणम् । पारस्करादित्वात्सुट् ॥ मालवदेशप्रसिद्धे॰शाकविशेषे ॥

भूस्पृक् । पुं॰ मर्त्ये । मनुजे । मनुष्ये ॥ भुवंस्पृशति । स्पृश॰ । क्विन् ॥

भूस्वर्ग : । पुं॰ सुरपर्वते । सुमेरौ ॥

भूस्वामी । पुं॰ भूपतौ ॥ भुवः स्वामी ॥

भूकुंस : । पुं॰ स्त्रीवेशधरनर्त्तके । भ्रकुंसे ॥ पटपुटे सिद्धकौमुद्याम् । पणायर्थकुंसिधातोर्भ्रादिगणत्वात्॰

परच् । भृवाकुंसोभाषयमस्य । पृषोदरादिः ॥

भ्रुकुटिः । स्त्री० भ्रुकुट्याम् । क्रोधादिना भ्रुवः कौटिल्ये ॥ कुटकौटिल्ये । इगुपधात्किदिति० इन् । भ्रुवोः कुटिः । पृषोदरादित्वात्कारः ॥

भ्रुकुटी । स्त्री० भ्रुकौटिल्ये । क्रोधादिना ललाटसङ्कोचने ॥ कुट० । इगुपधादिति० इन् । कृदिकारादिति ङीष् । पृषोदरादित्वाद् कारः ॥

भृगुः । पुं० ब्रह्मणस्त्वचो जातो महर्षिविशेषे । महर्षीणां भृगुरहमिति भगवद्वचनाद् भगवद्विभूतौ । मनुपुत्रे ॥ वङ्के सानवे । यानेभ्यः ष्टाद्रेतसस्तत्पन्नत्वात्भृगुः ॥ हरे । शिवे ॥ शुक्राचार्ये ॥ यमदग्नौ ॥ सानौ । निरवलम्बनपर्वतपार्श्वे । यस्मात् पतने ऽवलम्बनक्रियाविशेषो नास्ति । तत्पर्यायौ । प्रपातः । अतटः । इति ॥ भ्रस्यति० तपसा० भृज्यते वा । भ्रस्ज पाके । प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्चेति० भ्रस्जेः कुप्रत्ययः० सम्प्रसारणं भ्रस्जेः सलोपश्च । न्यङ्क्वादित्वात्कुत्वम् ।

भृगुकच्छः । पुं० शकुकारवानतीर्थन्नस्थानपत्तनविशेषे ॥

भृगुतुङ्गम् । न० तीर्थविशेषे ॥

भृगुपतिः । पुं० परशुरामे ॥

भृगुप्रस्रवणः । पुं० हिमवतः पादे ॥

भृगुभवा । स्त्री० भार्ग्याम् ॥

भृगुषट्कः । पुं० योगविशेषे ॥ लग्नात् षष्ठो भवेच्छुक्रो भृगुषट्क इतीरितः ।

भृगुसुतः । पुं० शुक्राचार्ये ॥

भृगूणांपतिः । पुं० परशुरामे ॥

भृङ्गः । पुं० भ्रमरे । मधुव्रते । भृङ्गराजे ॥ धूम्याटे । कलिङ्गपक्षिणि । फिङ्गा० इ० गौ० दे० भा० भृङ्गवक्षणात्वात्० भृङ्गः ॥ विङ्गे ॥ न० गुडत्वचि । त्वक्पत्रे ॥ अभ्रके ॥ विभक्ति । डुभृञ्० । भृञः किद्गुट्चेति० गन् ॥

भृङ्गकः । पुं० राजवासनपक्षिणि ॥

भृङ्गजम् । न० अगुरुणि ॥

भृङ्गजा । स्त्री० भार्ग्याम् ॥

भृङ्गपर्णिका । स्त्री० सूक्ष्मैलायाम् ॥

भृङ्गप्रिया । स्त्री० वासन्त्याम् । माधवीलतायाम् ॥ भृङ्गाणांप्रियेव ॥

भृङ्गमूलिका । स्त्री० भ्रमरच्छल्याम् लतायाम् ॥

भृङ्गरजः । पुं० भृङ्गराजे ॥ भृङ्गरूप

रजोऽस्य ॥

भृङ्गरजाः । पुं० भृङ्गराजे । भृङ्गद्रुवरजोऽस्य ॥

भृङ्गराज : । पुं० मार्कवे । कुन्तलवर्द्धने । केशरञ्जने । भंगरा० इ० भा० ॥ भृङ्गराज : कटुस्तिक्तो रूक्षोष्ण : कफवातनुत् । केश्यस् त्वच्य : कृमिश्वासकासशोथामपाण्डुनुत् ॥ दन्त्यो रसायनो बल्य : कुष्ठनेत्रशिरोऽर्त्तिजित् ॥ खगपक्षिविशेषे ॥ भ्रमरे ॥ वस्त्रविशेषे ॥ भृङ्ग इव राजते । राजृ दीप्तौ । अच् ॥

भृङ्गराजादिचूर्णम् । न० भैषज्यरत्नावल्युक्ते चूर्णविशेषे ॥ यथा । ग्रन्थोक्तं भृङ्गराजस्य चूर्णं तिलार्द्धकं चामलकार्द्धकं च । सशर्करं भक्षयतां गुडेन पलितव्यरोगो न जरा नरस्य : ॥ अन्यः : पश्येद्गगनरहितो मत्तमातङ्गगामी मूकोवाग्मी श्रवणरहितो दूरशब्दानुसारी । नीरुग् मर्त्त्यो भवति पलितोनीलजीमूतकेशोलोर्यादन्ता : पुनरपि नवा : घोरगौरा भवन्तीति ॥

भृङ्गरिट : । पुं० }
भृङ्गरिटि : । पुं० } शिवद्वारपाले ॥
भृङ्गरीट : पुं० }

भृङ्गरोल : । पुं० कीटान्तरे । वियच्छ्कायाम् । वरोले । हपटपदे । भीमरुल् इ० गौ० भा० ॥

भृङ्गवल्लभ : । पुं० भूमिकदम्बे ॥ धाराकदम्बे ॥

भृङ्गवल्लभा । स्त्री० भूमिजम्ब्वाम् ॥

भृङ्गसोदर : । पुं० केशराजे । नागमारे ॥

भृङ्गानन्दा । स्त्री० यूथिकायाम् ॥

भृङ्गाभीष्ट : । पुं० आम्रवृक्षे । रसाले ॥ न० आम्रमुकुलफलयो : ॥

भृङ्गार : । पुं० कनकालुकायाम् । स्वर्णघटितजलपात्रे । भृङ्गराजे । मार्कवे ॥ बिभर्त्ति जलम् । डुभृ - ञ० । भृङ्गारभृङ्गाराविति साधु : ॥ न० लवङ्गे ॥ काञ्चने ॥

भृङ्गारि : । स्त्री० केविकापुष्पे ॥

भृङ्गारिका । स्त्री० झिल्लिकायाम् ॥

भृङ्गारी । स्त्री० झिल्लिकायाम् । झींगुर इति ख्याते कीटे । भृशमृच्छ पमाराति । राहामे । मूलविभुजादित्वात्क : । गौरादि : । यद्वा । बिभर्त्ति । डुभृञ् । शृङ्गारभृङ्गाराविति० भृञ्शारन् । नुम् । गुण् । इत्यस्य ॥ यद्वा । कर्मणि भृङ्गस्फ - ति । अटती । कर्मण्यण् ॥

भृङ्गाह्व : । पुं० जीवके ॥ भृङ्गराजे ॥

भृङ्गाह्वा । स्त्री० भ्रमरच्छल्ल्याम् ॥

भृङ्गि : । पुं० भृङ्गिरिटि । शिवद्वाःस्थे ॥

भृङ्गिणी । स्त्री० वटीवृक्षे ॥

भृङ्गी । पुं० शिवद्वारपालविशेषे । अस्थिविग्रहे । नाडीदेहे ॥ वटद्रौ ॥

भृङ्गी । स्त्री० अतिविषायाम् ॥ गौरादित्वान्ङीष् ॥

भृङ्गीफल : । पुं० आम्रातकवृक्षे ॥

भृङ्गीश : । पुं० महादेवे । शिवे ॥

भृङ्गेरिटि : । पु० भृङ्गरीटे । भृङ्गिणि ॥

भृन्गेष्टा । स्त्री० काकजम्बाम् । घृतकुमार्याम् ॥ तरुण्याम् ॥ भार्ग्याम् ॥

भृज्जन : । पुं० न०भ्रष्टरीषे । भर्जनपात्रे ॥ भृज्जन्त्यत्र । भृस्जपाचि । भृसूधृक्षस्त्रिभ्यश्छन्दसीतिक्यु न् ॥

भृत: । त्रि० भरिते । धारिते ॥ वेतने गृहीते । भञ् ० । क्त : । भरणीये । पुष्टे ॥

भृतक : । पुं० वेतनग्राहिकर्मकारि । भृतिभुजि । कर्मकरे । वैतनिके । सचचिविध : । यथा । उत्तमस्त्वायुधीयोऽत्रमध्यमस्तुकृषीवल : । अधमोभारवाहीस्यादित्येवं त्रिविधो भृत : ॥ इति । भ्रियतेस्म । भृञ् भरणे । क्त । स्वार्थे क : ॥ यद्वा । भृतिं करोति । तत्करोतीतिणिजन्तात्क्युन् ॥

भृतकाध्यापक : । पुं० अपाङ्क्तेये० द्विजाधमे ॥ भृतक : सन्योऽध्यापक : । अयच्चसर्वान्नं ह्राद्व्यत्वात् ॥

भृतकाध्यापित : । पुं० वेतनं दत्त्वाघ्ठिते । अपाङ्क्तेयेद्विजाधमे । भृतिवेतनम् । तद्ग्राहीभृतक : । भृतक : सन्योऽध्यापित : सतथा ॥

भृति : । स्त्री० भरणे । वेतने ॥ मूल्ये ॥ भ्रियन्तेकर्मकारा अनया । भृञ् भरणे । स्त्रीयांक्तिन्निति क्तिन् । शास्त्रिम् ॥

भृतिभुक् । त्रि० भृतके । वैतनिके ॥ भृतिंवेतनंभुङ्क्ते । भुज० । क्विप् ॥

भृत्य : । पुं० किङ्करे । दासे । भृत्यास्त्रिविधाज्ञेयाउत्तमाधममध्यमा: । नियोक्तव्यायथार्थं पुस्त्रिविधेष्वेवकर्मसु । भ्रियते । भञ् । भृञोऽसंज्ञायामितिक्यप् ॥ त्रि०पोष्ये । अवश्यभरणीयेवृद्धमातापित्रादौ ॥

भृत्या । स्त्री० भृतौ । वेतने ॥ भ्रियन्तेकर्मकराअनया० भरणंवा । भृञ्० । संज्ञायांसमजनिषदनिपतमनविदषुञ्शीङ्भृञिणइतिक्यप् ॥ चिकित्सायां ॥ यथा । कुमारभृत्याकुशलैरतिष्ठित : ॥

भृमि : । पुं० वायुविशेषे । घुरन्धायु० इ० भाषा । जलादिभ्रमणे ॥ भ्रमति० भ्राम्यतिवा । भ्रमुचलनेवा । भ्रमे : सम्प्रसारणञ्चेति० इन्० कित् । भृमिभ्रमणशीलदरिद्रंजनमितिवेदभाष्यम् ॥

भृशम् । न० अतिशये ॥ त्रि० अतिशयान्विते ॥ भृशते । भृशभ्रंशाधः पतने । अन्तर्भावितण्यर्थादिगुपधेतिकः ॥

भृशम् । अ० प्रकर्षार्थे ॥ शोभने ॥

भृषत्-द् । पुं० पाषाणे ॥

भृष्ट : । त्रि० जलोपसेकेनविनापक्वे ॥ भूना० भुजेना० इ० भा० ॥

भृष्टतण्डुल : । पुं० भर्जनविशिष्टधान्यनिकरे । भूनाचावल० इ० भा० सुगन्धि : कफहारुच : पित्तलोभृष्टतण्डुल : ॥

भृष्टमांसम् । न० शूल्ये ॥ भृष्टंचतन्मांसंच ॥

भृष्टयव : । पुं० धानासु । बहुरी० इ० भा० ॥ भृष्टश्चासौयवश्च ॥

भृष्टान्नम् । न० भृष्टतण्डुले ॥

भृष्टि : । स्त्री० भर्जने ॥ शून्यवाटिकायाम् ॥

भेक : । पुं० मण्डूके । वर्षाभ्वि ॥ मेघे ॥ त्रि० भीरौ ॥ बिभेति । ञिभीभये । इण्भीकैतिकन् ॥

भेकट : । पुं० मत्स्यवि० ॥

भेकभुक् । पुं० कुम्भीनसे । सर्पे ॥ भेकान्भुङ्क्ते । भुज० । क्विप् ॥

भेकरावण : । पुं० मेघे ॥ भेकान्रावयति । रुशब्दे । नन्द्यादित्वाल्ल्यु : ॥

भेकल : । पुं० वनस्पतिविशेषे ॥

भेकलि : । पुं० मत्स्यविशेषे । भाङ्गन इ० गौ० दे० भा० प्रसिद्धे ॥ भेकलिर्मधुर : शीतोष्ण : श्लेष्मकारो-गुरु : ॥

भेकी । स्त्री० भेकस्त्रियाम् । शिल्याम् । गण्डूपद्याम् । वर्षाभ्याम् ॥ क्षुद्रमण्डूके ॥ जातेरस्त्रीतिङीष् ॥ मण्डूकपर्ण्याम् ॥

भेड : । पुं० मेषे । भेडा० इ० भा० ॥ वृत्तिरि० ॥

भेडी । स्त्री० भेडस्त्रियाम् ॥

भेत्तृगुणम् । न० भाविधौ ॥

भेत्ता । त्रि० भेदकर्त्तरि ॥ भिनत्ति । भिदिर्० । तृच् ॥

भेद : । पुं० उपजापे । शत्रोरमात्यादीनामुपायेन० परतोविश्लिष्यात्मसात्करणे । ऐकमत्यं सम्भावितानांराजामात्यादीनांभयजननादिनापृथक्करणे ॥ तद्विशेषोयथा । मत्स्यपुराणे । परस्परन्तुयेद्युष्टाःक्रुद्धाभीतावमानिताः । तेषांभेदंप्रयुञ्जीतभेदसाध्याहितेमता : ॥ येतुयंनैवदोषेणपरस्मादपराध्यति । तेतुदोषपाकेनभेदनीयाभृशंततः ॥ आत्मीयंदर्शयेदोषंपरस्माद्दर्शयेद्भयम् । एवंहिदर्शयेद्भिन्नं यथावद्वशमानयेत् ॥ संहताहिविनाभेदंशक्रेणापिसुदुःसहाः । भेदमेवप्रशंसन्तितस्मान्नयविशारदाः ॥ स्वमुखेनाशयेद्भेदंभेदंपर

सुखेनच । परीत्त्यसाधुमन्यन्तो भेदं
परसुखाक्कृतम् ॥ भेदाः स्वकार्य्यं
सुहृद्यक्षुणलैर्य्यैर्भिमेदिताः ।भेदिता
स्ते विनिर्द्दिष्टाने वराजार्थ्यवादिभिः
॥ यन्नः कोपोवद्धिः कीपोयजस्का
तामवीक्षिताम् । यन्तः कोपोम
हास्तवनाशकः पृथिवीक्षिताम्
॥ सामन्तकोपोवाह्यस्तुकोपः प्रोक्तो
मनीषिभिः । महिषीयुवराजाभ्यां
तथासेनापतिर्द्विजः । अमात्याम
न्त्रियश्चैवराजपुत्रास्तथैवच । यन्तः
कोपोविनिर्द्दिष्टोदारुणः पृथिवी
क्षिताम् ॥ याह्यकोपे समुत्पन्ने सुम
हत्यपिपार्थिव । शुद्धान्तस्तुमहा
भागशीघ्रमेश्वर्य्यमाप्नुयात् ॥ अपिच
शक्रसमोराजान्तः कोपे नवश्यति
। यन्तः कोपे समुत्पन्ने तस्माद्रक्षे
न्महीक्षिताम् ॥ परतः कोपमुत्पा
द्यभेदेनविजिगीषुणा । ज्ञातीनां
भेदनं कार्य्यं परेषांविजिगीषुणा ॥
रक्ष्यश्चैवप्रयत्नेनज्ञातिभेदस्तथा
त्मनः । ज्ञातयः परितप्यन्ते सत
तं परितप्ययम् ॥ तथापिते पांकर्त्त
व्यं सुगंभीरेणचेतसा । ग्रहणं दान
मानाभ्यां भेदस्तेभ्योभयंकरः ॥
नह्यातिरनुग्रहणातिनज्ञातिर्द्दिग्घ्
मिच्छति । ज्ञातिभिर्भेदनीयास्तु
रिपवस्तेनपार्थिवैः ॥ भिन्नाहि
शक्याः रिपवः प्रभूताः स्वल्पेन

सैन्येनविहन्तुमाजौ । सुसंहता
नांहितस्तुभेदं कार्य्यं रिपूणांनय
शास्त्रविद्भिः ॥ इतिमात्स्ये राज
धर्मे १८७ अध्यायः ॥ द्वैधे ॥
आपद्यात्मीयानात्मीययोर्भेदः ॥
विशेषे ॥ विदारणे ॥ मन्त्रभेदे
कार्य्यहानिरितिविद्वांसतम् ॥ बि
धे ॥ भिद्यमानभावे । भेदनम् ।
भिदिर् ० घञ् ॥ बिरेके ॥

भेदकम् । न० व्यावर्त्तके । विशेष
णे ॥ त्रि० नाशके । विदारणे ॥
विरेचकौषधादौ ॥ पृथक्कारके
। यथा । भेदयति० अन्यपदार्थ
पृथक्करोतीतिभेदकम् । नाम्ना
श्रितः सौवेयगार्त्यः ॥ अपिना
भेदाभेदकयोः श्लिष्टं संबन्धोन्यो
न्यमिष्यते । द्विष्ठयद्यपिसम्बन्धः
षष्ठ्युत्पत्तिस्तुभेदकादितिभर्त्तृह-
रिः ॥

भेददर्शी । त्रि० अपराधिनि ॥
यथा । यदस्तितन्नज्ञानातियन्नेहा
स्तितदीक्षते । एवं यमपराधोस्य
विद्यते भेददर्शिनः ॥ किस्वाय
त्स्वप्नयोरविद्यान्निभ्रान्तिरूपज्ञा
न० सुषुप्तिसमाध्योर्भ्रान्त्यभावेऽ
नुपलब्धान्मिथ्यात्वंभेदस्यसिद्धमि
त्यनुभवाच्चभेददर्शिनोमिथ्याशद्दि
त्वात्तस्यापराधत्वमितिनिश्चयः ॥

भेदनम् । न० विदारणे ॥ भिदेल्युट्

भैक्षचर्य्या । स्त्री॰ भिक्षासमूहाहरणे ॥

भैक्षजीविका । स्त्री॰ भिक्षयाजीवनोपाये ॥ पैण्डिन्ये ॥ इतित्रिकाण्डशेषः ॥

भैक्षभुक् । त्रि॰ भैक्षाशिनि ॥ भैक्षंभुनक्ति । भुज॰ । कर्त्तरिक्विप् ॥

भैक्षाणः । पुं॰ परिव्राजि । प्राणसन्धारणार्थंयथाशास्त्रंमाधूकरादिभिक्षांकुर्वाणे ॥

भैक्षुकम् । न॰ भिक्षुकसन्दे ॥ भिक्षूणांसमूहः । खण्डिकादित्वादञ् ॥

भैमी । स्त्री॰ दमयन्त्याम् ॥ भीमतिथौ । माघशुक्लैकादश्याम् ॥ भीमोक्तायामिन्धाप्रभेदे ॥ यथा । श्रेष्ठंगोधूमचूर्णंप्रचुरघृतयुतंतन्निलिप्तैर्विशालैर्द्राक्षाखर्जूरशुण्ठीत्वचमरिचयुतंशर्करापूर्णगर्भम् । यत्रताम्रेकटाहेत्वपिठरपटलेपावकैर्मन्ददीप्तैर्धन्यैर्मन्मथकान्तिसुतनपरिवृतैर्भुज्यतेवापनश्रीः । भीमस्येयम् । अण् । ङीप् ॥

भैरवः । पुं॰ शङ्करे । रुद्रे ॥ रागविशेषे ॥ नदविशेषे ॥ भयानकरसे ॥ भैरवपर्य्यन्तइतिप्रसिद्धे ॥ भैरवाचभैरवीदेवी ॥ सिद्धान्तविशेषे ॥ त्रि॰ भयानके । भीषणे ॥ भीरोरिदम् । तस्येदमित्यण् ॥

भैरवी । स्त्री॰ देवताभेदे । चामुण्डायाम् ॥ रागिणीविशेषे । भैरवरागपत्न्याम् ॥

भैषजम् । न॰ भेषजे ॥ लावकपक्षिणि ॥

भैषज्यम् । न॰ औषधे ॥ भिषजमेव । अनन्तावसथेतिहभेषजाञ्ञ्यः ।

भो । अ॰ सम्बोधने ॥

भोक्तव्यः । त्रि॰ भोजनीये ॥ भोज्ये । यथा॰ । यत्नेनभगिनीहस्ताद्भोक्तव्यंपुष्टिवर्द्धनम् ॥

भोक्ता । पुं॰ पत्यौ ॥ शरीरेन्द्रियमनोभिःसंयुक्तआत्मनि । संसारिणि । अवस्थात्रयविशिष्टेजीवे ॥ भोक्तात्मानकर्त्तेतिसाङ्ख्याः ॥ सुखादिभोगकर्त्ता॰ यथा । कर्माणिदेहीभोक्ताचआत्माभोजयितासदा । भोगोविभवभेदश्चनिष्कृतिर्मुक्तिरेवचेति ब्र॰ वै॰ पु॰ ॥ वैश्वानरेग्नौ ॥ सर्वेषांयज्ञानांतपसांचकर्मणांफलदेवतारूपेणचभोगकर्त्तरि ॥ आनन्दमये ॥ सुषेः सुखदुःखमोक्षात्मकान्प्रत्ययान्स्वरूपचैतन्येनप्रकाशयतीतिनिर्विकारेणोपलब्धरि । त्रि॰ पालके ॥ भोगकर्त्तरि । भोजनकर्त्तरिचेतनेदैवदत्तादौ ॥ तस्यप्रकारोयथा । स्नातःसुधौतस्फुटसुन्दरशुक्लधौतवस्त्रःकालधौतचरणःसहपुत्रमित्रैः । सर्व्वोप्रसन्नहृदयोरसपाकवेत्ताभोक्ताविशेषरससंहितमिष्टाम्बेत्तैः कटुलवणयुक्तैश्चारु

स्वावगुणिहते । आसनेप्राङ्मुखो-
भोक्तोपविशेद्वाप्युदङ्मुख: ॥ भुङ्-
क्ते । भुज० । टच् ॥

भोग : । पुं० सुखे ॥ क्षुद्रसुखत्वानु-
भवे ॥ सुखसाधनविषये० पक्कान्नादि
रत्नादौ ॥ महानुत्साहवतामनतु-
तिष्ठतामलसानांभोगप्राप्तिर्लोकिह-
ष्टे तिपूज्यपादा : ॥ सुखादिग्रहणे ।
सुखदु : खानुभवे ॥ धने । अहे :
शरीरे ॥ अहेरितिप्रयोगबाहुल्याभि
प्रायम्०भोगशब्दस्यशक्तिस्तुशरीरमा
त्रे० इत्याकर : ॥ अहे : फणायाम्
॥ पालने । अभ्यवहारे योषिदा-
दिभृतौ । वेश्यादिवेतने ॥ आदिना
हस्त्यश्वादिकर्मकराणांभृतौभाण्डा०-
द्र०भा० ॥ विषये । राज्ये ॥ भोज
नम्०भुज्यतेवा । भुजपालनाभ्यवहा
रयो : । भुजोकौटिल्ये वा । भावे
कर्म्मणिवाघञ् ॥ योगिनोजी न-
हेतौभिक्षाव्यापारे० वर्णाश्रमोचित-
तव्यापारेच ॥ यथा । चित्तस्यभो-
गैर्भागौशास्त्रैचैकंप्रपूरयेत् । गु
रुशुश्रूषयाभागमव्युत्पन्नस्यसंक्रम: ॥
किञ्चिद्व्युत्पत्तियुक्तस्य भागंभोगेन
पूरयेत् । गुरुशुश्रूषयाभागौभागंशा
स्त्रार्थचिन्तया ॥ व्युत्पत्तिमनुयात
तस्यपूरयेच्चेतसोन्वहम् । द्वौभागौ
शास्त्रवैराग्यैर्द्धौध्यानगुरुपूजयेतिव
शिष्ठ : ॥ भूम्यादीनांभोगो यथा ।
त्रिपुरुषभोगमाहव्यास : । प्रपिता
महेनयद्भुक्तं तत्पुत्रे णविनाचतम् ।
तौविनायस्यपित्राचतस्यभोगस्त्रि-
पौरुष : ॥ पितापितामहोयस्यजी
वेच्चप्रपितामह : । त्रयाणांजीवतां
भोगोविज्ञेयस्त्वेकपूरुष : ॥ नार
द: । तथारूढविवादस्यप्रेतस्य व्यव
हारिण : । पुत्रेणसोऽर्थ: संशोध्यो
नतंभोगोनिवर्त्तयेत् ॥ विभवभे-
दे ॥ य० । कांश्चिद्देहीभोक्ताचका
त्माभोजयितासदा । भोगोविभव
भेदश्चनिष्कृतिर्मुक्तिरेवच ॥

भोगगृहम् । न० वासगृहे ॥

भोगदेह । पुं० स्वर्गनरकादिभोगार्थे
सूक्ष्मशरीरे ॥ यथा । कृतेसपिण्डी
करणेनर : संवत्सरात्परम् । प्रेतदे
हंपरित्यज्यभोगदेहंप्रपद्यते० इति ॥

भोगपाल : । पुं० अश्वरक्षके । त्रि०
भोगरक्षके ।

भोगपिशाचिका । स्त्री० क्षुधायाम् ॥

भोगभूमि : । स्त्री० सुखस्थाने ॥ भा
रतवर्षातिरिक्तवर्षे ॥ यथा । अत्रापि
भारतंश्रेष्ठंजम्बुद्वीपेमहामुने । य-
तोहिकर्मभूरेषाततोन्याभोगभूम-
य : ॥

भोगवान् । पुं०अहौ । सर्पे ॥ भोगो
स्त्यस्य । मतुप् । नाट्य । त्रि०
भोगविशिष्टे ॥

भोगवती । स्त्री० नागपुर्याम् ॥ पा-

तालगंगायाम् ॥ ङीप् ॥ वासुकि तीर्थे ॥
भोगसद्म । न० वासगृहे । भोगाय-सद्म ॥
भोगार्हम् । न० धने ॥ भोगायअर्हम् ।
भोगार्ह्यम् । न० धान्ये ॥
भोगावली । स्त्री० नागपुर्याम् । व-न्दिमागधस्तुतौ । वन्दिपाठे ॥
भोगावास : । पु० वासगृहे ॥ भोग-स्थावास : ॥
भोगिक : । पु० भोगपाले । अश्वरक्ष के ॥
भोगिकान्त : । पुं० काम्यलक्षण्य । वायौ ॥
भोगी । पुं० जिह्मगे । भुजङ्गे । सर्पे ॥ भोग : फणीवक्रगतिर्वाऽस्यास्ति । अतइनिठनाविति : ॥ ग्राम-पाले । ग्रामण्याम् । ग्रामाधिपतौ ॥ नृपे । राज्ञि ॥ नापिते ॥ वैया-वृत्तिकरे ॥ त्रि० सर्वै भोगोपकरणै रुपेते ।
भोगिनी । स्त्री० महिषीविज्ञायान्य-राजयोषिति ॥ अतिशयितोभोगो स्त्यस्या : । इन्नन्तान्नान्तलक्षणोङी प् ॥
भोगिवल्लभम् । न० चन्दने ॥
भोगीन्द्र : । पुं० )
भोगीश : । पुं० ) अनंते । नागरा जे । शेषे ॥ वासुकौ ॥ भोगिना-म् ० इन्द्र : ० ईशोवा ॥
भोग्यम् । न० धने ॥ धान्ये ॥ म-णौ ॥ आधिविशेषे । फलभोग्ये ॥ त्रि० भोगार्हे । शब्दादिविषयेषु ॥ भोक्तुमर्ह : । भुजेर्ण्यत् ॥
भोग्या । स्त्री० वेश्यायाम् ॥ भोक्तुम र्हायाम् ॥ टाप् ॥
भोज : । पुं० यादवे ॥ दूरेऽभवन् भो-जवलअगच्छदइतिमाघ : ॥ देश-विशेषे ॥ धारानगरीपतौ । कलिङ्ग सिवेन्द्रपविशेषे ॥ देशविशेषे । भोजकटे ॥
भोजकट : । पुं० रुक्मिनिर्मितपुरे रुक्मिभोजकटनामपुरं कृत्वाऽवस त्तदेतिवि० पु० ॥ देशविशेषे ॥
भोजकटीय : । त्रि० भोजकटदेशोद्भवे ॥ वृद्धाच्छ : ॥
भोजनम् । न० आहारे । निघसे । जेमने । जीवन० इ० भा० ॥ बहूनां पङ्क्त्यावशने ॥ भुज्यते । भुज० । ल्युट् ॥ भोज्यरूपतयाप्रकृतौ ॥ प थ्योभोजनगुणविधानादियथा । भो-जनाग्रे सदापथ्यं जिह्वाकण्ठविशो-धनम् । अग्निसन्दीपनं हृद्यं लव-णार्द्रकभक्षणम् ॥ वायुघ्नं तिन्दुकं रोगोस्त्वयं जौ नोविदाहिपु । आ-रोग्यं कटु तिक्ते पु यलं मांसेपयसु च ॥ अन्नादष्टगुणं पिष्टं पिष्टादष्टगु

भोजनम्

गा.पय : । पयसोऽष्टगुणं मांसं मांसा
दष्टगुणं घृतम् ॥ घृतादष्टगुणं तै-
लं मर्द्दनान्नचभक्षणात् । आहार :
प्रीणन : सद्योबलकृद्देहधारक : ।
फलमादौ भिचाश्नीयाद्भोजनस्य नरो
त्तम : । विनाभोचाफलं तद्वर्ज-
नीयाच कर्कटी ॥ मृणालं बिसशा-
लूकं कन्दे चु प्रभृतीन्यपि । पूर्वमे
वहि भोज्यानि न तु भुक्ता कदाचन ॥
याममध्ये न भोक्तव्यं यामयुग्मं न लं-
ङ्घयेत् । याममध्ये रसोत्पत्तिर्यु-
ग्मेऽतीते बलक्षय : ॥ आयुष्यं प्रा-
ङ्मुखो भुङ्क्ते यशस्यं दक्षिणामु-
ख: । श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋ-
तं भुङ्क्ते ह्युदङ्मुख : ॥ कुर्याद-
न्नेन भागौ द्वावेकं पानेन पूरयेत् ।
वायो : सञ्चारणार्थं च चतुर्थमवशे
षयेत् ॥ दन्तैश्चावगतं चान्नं यैर्वि
ना वहरिज्जलै : । कुर्यादनिर्गतं त
च्चिमुखस्यानिष्टगन्धताम् ॥ भुक्त्वा पा
णितलं घृष्ट्वा चक्षुषोर्यदि दीयते । अ
चिरेणैव तद्वारि तिमिराणि व्यपोह-
ति ॥ भुक्त्वाचम्य करं वामं दत्वा कु-
चौ तत. पठेत् । भुक्तं मयेन्द्रहस्ते
न वैश्वानरमुखेन च ॥ गरुडस्य च क-
ण्ठेन समुद्रस्य च वह्निना । वाता-
पिर्भक्षितो येन पीतो येन महोदधि :
॥ यन्मया खादितं पीतं तदगस्त्यो-
जरिष्यति । पठित्वैतत्सुखासीन:
जर्घं तिष्ठेदनाकुल : । भुक्-
त्वा पादशतं गत्वा वाम पार्श्वेन सं
विशेत् । एवं ह्यधोगतं चान्नं सुखं-
तिष्ठति जीर्यति ॥ भुक्त्वा संविश-
तस्तुन्दं बलमुत्तानशायिन : । आ
युर्वामकसुप्तस्य मृत्युर्धावति धावत :
॥ अपि च । ततो भोजनवेलायां
कुर्यान्मङ्गलदर्शनम् । तत्प्रदक्षि
णं नित्यमायुर्धर्मविवर्द्धनम् । लोके
ऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुता-
शन : । हिरण्यं सर्पिरादित्य आपो
राजा तथाष्टम : ॥ पादुकारोहणं कु
र्यात्पूर्वं भोजनत : परम् । पादरोग
हरं वृष्यं चक्षुष्यं चायुषे हितम् ॥ अ
श्नीयात्तन्मना भूत्वा पूर्वन्तु मधुरं र
सम् । मध्ये लवणाम्लौ पश्चात्कटुतिक्तक
षायकान् ॥ विदाहीन्यन्नपानानि
यानि भुङ्क्ते हि मानव: । तद्विदाह
प्रशान्त्यर्थं भोजनान्ते पय : पिबेत्
॥ एवं भुक्त्वा समाचामेत् ऊर्ध्वग्रहण
पूर्वकम् । भोजने दन्तलग्नानि नि
र्हृत्याचमनं चरेत् ॥ दन्तलग्नमनि
र्हार्यं लेपं मन्ये तदन्तवत् । न तच बहु
श : कुर्यात्यत्नं निर्हरणं प्रति वि
स्तारस्तु न चान्न ॥ अजातागीमलं भुङ्
क्तेऽत्रपीपूयशोणितम् । अहुलातु
कामिं भुङ्क्ते यद्त्वा विड्विभोजन
म् ॥ अघं स केवलं भुङ्क्ते य : पचत्या
त्मकारणात् । इन्द्रियप्रीतिजनकं

दयापाकेविपर्यये दिक्तिनाशाजि : ॥ वालंसुशासिनीवृद्धगर्भिण्यातुरकन्यका : । सम्भोज्यातिथिभृत्यांश्चदम्पत्यो : शेषभोजनम् इतियाज्ञवल्क्य : ॥ नभोजनार्थेस्वे विप्र : कुलगोत्रे निवेदयेत् भोजनार्थेहितेशंसन्वान्ताशीत्युच्यतेबुधैरितिमनुः॥

भोजनपात्रम् । पुं॰ आहारभाजने ॥ हैमंदोषहरंपात्रं चक्षुष्यं राजतंशुचि । कांस्यं बुद्धिप्रदंरम्यं पालाशंच पित्तारकम् ॥

भोजपति : । पुं॰ कंसासुरे ॥ भोजानांक्षत्रियविशेषाणांपति : ॥

भोजपुरम् । न॰ स्वनामाख्यातप्रसिद्धे देशवि॰ ॥

भोजयिता । त्रि॰भोजनकारयितरि ॥ भोगप्रयोजके । पुं॰ ईश्वरे ॥

भोजविद्या । स्त्री॰ ऐन्द्रजालिकविद्यायाम् ॥

भोजाधिप : । पुं॰ कंसासुरे ॥ भोजानामधिप : ॥

भोज्यम् । न॰ भोजनीयद्रव्ये । यत्कवलंजिह्वयाविलोड्यनिगीर्यते सूपौदनादितस्मिन् । पायसादौ ॥ वि षयमात्रे ॥ भुज्यते । भुज॰ । पदस्योर्ण्यत् । भोज्य भक्ष्ये इतिण्यतिकवर्गाभावोनिपातनात् ॥ चाहाराद्धिकं भोज्य ब्रह्माण्डविभवेपिन ॥ भक्ष्य दयायंप्राप्यभोजने ॥ स्वाराज्यसाम्राज्ययोर्भोगभाक्त्वे ॥ सोमे ॥

भोज्यवित् । पुं॰ सूपकारे ॥ सूपकारोहिभोज्यंवस्तुत्वेनजानाति ॥

भोज्यसम्भवः । पुं॰ शरीरस्थरसधातौ ॥

भोज्या । स्त्री॰ भोजराजगोत्रापत्ये स्त्रियि ॥ क्रौड्यादिभ्यश्च स्त्रभोजक्षत्रियि॰ इत्युक्ते : ष्यङादेश : । ष्यङचाप् ॥

भोट : । पुं॰ भोटाङ्गे । भोटान्ते ॥

भोटाङ्ग : । पुं॰ स्वनामख्यातप्रसिद्धे देशविशे॰ । भोटान्॰ इ॰ भा॰ प्र॰॥

भोटान्त : । पुं॰ देशविशेषे ॥ यथा । काश्मीरात्पूर्वभागेकामरूपात्तुपश्चिमे । भोटान्तदेशोदेवेशिमानसेशात्पदक्षिणे ॥

भोभो । अ॰ सम्बोधने ॥

भोलि: । पुं॰ वत्सरोगे । उष्ट्रे ॥

भो : । अ॰ सम्बोधने । विषादे ॥ प्रश्ने ॥ भाति । भा॰ । बाहुलकात् डोस् ॥

भौत : । पुं॰ देवले । भूतयज्ञे । न॰ भूतसङ्घे । भूतानांसमूह : । भिक्षादित्वा॰ त्रि॰ भूतसम्बन्धिनि ॥

भौतिक : । पुं॰ स्वामौ ॥ शिवे ॥ सर्वविशेषे ॥ यथा । अष्टविकल्पोदैवस्तैर्यग्योनिश्चपञ्चधाभवति । मानुष्यश्चैकविध : समासतोभौतिक : सर्ग : ॥ भौतिकाप्राकृतसर्ग

सत्वैतन्योत्कर्षनिष्कर्षतारतम्याभ्यां मूर्धोमध्यभावेनचैविध्यम् । यथा । ऊर्ध्वंसत्त्वविशालस्तमोविशालश्चमूलतः सर्गः । मध्येरजोविशालोब्रह्मादिस्तम्बपर्यन्तः॥न० मुक्तायाम् ॥ त्रि० भूतसम्बंधिनि॥ रूपादिषु ॥ चक्षुरादिषु ॥ शरीरादिषु ॥

भौती । स्त्री० तस्याम् । रात्रौ । रजन्याम् ॥

भौत्य : । पुं० भूतिसुते : मुनौचतुर्दशमनौ ॥

भौम : । पुं० कुजग्रहे । मङ्गले । नरकासुरे ॥ अम्बरे ॥ रक्तपुनर्नवायाम् ॥ न० पार्थिवविशेषे ॥ भौममम्भोनिगदितंप्रथमं त्रिविधंबुधैः । जाङ्गलंपरमानूपंततः साधारणंक्रमात् ॥ भौमानामक्षसांप्राप्येयदृशंप्रातरिष्यते । भौमत्त्वंभिम्नंत्वच्यतस्तेषांमहानुगाः ॥ त्रि० भूमिभवे । तत्रे । अन्नमयभूमिकार्ये ॥ भूमेरयम् । शिवादित्वादण् ॥ भूमौभवति शैषिकोण् ॥ भूमेरिदम् । तस्येदमित्यण् ॥

भौमवार : । पुं० पञ्चवाराख्यांजद्धाध्यायम् ॥

भौमन : । पुं० विश्वकर्मणि ॥

भौमरत्नम् । न० प्रवाले ॥

भौमावास्या । स्त्री० सोमवतीतिविख्यातायाममायाम् । यथा । अमावास्यांभवेद्वारोयदिभूमिसुतस्यच । गोसहस्रफलंदद्यात्स्नानमात्रेणजाह्नवीतिव्यास : ॥

भौमी । स्त्री० सीतायाम् । जानक्याम् ॥

भौरिक : । पुं० कनकाध्यक्षे ॥ भूरिणि । सुवर्णेनियुक्त : । तत्रनियुक्तइतिठक् ॥

भ्रंश : । पुं० अध : पतने ॥

भ्रंस : । पुं० भ्रंशे ॥

भ्रकुंस : । पुं० स्त्रीवेशधारिणिनर्त्तके । भ्रुकुंसे ॥ पटपुटेतिदण्डकेक्वाभाषार्थकुंसिधातोर्भ्रुरादिग्रन्तादेरच् । भ्रुवाकुंसोभाषणमस्य । इकोह्रस्वोङ्योगालवस्येतिसूत्रे० च भ्रकुंसादीनामितिवार्त्तिकस्यचकारेणैनविधीयतइतिव्याख्यानान्तराद्० भ्रकुंस : ॥

भ्रुकुटि : । स्त्री० क्रोधादिनाभ्रुवःकौटिल्ये । भ्रुकुट्याम् ॥ कुटकौटिल्ये । इगुपधात्किदिति० इन् । भ्रुवो : कुटि : । इकोह्रस्वइत्यत्र० अभ्रकुंसादीनामितिवार्त्तिकेनाकारोविधीयते ॥

भ्रकुटी । स्त्री० भ्रकुटी । कुटेरिन्नन्त० कृदिकारादितिङीष् ॥ भ्रुवोःकुटी ॥ इकोह्रस्वइतिसूत्रे० च अभ्रकुंसादीनामितिवार्त्तिकस्य०-

भ्रकारोनेनविधीयतद्रूलर्थादिकारः ॥

भ्रमः । पुं॰ अम्बुनिर्गमे । प्राकारगृह भित्तिपुजलनिर्गमनजाले ॥ कुन्दाख्यशिल्पियन्त्रे ॥ चरख॰ द्र॰ मा॰ भ्रमणे. भ्रान्तौ । मिथ्याज्ञाने । मिथ्यामतौ । व्यसनहेतौ ॥ मार्विनश्यत्ययं भोगोमहेतासुखरोत्तरम् । माविघ्नाः प्रतिबध्नन्तुधन्वोऽस्माऽस्मादितिभ्रमः ॥

भ्रमणम् । भ्रमुअनवस्थाने । भावे घञ् ॥ नद्यादावधस्थलस्योर्ध्वनिःसरणे ॥ भ्रमन्निजलान्यनेन । इल श्चेतिघञ् । नोदात्तोपदेशस्येति वृद्ध्यभावः ॥ देहेन्द्रियाद्यध्यासे ॥ न्यायमते॰ भ्रमस्तनामान्तरमप्रमा । भ्रमोद्विविधः । विपर्यासः॰ संशयश्च । आद्योयथा । देहेआत्मबुद्धिः॰ शङ्खादौपीततामतिः । स्वानिश्चयरूपा ॥ द्वितीयोयथा । किंस्विन्नरोवा॰ स्थाणुर्वेत्यादिबुद्धिः । तस्यकारणम् । पित्तदूरत्वमोहभयादिनानाविधदोषः । यथा । अप्रमाचप्रमाचेतिज्ञानंद्विविधमुच्यते । तच्छून्येतन्मतिर्यास्यादप्रमासाप्रकीर्त्तिता ॥ तत्प्रपञ्चोविपर्यासः संशयोपिप्रकीर्त्तितः । आद्योदेहेष्वात्मबुद्धिः शङ्खादौपीततामतिः ॥ भवेन्निश्चयरूपासासंशयोथप्रदर्श्यते । । किंस्विन्नरोवास्थाणुर्वेत्यादिबुद्धिस्तुसंशयः ॥ तदभावाप्रकाराधीस्तत्प्रकारातुनिश्चयः । समं शयोभवेद्वाधीरेकत्राभावभावयोः ॥ साधारणादिधर्मस्यज्ञानंसंशयकारणम् । दोषोऽप्रमायाजनकः प्रमायास्तुगुणोभवेत् ॥ पित्तदूरत्वादिरूपोदोषोनानाविधः स्मृतः । द्र॰ भा॰ प॰ ॥

भ्रमणम् । न॰ अनवस्थितौ ॥ गमनविशेषे । पर्यटने ॥

भ्रमणी । स्त्री॰ कारण्डिकायाम् । जलौकायाम् ॥ अधीश्वितुः क्रीडायायाम् । अधीशितुः क्रीडादौ ॥

भ्रमत्कुटी । स्त्री॰ तृणादिकृते ॥ कावावसि । अङ्गमञ्चाम् ॥

भ्रमरः । पुं॰ कीटविशेषे । मधुपे । मधुव्रते । द्विरेफे । षट्पदीके ॥ कामुके ॥ वेधमभ्रस्ते । यथा॰ द्र॰ मा॰॥ भ्रमति । भ्रमु॰ । अर्त्तिकमिभ्रमिचमिदेविवासिभ्यश्चिदित्यरः ॥

भ्रमरकः । पुं॰ भृङ्गे । मधुलिहि ॥ गिरिके । वालमूषिके ॥ चूर्णकेशे । अलके । ललाटलम्बितचूर्णकुन्तले ॥ जलभ्रमे ॥ भ्रमरइव । इवेप्रतिकृताविति कन् ॥ भ्राम्यतिवा । भ्रमु॰ अर्त्तिकमीत्यरः । स्वार्थेकन् ॥

भ्रमरकीटः । पुं॰ कीटान्तरे । कुम्भारी॰ द्र॰ मा॰ ॥

भ्रमरच्छल्ली । स्त्री॰ लताविशेषे । भृङ्गाढ्यायाम् ॥ भृङ्गच्छल्लीचकटुका

वित्ताद्दीपनरोचनीति० रा० नि०

भ्रमरप्रियः। पुं० धाराकदम्बे ॥

भ्रमरमारी। स्त्री० मालवदेशप्रसिद्धपुष्पवृक्षविशेषे। मांसपुष्पिकायाम् ॥

भ्रमरविलसितम्। न० भ्रमरविलसितायाम्। म्भौन्लौगःस्याद्भ्रमरविलसितम् ॥

भ्रमरविलसिता। स्त्री० त्रिष्टुप् ११ छन्दःप्रभेदे ॥ यथा। मोगौनौगो भ्रमरविलसिता ॥ य० मुग्धे मानंपरिहरनचिरात्ताकण्यन्ते सफलयतुहरिः। फुल्लाकर्मौभ्रमरविलसिताभाविभौभांकलयतिकिमुताम् ॥

भ्रमरा। स्त्री० भ्रमरच्छल्याम् ॥

भ्रमरातिथिः। पुं० चम्पके ॥

भ्रमरानन्दः। पुं० वकुले। अतिमुक्तके। रक्ताम्लाने ॥

भ्रमरालकः। पुं० भ्रमरके। कुरले। ललाटस्थितचूर्णकुन्तले ॥

भ्रमरावलिका। स्त्री० भ्रमरावल्याम् ॥

भ्रमरावली। स्त्री० अतिशर्करीप्रभेदे ॥ भुजसङ्गतगङ्गसुवर्णलसल्लया०कर पुष्पसुगन्धवरीरसनारुचिरा। काम कदयनूपुरचारुतरालयतिभ्रमरावलिकाभुजगाधिपतुल्लिखिता ॥ यथा। सखिसम्प्रतिकम्प्रतिमौनमिदंविहितम्० मदनेनधनुःसशरंसुकरं निहितम्। नलिनालिनिकिरणमालिनिमानकया० रतिनायकशायक

दुःखमुपैतितथा ॥

भ्रमरिका। स्त्री० बालानांक्रीडाविशेषे। येनभूरपिभ्रमतीवभाति। भ्रमरीमाली० इ० भा० ॥

भ्रमरी। स्त्री० भ्रमरयोषिति। भौंरी० इ० भा० ॥ षट्पद्याम् ॥ जतुकायाम् ॥ पुत्रदाल्याम् ॥ भ्रामर्याःस्थाने ॥

भ्रमरेष्टः। पुं० श्योनाकप्रभेदे ॥

भ्रमरेष्टा। स्त्री० भूमिजम्ब्वाम्। भार्ग्याम् ॥

भ्रमरोत्सवा। स्त्री० माधवीलतायाम् ॥

भ्रमासक्तः। पुं० शस्त्रमार्जके ॥

भ्रमिः। स्त्री० भ्रमणे ॥ जलनिःसरणमार्गे ॥ यन्त्रविशेषे ॥ भ्रमण म्। भ्रमु०। इक्कृष्यादिभ्यः ॥ भ्रमेः सम्प्रसारणञ्चेतीन्। बाहुलकात्सम्प्रसारणाभावः ॥

भ्रमितः। त्रि० घूर्णिते। भ्रमणकारिते ॥

भ्रमी। त्रि० भ्रमविशिष्टे ॥

भ्रष्टः। त्रि० गलिते। च्युते। इत्यादितः पतिते ॥ यथाद्भ्रष्टातीर्थयात्रामुगच्छेत्तस्याद्भ्रष्टोरीरयंवैतथैव। योगभ्रष्टः सम्प्रतिस्वगच्छेद्राज्याद्भ्रष्टोमृगयांवैतथैव ॥

भ्राजः। पुं० कात्यायनप्रणीतश्लोके। भ्राजानामश्लोकाद्गतिमहाभाष्यम् ॥

भ्राजकम्। न० पित्ते ॥

भ्राजमानः। त्रि० दीप्यमाने ॥

भ्राजिष्णुः। त्रि० अलङ्काराजिनादी

प्रियुक्ते ॥ दीप्तिशालिनि । विभ्रा
जि ॥ भ्राजते । तच्छील : । भ्राज
दीप्तौ । भुवश्चे तिचकारात्० भ्राजे
रपिदृप्याच् ॥ स्वप्रकाशचिद्रूपे ॥
भ्राता । पुं० सहोदरे ॥ भ्राजते० वि
भर्ति वा । भ्राज् डुभृञ्० । वा ।
नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृ
पितृदुहितृ । इतिसाधुः ॥
भ्रातरौ । पुं० २०० सहोदराभ्रातृभ
गिन्यौ : । भ्राताचस्वसाच । । भ्रा
तृपुत्रौस्वसृदुहितृभ्यामित्येकशेष :
स्वसाचभ्राताचेतिवा ॥
भ्रातृकम् । त्रि० भ्रातुरागतेधनादौ
॥ ऋतष्ठञ् ॥ क्लीपि० भ्रातृकौ ॥
भ्रातृयोग्ये ॥
भ्रातृज : । पुं० भ्रातृपुत्रे ॥ भ्रातुर्जात
। पञ्चम्यामितिडः ॥
भ्रातृजा । स्त्री० भ्रातृपुत्र्याम् । भ्राती
यायाम् ॥ टाप् ॥
भ्रातृजाया । स्त्री० भ्रातृपत्न्याम् ।
प्रजावत्याम् ॥ भ्रातुः जाया ॥
भ्रातृपत्नी । स्त्री० प्रजावत्याम् ॥ भ्रा
तापतिर्यस्याइतिविग्रहे० नित्यंस
पत्न्यादिष्विति० भ्रातृपतिशब्दस्य
नान्तादेशे० ऋन्नेभ्यइतिङीप् ॥
भ्रातृपुत्र : । पुं० भ्रातृजे ॥
भ्रातृभगिन्यौ । स्त्री० भ्रात्रौ ॥ भ्रा
ताचभगिनीच ॥
भ्रातृवल : । त्रि० भ्रातृमति ॥ भ्रा
ताऽस्यास्ति । अन्येभ्योपिदृश्यतइ
ति० वलच् । संज्ञामित्यनुवृत्तेर्वल
इतिनदीर्घ : ॥
भ्रातृव्य : । पुं० भ्रातृपुत्रे ॥ भ्रातु
रपत्यम् । भ्रातुर्व्यच्च ॥ शत्रौ ॥
व्यन्सपत्ने ॥
भ्रातृश्वशुर : । पुं० पतिज्येष्ठभ्रात
रि । जेठ० भाशुर० इ० भा० ॥
भ्रातृस्थानम् । न० सहोदरगृहे ॥ लग्ना
त्तृतीयभवने ॥ भ्रातुः स्थानम् ॥
भ्रात्रीय : । पुं० भ्रातृजे ॥ भ्रातुरपत्य
म् । भ्रातुर्व्यच्चेति० चाच्छः ॥
भ्रान्त : । पुं० मत्तहस्तिनि ॥ राजधुस्तू
रे ॥ न० भ्रमणे ॥ त्रि० भ्रान्ति
ते । भ्रान्तिमापन्ने ॥ अद्वितीय-
ब्रह्मतत्त्वमज्ञात्वमित्यदातदा । भ्रा
न्तापवाखिलास्तेषां मुक्ति : क्वा
पासुन्मम ॥ भ्रमे : कर्त्तरिक्त : ।
अनुनासिकस्यक्विझलो : क्ङिति०
इ० दीर्घ : ॥
भ्रान्ति : । स्त्री० भ्रमे । मिथ्यामतौ
। अतस्मिंस्तद्ज्ञाने ॥ युक्तिहीनप्र
काशत्वाद्भ्रांतेर्नैवास्तिलक्षणम् ।
यदिस्याल्लक्षणं किञ्चिद्भ्रान्तिरेवन-
सिध्यति ॥ भ्रान्तिभाजिभवतिक्वचि
द्वेक : ॥ भ्रमणे । अनवस्थितौ ॥
भ्रमणम् । भ्रमु० । क्तिन् । अनुना
सिकस्येतिदीर्घ : ॥
भ्रान्तिदर्शनम् । न० असाधर्मसाधनत्व

बुद्धौ ॥ साधनेप्यसाधनत्वबुद्धौ ॥ भ्रान्त्यादर्शनम् ॥ शुक्तिकायांरजतवद्विपर्ययज्ञाने ॥

भ्रान्तिमान् । त्रि॰ भ्रान्तिविशिष्टे ॥ भ्रान्तिरस्यास्ति । मतुप् ॥ ङीपि॰ भ्रान्तिमती ॥ पुं॰ अलङ्कारविशेषे ॥ भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने । तद्दिति॰ अन्यदप्राकरणिकंनिर्दिश्यते॰ तेनसमानमर्थादिदप्राकरणिकमाधीयते । तस्यतथावि धत्वहष्टौसत्यांयत्प्राकरणिकतया-संविदनम्॰सभ्रान्तिमान् । नचैषरूपकम्प्रथमातिशयोक्तिर्वा॰तत्रवस्तुतोभ्रमस्याभावात् । इत्वार्थानुगमेनसंभ्रायाः प्रहर्षे स्फुटस्पष्टमेव प्रतिपन्नत्वात् । उदाहरणम् । कपालेमार्जारः पयइतिकराल्लेढिशशिनस्तरुच्छिद्रप्रोतान्बिसमितिकरी सङ्कलयति।रतान्ते तल्पस्थान्हरति वनिताप्यंशुकमितिप्रभामत्तश्चन्द्रो जगदिदमहोविभ्रमयति ॥

भ्रान्तिहर : । पुं॰ मन्त्रिणि ॥ त्रि॰ भ्रमनाशके ॥

भ्रामक : । पुं॰ जम्बुके । फेरौ ॥ धूर्त्ते ॥ सूर्यावर्त्ते ॥ अश्मप्रभेदे । चुम्बक॰ इ॰ भा॰ प्र॰ ॥ त्रि॰ भ्रमजनके ॥

भ्रामर : । पुं॰ चुम्बक॰ इ॰ प्र॰ पाषाणे । भ्रामके ॥ न॰ शुक्लवर्णे म धुनि ॥ भ्रमरैः कृतम् । क्षुद्राभ्रमरैत्यादिनाऽण् ॥ किञ्चित्सूक्ष्मैःप्रसिद्धेभ्यः षट्पदेभ्योलिभिश्चितम् । निर्मलंस्फटिकाभंयत्तन्मधुभ्रामरंस्मृतम् ॥ भ्रामरंरक्तपित्तघ्नं मूत्रजाड्याकरंगुरु । स्वादुपाकमभिष्यन्दिविशेषात्पिच्छिलंहिमम् ॥ रतबन्धान्तरे । यथा । तत्कटिंसमधिरूढवल्लभः स्याद्भ्रामरादिपद्मसंस्थितिस्थित : । चक्रवद्भ्रमतिकुञ्चितचित्तोभ्रामरंनिगदितंसमुखतम् ॥ नृत्यविशेषे । रासे । मण्डलनृत्ये । हल्लीसे ॥ त्रि॰ भ्रमरसम्बन्धिनि ॥ अण् ॥

भ्रामरी । त्रि॰ अपस्मारिणि ॥ इति कुल्लूकभट्टः ॥

भ्रामरी । स्त्री॰ पार्वत्याम् ॥

भ्रामित : । त्रि॰ आघूर्णिते ॥

भ्राष्ट्र : । पुं॰ भर्जनपात्रे । अम्बरीषे । भडसां॰ इ॰ भाड॰ इ॰ भा॰ ॥ भ्रज्ज्यतेऽत्र । भ्रस्जपाके । भ्रस्जिगमिनमिहनिविश्यशांवृद्धिश्चेति॰ष्ट्रन्॰ सद्धिश्च ॥

भ्रियमाण : । पुं॰ पोष्यमाणे ॥

भ्रुकुंस : । पुं॰ भ्रूकुंसे ॥ भ्रूकुसे । स्त्रीवेशधारिणिनर्त्तके । नचनिआ॰ इ॰ भा॰ ॥ भ्रुवाकुंसोभाषणमस्य । इकोह्रस्वोऽङ्योगालवस्य तिभ्रूशब्दस्यउवङ्भाविनामव्ययानार्थ ति

वक्तव्यमितिनिषेधोक्तरपठितेन । अभ्रुकुंसादीनामितिवक्तव्यमिति वार्त्तिकेनसन्निषेधाद्ध्रस्वः ॥ एवं भ्रुकुटिशब्देपिबोध्यम् ॥

भ्रुकुटिः । स्त्री॰ भ्रूकुटी । भ्रूकुव्याम् । क्रोधादिनाललाटसङ्कोचने ॥ कुटेरिगुपधात्किदितीन् । भ्रुवोः कुटिः । भ्रुकुंसवत्प्रक्रिया ॥

भ्रुकुटी । स्त्री॰ भ्रुकुटी । भ्रुवोः कौटिल्ये ॥ कुटेरिगुपधादितीन् । कृदिकारादितिङीष् । भ्रुवोः कुटी ॥ अभ्रुकुंसादीनामितिवा र्त्तिकाद्ध्रस्वः ॥

भ्रूः । स्त्री॰ नेत्रोपरिभागस्थरोमराज्यां चिह्निकायाम् । भौं॰ इ॰ भा॰ ॥ भ्रमु॰ । भ्रमेर्डूः । टिलोपः ॥ यद्वा । भ्रमति । भ्रमुचलने । भ्रमेर्डूः ॥ यद्वा । भ्राम्यति । क्विप् । ऊङ् मादीनामिति॰ गम : क्वाविन्यच वार्त्तिकेन॰मलोपऊङादेशः ॥

भ्रुकुंसः । पुं॰ भ्रूकुंसे । भ्रुकुंसे । नर्त्तनिजा॰ इ॰ भा॰ ॥ भाषणा र्थकसुरादिश्यन्तात्कुसेरच् । भ्रुवाकुंसोभाषणमस्य । इकोह्रस्वो ऽङ्योगालवस्येतिसूत्रे॰इयङुवङ् भाविनाम् धानाम्नेतिवार्त्तिका द्धस्वनिषेधः ॥

भ्रुकुटिः । स्त्री भ्रुकुव्याम् ॥ भ्रुवोः कुटिः इयङुवङ्भाविनामिति निषेधाद्ध्रस्वोनभवति ॥

भ्रुकुटी । स्त्री॰ भ्रुकुव्याम् । भ्रुकुटी ॥ कुटेरिगुपधादितीन् । कृदिका रादितिङीष् । भ्रुवोः कुटी । इयङुवङ्भाविनामितिह्रस्वनि षेधः ॥

भ्रूणः । पुं॰ स्त्रीगर्भे । उदरस्थजन्तौ ॥ शिशौ । अर्भके ॥ गर्भिण्याम् ॥ श्रोत्रियद्विजे ॥ भ्रूण्यते । भ्रूण आशाविशङ्कयोः । घञ् ॥

भ्रूणहत्या । स्त्री॰ गर्भस्थबालकहनने ॥ यथा । निर्विवाहं कृतं यैर्नकरो तिचतुर्थकम् । कुलानिपातयेत्स सभ्रूणहत्यामवाप्नुयात् ॥

भ्रूणहा । त्रि॰ गर्भस्थबालकहन्तरि ॥ भ्रूणं हतवान् । हन॰ । ब्रह्म भ्रूणवृत्रेषु क्विप् ॥ ब्रह्मणपि ॥ भ्रूणघ्न॰ परिहाप्रपचनोऽयम् इतिव्याख्यानात् ॥

भ्रूभङ्गः । पुं॰ भ्रूविक्षेपे । भ्रुवः कौटिल्ये ॥ भ्रुवोभङ्गः ॥

भ्रेषः । पुं॰ अधःपाते । यथोचि तात्॰ भ्रंशे ॥ भ्रेषणम् । भ्रेषृच लने । घञ् ॥ चलने ॥

भ्रेषणम् । न॰ चलने ॥

भ्रौणहत्यम् । न॰ भ्रूणघ्नोभावे ॥ ष्यञ् । दाण्डिनायनेतिनिपातना त्तकारादेशः ॥

† —॰— †

मः। पुं॰ मकारे॥ यमे॥ समये॥ विषे॥ मधुसूदने॥ चन्द्रशेखरे॥ शम्भौ॥ ब्रह्मणि॥ चन्द्रमसि॥ मन्त्रे॥ मङ्गले॥ त्रिगुरौ॰ऽऽऽ॰॥

मंहिष्ठः। त्रि॰ महनीये। पूजनीये॥

मकरः। पुं॰ नक्रे। यादःप्रभेदे। मगर॰ इतिभाषाप्रसिद्धे॰ भ्रषाणांमध्ये भगवद्विभूतौ॥ निधिप्रभेदे॥ दशमराशौ। चालोकिरे॥ कृतान्ति। कुञ्चिसायाम्। पचाद्यच्। मनुष्याणांकरः। पृषोदरादिः॥ यद्वा। मङ्कते। मकिमण्डने। अच्। आगमशास्त्रस्यानित्यत्वान्नुम्। मकं राति। राडाने। आतोनुपर्सितकः॥ दर्पचोऽप्युक्तः सारस्वतकोषे॥ अहंद्युर्णे॥

मकरकुण्डलम्। न॰ मकराकृतिकर्णाभरणे॥

मकरकेतनः। पुं॰ कामदेवे॥ मकरः केतनं यस्य सः॥

मकरध्वजः। पुं॰ कंदर्पे। चनङ्गे॥ मकरोनक्रोध्वजोयस्य सः॥ रससिन्दूरविशेषे। चन्द्रोदये॥ तदयारणप्रकारोन्यत्ररसेन्द्रचिन्तामणौ॥

मकरन्दः। पुं॰ पुष्परसे॥ मकरमपि द्यति॰कामजनकत्वात्। दोऽवखण्डने। चातोनुपसिकः। पृषोदरादिः॥ यद्वा। मकरमप्यन्दति। अदिबन्धने। कर्मण्यण्। शकन्ध्वादिः॥ कुन्दपुष्पवृक्षे॥ न॰ किञ्जल्के॥

मकरमुखी। स्त्री॰ प्रणाल्याम्। पयसःपद्व्याम्॥

मकरन्दवती। स्त्री॰ कृष्णवृन्तायाम्। पाटलापुष्पे॥ मधुविशिष्टायाम्॥

मकरव्यूहः। पुं॰ मकराकृतिवत्सैन्यविन्यासे॥ वराहव्यूहविपर्ययेणमकरव्यूहोभवति। तेनाऽग्रे यथा क्षोभयन्नभयेसलिलगच्छेत्॥

मकराकरः। पुं॰ समुद्रे॥ मकराणामाकरः॥

मकराकारः। पुं॰ महाकरञ्जे। पक्वपत्रे॥

मकराङ्कः। पुं॰ समुद्रे॥ कामदेवे॥

मकराधिपः। पुं॰ शनियष्टे॥ मकरस्यराशिविशेषस्याधिपः॥

मकरालयः। पुं॰ पर्वते॥ मकराणां मकरोपलक्षितानांजलजन्तूनामालयः॥

मकरी। पुं॰ समुद्रे॥ मकराः सन्त्यस्मिन्। अतइनिठनाविति॰इनिः॥

मकुटम्। न॰ मुकुटे। किरीटे॥ मङ्कतेऽनेन। मकि॰। बाहुलकादुटः। आगमशास्त्रस्यानित्यत्वान्नुम्॥

मकृतिः । स्त्री० शूद्रशासने ॥
मकुरः । पुं० मुकुरे । दर्पणे ॥ वकुलद्रुमे ॥ कुलालदण्डे ॥ कोरके ॥ मङ्कते । मकि० । मकुरदर्दुरादिसाधुः ॥
मकुलः । पुं० न० मुकुले ॥ वकुलद्रुमे ॥
मकुष्ठः । पुं० वनमुद्गे । मोठ० इ० प्र० व्रीहिविशेषे ॥ मकुष्ठोवाससलोयाहीकषपित्तहरोलघुः । वांतिजिन्मधुरः पाकेक्रमिकृज्ज्वरनाशनः ॥ चि० म०षरे ॥
मकुष्ठकः । पुं० वनमुद्गे । मयुष्ठके । मकुष्ठे ॥ मङ्कते० मकु व्यतिवा । मणि० । बाहुलकादुत्तमभावश्च । तिष्ठति । ष्ठा० । कुन् । मकुष्ठासौष्ठकश्च । पूर्वपदादिति षः ॥
मकूलकः । पुं० मुकुलके । लघुदन्त्यामोषधौ ॥ मङ्कते । मकि० । स्वर्णपिक्षादिभ्यऊरोलचाविति० पिक्षादित्वादूलच् । स्वार्थेकन् ॥
मकलः । पुं० शूलरोगविशेषे ॥ यथा । सूतायाहृच्छिरोबस्तिशूलमक्कल संज्ञितम् । यवक्षारं पिवेत्तत्र मस्तुनोष्णोदकेनवा ।
मक्का । स्त्री० खुराशाभिधे देशे ॥
मक्कुलम् । न० शिलाजतुनि ॥
मक्केशः । पुं० ) खुराशानदेशस्थे
मक्केश्वरः । पुं० ) शिवे ॥

मक्षोलः । पुं० शिलाधातौ । सितोपले । मक्षोल० खडियामाटी० गोलू० इ० भा० ॥
मक्षः । पुं० स्वदोषाच्छादने ॥
मक्षवीर्य्यः । पुं० पियालवृक्षे ॥
मक्षिका । स्त्री० कीटविशेषे । गन्धलोलुपायाम् । वमनीयायाम् । मक्खी० इ० भा० ॥ मशति । मशमर्थे रोषकृतेच । इनिमशिभ्यां सिकन् ॥ मक्षतिवा । मक्षरोषसङ्घाते । क्वुन् । स्त्रत्वम् ॥
मक्षिकामलम् । न० सिक्थके ॥
मक्षीका । स्त्री० मक्षिकायाम् ॥
मखः । पुं० यज्ञे ॥ मखन्तिदेवायत्र अनेनवा । मख गतौ । हलश्चेति० घञ् । संज्ञापूर्वकत्वान्नवृद्धिः ॥ यद्वाक्वचिदपवादविषयेप्युत्सर्गोभिनिविशते० इतिघञ्विषयेपिघः सोपि मखः ॥ यद्वा । मह्यते । मह० । नहिर्हलोपश्च० महेर्घे तिखोहलोपश्च ॥
मखत्राता । पुं० श्रीरामचन्द्रे ॥ मखानांत्राता ॥
मखवह्निः । पुं० प्रणीते । यज्ञाग्नौ ॥
मखानलः । पुं० महावीरे । यज्ञाग्नौ ॥
मखान्नम् । न० पद्मबीजाभे । पानीयफले । मखाना० इ० भा० ॥ मखान्नं पद्मबीजस्यगुणैस्तुल्यंविनिर्दिशेत् ॥

मखासुहृत् । पुं० शिवे । मखस्यदक्ष यज्ञस्यचसुहृत्०शत्रु: ॥

मगश : । पुं० त्रिगुरौ०ऽऽऽ: ॥

मगध : । पुं० वन्दिनि ॥ मागधे । वंशपरम्पराशंसके ॥ मगध्यति०या चते । मगधपरिवेष्टने । कण्ड्वादिर्य गन्त: । अच् । यस्यहलइतियलोप: ॥ मगधा : पुं०भूम्नि० कीकटदेशे ॥ यथा । व्यासेश्वरंसमारभ्यतप्तकु ण्डान्तकं शिवे । मगधाख्योमहादेशो यात्रायांनहिदुष्यति ॥ दक्षोत्तरक्र मेणैवक्रमास्कीकटमागधौ ॥ मगधा नांनिवासोजनपद : ० मगधा : । निवासेऽप्योजनपदेलुप् । लुपियुक्त वद्भाव : ॥

मगधा । स्त्री० पिप्पल्याम् ॥

मगधेश्वर : । पुं० जरासन्धनृपे । म गधदेशाधिपमात्रे ॥ मगधानांदेश विशेषाणामीश्वर : ॥

मगधोद्भव : । त्रि० मगधदेशजाते ॥

मगधोद्भवा । स्त्री० पिप्पल्याम् ॥ मग धेसद्भवोयस्य ॥

मग्न : । त्रि० जलान्त: प्रविष्टे । आ प्लुते । स्नाते ॥ मज्जति । टुमस्जो शुद्धौ । क्त । ओदितश्चेति०निष्ठा नत्वम् । तस्यासिद्धत्वात्०स्कोरिति सलोप : । चो : कु : ॥

मघ : । पुं०द्वीपान्तरे ॥ देशान्तरे । म ग०नामकर्म्मव्याख्याने ॥ न० पुष्प विशेषे ॥

मघवा । पुं० इन्द्रे । शक्रे ॥ मह्यतेपू ज्यते । महपूजायाम् । श्वन्नुक्षन् पूषन्प्लीहन्निल्यादिना०कनिन् । कवि रितिमनोरमायांस्पष्टम् ॥ निपा तनात्०हस्यघोवुगागमश्च । मघवा नौ०मघवान : ॥ मघवाबहुलमिति मितिषादेशपक्षेतु० मघवान्मघ वन्तौ० मघवन्त : ० इत्यादिबो ध्यम् ॥ जिनानांचक्रवर्त्यन्त र्गतचक्रवर्त्तिविशेषे ॥

मघवती । स्त्री० इन्द्राण्याम् ॥

मघा । स्त्री० दशमनक्षत्रे ॥ तज्जात स्यफलंयथा । कठोरचित्त: पितृमातृ भक्तस्तीव्रस्वभावस्त्वनघ्यविद्य : चे व्यन्सभयस्यमघाऽनघ : स्यान्मति: सदारातिविनाशदक्ष: ॥ बहुवचना न्तोप्ययंदृश्यते ॥ यथा मघोदकेमथा द्धं चयद्धण्प्रच्छादनेतथा । पितर: स्प हयन्त्यष्टमष्टकासुमघासुचेति ॥ म घायांपिण्डदानेनज्येष्ठपुत्रोविनश्य तीतिवाक्यवचनात्तोपि ॥ औषधविशे षे ॥

मघाभव : । पुं० शुक्रग्रहे ॥

मघाभू : । पुं० शुक्राचार्य्ये ॥

मघी स्त्री० धान्यविशेषे ।

मघोनी । स्त्री० इन्द्राण्याम् ॥

मद्गुर : । पुं० दर्पणे । मुकुरे । मङ्कते मकि० । बाहुलकादुरच् ॥

मङ्खि: । त्रि॰ शठे ॥ मङ्खते । मङ्खि॰ । वङ्क्र्यादित्वात्साधु: ॥

मङ्घणम् । न॰ जङ्घात्राणे ॥ इति हारावली ॥

मङ्क्षु । अ॰ शीघ्रे ॥ भृशार्थे । मज्जति । टुमस्जोशुद्धौ । बाहुलकात् उ: । मस्जिनशोरितिनुम् । स्कोरितिसलोप: ॥

मङ्घुषम् । न॰ जङ्घात्राणे ॥ इति त्रिकाण्डशेष: ॥

मङ्ग: । पुं॰ नौमस्तके ॥ मङ्गति । मङ्गिसर्पणे । पचाद्यच् ॥

मङ्गल: । पुं॰ अङ्गारके । कुजे । इत्यमरः ॥ अस्य धारणस्य फलं यथा । जय: प्रतापी क्षितिपालसम्मोरथप्रियोवक्रवचा: सरोष: । सत्यान्वित: शूरतमप्रवेताकुजस्यवारेप्रभवोमनुष्य: ॥ न॰ कल्याणे ॥ सर्वार्थरचणे ॥ अभीष्टिताभिप्रेतार्थसिद्धौ ॥ यत्खलु क्रियमाणमेवमन: प्रह्लादनं समीहितसाधनञ्चतन्मङ्गलमुच्यतइतिव्याख्याकारा: ॥ आधीनं मङ्गलं यावन्मुनिर्दिष्टोवापित मङ्गलमित्यालङ्कारिकोक्त: काव्यादिमुखे क्रियमाणे ॥ यथाहभगवान् भाष्यकार: । मङ्गलादीनिमङ्गलमध्यानिमङ्गलान्तानिशास्त्राणिप्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषाणिच भवन्तिचाध्येतारश्चप्रवक्तारोभवन्तीति मङ्गलानुष्ठानप्रयोजनानि ॥ प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् । एतद्धिमङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभि: ॥ लोकेऽस्मिन् मङ्गलान्यष्टौब्राह्मणोगौर्हुताशन: । हिरण्यं सर्पिरादित्यआपोराजातथाष्टम: ॥ एतानिसततं पश्येन्नमस्येदर्चयेच्च य: । प्रदक्षिणन्तुकुर्वीत तथाप्यायुर्न हीयते ॥ अपिच । रोचनं चन्दनं हैमंमृदङ्गं दर्पणं मणिम् । गुरुमग्निं तथासूर्यं प्रात: पश्येत्सदाबुध: ॥ मङ्गति॰ दुरदृष्टमनेन । मगिसर्पणे । गतौवा । मङ्गेरलच् ॥ अशुभानिनिराचष्टे तनोतिशुभसन्ततिम् । स्मृतिमात्रेण यत्पुंसां ब्रह्मतन्मङ्गलं विदुरितिविष्णुपुराणम् ॥ त्रि॰ कल्याणवति ॥

मङ्गलघटम् । न॰ मेषराशौ । इति करार्णौ ॥ मङ्गलस्यतृतीयपञ्चमगृहम् ॥

मङ्गलचण्डिका । स्त्री॰ ) दुर्गायाम् ॥
मङ्गलचण्डी । स्त्री॰     ) यथा । प्रधानांशस्वरूपाचदेवीमङ्गलचण्डिका । प्रकृतेर्मुखसम्भूतासर्व्वमङ्गलदासदा । सृष्टौमङ्गलरूपाचसंहारेकोपरूपिणी । तेनमङ्गलचण्डीसापण्डितै: परिकीर्त्तितेतिभागवतम् ॥

मङ्गलच्छाय: । पुं॰ प्लक्षद्रुमे ॥

मङ्गलपाठकः । पुं॰ स्तुतिपाठके । वन्दिनि ॥

मङ्गलप्रदा । पुं॰ दुर्गायाम् ॥ हरिद्रायामिति केचित् ॥ त्रि॰ मङ्गलदातरि ॥

मङ्गलप्रस्थः । पुं॰ भारतवर्षस्थपर्वतान्तरे ॥

मङ्गलमालिका । स्त्री॰ स्तोभेदे ॥ मङ्गलायामालिका ॥

मङ्गला । स्त्री॰ उमायाम् । कात्यायन्याम् ॥ गयायां मङ्गलाख्यदेवी गौरी ॥ सितदूर्वायाम् ॥ साध्व्याम् ॥ करञ्जभेदे ॥ हरिद्रायाम् ॥ नीलदूर्वायाम् ॥ हृत्ताष्टम्यादिविशेषे ।

मङ्गलागुरु । न॰ अगुरुचतुष्टयान्तर्गतागुरुविशेषे ॥ यथा । मङ्गल्यामङ्गिकागन्धा मङ्गलागुरुवाचकाः । मङ्गल्यागुरुशिंशिपागन्धाद्याथो गन्धाह्निका ॥

मङ्गलाचरणम् । न॰ ग्रन्थादारम्भे मङ्गलकरणे ॥ मङ्गलाचरणं शिष्टाचारात्फलदर्शनाच्छ्रुतितश्च वश्यं कर्त्तव्यमित्याहुर्व्याख्याकाराः ॥

मङ्गलारुहा । स्त्री॰ दूर्वायाम् ॥

मङ्गलिकाक्षीरम् । न॰ असाहश्य कथायाम् ॥

मङ्गल्यः । पुं॰ त्रायमाणायाम् ॥ अश्वत्थे ॥ बिल्वे ॥ मसूरके जीरके ॥ नारिकेले ॥ कपित्थे ॥ रीठाकरञ्जे ॥ न॰ दधनि ॥ चन्दने ॥ मङ्गलागुरुणि ॥ सिन्दूरे ॥ स्वर्णे ॥ त्रि॰ शिवकरे ॥ रुचिरे ॥ साधौ ॥ मङ्गलेसाधुः । तत्र साधुरितियत् ॥

मङ्गल्यकः । पुं॰ मसूरे ॥ स्वार्थे कन् ॥

मङ्गल्यकुसुमा । स्त्री॰ शङ्खपुष्प्याम् ॥ मङ्गल्यानिकुसुमान्यस्याः ॥

मङ्गल्यनामधेया । स्त्री॰ जीवन्त्याम् । शाकश्रेष्ठायाम् ॥

मङ्गल्या । स्त्री॰ मल्लिगन्ध्यगुरुणि ॥ शम्याम् ॥ अधःपुष्प्याम् ॥ मिश्याम् ॥ शुक्लवचायाम् ॥ रोचनायाम् । प्रियङ्ग्वाम् ॥ शङ्खपुष्प्याम् । माषपर्ण्याम् ॥ जीवन्त्याम् ॥ ऋद्धिनामौषधौ ॥ वचायाम् ॥ हरिद्रायाम् ॥ चीडायाम् ॥ दूर्वायाम् ॥ मङ्गलेसाधुः । तत्रसाधुरितियत् ॥ गौर्याम् । शिवायाम् । भवान्याम् ॥ शोभनानिचर्शप्राप्तियादेषोदद्दते हरे । भक्तानामार्त्तिहरणीमङ्गल्यातेनसास्मृता ॥

मङ्गिनी । स्त्री॰ नावि । नौकायाम् ॥

मचर्चिका । स्त्री॰ प्रशस्ते ॥ मांशंसुंचर्चति । चर्च अध्ययने । ण्वु

त् ॥ यथा । प्रशस्तोवाह्मण :० ग्राह्मणमचर्चिकाकारकठिशब्दत्वात्० प्रशंसावचनैर्येतिसमास : ॥
मच्छ : । पुं० मत्स्ये ॥
मच्छिका । स्त्री० मज्जायाम् ॥ मच्छै वस्त्रार्थे च ॥
मज्जकृत् । न० चर्म्मणि ॥
मज्जा । पुं० वृक्षसारे । इयादिकस्यम स्थिरभागे ॥ फलमज्जगुणायथा । यस्ययस्यफलस्य वीर्यं भवतियादृशम् । तस्यतस्यैववीर्यं यमज्जान मपिनिर्दिशेत् ॥ अस्थिमध्यगतधातौ । अस्थिसारे ॥ मज्जस्वरूपमाह । अस्थियत्स्वाग्निनापक्वं तस्यसारोऽर्ध्वोघन : । य : स्नेहवत् पृथग्भूत : समज्जा त्यभिधीयते ॥ स्थानमस्य स्थूलास्थिषु विशेषेण मज्जात्त्वभ्यन्तरेस्थित : । इति ॥ अस्यगुणायथा । बलशुक्ररसश्लेष्म मेदोमज्जाविवर्द्धन : । मज्जाविशेषतोऽस्थ्नाच बलकृत्स्नेहनेरित : ॥ मज्जरसस्थिषु । ट मस्त्वोक्तौ । भ्वन्तचिन्नितिसाधु : ॥ शिरोस्थिमध्ये पिण्डितस्नेहे । मस्तिष्के ॥
मज्जनम् । न० स्नाने ॥ मज्जत्यनेन । ट मस्जो० । बहुलमन्यत्रापीति युच् ॥ मज्जायामितिशब्दचन्द्रिका ॥
मज्जासमुद्गम् । न० वीजे । शुक्रे ॥
मज्जसमुद्भव : । पुं० शुक्रे ॥
मज्जा । स्त्री० इघसारे । अस्थिगत धातौ ॥ मज्जते : पचाद्यजन्तात् टाप् । मज्जोक्तामज्जयासहेति० द्विरूप : ॥
मजजाल : । पुं० भूमिजम्बुकाली ॥
मजजारस : । पुं० शुक्रे ॥
मजजासारम् । न० जातीफले ॥
मजजिया । स्त्री० मज्जकायाम् ॥
मञ्च : । पुं० खट्वायाम् ॥ कार्यं वंशे । मांचा० मांभा० इ० भो० ॥ उच्चम ण्डपविशेषे ॥ दोलायमानं गोविन्दं मञ्चस्थं मधुसूदनम् । रथस्थं वामनं दृष्ट्वा पुनर्जन्मनविद्यते इति पुराणम् ॥ मञ्चते । मविधारणोच्छ्रायपूजनेषु । पचाद्यच् ॥
मञ्चक : । पुं० इन्दुकोपे । उच्चमण्डपे ॥ खट्वायाम् ॥
मञ्चाश्रय : । पुं० मत्कुणे ॥
मञ्चमण्डप : । पुं० मञ्चरक्षार्थकुटीरे । क्षुद्रङ्गी ॥
मञ्चिका । स्त्री० आसन्द्याम् ॥
मञ्जर : । पुं० वल्लरी ॥ मुक्तायाम् ॥ तिलकद्रुमे ॥ वल्याम् । लतायाम् ॥
मञ्जरि : । स्त्री० वल्लर्याम् ॥ मञ्जु त्वरयति । ऋगतौ । अचइ : । शकादि : ॥
मञ्जरी । स्त्री० तिलकद्रुमे । स्थूलमुक्तायाम् ॥ वल्लरी ॥ तुलस्यामुष्टौ ॥

घ् ॥
मञ्जरीनम :। पुं० वेतसवृक्षे ॥
मञ्जा । स्त्री० मञ्जर्याम् ॥
मंजि :। पुं० मंजर्याम् ॥
मञ्जिका । स्त्री० वारसुन्दर्याम् । वेश्यायाम् ॥
मञ्जिफला । स्त्री० कदल्याम् ॥
मञ्जिष्ठा । स्त्री० विकसायाम् । जिङ्ग्याम् । समङ्गायाम् । मजीठ० इ० भा० प्र० औषधौ ॥ मञ्जिष्ठा मधुरातिक्ताकषायस्वर्य्यवर्ण्यकृत् । गुरुरुष्णाविषश्लेष्मशोथयोन्यक्षिकर्णरुक् । रक्तातीसारकुष्ठास्रविसर्पत्रणमेहनुत् ॥ मञ्जौशोभनेवर्णे तिष्ठति । इ० । सुपिस्थइतिकः । अस्याम्त्रितिपत्वम् ॥ यद्वा । अतिशयनेतमविष्ठनी ॥
मञ्जी । स्त्री० मञ्जर्याम् ॥
मञ्जीर :। पुं० मन्थानदण्डरज्जुबन्धनार्थस्तम्भे । कुटरे ॥ पुं० न० नूपुरे ॥ मञ्जति । मञ्जिधुमौ० सौत्रः । वाहुलकादीरन् ॥ मूर्वधरे०ऽ, ॥
मञ्जरीरा । स्त्री० वर्णवृत्तान्तरे ॥
मञ्जु :। त्रि० मनोज्ञे ॥ मञ्ज्यते । मजि० । वाहुलकात् उः ॥
मञ्जुकेशी । पुं० श्रीकृष्णे ॥ त्रि० मनोज्ञचिकुरविशिष्टे ॥
मञ्जुकेशी । स्त्री० स्वर्गवेश्याभेदे ॥
मञ्जुगमना । स्त्री० हंस्याम् ॥ त्रि० सुन्दरगामिनि ॥
मञ्जुघोष :। पुं० शिवे । उपास्यदेवताविशेषे ॥ पूर्वजिने ॥ बुद्धानां देवताभेदे ॥ मञ्जुः घोषः शब्दोऽस्य ॥ शोभनशब्दे ॥ त्रि० शोभनशब्दवति ॥
मञ्जुपाठक :। पुं० शुके । कीरे ॥ त्रि० सुन्दरपाठकर्त्तरि ॥
मञ्जुप्राण :। पुं० ब्रह्मणि ॥
मञ्जुभद्र :। पुं० पूर्वजिनविशेषे ॥ ज्ञानदर्पणे । मञ्जुघोषे ॥ शिवे ॥
मञ्जुभाषिणी । स्त्री० अतिजगतीछन्दः प्रभेदे ॥ यथा । सजसाजगौचयदिमञ्जुभाषिणी ॥ अमृतोर्मिशीतलकरेणलालयंस्तनुकान्तिरोचितविलोचनोत्करे । प्रियतंकलानिधिरसौतिमश्चौमुदमच्युते व्यधितमञ्जुभाषिणी ॥ सुनन्दिनीतिप्रभौ ॥
मञ्जुमणि :। पुं० पुष्पराग । पोखराज० इ० भा० ॥
मञ्जुल :। पुं० जलरङ्कौ ॥ न० जलाशये । शैवाले ॥ निकुंजे ॥ त्रि० मञ्जौ ॥ मञ्जु० मञ्जुत्वंलाति । ला० । कः ॥ मञ्जुमञ्जुलमत्यक्षास्मिनृपा । सिध्मादित्वाल्लच् ।
मञ्जुवक्त्र :। त्रि० सौम्याननयुक्ते ॥
मंजुवाक् । त्रि० मधुरवचने ॥
मञ्जुश्री :। पुं० मञ्जुघोषे ॥ म-

मञ्जुर्मनोज्ञार्थीर्थस्य ॥

मञ्जुषा । स्त्री० मञ्जूषायाम् । पिटके ।

मञ्जूषा । स्त्री० पिटके । दार्वादिनिर्मितपेटके ॥ पाषाणे । प्रस्तरे ॥ मञ्जिष्ठायाम् ॥ हिरण्यादिनिधे पाधारे ॥ मञ्जस्यनया । टुमस्जो मस्जेर्नुम्बेच्छ्यम् ॥

मटची । स्त्री० मर्दनहेतुभूतपाषाणष्टादौ ॥ कणन्याम् ॥

मटस्फटि : । पुं० दर्पारम्भे ॥

मट्टम् । न० रुद्रमस्तके ॥

मठ : । पुं० छात्रादिनिलये ॥ मठम्तयत्र । मठमदनिवासयोः हलश्चेतिघञ् । संज्ञापूर्वकत्वान्नवृद्धि : ॥ यद्वा । मठतिनिवासयति । पचाद्यच् ॥ मांठ० इतिख्यातेपक्वान्नविशेषे ॥ यथा । समितामर्दयेदाज्ये र्लिनापिचसन्नयेत् । तस्मात्तुवटकांस्त्वापचेत्सर्पिर्विनीरसम् ॥ एलालवङ्गकर्पूरमरिचाद्यैरलङ्कृते । मज्जयित्वासितापाकेततस्तच्चसमुद्धरेत् ॥ अयंप्रकार : ससिद्धोमठइत्यभिधीयते ॥ मठस्तुहृष्योवृष्योवल्यः सुमधुरोगुरुः । पित्तानिलहरोरुच्योदीप्ताग्नीनांसुपूजित : । समिता शर्करासर्पिर्निर्मिताचपरोपिये । प्रकाराअमुनातुल्यास्तेपिचैतद्गुणा : स्मृता : ।

मठर : । पुं० मुनिविशेषे । शौण्डे ॥ मन्यते । मनज्ञाने । मनुतेवा । मनुअवबोधनेवा । बाहुलकादरन्प्रत्ययस्तिष्ठन्तादेशश्च ॥

मडक : । पुं० मडुवा० इ० प्र० धान्ये

मड्डु : । पुं० वाद्यप्रभेदे मज्जति० रस्मिन्शब्दाभवा । टुमस्जोशुद्धौ ॥ मृगय्यादयश्चेतिउणादिसूत्रेनिपातनान्मस्जेरप्रत्ययस्तुः । पृषोदरादि : ॥ डमरुवमद्दतस्मड्डुकइत्युच्यते ॥ चुचुसा० इ० गौडेषुयस्यप्रसिद्धि ॥

मड्डुक : । पुं० मड्डुवाद्ये ॥ स्वार्थे क : ॥ मर्दले ॥

मणि : । पुं० स्त्री० अश्मजातौ । रत्ने ॥ सुक्तादौ ॥ अजागलस्तने ॥ लिङ्गाग्रे ॥ अलिञ्जरे ॥ योन्यग्रभागे ॥ स्तने । मणिमन्धे ॥ मणति । मण शब्दे । सर्वधातुभ्यइन् ॥

मणिकम् । न० अलिञ्जरे , मांट० इ० भा० प्र० ॥ मणति । मण० । वुन् । स्वार्थेयावादित्वात्कन् । संज्ञायांकोवा ॥

मणिकार : । पुं० मणिकारे ॥

मणिकर्णिका । स्त्री० काश्यन्तर्गतप्रधानतीर्थे ॥ हरस्योविश्वेश्वरोदेवो यत्रतस्यांमणिकर्णिका ॥

मणिकर्णिकेश्वर : । पुं० काश्यन्तर्गतशिवलिङ्गविशेषे ॥ मणिकर्णिकाया : ० मणिकर्णिकायांवाईश्वर:

मणिकाननम् । न० कण्ठे ॥ रत्नवने
मणिकार: । पुं० वैकटिके । मणिघटितालङ्कारादिकर्त्तरि । जौहरी इ० भा० । मणिकार० इतिच ॥ मणिं करोति । कृ+अण्० । कर्मण्यण् ॥ न्यायचिन्तामणिकर्त्तरि ॥
मणिकूट: । पुं० पर्वतविशेषे ॥ यथा । मणिकूटस्याथगिरेर्मध्यमादनकस्य च । मध्येसयत्तिलोहित्योब्रह्मपुत्र: समाश्रित: ॥ ब्रह्मद्वीपस्थेगिरिविशेषे ॥
मणिखनि: । स्त्री० मणेराकरे ॥ मणे: खनि: ॥
मणिगुणनिकर: । पुं० अतिशर्करी १५ प्रभेदे ॥ यथा । ननमसनियति रिति० मणिगुणनिकर: । यथा । नरकरिपुरवतु० निखिलसुरगति० रमितमहिमभरसहजनिवसति: अनिशधिमणिगुणनिकरपरिचितिः सरिदधिपतिरिवधृततनुविभव: ॥
मणिग्रीव: । पुं० कुवेरात्मजे ॥ मणिरिवग्रीवायस्य ॥ त्रि० रत्नकन्धरे ॥
मणिच्छिद्रा । स्त्री० मेदायाम् ॥ ऋषभाख्यौषधौ ॥
मणितम् । न० रतिकूजिते । मैथुनकालीनशब्दे ॥ रतिकालिकस्त्रीणांकण्ठकूजितविशेषे ॥ मणनम् । मण० । भावेक्त: ॥
मणितारक: । पुं० सारसपक्षिणि ॥

मणिद्वीप: । पुं० क्षीराब्धिमध्येपद्मरागादिमणिमयान्तरीपे । त्रिपुरसुन्दर्यावासस्थाने ॥ भुवनेश्वर्या: स्थानम् इ० देवीगीता । ब्रह्मलोकादूर्ध्वभागेसर्वलोकोस्तिय: श्रुत: । मणिद्वीप: सएवास्तियत्रदेवीविराजते ॥ सर्वस्मादधिकोयस्मात्सर्वलोकस्तत: स्मृत: । पुरापराम्बयैवायंकल्पितोमनसेच्छया । सर्वादौनिजवासार्थंप्रकृत्यामूलभूतया । कैलासादधिकोलोकोवैकुण्ठादपि चोत्तम: । गोलोकादपिसर्वस्मात् सर्वलोकोधिक: स्मृत: । नैतत्समंत्रिलोक्यांतुसुन्दरंविद्यतेक्वचिदित्यादिनादेवीभागवतेद्वादशस्कन्धे १० अध्यायेऽस्यवर्णनंद्रष्टव्यं ॥
मणिभाग: । पुं० तीर्थविशेषे ॥
मणिपर्वत: । पुं० गिरिविशेषे ॥
मणिपुष्पक: । पुं० सहदेवस्यपाण्डवस्य शङ्खे ॥
मणिपूरम् । न० षट्चक्रान्तर्गतनाभिमध्यस्थेदशदलेतृतीयेचक्रे ॥ समणिवच्छिन्नं तत्पद्मं मणिपूरंतथोच्यते ॥ देशविशेषे ॥
मणिबन्ध: । पुं० प्रकोष्ठपाण्यो: सन्धिस्थाने । कारचन्थी । कलाई इ० भा० । हस्तमूले ॥ मणिर्बध्यतेऽत्र । बन्धअधिकरणे घञ् । न० ॥ वृहती ८ छन्द: प्रभेदे । यथा ।

आदितुरीयं पञ्चमकं षष्ठमथान्त्यं स्या
द्गुरु यं तु । इन्द्रियवेदैश्छिन्नति-
स्तन्मणिबन्धं प्राहफणी ॥ मणिमध्य
मितिनामान्तरम् ॥

मणिबन्धनम् । न० हस्तमूले ॥

मणिभद्र : । पुं० जिनानां पूर्वयक्षवि
शेषे । यक्षे । कुबेरसेनापतौ ॥

मणिभूमि : । स्त्री० कुट्टिमे । रत्नख
नौ ॥

मणिमञ्जीरम् । न० रत्नमयनूपुरे ॥

मणिमण्डप : । पुं० रत्नमयगृहे ॥

मणिमध्यम् । न० बृहती ९ छन्दोभे
दे । मणिबन्ध ॥ लक्षणं यथा । स्या
न्मणिमध्यं चेद्भसजा: । यथा । का
लियभोगाभोगगतस्तन्मणिमध्यस्फो
टतनुर्वा । चित्रपदाभो नन्दसुतश्चारु
ननर्त्त स्मेरमुख : ॥

मणिमन्थम् । न० सैन्धवलवणे ॥ पर्व
तविशेषे ॥

मणिमान् । त्रि० मणिविशिष्टे । रत्न
भूषिते ॥ पुं० तीर्थस्थे नवर्षितेप
र्वतविशेषे ॥

मणिमन्दिरम् । न० बहुमूल्यप्रस्तरयु
क्तगृहे ॥

मणिमाला । स्त्री० हारे । मीणादिग्र-
न्थान्तरे ॥ लक्ष्म्याम् ॥ जगती-
१२ छन्दोभेदे । यथा । त्यौत्यौ
मणिमालाच्छिन्नागुहवक्त्रै : ॥ यथा ।
प्रणमदमौलीरत्नोपलकान्ते ०आतप
तिविवनाशोद्यामणिमाला । गोविन्द
पदाब्जे राजीनखराणामाक्रान्तममचि
तं ध्वान्तं शमयन्ती ॥ मणीनां० मा
ला० मालेवया ॥

मणिरागम् न० हिङ्गुले ॥

मणिल : । पुं० नागविशेषे ॥ मणि
रस्यास्ति । चन्द्रभ्योपिदृश्यतइति
व : ॥

मणिवर : । पुं० हीरके ॥

मणिवीज : । पुं० दाडिमवृक्षे ॥

मणिसर : । पुं० मुक्ताहारे ॥

मणी । स्त्री० मणौ ॥

मणीचकम् । न० इन्दुकान्ते । चन्द्र
यथ स्थ्ये ॥ पुं० मत्स्यरङ्कख
गे ॥

मणीव । अ० मणितुल्ये ॥

मणीवकम् । न० पुष्पे । कुसु
मे ॥

मण्टपी । स्त्री० क्षुद्रोपोदक्याम् ॥

मण्ठ : । पुं० पक्वान्नविशेषे । मठे ।
माठ० इ० भा० ॥ मण्ठते । मठि
शोके । शोकध्याख्यानम् । पचाद्य
च् ॥

मण्ड : । पुं० पञ्चाङ्गुले । एरण्डवृक्षे
॥ शाकभेदे ॥ मस्तुनि ॥ भूषा
याम् ॥ सारे ॥ पिच्छे । दर्दुरे
॥ भक्तादिभवस्वे ॥ तद्यत्र यथा
भक्तोद्भिन्नाद्योपमण्ड : ये च भक्तस
मन्वितम् ॥ मणिचात्यन्तसर्पनिधि

गुणाष्टतण्डुलानां सुसिद्धानां चतुर्दशगुणे जले । रसः सिक्थैर्विरहितो मण्ड इत्यभिधीयते ॥ शुण्ठीसैन्धवसंयुक्तो दीपनः पाचनश्च सः । अन्नस्य सम्यक्सिद्धस्य त्रयो याम एडस्य सिवता ॥ पेयायूषयवागूनां विलेपीभक्तयोरपि । तस्य गुणाः । मण्डो याहीलघुः शीतो दीपनो धातुसाम्यकृत् ॥ ज्वरसन्तापशोषघ्नः पित्तश्लेष्मापहः । अपि च सुतो धनो वस्तिविशोधनश्च प्राणप्रदः शोणितवर्द्धनश्च । ज्वरापहारी कफपित्तहन्ता वायुं जयेदष्टगुणो हि मण्डः ॥ लाजमण्डोऽग्निजननो दाहतृष्णानिवारणः ज्वरातीसारशमनो ऽग्निवद्दोषपाचनः ॥ वाट्यमण्डोऽग्निजननः शूलानाहविनाशनः । पाचनो दीपनो हृद्यः पित्तश्लेष्मानिलापहः ; वाट्यमण्डो भृष्टयवमण्डः ॥ न० मस्तुनि ॥ मण्डने ॥ पुं० न० सर्वेषामन्नदध्यादीनामग्ररसे । मांड० इ० भा० ॥ सारे ॥ पिच्छे ॥ मण्डयति । मण्डिभूषायाम् । पचाद्यच् ॥ मण्डति० मण्डाते वा । अच्० घञ् वा ॥ मन्यते वा । मनज्ञाने । जमन्ताड्ड ॥

मण्डकः । पुं० मांडे० माडा० मण्डादूतिप्रसिद्धखाद्यपदार्थे ॥ त



द्विधानं यथा । वारिणाकोमलां कृत्वा समितां साधु मर्दयेत् । हस्तलालनया तस्याः लोप्त्रीं सम्यक्प्रसारयेत् ॥ अधोमुखघटस्यैतद्विस्तृतं प्रक्षिपेद्बहिः । मृदुनावह्निना साध्यः सिद्धो मण्डक उच्यते ॥ दुग्धेन साज्यखण्डेन मण्डकं भक्षयेन्नरः ॥ अथवा सिद्धमांसेन सतैलकवटकेन वा । मण्डकोऽष्टपणो वृष्यो बल्यो रुचिकरोऽधमः । पाकेऽपि मधुरो ग्राही लघुर्दोषत्रयापहः ॥ गीताङ्गविशेषे ॥ यथा । जयप्रियः कालापश्चकमलः सुन्दरस्तथा । मङ्गलो वल्लभश्चेति मण्डकाः षट् प्रकीर्त्तिताः ॥ एषां विशेषः सङ्गीतदामोदरे द्रष्टव्यः ॥

मण्डनम् । न० प्रसाधने । भूषणे ॥ चतुर्था मण्डनं वासोभूषामाल्यानुलेपनैः ॥ मण्ड्यतेऽनेन । मडि० । ल्युट् ॥ नीतिर्भूमिभुजां नतिर्गुणवतां ह्रीरङ्गनानां धृतिर्दम्पत्योः शिशवो गृहस्य कविता बुद्धेः प्रसादो गिराम् । लावण्यं वपुषः स्मृतिः सुमनसः शान्तिर्द्विजस्य क्षमा शक्तस्य द्रविणं गृहाश्रमवतां स्वास्थ्यं सतां मण्डनम् ॥ त्रि० भूषयकर्त्तरि अलङ्करिष्णौ । मण्डनशीलः । मडि० । क्रुधमण्डार्थेभ्यश्चेतियुच् ॥

मण्डनता । स्त्री० प्रसाधनत्वे ॥

मण्डप : । पुं० न० जनाश्रये । जन
विश्रामसद्मनि ॥ मण्डनम् महि
। घञ् । मण्डं पाति । पारचणे ।
श्रातोऽनुपसर्गेक : ॥ देवादिद्रव्ये
सद्मनि ॥ त्रि० मण्डपानकर्त्तरि ॥
मण्डं पिबति । पा० । क : ॥

मण्डपी । स्त्री० निष्पाव्याम् ।

मण्डयन्त : । पुं० नटे । वधूसमूहे ।
अन्ने ॥ अलङ्कारे । भूषणे ॥ मण्ड
यति । मडिभूषायांचुरा० । तृभूव
हिवसीत्यादिना० भच् । सचवित् ॥

मण्डयन्ती । स्त्री० योषिति । वधूम् ।
नव्याम् ॥ जित्वान्ङीप् ॥

मण्डयमान : । त्रि० मण्डनंकुर्वाणे ॥
मण्डयति० तच्छील : । मडि० ।
ताच्छील्यवयोवचनशक्तिषुचानश् ॥

मंडरी । स्त्री० चुचुर्याम् ॥

मंडल : । पुं० कुकुरे ॥ सर्पभेदे ॥
न० परिधौ । चन्द्रसूर्ययोर्वर्तुलवेष्टने
। चन्द्रसूर्ययोरुत्पातकरश्मिमंडले ॥
य० वातेनमंडलीभूताः सूर्याः चन्द्रम
सो : कराः । मालाभाव्योम्नितन्व
न्तेपरिवेश : प्रकीर्तितइति ॥ चक्र
वाले । मंडलाकारेणपरिणतसमूह
मात्रे ॥ चतुरस्रादौ ॥ यथा । चतु
रस्रंत्रिकोणंवावर्त्तुलंचार्धचन्द्रकम्
। कर्तव्यमानुपूर्व्येणवाद्यायादिषुमं
डलमिति ॥ कोठरोगे । मंडलवत्
कुष्ठे ॥ देशे । समन्ताद्विंशतियोजने
। चत्वारिंशद्योजनेवादेशइतिकेचि
त् ॥ द्वादशराजके ॥ द्वादशराजमु
द्वादशराजमंडलंतुकामन्दकेनोक्तं
। यथा । अरिर्मित्रमरेर्मित्रंमित्रमि
त्रमत : परम् । तथारिमित्रमित्र
ञ्चविजिगीषो : पुर : स्थिता : ॥
पार्ष्णिग्राह : स्मृत : पश्चात्पाक्र
न्दस्तदनन्तरम् । आसारावनयोश्च
वविजिगीषोस्तुपृष्ठत : मंडलम् ॥
अरेश्चविजिगीषोश्चमध्यमोभूम्यनन्त
र : । अनुग्रहेसंहतयो : समर्थोव्य
स्तयोर्वधे ॥ मंडलाद्बहिरेतेषामुदा
सीनोबलाधिक : । अनुग्रहेसंहता
नांव्यस्तानाञ्चवधेप्रभु : ॥ पञ्चविजि
गीषो : पुर : सरा : । पार्ष्णिग्राहा
क्रान्दपार्ष्णिग्राहासाराक्रान्दासारा
श्चेतिपृष्ठतश्चत्वार : । मध्यमोदासी
नौद्वौ । विजिगीषुरेकश्चेत्येवंद्वादश
राजमंडलम्भवति ॥ गोले ॥ चक्रे॥
सङ्घाते ॥ नखाघाते । गदायुद्धे ग
तिभेदे ॥ धन्विनांस्थानपञ्चकान्तर्ग
तस्थितिविशेषे ॥ यथा । मंडला-
कारपादाभ्यांमंडलंस्थानमीरितम्॥
व्यायनखाप्यगमद्रव्ये ॥ व्यूहविशे
षे ॥ यथा । तिर्यग्वृत्तिस्तुदंडःस्याद्
भोगोन्वावृत्तिरेवच । मंडलंसर्वतो
वृत्तिःपृथग्वृत्तिरसंहतः ॥ मंडयति
मडि० । वृषादित्वात्कलः ॥ मंड

भूर्घांलारिवा । मंडले॰ इतिवा ॥ यद्वा । मंडमस्त्यस्य । सिध्मादित्वा त्वच् ॥ त्रि॰ निवहे । विम्बे ॥

मण्डलकम् । न॰ बिंबे ॥ कुष्ठभेदे । मण्डलाकारकुष्ठे । कोठे ॥ दर्पणे ॥ मण्डलाकारव्यूहे ॥ पुं॰ कुक्कुरे ॥ मण्डलमिव । इवेप्रतिकृतावितिकन् ॥

मण्डलनृत्यम् । न॰ हल्लीषे । मण्डलाकारनृत्ये ॥

मण्डलपत्रिका । स्त्री॰ रक्तपुनर्नवायाम् ॥

मंडलसङ्क्रम : । पुं॰ राशिसङ्क्रमे ॥

मंडलाप्र: । पुं॰ कृपाणे । खड्गे ॥ मंडलमग्रमस्य ॥

मंडलायितम् । न॰ वर्तुले ॥

मंडलाधीश: । पुं॰ मंडलेश्वरे । मध्यमे ॥

मंडलिका । स्त्री॰ परिधौ ॥ मंडलात् स्वार्थेक: । कात्पूर्वस्येकार: ॥ मंडल्याम् ॥ स्वार्थिके॰ कप् : ॥

मण्डली । पुं॰ भुजङ्गे ॥ बिडाले ॥ कारण्डे ॥ गोनासे॰ सर्पे ॥ वटवृक्षे॰

मण्डली । स्त्री॰ मण्डलाकारेणपरिगतसमूहे ॥ दूर्वायाम् ॥ गौरादित्वान्ङीप् ॥

मण्डलेश : । पुं॰ एकजन्मनि । भवापते । मण्डलेश्वरे ॥ शाण्डल्यादेर्व्या : स्थाने । मण्डलस्येश : ॥

मण्डलेश्वर: । पुं॰ नृपान्तरे ॥ भूम्येकदेशाधिपे ॥ चतुर्योजनपर्यन्तमधिकारीनृपश्च । यौराजातच्छत्रगुण : सएवमण्डलेश्वर : ॥ मण्डलस्येश्वरिमिनादिकुपस्थदेशस्येश्वर : ॥

मण्डहारक : । पुं॰ शौण्डिके ॥ मण्डं सुराग्रंसंहरति । हृञ्॰ । कर्मण्यण् । स्वार्थेक : ॥

मण्डा । स्त्री॰ आमलक्याम् ॥ सुरायाम् ॥ मण्ड : मचाद्यजन्तात्टाप् ॥

मण्डित : । पुं॰ बौद्धगणाधिपविशेषे ॥ त्रि॰ भूषिते ॥ मंडते । मडि॰ क्त : ॥

मण्डुक : । पुं॰ सड्मर्दे ॥

मण्डूक : । पुं॰ गूढवर्चसि । दर्दुरे । भेके ॥ शोणके ॥ मुनिविशेषे ॥ न॰ बन्धविशेषे ॥ मण्डयति॰ जलाशयम्॰ मंडतेवा । मडि॰ । मण्डिमण्डिभ्यामूकण् ॥

मण्डूकपर्ण : । पुं॰ पत्रोर्णे । श्योनाकवृक्षे ॥ शोणके ॥ मंडूकाइवपर्णमस्य ॥ कपोतने ॥

मण्डूकपर्णी । स्त्री॰ मञ्जिष्ठायाम् ॥ ब्राह्मण्याम् ॥ मोलिच्छिकौषधौ ॥ घादित्वभक्तायाम् ॥ मंडूकवत्पर्णमस्या : । पाककर्णेतिङीप् ॥

मण्डूकमाता । स्त्री॰ ब्राह्म्याम् ॥

मंडूका । स्त्री॰ मञ्जिष्ठायाम् ॥

मंडूकी । स्त्री॰ मंडूकपर्ण्याम् ॥ दूर्वा

पिसि । भेक्याम् । नाड्याम् ॥ सूर्यभक्तायाम् ॥

मंडूरम् । न० लौहमले । सिंहाणे । शिङ्घाणे ॥ ध्मायमानस्यलोहस्यमलंमंडूरमुच्यते । यल्लोहंयस्यचप्रोक्तंतत्किट्टमपितद्गुणम् ॥ शतोर्द्धंमुत्तमंकिट्टंमध्यञ्चाशीतिवार्षिकम् । अधमम्षष्टिवर्षीयंततोहीनोविषोपमम् ॥ मूडती । मडि० । खर्जूरादित्वादूरः ॥

मंडोदकम् । न० चित्तरागे ॥ आलपने । आलिम्पने ॥

मतम् । त्रि० सम्मते ॥ ज्ञाते ॥ अर्चिते ॥ शिष्टसम्मते ॥ तर्किते ॥ मन्यते । मनज्ञाने । मतिबुद्धिपूजार्थेभ्यश्चेतिवर्तमानेक्तः ॥ न० अभिप्राये ॥ निश्चये ॥

मतङ्गः । पुं० मुनिविशेषे । मेघे ॥

मतङ्गकेदारः । पुं० तीर्थविशेषे ॥

मतङ्गजः । पुं० गजे । हस्तिनि ॥ मतङ्गात्करे जातः । अमरो० । पञ्चम्यामजाताविति डः ॥

मतल्लिका । स्त्री० प्रशस्ते । मतं० मतिम् । अलति । अलभूषणादौ । ण्वुल् । पृषोदरादित्वाट्टस्य लः । प्रशस्तः पुरुषः० पुरुषमतल्लिका । मतल्लिकायारूढिशब्दत्वात् । प्रशंसावचनैश्चेतिसमासः ॥

मतानुज्ञा । स्त्री० निग्रहस्थानभेदे ॥ तस्यलक्षणंयथा । स्वपक्षेदोषाभ्युपगमात्परपक्षेदोषप्रसङ्गोमतानुज्ञा । न्या० गौ० सूत्रम् । ६३ ॥ अस्यार्थः । दोषाभ्युपगमात् । दोषमनुद्धृत्येत्यर्थः । यथाशब्दोनित्यः श्रावणत्वादित्युक्ते० अनाद्यनैकान्तिकत्वेन हेत्वाभासोयमित्युक्ते० शब्दोऽनित्यः कृतकत्वादितिसाधितेअस्मिन्नपि पक्षेत्वन्नदोष इत्युक्तो० असिद्धत्वात्तवापिहेत्वाभासोयमित्युक्ते० सोयंमतानुज्ञयानिगृहीतः स्यात् प्रतिपक्षमनुमतंभवतीतिस्वपक्षेदोषाभ्युपगमात् ॥ वृत्ति ॥ ६३ ॥

मतिः । स्त्री० इच्छायाम् । धियि ॥ बुद्धौ । यस्ययत्कुलेजन्मतन्मतिस्तादृशीभवेत् । स्मृत्याम् ॥ स्मृतस्यमनने । मतिकरौषधंयथा । पाठार्कीरकेकुष्ठमश्वगन्धावमोदकम् । वचात्रिकटुकञ्चैवसमभागंचूर्णमुत्तमम् । ब्राह्मीरसैर्भावितञ्चसर्पिर्मधुसमन्वितम् । मासाद्भक्षितंकुर्यान्मर्त्यं क्षयं मतिपरामितिगरुडपुराणम् ॥ मन्यतेऽनया । मनज्ञाने । क्तिन् ॥ मतिर्मननं तर्कोमन्तव्यविषयआदर इतिच्छान्दोग्यमहाभाष्यम् । आर्ये । मा कर्मभेदेकृत्यवयपाठः ॥ अतीतानुस्मृतिर्धात्वर्थादिर्विषयामतिः । शुभाशुभविचारज्ञाप्रज्ञाधीरैरुदाहृतेतिनिश्चयः ॥

मतिगर्भः । त्रि॰ प्रतिभासारे ॥
मतिदा । स्त्री॰ ज्योतिष्मत्याम् ॥ शिमृडीक्षुपे ॥
मतिभ्रमः । पुं॰ भ्रमे ॥ मतेर्भ्रमः ॥
मतिभ्रान्तिः । स्त्री॰ मतिभ्रमे । मिथ्यामतौ ॥ मतेर्भ्रान्तिः ॥
मतिमान् । त्रि॰ प्राज्ञे ॥
मतिविध्वंसः । पुं॰ उन्मादरोगे ॥ मतेर्ध्वंसो नाशो येन ॥
मतुबर्थीयः । पुं॰ मत्वर्थीयप्रत्ययेषु ॥ बाहुलकान्मतुबर्थशब्दाच्छः ॥ शैषिकान्मतुबर्थीयादितियथा ॥
मत्कुणः । पुं॰ मशकाकृतिख्यातेनिर्विषारोमे । कालेय्यकसदृन्तो गजे ॥ निःश्मश्रुपुरुषे ॥ वृद्धे । रक्तपायिनि । रक्ताङ्गे । मञ्चाश्रये॰ कीटविशेषे । उड्कुस॰ मांगुण॰ खटमल॰ इ॰ भाषा ॥ नारिकेले ॥ जङ्घात्राणे । जङ्घासम्बद्धवाससि ॥
मत्कुणा । पुं॰ निर्लोमयोनौ ॥
मत्कुणारिः । पुं॰ इन्द्राशने । भङ्गायाम् ॥
मत्तः । पुं॰ प्रभिन्ने । धत्त्मदेहस्तिनि । गर्दिरी॰ धुत्तूरे ॥ कोकिले ॥ महिषे ॥ त्रि॰ हृष्टे । मदिरानष्टे ॥ शौण्डे माद्यतिस्म । मदोदर्पः । गत्यर्थेतिक्तः । जध्याश्चेतिनत्वं ॥
मत्तकाशिनी । स्त्री॰ उत्तमनार्याम् । परपर्विन्याम् ॥ मत्ता॰ यौवने वकाशते विभाति । काशृदीप्तौ । मत्तयुंपमानइतिणिनिः ॥
मत्तकासिनी । स्त्री॰ वरारोहायांयोषिति ॥ मत्ते वकासते । कासृशब्दकुत्सायाम्॰ कासगतिशासनयोर्वा । कर्त्तर्युपमानइतिणिनिः ॥
मत्तकीशः । पुं॰ हस्तिनि ॥
मत्तवारणः । पुं॰ प्रक्लिन्नकटकुञ्जरे । मत्तगजे ॥ न॰ प्रासादवीथीगोपरखण्डे । कोठिकावरंडा॰ इ॰भा॰ ॥ अपाश्रये । प्राङ्गमावरणे ॥ पूगचूर्णे ॥
मत्तमयूरः । पुं॰ अतिजगती १३ छन्दः प्रभेदे । यथा । वेदैरन्ध्रैर्मौसयगामत्तमयूरः । यथा । लीलानृत्यन्मत्तमयूरध्वनिकान्तम्॰ नृत्यद्गोपामोदिपयोदानिलरम्यम् । रासक्रीडाच्छटसनागोपवधूभिः॰ कंसध्वंसीनिर्जनवृन्दावनमाप ॥
मत्तमातङ्गः । पुं॰ दंडकप्रभेदे ॥ यथा । चादितोरागणास्ते छयायवद्दत्ताः सर्वमत्तमातङ्गनामामहादंडकः समतेः॰ खाग्सरेभमनादायमोदायचेतोयिषेक्षिप्रभोभारतीरीतिविश्रान्तिभूम्यंयरः । शिस्फुरत्सप्तरप्राङ्घिनागराजिमचीत्कारफूत्कारधारासुमितावधानोयथा॰ पन्नगाधीशगुम्फप्रवुद्धेकवुद्धिप्रकाशद्दसेहएटहूणगाम्वेऽयिनिव्यथा ॥
मत्तमातङ्गलीलाकरः । पुं॰ दंडकप्र

भेदे ॥ यथा । यचरेफ : पर : खे च्छयागुम्फित : ॥ सस्तु तोदंडकोम समातङ्गलीलाकर : ॥ हेमगौरे यसानोऽथकेदम्ब्रनीलासितेवर्षास्थि स्पर्दिव्यानुलेपाङ्कितो॰हारतारां शुवक्षोनभास्विचमालाञ्चितोभव्यभू षोज्ज्वलाङ्ग : सर्वसौरिणा । चञ्च-लाभाम्बरैर्मेद् कुन्दाभदेहैर्नलीला परीहासहासोर्मि कौतूहले : कं-सरङ्गाद्रिग : पातुमयजमाणिर्गति क्रोडयामत्तमातङ्गलीलाकर : ॥

मत्ता । स्त्री॰ मदिरायाम् ॥ मदेनमू-र्छायाम् ॥ पङ्क्तिच्छन्द : १॰ प्रभे दे ॥यथा। वृत्तं यामत्तामभसगवहा ॥ यथा । पौत्वामत्तामधुमधुपाली॰-कालिन्दीयैतटवनकुञ्जे । उद्दीव्य-न्तीव्रजनवरामाकामासक्तामधुजि-तिचक्रे ॥

मत्ताक्रीडम् । न॰ विकृतिच्छन्द : २३ प्रभेदे ॥ यथा । मत्ताक्रीडं वशिष्वा श्रायतिमयुगगयुगमनुलघुगुरुभि: ॥ यथा । सुग्धोन्मोलन् मत्ताक्रीडं मधुसमयसुलभमधुरमधुरसात्॰गा मेयानिकिचित्सान्दन्पद्मरूपनयन युगलसरसिजम् । रासोल्लासक्रीड-त्कृष्णव्रजयुवतिवलयविहितमुखरस म्॰सान्द्रानन्दं वन्दारुखेसरवह रिमनवचरणमरिचयम् ॥

मत्तालम्ब : । पुं॰ प्राङ्गनावरणे । य पाश्रये । प्रग्रीवे । मत्तवारणे ॥

मत्तेभगमना । स्त्री॰ स्त्रीविशेषे । म त्तगजगामिन्याम् ॥ मत्तेभवद्गम नंयस्या . सा ॥

मत्पूर्व : । त्रि॰ मदीयप्राचीने ॥

मत्यम् । न॰ दाचादिमुष्टौ । मट्टे । वैटा॰इ॰मा॰ ॥ मतंज्ञानम्॰तस्य करणम्॰भाव : साधनं वा । मत कर्णहलात्कारचलस्यकर्षेयु॰वृत्तिय त् ।

मत्वर्थीय : । पुं॰ मतुबर्थेयप्रत्यये ॥ मत्वर्थीक : । बहुलवचनादकार-लोप : ॥

मत्स : । पुं॰ मत्स्ये ॥

मत्सगण्ड : । पुं॰ गानपट्टे । मत्सघण्ट इ॰गो॰दे॰प्र॰व्यञ्जनविशेषे ॥

मत्सर : । पुं॰ मात्सर्ये । अन्यशुभद्वे-षे ॥ क्रोधे ॥ वैरे ॥ त्रि॰असह्यप रसम्पत्तौ। परोत्कर्षासहनपूर्विका यांक्षोत्कर्षवाञ्छायाम् । स्वप्रयो जनप्रतिसन्धानं विनापराभिमतनि वारणेच्छायाम् । अन्यशुभद्वेषव ति ॥ कृपणे ॥ मात्यतिपरक्षच्छे । मदीइयें । कृपूमदिभ्य : किदिति सर: ॥ मत्सरहर्षहेतुमितिवेदभा ष्यम् ॥ आत्मविकारविशेषे ॥ य-था । निन्दन्तिमांसदालोकाधिग-सुममज्जीवनम् । इत्याद्यसनिभेद्य सुधिकृद्धार : सपमत्सर : ॥

मत्सरा । स्त्री० मक्षिकायाम् ॥

मत्सरी । त्रि० अन्यशुभद्वेषिणि । कार्पण्ये । दुर्जने । पिशुने । सूचके । नीचे । छिद्रिष्टे । खले ॥ मत्सरोऽस्यास्मिन् वा । इनि : ॥

मत्सी । स्त्री० मत्स्यस्त्रियाम् ॥ मत्स्यशब्दात्स्त्रीत्वेच्छायां गौरादित्वान् ङीषि० सूर्यतिष्येति यलोपः । स मत्स्यस्य ङ्यामिति : ॥

मत्स्य : । पुं० मीनान्तरे ॥ अभिस्यादये । नारायणे ॥ द्वादशराशौ । मीने ॥ अष्टादशपुराणान्तर्गतेचतुर्दशसहस्रश्लोकात्मकपुराणविशेषे ॥ दशावतारान्तर्गतप्रथमावतारे ॥ मत्स्या : भूम्नि । देशविशेषे ॥ पुलिन्दादुत्तरेभागेकच्छात्पश्चिमेशिवे । मत्स्यदेशःसमाख्यातोमत्स्यवाहुल्यकारकः ॥ मत्स्यानांनिवासोजनपदःमत्स्याः । अपोलुप । लुपियुक्तवद्व्यक्तः । देशविशेषे ॥ विराटनगरे ॥ माद्यति । मदी० । स्यतन्यत्त्रीति मदेः स्यन् । अनिदित्वादिना० लोपः । तरिभेदः ॥ पुं० स्त्री० जलजन्तुविशेषे । पृथुरोमणि । झषे । मीने । वैसारिणे । अण्डजे । मच्छी० इ० भाषा ॥ रोहितादयस्तुये लीयान्ते मत्स्या : परिकीर्त्तिता : ॥ सर्वेतेषांगुणाः । यथा । मत्स्या: स्निग्धोष्णमधुराः गुरव : कफपित्तदा : । वातघ्नाश्च वृष्याश्च्यारोचकावलवर्द्धना : ॥ अत्यन्तव्यवायसक्तानांदीप्ताग्नीनाञ्चपूजिता : ॥ शुष्कमत्स्यास्तुवल्या : स्युर्दुर्जराविष्टविवन्धना : । दग्धमत्स्योगुणै : श्रेष्ठ : पुष्टिकृद्वलवर्द्धन : ॥ सूक्ष्ममत्स्यास्तु । भर्जितास्तिलतैलेनसर्वसम्भारसम्भृता: । सूक्ष्मामत्स्या : स्वादुरसादोषघ्नाश्चवलवर्द्धना : । परंसूक्ष्मास्तुयेतेषुतेसर्वेपुंस्त्वनाशना: ॥ अथकूपादिमत्स्यानांगुणा : । कौपमत्स्या : शुक्रमूत्रकृच्छ्रघ्नाविवन्धहा : । सरोजामधुरा : स्निग्धावल्यावातविनाशना : ॥ नादेयाश्चतथामत्स्यागुरवोऽनिलनाशना : ॥ रक्तपित्तकराश्चापि : स्निग्धोष्णा : स्वल्पवर्चस : ॥ चौण्ड्या : पित्तहरा : स्निग्धामधुरालघवोहिमा : । ताडागागुरवोऽप्युष्णा : शीतलाश्चमूत्रदा : ॥ ताडागवन्निर्झरकावलायुर्मतिहृत्करा : ॥ अथऋतुविशेषेमत्स्यगुणा : । यथा । हेमन्तेकूपजामत्स्या : ० शिशिरेसारसाहिता : । वसन्तेसेतुनादेयाग्रीष्मेचौण्ड्यासमुद्भवा : ॥ तडागवार्षिकेपथ्या : प्रभासाहृदयप्रांग्नाभवा : । नैर्भरा : शरदिश्रेष्ठाविशेषोवनुदाहृत : ॥ अपिच । नि : शल्कानि

सन्त्यजेत् ॥ अज्ञानतस्तदर्द्धम् ॥ मत्स्यभक्षणप्रतिप्रसवो यथा । मत्स्यान्सशल्कान्भुञ्जीत मांसं रौरवमेव च । निवेद्य देवताभ्यस्तु ब्राह्मणेभ्यस्तु नान्यथा ॥ सफरं सिंहतुण्डञ्च तथा पाठीनरोहितौ । मत्स्यास्त्वेते समुद्दिष्टा भक्षणाय तपोधनैः ॥ प्रोक्षितं भक्षयेदेषां मांसन्तु द्विजकाम्यया । यथाविधिनियुक्तश्च प्राणानामपि चात्यये ॥ इति कौर्म्मे उपविभागे १६ अध्यायः ॥ अपि च । पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः । राजीवान् सिंहतुण्डांश्च शल्कांश्चैव सर्वशः ॥ इति मनुः ॥ अनिवेद्य न भोक्तव्यं मत्स्यमांसञ्च यद्भवेत् । अत्र विशेषयोमूर्च्चं यद्विष्णोरनिवेदितम् ॥

मत्स्यकरण्डिका । स्त्री० मत्स्यरक्षणपात्रे । मत्स्याधान्याम् । कुवेणीयाम् । खालुइ इ० गौ० दे० भा० ॥

मत्स्यगन्धा । स्त्री० व्यासदेवस्य मातरि ॥ तोयपिप्पल्याम् । लाङ्गल्याम् ॥ मत्स्यस्य गन्ध इव गन्धो यस्याः । उपमानाच्चेति इत्त्वाभावश्छान्दसः ॥

मत्स्यगर्भः । पुं० मत्स्याण्डे ॥

मत्स्यघण्टः । पुं० मत्स्यघटितव्यञ्जनविशेषे । मत्स्यघण्ट ॥

मत्स्यजालम् । न० आनाये । जाले ॥

मत्स्यण्डिका । स्त्री० मत्स्यण्डाम् । राव० इ० भा० ॥ मत्स्यण्डिकाखण्डसिता: क्रमेण गुणवत्तरा इति वाग्भटः । मत्स्यण्डी एव । स्वार्थे कन् ॥

मत्स्यण्डी । स्त्री० फाणिते राव० इ० काशीभाषा । तल्लक्षणम् ॥ यथा । इक्षोरसो यः सम्पक्वो घनः किञ्चिद्द्रवान्वितः । मन्दं यत्स्यन्दते तस्मान्मत्स्यण्डीति निगद्यते ॥ मत्स्यण्डी भेदिनी बल्या लघ्वी पित्तानिलापहा । मधुरा बृंहणी वृष्या रक्तदोषापहा स्मृता ॥ मत्स्याण्डाकारत्वात् मत्स्यण्डी । शकन्ध्वादिः ॥ मदं मुदं वा स्यन्दते । स्यन्द प्रस्रवणे । कर्म्मण्यण् । ङीप् । पृषोदरादिः ॥

मत्स्यधानी । स्त्री० मत्स्याधान्याम् । कुवेणीयाम् ॥ मत्स्या धीयन्ते ऽस्याम् । करणाधिकरणयोरिति धाञो ल्युट् ॥

मत्स्यध्वजः । पुं० मत्स्याकारे ध्वजे ॥ गिरिकामरूपप्रसिद्धपर्वते ॥ यथा । मणिकूटाचलात् पूर्वं मत्स्यध्वजकुलाचलः । निर्दग्धो यत्र मदनो हरनेत्राग्निना पुनरित्यादिः कालिकापुराणे ॥ ८१ अध्यायेऽस्ति ॥

मत्स्यनाशकः । पुं० कुररपक्षिणि । त्रि० मीननाशकर्त्तरि ॥

मत्स्यनाशनः । पुं० कुररपक्षिणि ॥

मत्स्यपित्ता । स्त्री० कटुरोहिण्याम् । कृष्णभेदाम् । कटुकाम् ॥ मत्स्यानांपित्तमिवतत्स्वादुत्वात् ॥

मत्स्यप्रलेह : । पुं० मत्स्यव्यञ्जनान्तरे ॥ विशेषः प्रलेहे ॥

मत्स्यबन्धी । पुं० कैवर्त्ते । धीवरे ॥

मत्स्यबन्धनी । स्त्री० कुवेण्याम् । मत्स्याधान्याम् ।

मत्स्यमण्डकः । पुं० व्यञ्जनान्तरे । मत्स्यस्यपिष्टिकांकृत्वापर्युषितांमण्डलाकृतिम् । आसुरैणसमुत्स्विन्नां संयुक्तांधूलनैस्तु । मत्स्यमण्डकमुच्यते : सूदशास्त्रे विचक्षणैः ॥

मत्स्यरङ्कः । पुं० ) मत्स्यरङ्गकः । पुं० ) पक्षिविशेषे । मत्स्याशिनि । जलमद्गौ । मणीचकि । माछरांगा-इ०गौ०दे०भा० । मच्छरङ्ग०इ०दे०भा० ॥

मत्स्यराजः । पुं० विराटनृपे । रोहितमत्स्ये ॥ मत्स्यानांराजा । टच् ॥

मत्स्यविन्ना । स्त्री० कटुकायाम् ॥

मत्स्यवेधनम् । न० बडिशे ॥ विध्यतेनेन । विधविधाने । करणेतिल्युट् । मत्स्यानांवेधनम् ॥

मत्स्यवेधनी । स्त्री० मद्गुपक्षिणि ॥ बडिशे ॥

मत्स्यसन्तानिकः । पुं० मत्स्यव्यञ्जनविशेषे ॥ यथा । दग्धोङ्गारैमत्स्यैर्वेसवारैस्तथापक्वः । सार्द्रकः कटुतैलेनमत्स्यसन्तानिकोभवेत् ॥

मत्स्यसुता । स्त्री० उपरायाम् । परीक्षिन्मातरि ॥ सत्यवत्याम् ॥

मत्स्याक्षी । स्त्री० सोमपिप्पल्याम् ॥ सोमलतायाम् । ब्राह्म्याम् । यथा ब्राह्मीवयस्थामत्स्याक्षीमीनाक्षीसोमवल्लरी । मत्स्याक्षीशिशिरातिक्ता व्रणदोषक्षयापहा । इतिराजनिघण्टुः ॥ गण्डदूर्वायाम् । हिलमोचिकायाम् ॥ मत्स्यस्याक्षीवपुष्पमस्याः । मत्स्यशब्दः स्वार्थप्रयोगीत्वः । बहुब्रीहाविशिषच् । ङीष् ॥ मत्स्याक्षी० इतिकोषप्रसिद्धौषधौ ॥ मत्स्याक्षीग्राहिणीशीतासाकुष्ठपित्तकफास्त्रजित् । लघुस्तिक्ताकषायाच्यास्वादीकटुविपाकिनी ॥

मत्स्यादनखगः । पुं० मत्स्यानत्तिभक्षति । अद० । क्विप् । मत्स्याशीखगः ॥

मत्स्यादनी । स्त्री० राजबल्याम् । सोमपिप्पल्याम् । मत्स्याक्ष्याम् ॥ मत्स्यैरद्यते । अद० । ल्युट् । क्वित् । ङीप् ॥

मत्स्याधानी । स्त्री० मत्स्यरक्षार्थपात्रे । कुवेण्याम् । खारयी०खालुइ०इ०गौ०देशभा० ॥ मत्स्याआधीयन्तेऽत्र । डुधाञ० । करणाधिकरणयोरितिल्युट् ॥

मत्स्याशन : । पुं० मत्स्यरङ्कविहङ्गमे ॥

मत्स्योडरी । स्त्री० मत्स्यस्थव्यञ्जनानारे ॥ कासमर्दं काचखंनमत्स्यपिष्टैर्निर्योजिता । भर्जिताकटुतैलेनमत्स्योडरीद्दतीरिता ॥

मत्स्योदरी । स्त्री० सत्यवत्याम् । व्यासमातरि ॥ काशीस्थतीर्थविशेषे ॥

मथन : । पुं० गणिकारिकायाम् ॥ न० दध्यादिविलोडने । विलोडना० इ०भा० ॥ मथति । मथे विलोडने । ल्युट् ॥

मथितम् । न० निर्जलेसरीवजिं तेथितोडितेदधिनि । सरोदकविहीनन्तुमथितं कफपित्तनुत् ॥ त्रि० आलोडिते ॥ घृष्टे । निघृष्टे ॥ मथ्यतेस्म । मथ० । क्त : ॥

मन्थ : । पुं० मन्थानदण्डे ॥ मथ्यतेऽनेन । मन्थविलोडने । मन्थइति० घञ् : कित् । कित्त्वान्नलोप : ॥ मन्थामन्थानदण्डे चवर्ज्ञे वातेपित्तस्मृत : ॥

मथुरा । स्त्री० मधुपुर्याम् । श्रीकृष्णजन्मभूमौ । मधुरायाम् ॥ मथति । मथ० । मन्दिरागमथिषतीरुत्तरम् ॥ मथुरान्तविलोमेनमध्यमोनयदक्षरम् । योनस्मरतिमोक्षिम्नं मन्मथ तनमृगे पति ॥

मथुरेश : । पुं० श्रीकृष्णे ॥

मथूरा । स्त्री० मथुरायाम् ॥

मद : । पुं० रेतसि ॥ कस्तूर्याम् । गर्वे । अहङ्कारे ॥ विद्यामदोधनमदस्तथैवाभिजनोमद: । एतेमदामदान्धानांतएवहिसतांदमा: ॥ हर्षे । आमोदे । इभदाने । गजगण्डजले । दाने ॥ यथा । करात्कटाभ्यांमेढ्राच्चनेत्राभ्यांचमदस्रुति: । कराभ्रासारनभ्राभ्याम् ॥ मद्ये । मादकद्रव्यसेवनजन्ये विकारविशेषे ॥ क्षैव्ये । मत्ततायाम् ॥ यथा । स्वामदात्प्रकृतिमेतिविस्मय : इतिस्वाभाविकधर्मप्रकाशनंमदधर्म : उत्कर्षरहितत्वे घुत्वर्वविशेषाध्यारोपे ॥ अथास्त्रीयविषयसेवनोत्थस्वत्वे ॥ मदनम० माद्यत्यनेनवा । मदीहर्षे । मदोऽनुपसर्गेइत्यप् ॥ मद्यतिवा । अच् । मदे ॥ कल्याचावस्तुनि ॥ इतिधरणि : ॥ बुधैर्मौह : समभवदहङ्कारादभून्मद : । तल्लक्षणं यथा । अहंमहात्माधनवान्मनुष्य : कोस्तिभूतले । इतियच्जायतेचित्तेमद : प्रोक्त : सकोविदै : ॥

मदक : । पुं० मध्यासवे ॥

मदकट : । पुं० षण्डे । गोपतौ ॥

मदकार : । पुं० आनन्दजनके ॥

मदकल : । पुं॰ अन्तर्मदगजे । मदोत्कटे ॥ त्रि॰ मदेनव्यक्तवचने । मदेनकलते । कलशब्दसङ्ख्यानयो : । अच् ॥ मदंसति॰ कलो ध्वनिर्यस्य तिवा ॥

मदगन्ध : । पुं॰ सप्तच्छदवृक्षे ॥ मदसदृशोगन्धोऽस्य ॥

मदगन्धा । स्त्री॰ सुरायाम् ॥ अतस्थास् ॥

मदगमना स्त्री॰ महिष्याम् ॥

मदघ्नी । स्त्री॰ पूतिकायाम् ॥

मदच्युत् । पुं॰ अमृतरसच्यावयितरि॰ अमृतरूपे सोमे ॥ मदं मदकरमानन्दकरं रसममृतरूपं च्यावयत्य सौमदच्युत् ॥

मदन : । पुं॰ मन्मथे । कामदेवे ॥ [illegible] ॥ [illegible] ॥ पीतहरीतकी । मरुवकी । वसन्ते । मयनफल इति भाषा ॥ मदनोमधुरस्तिक्तोवीर्योष्णोलिखनोलघु : । वान्तकृद्विद्रधिहर: प्रतिश्यायव्रणान्तक : ॥ रूक्ष: कुष्ठकफानाहशोथगुल्मव्रणापह: ॥ सिक्थके । मधूच्छिष्टे । मैण॰ मोम॰ इतिचभाषा ॥ मदनं मृदु सुस्निग्धं भूतघ्नं व्रणरोपणम् । भग्नसन्धानकृद्वातकुष्ठवीसर्परक्तजित् ॥ माषे ॥ खदिरे ॥ लग्नात्सप्तमभवने ॥ आलिङ्गनविशेषे । तत्स्वरूपं यथा । नायकोनायिकाया :

कण्ठे हस्तं दत्त्वा॰ द्वितीयहस्तंतस्या मध्यदेशेदत्त्वायदाश्लिष्यति॰ इति कामशास्त्रम् ॥ मदयति । मदीहर्षग्लेपनयो : । ल्यु : ॥ न॰ च ले ॥

मदनकाकुरव : । पुं॰ पारावते ॥

मदनगृहम् । न॰ लग्नात्सप्तमस्थाने ॥ मात्रावृत्तप्रभेदे ॥ यथा ॥ प्रथमं कुरुषट्कलमन्तेकुण्डलमितरमध्ये वसुतुरगधरं सन्तापहरम्॰ इयवसुभुवनाष्टभिरत्र चरणमभिभवतिविरामोयस्मिन्निखिलं कवियशहितम् फणिनायकभणितं जगणविरहितं चत्वारिंशत्कलकलितं भुवनेमहितम्॰ इत्थं रसनिबद्धं तन्मदनगृहं नरपतिषु सदिलब्धपदं गुरुशोकगदम् ॥ यथा । विरहानलतप्तासीदतिमुग्धारविन्दनलिनदलतल्पतले मरणान्तविमती॰ बाष्पाविलितकपोलं गलितां मधीम् नयतिसततरुदितेनतियाम निमेषवदथा । ससखीमभिनन्दति सखमनुविन्दतिनिन्दतिहिमकरकरनिकरं परितापकरम्॰ मनुते हृदि भारं मुक्ताहारं दिवसनिशाकरदीनमुखी जीवितविमुखी ॥

मदनगोपाल : । पुं॰ श्रीकृष्णे ॥

मदनचतुर्दशी । स्त्री॰ चैत्रशुक्लचतुर्दश्याम् ॥

मदनत्रयोदशी । स्त्री॰ चैत्रशुक्लत्रयो-

मत्स्याघन : । पुं॰ मत्स्यरङ्कविहङ्गमे ॥

मत्स्योडरी । स्त्री॰ मत्स्यसदृव्यञ्जनानारे ॥ कासमर्दं काच् मीनसत्स्यमिष्टिर्नि योजिता । भर्जि ताकाटुतैलेनमत्स्योडरीइतीरिता ॥

मत्स्योदरी । स्त्री॰ सत्यवत्याम् । व्यासमातरि ॥ काशीस्थतीर्थविशेषे ॥

मथन : । पुं॰ गणिकारिकायाम् ॥ न॰ दध्यादिविलोडने । विलोडना॰ इ॰भा॰ ॥ मथति । मथ विलोडने । ल्युट् ॥

मथितम् । न॰ निर्जलसरीवक्रि तैवि लोडितेदधिनि ॥ सरोदकमिहोम त्सुमथितं कफपित्तनुत् ॥ त्रि॰आलोडिते ॥ घृष्टे । निघृष्टे ॥ मथ्यतेस्म । मथ॰ । क्तः ॥

मन्थ : । पुं॰ मन्थानदण्डे ॥ मथ्यतेऽनेन । मन्थविलोडने । मन्थइति॰ इनि : कित् । कित्वान्नलोप : ॥ मन्थामन्थानदण्डे धवर्ज् वार्तेपिच-स्मृत : ॥

मथुरा । स्त्री॰ मधुपुर्याम् । श्रीकृष्णजन्मभूमौ । मधुरायाम् ॥ मथति । मथे॰ । मन्दिवाशिमथिचतीच्युरच् ॥ मधुरात्रविलोमेनमध्यमोनयदक्षरम् । योनस्मरतिमीकेशिं सन्मांध्य तन्मृखं मरि ॥

मथुरेश : । पुं॰ श्रीकृष्णे ॥

मधूरा । स्त्री॰ मधुरायाम् ॥

मद : । पुं॰ रेतसि ॥ कस्तूर्याम् ॥ गर्वे । अहङ्कारे ॥ विद्यामदोधनमदस्तथैवाभिजनोमदः । एतेमदामदान्धानांतएवहिसतांदमा : ॥ हर्षे । आमोदे ॥ वृमद्याने । गजगण्डजले । दाने ॥ यथा । कारात्काटाभ्यांमिद्राचर्म चाभ्यांश्रमदस्तुति : । कारान्नासारनृपाभ्याम् ॥ मद्ये ॥ मादकद्रव्यसेवनजन्ये विकारविशेषे ॥ वैद्ये । मत्ततायाम् ॥ यथा । स्वामदात्प्रकृतिमितिहिसर्वे : इतिस्वाभाविकधर्मप्रकाशनं मदधर्म : उत्कर्षरहितत्वेप्युत्कर्ष विशेषरूपारोपे ॥ यथास्त्रीयविषयसेवनोत्पन्नस्वत्व ॥ मदनम्॰ माद्यत्यनेनवा । मदीएषे । मदोऽनुपसर्ग इत्यप् ॥ मदयतिवा । अच् ॥ नदे ॥ वास्त्राणवर्ण्नि ॥ इतिधरणि : ॥ बुधे मोदे : समभवदहङ्कारादभून्मद : । तस्यलक्षणं यथा । अहंसंपात्माधनवान्मत्तुल्य : कोस्तिभूतले । इतियत्ज्ञायतेचित्तेमद : प्रोक्त : सकोविदे : ॥

मदक : । पुं॰ मध्वासवे ॥

मदकट : । पुं॰ षण्डे । गोपती ॥

मदकार : । पुं॰ थानम्दजनके ॥

मदकल : । पुं० उन्मत्तगजे । मदोत्कटे ॥ त्रि० मदेनाव्यक्तवचने । मदेनाकुले । कलशब्दसङ्ख्यानयो : । अच् ॥ मदेसति० कालो ध्वनिर्यस्येतिवा ॥

मदगन्ध : । पुं० सप्तच्छदवृक्षे ॥ मदसदृशोगन्धोऽस्य ॥

मदगन्धा । स्त्री० सुरायाम् ॥ अतस्याम् ॥

मदगमना स्त्री० महिष्याम् ॥

मदघ्नी । स्त्री० पूतिकायाम् ॥

मदच्युत् । पुं० अमृतरसच्यावयितरि० अमृतरूपे सोमे ॥ मदं मदकरमानन्दकरं रसममृतरूपं च्यावयत्वे सौमदच्युत् ॥

मदन : । पुं० मन्मथे । कामदेवे ॥ [illegible] ॥ धुस्तूरे ॥ पीतझीतके । मरुवके । वसन्ते । मयनफलइति भाषा ॥ मदनोमधुरस्तिक्तोवीर्योष्णोलेखनोलघु : । वातकृद्विद्रधिहर : प्रतिश्यायव्रणान्तक : ॥ रूक्ष : कुष्ठकफानाहशोथगुल्मव्रणापह : ॥ सिक्थके । मधूच्छिष्टे । मैंण० मोम० इतिचभाषा ॥ मदनं मृदु सुस्निग्धं भूतघ्नं व्रणरोपणम् । भग्नसन्धानकृद्वातकुष्ठवीसर्परक्तजित् । माषे ॥ खदिरे ॥ लग्नात्सप्तमभवने ॥ आलिङ्गनविशेषे । तत्स्वरूपं यथा । नायकोनायिकाया : कण्ठे हस्तं दत्त्वा० द्वितीयहस्तं तस्या मध्यदेशे दत्त्वा यदाक्षिपति० इति कामशास्त्रम् ॥ मदयति । मदीहर्षग्लेपनयो : । ल्यु : ॥ न० स्त्रि ॥

मदनकाकुरव : । पुं० पारावते ॥

मदनदहनम् । न० लग्नात्सप्तमभे च ॥ मात्रावृत्तप्रभेदे ॥ यथा । प्रथमं कुरुषट्कलमन्ते कुरुद्वयमितमध्ये वसुतुरगधरं सन्तापहरम्० दशवसुभुवनाष्टभिरवचरणमभिमतमिति रामीयदिवलित [illegible] फणिनायकभणितं जगणविरहितं चत्वारि शरकालकालितं भुवनेमहितम्० हृतरसनिवहं तन्मदनदहनं नरपतिसदसिलब्धपदं गुरुशोभगदम् ॥ यथा । विरहानलतप्तमासीदतिसुन्दरविततमलिनदलतल्पतले नयनसलिलविमले० करकलितकपोलं गलितनिचोलं नयनतिसततहृदिते [illegible] निमेषदृशा । नसखीमभिनन्दति रुजमनुविन्दति निन्दति हिमकरकरनिकरं परितापकरम्० सनुतेहृदिभारं मुक्ताहारं दिवसनिशाकारहीनसुखी जीवितविमुखी ॥

मदनगोपाल : । पुं० श्रीकृष्णे ॥

मदनचतुर्दशी । स्त्री० चैत्रशुक्लचतुर्दश्याम् ॥

मदनत्रयोदशी । स्त्री० चैत्रशुक्लत्रयो-

दृश्याम् ॥
मदनद्वादशी । स्त्री० चैत्रशुक्लद्वादश्याम् ॥
मदनपाठक : । पुं० कोकिले ।
मदनभवनम् । न० सम्मातृसप्तमस्थाने ॥
मदनमोहन : । पुं० श्रीकृष्णे ॥
मदनरस: । पुं० शृङ्गारे ॥
मदनललिता । स्त्री० चतुर्दशाक्षरच्छन्दः १६ प्रभेदे । म्भौ न्मौ गो मदनललिताब्धिषट्कैः षड्भिः । यथा । विभ्रष्टस्रग्गलितचिकुराधौताधरपुटा०म्लायत्पत्रावलिकुचतटोच्छ्वासोर्मितरला । राधात्यर्थं मदनललितान्दोलाऽलसवपुः ० कंसारातिरतिरसमहो चक्रे ऽतिचटुलाम् ॥
मदनलव : । पुं० स्वल्पांशे । मदनस्य लव : ॥
मदनशलाका । स्त्री० कामोद्दीपकाभेषज्ये ॥ सारिकायाम् ॥ कोकिलायाम् ॥
मदनसारिका । स्त्री० पक्षिप्रभेदे । सारिकायाम् । चित्रलोचनायाम् । सालिक्० इ० मी० भा०
मदना । स्त्री० सुरायाम् ॥
मदनायक : । पुं० कोद्रवे ॥
मदनाङ्कुश : । पुं० नखे ॥ लिङ्गे ॥
मदनाडी । स्त्री० गजदानशिरायाम् ॥ तामसमात्रवाहवाहा: । करातृकटाक्षामिद्धाचनेत्राभ्यामदच्युतिरिति ॥
मदनायुध : । पुं० भगे ॥ योनौ ॥
मदनायुध : । पुं० कामदहिषुमे ॥
मदनालय : । पुं० कुसुमधनुषोमन्दिरे । सारागारे । भगे ॥ मदनभवने ॥
मदनावस्था । स्त्री० वह्नेगरूपायांकामावस्थायाम् ॥ कथंतस्यालाभोभविष्यतीति ॥
मदनी । स्त्री० सुरायाम् ॥ कस्तूर्याम् ॥ अतिमुक्तके ॥
मदनीय: । त्रि० मदकारिणि । मदयति । मदी० । क्षत्यक्षुटोवहुलसितिकर्तरि अनीयर् ॥
मदनीया । स्त्री० धातक्याम् ॥
मदनेच्छाफल : । पुं० राजाम्रे ॥
मदनोत्सव: । पुं० सुवसन्तके । होलाकायाम् । होली० इ० भा० ॥
मदनोत्सवा । स्त्री० स्वर्गवेश्यायाम् ॥
मदप्रयोग : । पुं० दन्तिगण्डमदोद्गमे । धर्मासारे ॥
मदप्रसङ्गिनी । स्त्री० शतमूल्याम् ॥
मदमूढवुद्धि : । त्रि० मदेनविपरीतमते ॥ मदमूढबुद्धिविवेकिताकृत : ॥
मदयन्तिका । स्त्री० मल्ल्याम् ।
मदयन्ती । स्त्री० मल्ल्याम् ॥ वनमल्लिकायां ।

मदयिता । त्रि॰ मादके । मदयति ।
मदी॰ । लेट : शब्द ॥

मदयित्नु : । पुं॰ कामदेवे ॥ शौण्डि
के ॥ मेघे ॥ न॰ मद्ये ॥ मदयति ।
हर्षयति॰ स्तनयित्नुमसि । मदी॰ ।
स्तनिहृषिपुषिगदिमदिभ्योणेरित्नु-
रिति॰ इत्नुच् । णेरयादेश : ॥

मदलेखा । स्त्री॰ उष्णिक् ७ छन्द :
प्रभेदे ॥ मभगा : स्यान्मदलेखा ।
यथा । रक्षं बाहुविलग्नाहन्तीन्द्राम्म
दलेखा । लग्नाभून्मुरशत्रोकस्तूरी-
रसचर्चा ॥

मदविक्षिप्त : । पुं॰ मत्तहस्तिनि ॥

मदव्यायाम : । पुं॰ मदाधिक्ये ॥

मदशाक : । पुं॰ उपोदकाम् ॥

मदसार : । पुं॰ तूलवृक्षे । ब्रह्मका-
ष्ठे ॥

मदस्थलम् । न॰ )
मदस्थानम् । न॰ )मद्यपानस्थले । शु
ण्डायाम् । पानगृहे ॥

मदहस्तिनी । स्त्री॰ मत्ताकरञ्जे ॥

मदहेतु : । पुं॰ धातक्याम् ॥ मदस्य
कारणे ॥

मदाढ्य : । पुं॰ तालवृक्षे ॥ त्रि॰मद
युक्ते ॥

मदाढ्या । स्त्री॰ लोहितझिण्ट्याम् ॥

मदातङ्क : । पुं॰ मदात्ययरोगे ॥

मदात्यय : । पुं॰ मद्यपानजन्यरोगवि
शेषे । पानात्यये । मदव्याधौ ॥
निदानानित्तु । विषस्यये गुणाहृ-
ष्टा : सन्निपातप्रकोपणा : । तएव-
मद्येदृश्यन्ते विषे तुबलवत्तरा : ॥
तस्मादविधिपीतेनतथामात्राधिके
नच । युक्तेनचाहितैरन्नै रकालसेवि
तेनच. मद्येनखलुजायन्ते मदात्य
यमुखागदा : ॥ चविधिप्रयुक्तंमद्य-
विकारान्तरमप्युत्पादयतीत्याह ।
निर्भुक्तएकान्ततएवमद्यं निषेव्यमा
णं मनुजेननित्यम् । उत्पादयेत्क
ष्टतमान्विकारानुत्पादयेच्चापिश
रीरभेदम् ॥ केचन्तरमप्याह । क्रु
द्धेनभीतेनपिपासितेनशोकाभित-
प्तेनबुभुक्षितेन । व्यायामभाराध्वप
रिक्षतेनवेगावरोधाभिहितेनचापि ॥
अत्यम्लभक्षावततोदरेणसाजीर्णभु
क्तेनतथाऽबलेन । उष्णाभितप्तेनच
सेव्यमानं करोतिमद्यं विविधान्वि
कारान् ॥ तेचविकाराश्चान्यान्तरे-
ज्ञातव्या : ॥ चिकित्सातु । मद्योत्था
नान्तुरोगाणांमद्यमेवहिभेषजम् ।
यथादहनदग्धानांदहनं स्वेदनं हित
म् ॥ मिथ्याविहितमद्येनयोव्याधि.
रुपजायते । मद्येनैवनिपीतेनमद्ये
नसहशाम्यति ॥ विशेषोन्यत्रद्रष्ट-
व्य : ॥

मदामद : । पुं॰ परमेश्वरे ॥ आत्म-
नि ॥ आत्माहिसमदोऽमदश्च॰सह
र्षोऽहर्षश्च॰विरुद्धधर्मवानतोदेशि

कोपदेशं विनाऽशक्योज्ञातुम् ॥

मदाघात : । पुं॰ गजढक्कायाम् । हा घोपरकाण्डक्षा॰इ॰भा॰ ॥

मदाम्बर : । पुं॰ मत्तहस्तिनि ॥

मदायुध: । पुं॰ चतुर्दन्ते । ऐरावते ॥

मदार: । पुं॰ द्विरदे । हस्तिनि ॥ शूकरे ॥ धूर्त्ते । कामुके । मत्तहस्तिनि । गन्धभेदे ॥ नृपान्तरे ॥ माद्यति । मदी॰ । घणिमदिमन्दिभ्यश्चा रन् ॥ वन्यविशेषे ॥

मदार्मद : । पुं॰ मत्स्यभेदे । राजीवे ॥

मदालसा । स्त्री॰ मार्कण्डेयपुराणप्रसिद्धायाम् गन्धर्वकन्यायाम् । ययापुत्रस्तारित : ॥

मदालापी । पुं॰ कोकिले ॥

मदाश्रय : । त्रि॰ मदेकाश्रये ॥

मदाश्रय : । पुं॰ कस्तूर्याम् ॥

मदिर : । पुं॰ रक्तखदिरे ॥ मदयति । मदि॰ । किरच् ।

मदिरा । स्त्री॰ मादकद्रव्यविशेषे । सुरायाम् । हलिप्रियायाम् । वरुणात्मजायाम् । गन्धोत्तमायाम् । प्रसन्नायाम् । कादम्बर्याम् । इरायाम् । मद्ये । सुपरिस्रुतायाम् । मोदिन्याम् । महानन्दायाम् । मैरेये । देवसृष्टायाम् । कश्यायाम् । द्वादशविधेयं यथा । माध्वीकपानसं द्राक्षं खार्जूरं तालमै-



क्षवम् । मैरेयं माक्षिकं टाङ्कं मधूकं नारिकेलजम् ॥ मुख्यमन्नप्रकारोत्थं मद्यानि द्वादशैव च ॥ ऋतुविशेषे पेयमदिरा यथा । गौडी तु शिशिरे पेया॰ पैष्टी हेमन्तवर्षयो : । शरद्ग्रीष्मवसन्तेषु माध्वी याश्चान्यथा ॥ कादम्बरी मार्द्वीकारिष्टमद्यं सुशीतलं लघ्वकर मदाख्यम् । माध्वीसमं स्यात् लघुपाकमात्तं मद्यं सुशीतं गुरुतरं च ॥ अन्यथाकृतपानं मद्यं सन्तापशोषदम् । अन्नदोषमदात्ययादिकारकं मूर्च्छं भयतत् ॥ नवजीर्णमद्ययोर्गुणास्तु । मद्यं नवं सर्वविकारहेतुस्तु वातादिकदोषदायि । जीर्णं तुसर्व सकामयाम्बूणं प्रदं लघ्वकर दीपनम् ॥ मद्यप्रयोगं कुर्वन्ति शूद्रादिषुमहास्तिषु । द्विजैस्त्रिभिस्तु नपातव्यं यद्यप्युक्तं तम् ॥ गौडी पैष्टी च माध्वी त्रिविधा चोत्तमा सुरा । सैव नानाविधा प्रोक्ता तालखर्जूरसम्भवा ॥ तथा देशविभेदेन नाना द्रव्यविभेदतः । बहुधेयं समाख्याता प्रशस्ता देवतार्चने ॥ अन्यद्द्वादशधा मद्यं भेदानाकुर्मनीषिणः । उक्तम्यान्नभ्यन्नीतिनान्येयां पृथग्गीरितम् प्रायशोभिनयं मद्यं गुरुदोषमगीरितम् । स्रोतसां शोधनं क्षीणदीपनं लघु रोचनम् ।

हर्षं च प्रीणनं वलं मदं शोकभया पहम्। प्रागल्भ्यप्रतिभापुष्टिवीर्य्य तुष्टिस्वरप्रदम्॥ अपिच। सम्यग् विधिविधानेन सुसमाहितचेतसा। पिबन्ति मदिरां मर्त्या अमर्त्या एव ते क्षितौ॥ आकृतिच्छन्दः २२ प्रभेदे॥ यथा। सप्तभकारयुतैश्च गुरुर्ग्गदितेयमुदारतरा मदिरा। यथा। माधवमासि विकस्वरकेशर पुष्पलसन्मदिरामुदितैर्भ्रमरकुलैरुपगीतवनैर्वनमालिनमालिकलानिलयम्। कुञ्जगृहोदरपल्लवकल्पित तल्पमनल्पमनोजरसं सभजमाधविकाम्बुद्रनन्तनयामुनवासकृतोपगमा॥ माद्यत्यनया। मदीश्च। इषिमदिमुदीत्यादिना किरच्॥ मत्तखञ्जने॥

मदिराक्षी। स्त्री॰ मत्तनेत्रायाम्। मदिरावदक्षिणी यस्याः सा। यथा। अविदितसुखदुःखं निर्गुणं वस्तु किञ्चिज्जडमतिरिह कश्चिन्मोक्ष इत्याचचक्षे। मम तु मतमनङ्गस्मेरतारुण्यघूर्णन्मदकलमदिराक्षीनीविमोक्षो हि मोक्षः॥ इति भिटीक्तिः॥

मदिरागृहम्। न॰ गञ्जायाम्। मद्यसंधानगृहे॥ मदिराया गृहम्॥

मदिरासखः। पुं॰ आम्रवृक्षे॥

मदिष्ठा। स्त्री॰ मदिरायाम्॥

मदी। स्त्री॰ चषकवस्तुनि॥ हाप्यके॥

मदीयम्। त्रि॰ मदकरे। हर्षोत्पादके। मदीयसरः इति देवदत्तः। मामके॥ ममेदम्। छः। मपर्य्यन्तस्य मादेशः॥

मदोत्कटः। पुं॰ अनाम देवस्तिनि। मदकले॥ मदेन दानेनाम्बुना उत्कटः मत्तः॥ त्रि॰ मदमत्ते॥

मदोत्कटा। स्त्री॰ मदिरायाम्। मदेनोन्मत्तायाम्॥ मदेनोत्कटा॥

मदोदग्रः। त्रि॰ मदोन्मत्ते॥

मदोद्धता। स्त्री॰ आर्य्याम्॥

मद्गतप्राणः। त्रि॰ मद्गतजीवने॥ मद्गताः प्राणा यस्य॥

मदोद्धतः। त्रि॰ मत्ते॥ मदः पौरुषादिधर्मः तेनोद्धतः॥

मद्गुः। पुं॰ कारण्डवे॥ जलकाके॥ मज्जति। टुमस्जो शुद्धौ। मस्जेः न्यङ्क्वादित्वात् कुत्वम्। संज्ञायाम्। मद्गुः॥ ब्राह्मणेन वन्दि भार्य्यायांजनिते॥

मद्गुरः। पुं॰ मद्गुरी॰ मागुर॰ इ॰ ख्याते मत्स्ये। मज्जति। टुमस्जो॰। मद्गुरादयश्चेति निपातितः। यद्वा। माद्यति। मदी॰। मद्गुरादयश्चेति उरच् धातोर्गुरादेशः। मद्गुरो वातहृद्वृष्यो बल्यः कफकरोलघुः॥ मद्गुरः खण्डरहितः कटुतैलसुभर्ज्जितः। माणिमन्थनिशायुक्तो हिङ्गुना धूपितो रसः। मद्गुरो॰

मद्यपाचनी । स्त्री० धातक्याम् ॥

मद्यपाशनम् । न० उपदंशे । अवदंशे । चखणे । पानरोचकभक्ष्ये ॥

मद्यपुष्पी । स्त्री० धातक्याम् ॥

मद्यमण्डः । पुं० सुरायभागे । मद्यफेने । कारोत्तरे ॥

मद्यवासिनी । स्त्री० धातकीवृक्षे ॥

मद्यबीजम् । न० नानाद्रव्यकृतसुराबीजे । किण्वे । नग्नहु । वाखर० दू०गौ०दे०भा० ॥ मद्यस्यबीजम् ॥

मद्यसन्धानम् । न० अभिषवे । आसुतौ । मद्यस्य भावना०दू०भा० ॥

मद्याजी । त्रि० मद्यव्यापरे ॥ मांसद्यं शीलं यस्य । णिनि : ॥

मद्यामोद : । पुं० बकुलवृक्षे ॥ मद्यस्येवामोदोऽस्मिन् ॥

मद्योग : । त्रि० मदेकशरणे । अपि सर्वकर्मसमर्पणे ॥

मद्रः । पुं० हर्षे ॥ देशविशेषे ॥ वैराटमात्स्ययोर्मध्येप् वंदपककमेण तु । मद्रदेश : समाख्यातोमाद्रीसा सभतिष्ठति ॥ मन्दते । मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु । स्फायितञ्चीतिरक् ॥

मद्रक : । त्रि० मद्रदेशभवे ॥ मद्रेषु जात : । कन् ॥

मद्रकार : । पुं० मद्रङ्करे ॥ मद्रं करोति । डुकृञ् । घेमप्रियमद्रेषु चेतिश्वप् ॥

मद्रङ्कर : । त्रि० क्षेमङ्करे । शङ्करे ॥ मद्रं करोति । डुकृञ् । घेमप्रियमद्रेषु चेतिखच् ॥

मद्रसुता । स्त्री० माद्याम् । नकुलसहदेवयोर्जनन्यांपाण्डुपत्न्याम् ॥

मद्वान् । पुं० विधौ० । वायसे ॥

मद्वती । स्त्री० शिशायां ॥

मद्वा । पुं० शिवे ॥ माद्यति । मदो० । क्वामदीप्यादिभावनिप् ॥ राजवत्०रूपाणि ॥

मद्वरी । स्त्री० सुरायाम् ॥ माद्यत्यनया । मदी० । वनिप् । वनोरचेति ङीब्रौ ॥

मद्गीय : । त्रि०<br>मद्गीय : । त्रि०<br>मद्वर्य : । त्रि०<br>मद्वर्गसम्बन्धिनि । शैषिकेष्वर्थेषु०अस्मद्येतस्यावन्यतरस्यामित्यनेनक्रमात्०खञ्यत्प्रत्यया : ॥

मधु : । पुं० मधुद्रुमे । मधूपी मधुका०दू०भा० ॥ वसन्तर्तौ । दैत्यविशेषे ॥ यंहत्वा० विष्णुर्मधुसूदनोऽभूत् ॥ चैत्रेमासि ॥ जीवाशोके ॥ असुरविशेषे ॥ सचशत्रुघ्नेनहत : । यस्यनाम्नामथुरा०मधुपुरीतिख्यातिंगता ॥ मधुयष्ट्याम् ॥ न० चीरे ॥ जले ॥ मद्ये ॥ मधुररसे ॥ दुग्धे ॥ वर्णवृत्तान्तरे ॥ यथा । इयमपि । लघुमधु ॥ यथा । रतिमय । चरतनु ॥ कर्मकरी ॥मन्यन्ते-

मधुकृत् । पुं० भ्रमरे ॥ मधु करोति । डुकृञ्० । क्विप् ॥ मधुकरमक्षिकायाम् ॥

मधुकीटः । पुं० भृङ्गे । भ्रमरे ॥

मधुकोषः । पुं० मधुमक्षिकाभिः कृतमध्वाधारे । मधुचक्री० इ० भा० ॥

मधुक्रमः । पुं० मधुपानाहर्त्तौ । शब्दमधुपानक्रमे । मधुवारे । मधुनः क्रमः ॥

मधुक्षीरः । पुं० खर्जूरवृक्षे ॥

मधुखर्जूरिका । स्त्री० मधुकर्कटिकायाम् । कोलकर्कटिकायाम् । माधूमधुरायाम् ॥

मधुगन्धः । पुं० बकुले ॥

मधुगायनः । पुं० कोकिले ॥

मधुगुञ्जनः । पुं० शोभाञ्जनवृक्षे ॥

मधुघोषः । पुं० कोकिले ॥

मधुच्छदा । स्त्री० मयूरशिखायाम् ॥

मधुच्छन्दाः । पुं० ऋषिविशेषे । विश्वामित्रपुत्रे ॥

मधुच्युत् । त्रि० मकरन्दस्राविणि ॥

मधुजम् । न० सिक्थके ॥

मधुजम्बीरः । पुं० मधुरजम्बीरे ॥

मधुजा । स्त्री० पृथिव्याम् ॥ मधोर्जाता । जनी० । डः ॥ मधाक्ततायाम् । सितायाम् ॥

मधुजित् । पुं० विष्णौ ॥ मधुं दैत्यविशेषम् अजैषीत् । जि० । सत्सू-द्विषेतिक्विप् । तुक् ॥

मधुतृणः । पुं० न० इक्षौ ॥

मधुत्रयम् । न० मधुरत्रये ॥

मधुदीपः । पुं० कामदेवे ॥

मधुदूतः । पुं० आम्रवृक्षे ॥

मधुदूती । स्त्री० पाटलावृक्षे ॥

मधुद्रुः । पुं० भ्रमरे ॥

मधुद्रवः । पुं० रक्तशिग्रौ ॥

मधुद्रुमः । पुं० मधूके । गुडपुष्पे । महुवा० इ० भा० ॥ मधुनामा द्रुमः ॥

मधुद्विट् । पुं० विष्णौ ॥

मधुधातुः । पुं० स्वर्णमाक्षिके ॥

मधूलिः । स्त्री० खण्डे । खांड इ० भा० ॥

मधुधेनुः । स्त्री० दानार्थं मध्वादिनिर्मितसवत्सायां गवि ॥

मधुनाडी । स्त्री० मध्वाधारच्छिद्रे ॥

मधुनारिकेलः । पुं० माध्वीकफले । मधुफले । बहुकूर्चे । दृढफले । मीठानारेल इ० गौ० हि० भा० । एरनारिकेल इ० कोंकणदेशभा० ॥ माध्वीकनारिकेरं फलमतिमधुरं दुर्जरं जन्तुकारि स्निग्धं वातातिसारश्रमशमनमथ ध्वंसनं वह्निदीप्तेः । आमश्लेष्मप्रकोपं जनयति कुरुते चारुकान्तिं बलसुस्थैर्यं देहस्य धत्ते धनमदनकलावर्धनं पित्तनाशम् ॥

मधुनी । स्त्री० क्षुपविशेषे । घृतमण्डायाम् । वायसोल्याम् । सुमङ्ग-

एतम् । मनज्ञाने । फलिपाटीच्युः धस्यान्तादेश : ॥ पुं॰न॰सार्द्धकम-र्थे ॥ पुष्परसे । मकरन्दे । कुसुमासवे । क्षौद्रे । माक्षिके । पुष्पासवे । पवित्रे । पित्र्ये । भरटीधान्ये ॥ मक्षिकाभरटीभृङ्गवातपुष्परसोद्भवम् । मधुशीतलघुस्वादुरूक्षं ग्राहि-विलेखनम् ॥ चक्षुष्यं दीपनं स्वर्यं व्रणशोधनरोपणम् ॥ सौकुमार्यकरं-सूक्ष्मं परं स्रोतोविशोधनम् । कषायानुरसं ह्लादि प्रसादजननं परम् ॥ वर्ण्यं मेधाकरं वृष्यं विशदं रोचनं हरेत् । कुष्ठार्शः कासपित्तास्रकफ-मेहक्लमक्रमीन् ॥ मेदस्तृष्णावमि-श्वासहिक्कातीसारविड्ग्रहान् । दाहक्षतक्षयांस्तत्तु योगवाह्यल्पवातलम् ॥ माक्षिकंभ्रामरं क्षौद्रं पौत्तिकं-छात्रमित्यपि । आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः ॥ प्रयास-रूपं विज्ञेयं स्वस्थानेमभौमिभिः ॥ नवंमधुभवेत्पुष्टौ नातिश्लेष्महरं सरम् । पुराणं ग्राहकं रूक्षं मेदोघ्नमति-लेखनम् मधुनः शर्करायाश्च गुड-स्यापि॰ विशेषतः । एकसंवत्सरेतीते पुराणत्वस्मृतं बुधैः ॥ विषपुष्पाद-पिरसंसविदाभ्रमराद्य : । गृहीत्वा मधुकुर्वन्ति तच्छीतं गुणवन्मधु । जि-पान्वयात्तदुष्णत्वं चोष्णेनवा-सह । उष्णार्त्तं कोपाकानिचयात्तं-

विषसमंमधु ॥ मकरन्दस्यमद्यस्यमाक्षिकस्यापिवाचकः । अर्द्धर्चादिगणे पाठात्पुन्नपुंसकयोर्मधुः ॥

मधुः । स्त्री॰ जीवन्तीवृक्षे ॥

मधुकः । पुं॰ खगविशेषे । श्रीवदपक्षिणि ॥ वल्लकन्तरे । मधुयष्ट्याम् ॥ वंशपरम्पराशंसके । मागधे ॥ न॰ त्रपुणि । मधुयष्टिकायाम् । त्रपुणि ॥ मध्विव । इवे प्रतिकृता-वितिकन् ॥ यद्वा । मधु॰ मधुरं-कायति । कै॰ आतश्चोपसर्गे इति कः ॥

मधुकण्ठः । पुं॰ कोकिले ।

मधुकरः । पुं॰ भ्रमरे । मधुपे । मधुकरोति॰ तच्छीलः । कृञोहेतुताच्छील्यानुलोम्येषु इति टः ॥ भ्रमरार्थे । भङ्गरा॰ ग्र॰ भा॰ ॥ कामिनि ॥

मधुकर्कटिका । स्त्री॰ मिष्टबीजपूरे । मधुकर्कट्याम् । मधुकर्कटिकास्वाद्वीरोचनीशीतलागुरुः । रक्तपित्त-क्षयश्वासकासहिक्काभ्रमापहा ॥ मधुखर्जूरिकायाम् ॥

मधुकर्कटी । स्त्री॰ मधुकर्कटिकायाम् मधुकाकरीति॰भाषा ॥

मधुका । स्त्री॰ मधुपर्ण्याम् मधुपर्ण्याम् । मधुयष्ट्याम् । टाप् ।

मधुकुक्कुटिका । स्त्री॰ )

मधुकुक्कुटी । स्त्री॰ ) जम्बीरविशेषे । मातुलुङ्गायाम् । सुगन्धायाम् । गिरिजायाम् । पूतिपुष्पिकायाम् ॥

मधुकृत् । पुं० भ्रमरे ॥ मधु करोति । कृञ्० । क्विप् ॥ मधुकर मक्षिकायाम् ॥
मधुकैटभ : । पुं० भृङ्गे । भ्रमरे ॥
मधुकोष : । पुं० मधुमक्षिकाभिः कृतमध्वाधारे । मधुकपक्षी० इ० भा० ॥
मधुक्रम : । पुं० मधुपानाहतौ । शश्वन्मधुपानक्रमे । मधुवारे । मधुनः क्रमः ॥
मधुक्षीर : । पुं० खर्जूरवृक्षे ॥
मधुखर्जूरिका । स्त्री० मधुखर्जूरिकायाम् । कोलकर्कटिकायाम् । माधवीमधुरायाम् ॥
मधुगन्ध : । पुं० बकुले ॥
मधुगायन : । पुं० कोकिले ॥
मधुगुञ्जन : । पुं० शोभाञ्जनवृक्षे ॥
मधुघोष : । पुं० कोकिले ॥
मधुच्छदा । स्त्री० मयूरशिखायाम् ॥
मधुच्छन्दाः । पुं० ऋषिविशेषे । विश्वामित्रपुत्रे ॥
मधुच्युत् । त्रि० अमृतस्राविणि ॥
मधुजम् । न० सिक्थके ॥
मधुजम्बीर : । पुं० मधुरजम्बीरे ।
मधुजा । स्त्री० पृथिव्याम् ॥ मधोर्जाता । जनी० । ड : ॥ मधुशर्करायाम् । सितायाम् ॥
मधुजित् । पुं० विष्णौ ॥ मधुदैत्यविजयम्०मधोर्जयात् । जि० । सत्सु-
द्विषेतिक्विप् । तुक् ॥
मधुतृण : । पुं० न० इक्षौ ॥
मधुत्रयम् । न० मधुत्रये ॥
मधुदीप : । पुं० कामदेवे ॥
मधुदूत : । पुं० आम्रवृक्षे ॥
मधुदूती । स्त्री० पाटलावृक्षे ॥
मधुद्रु : । पुं० भ्रमरे ॥
मधुद्रव : । पुं० रक्तशिग्रौ ॥
मधुद्रुम : । पुं० मधूके । गुडपुष्पे । महुवा० इ० भा० ॥ मधुनामा द्रुमः ॥
मधुद्विट् । पुं० विष्णौ ॥
मधुधातु : । पुं० स्वर्णमाक्षिके ॥
मधुधूलि : । स्त्री० खण्डे । खांड इ०-भा० ॥
मधुधेनु : । स्त्री० दानार्थमधुादिनिर्मितसवत्साधेनौ ॥
मधुनाडी । स्त्री० मध्वाधारच्छिद्रे ।
मधुनारिकेल : । पुं० माधवीकाफले । मधुफले । बहुकूर्चे । दृढफले । मोहानारल० इ०गौ० दे०भा० । एरनारिकेल० इ०कोकणदेशभा० ॥
माधवीकमालिकेरपालमलिमधुरं (?) गुरु वृंहणम्पित्तघ्नं वाताविसारम्भ शमनमश्वध्वंसनं वह्निदीप्तः । धा मध्ये साम्यकोप जनयति कुरुते चारुकान्ति बलसुखं यदेहस्थपश्चात्धनमदनकलावर्धनं पित्तनाशम् ॥
मधुनी । स्त्री० क्षुपविशेषे । घृतसहायाम् । वायसोल्याम् । सुमङ्ग

लायाम् । माकण्डहाता॰इ॰माक चाउली॰इ॰च॰गौ॰दे॰भा॰ ॥

मधुनेता । पुं॰ भ्रमरे ॥

मधुप: । पुं॰ भ्रमरे ॥ मद्यपे ॥ मधु-पिबति । पा॰ । आतोनुपसर्गे॰इ तिक: । पिबते: सुरासीध्वोरिति-नियमान्नटच् ॥

मधुपति: । पुं॰ श्रीकृष्णचन्द्रे ॥

मधुपर्क: । पुं॰ षोडशोपचारपूजा-न्तर्गतषष्ठोपचारे ॥ तस्यप्रमाणंय था । दधिसर्पिर्जलंक्षौद्रंसितेताभि स्तुपञ्चभि: । प्रोच्यतेमधुपर्कस्तुस-र्वदेवौघतुष्टये ॥ असन्तुसर्वत: स त्त्वं सिताद्दधिघृतंसमम् । सर्वेषा-मधिकंक्षौद्रंमधुपर्कंप्रयोजयेत् ॥ त दभावेकांस्यपात्रेधारीकास्येतभवेन वा । ज्योतिष्टोमाश्वमेधादौपूर्वेचे-ष्टे प्रपूजने ॥ मधुपर्क: प्रतिष्ठोयं-सर्वदेवौघतुष्टिद: । धर्मार्थकाममो क्षासाधक: परिकीर्त्तित: ॥ मधु पर्क: सौख्यभोग्यतुष्टिपुष्टिप्रदाय-क: ॥ आज्यंदधिमधुमिश्रंमधुप र्कंविदुर्बुधा: । इतिच ॥ न॰दधि-संयुक्तमधुनि । मत्स्योदये ॥ मधुना पृच्यते । पृची॰ । घञ् ॥

मधुपर्क्य: । त्रि॰ मधुपर्कार्हे ॥ मधु पर्कमर्हति । दण्डादिभ्ययदितियत् ॥

मधुपर्णिका । स्त्री॰ गम्भार्याम् ॥ नी लीवृक्षे ॥ मञ्जिष॰मधुराचिना॰-

पर्णान्यस्या: । पाककर्णेतिङीष् । स्वार्थेकन् । ह्रस्व: ॥ सुदर्शनायाम् ॥

मधुपर्णी । स्त्री॰ गम्भार्याम् । नी-ल्योषधौ ॥ गुडूच्याम् ॥ मधुबीज पूरे ॥ वराहक्रान्तायाम् ॥

मधुपा । स्त्री॰ मध्यमायाम् ॥

मधुपाका । स्त्री॰ षड्भुजायाम् । खर्बूजा॰इ॰भा॰ ॥

मधुपायी । पुं॰ भ्रमरे ॥ त्रि॰मधुपा नकर्त्तरि ॥

मधुपालिका । स्त्री॰ गम्भार्याम् ॥

मधुपिपासु: । त्रि॰ मधुपातुमिच्छौ ॥ मधुपिपासु: । गम्यादित्वाद्वि-तीयासमास: ॥

मधुपीलु: । पुं॰ महापीलौ । राजपी लौ । महावृक्षे ॥

मधुपुरी । स्त्री॰ मथुरायाम् ॥

मधुपुष्प: । पुं॰ मधुद्रुमे ॥ दोर्घे ॥ शिरीषवृक्षे ॥ अशोकवृक्षे ॥ बकु-लवृक्षे ॥

मधुपुष्पा । स्त्री॰ दन्तीवृक्षे ॥ नाग-दन्तीवृक्षे ॥

मधुप्रिय: । पुं॰ बलदेवे । अच्युता-ग्रजे ॥ मधुमद्यंप्रियंयस्य स: । भू मिजम्बाम् ॥ त्रि॰मद्यप्रिये ॥

मधुफल: । पुं॰ मधुनारिकेरे ॥ वि-कङ्कतवृक्षे ॥

मधुफलिका । स्त्री॰ मधुखर्ज्जूरिका-याम् ॥

मधुबहुला । स्त्री॰ वासन्तीलतायाम् ॥

मधुभारः । पुं॰ मात्रावृत्तान्तरे ॥ स गणं विधायकगणं निधाय सुखसौख्यधाममधुभारनाम ॥ यथा । क-यिमुखभासमवतीविधाम । भुजगा-धिकनिभयनाशकेन ॥

मधुभित् । पुं॰ विष्णौ ॥

मधुभूम । त्रि॰ मधुरे ॥

मधुमक्षिका । स्त्री॰ सरघायाम् । मधुमक्षिका ॥

मधुमज्जा । पुं॰ आखोटवृक्षे ॥

मधुमान् । त्रि॰ माधुर्ययुक्ते ॥

मधुमती । स्त्री॰ मूर्वायाम् । काश्मर्याम् ॥ नदीविशेषे ॥ तस्याजलगुणास्तु । चन्द्रभागागुणसाम्यदञ्च सिन्धुमधुमतमन्दिदीपनम् । इति ॥ मध्वस्तिसस्याम् । मध्वादिभ्यश्चेतिमतुप् ॥ उपासनायिका-विशेषे ॥ यथा । तथामधुमतीसि-द्धिर्जायतेनात्रसंशयः । देवचेटी-घलसत्तंतस्यसम्प्राभवन्तिहि ॥ स्व-र्गेसर्व्वेचपातालेलयमस्तुसिध्य-ति । सर्वे वचेटिकाः सर्वानियन्ति नात्रसंशयः ॥ अपिच । यस्तामेष शृणोतियोजनशताद्दाविर्भवन्त्यम्य-त्तामीतिवेद्पुराणभारतकथागाथाद-योनाज्ञया । यत्नातिस्वयमि-च्छयाशुविपदं शास्त्राणिकाव्या-निवालोकान्भाम्यतिपश्यतिस्फुट

रुचीरक्षसलीभैरवी : । उष्णिक्छन्दः ७ प्रभेदे ॥ यथा । ननगिमधुमती । यथा । रविदुहितृतटे॰ वनकुसुमततिः । व्यथतमधुमती॰ मधुमथनमुदम् ॥

मधुमत् । पुं॰ विष्णौ ॥ मधुंमथ्नाति । मदे॰ । क्विप्चेतिक्विप् ॥

मधुमथन : । पुं॰ विष्णौ ॥

मधुमध्वी । स्त्री॰ मालत्याम् ॥

मधुमस्तकम् । न॰ खाद्यविशेषे । परिमाण्यते ॥

मधुमाक्षिकम् । न॰ स्वर्णमाक्षिके ॥

मधुमाध्वीकम् । न॰ मद्ये ॥

मधुमारक : । पुं॰ भ्रमरे ॥

मधुमूलम् । न॰ आलुके । मौआलुइ॰ गौ॰ दे॰ भा॰ प्रसिद्धे । पिङ्गुले ॥

मधुयष्टि : । स्त्री॰ इक्षौ ॥

मधुयष्टिका । स्त्री॰ मधुकायाम् । मधुयष्ट्याम् । मुलहटी॰ मुलेठी॰ इतिख्यातौषधौ ॥ मधुयष्टीव । इवे॰ तिकन् ॥

मधुयष्टी । स्त्री॰ मधुयष्टिकायाम् ॥ मधुनीयष्टी ॥ गुणास्तु मधुयष्ट्या-म् ॥

मधुर : । पुं॰ मिष्टरसे । गौल्ये । स्वादौ । रसभेदे । गुडे ॥ तस्यगुणा : मधुर : पित्तल : शीतो-धातुस्तन्यवृद्धिकृत् । चक्षुष्योवात-पित्तघ्न : कुर्व्यात्स्थौल्यकरञ्जकृमीन्

सौतियुसौज्वरश्वासगलगगंडादिरो गकृत् ॥ अपिच । मधुरस्तुरसस्विनो तिकेशान्वपुप : स्थौर्यंवलौजवीर्यं दायो । अतिसेवनत : प्रमेहशैत्य-जडतामान्द्यमुखान्करोतिदोषा-न् जीवकौषधे ॥ रक्तेक्षौ ॥ राजाम्रे ॥ रसेक्षौ । गुडे ॥ शालौ हैमन्तधान्ये । न० विषे ॥ वङ्गे ॥ त्रि० रसनाकर्षिणि । स्वादौ । मधुररसयुक्ते ॥ मधुमाधुर्यमस्यास्ति । अपसुपीतिरः ॥ मधुमाधुर्यं राति वा । आलोनुपेतिपा : ॥ प्रिये ॥ दधिमधुरंमधुमधुरंद्राक्षामधुरासितातुमधुरैव । तस्यतदेवहिमधुरंय-स्यमनोयत्रसंलग्नम् ॥

मधुरक : । पुं० जीवकौषधौ ॥ स्वार्थेक : ॥

मधुरकण्टक : । पुं०मत्स्यविशेषे । कजालायाम् ।

मधुजम्बीर : । पुं० मधुजम्बीरे । रस-द्राविणि , शर्करके ॥

मधुरत्वच : । पुं० धवे । पीतफले ॥

मधुरत्रयम् । न० दुग्धसितामाक्षिके-षु ॥ सितामाक्षिकसर्पिःषु ॥

मधुरश्विफला । स्त्री० द्राक्षाकाश्मर्य-खर्जूरिफलेषु ॥

मधुरनिस्वना । स्त्री० मधुरस्वरयुक्ता यांनायाम् । मधुरोनिस्वनोय-स्या : ॥

मधुफल : । पुं० राजवदरे ।

मधुरमांसम् । न० चीरास्वे ॥ तद्वि धानंयथा । घृताम्भुस्वेदितेमांसेश्च र्क्रोचूर्णविनि : क्षिपेत् । दुग्धस्वश र्करोपितंपश्चात्सौगन्धिकंक्षिपेत् । नातिसार्द्रं नातिशुष्कमिदंचीरास्व तत्मृतम् ॥ चीरमृतंवहुरसंरोचनं चातिशीतलम् । वातपित्तहरंब-ल्यं सुस्निग्धमतिकोमल ॥

मधुरवल्ली । स्त्री० मधुवीजपूरे ॥

मधुरस : । पुं०इक्षौ । मधुर्मधुरो रसोऽस्यास्मिन्वा ॥ तालवृक्षे ॥

मधुरसा । स्त्री० मूर्वायाम् ॥ द्राक्षा-याम् ॥ दुग्धिकायाम् ॥ गम्भा र्याम् ॥ मधुरसोऽस्या : ॥

मधुरस्रवा । स्त्री० पिण्डखर्जूर्याम् ॥

मधुरा । स्त्री० शतपुष्पायाम् । सौ० फ० इ० भा० ॥ मिश्रेयायाम् । शा लिये । शीतशिवे । सलूफा० इ० गौ० दे० भा० ॥ मधुरोरसोऽस्य स्या : । अर्शआद्यच् ॥ मथुरापुर्याम् ॥ यथा । कस्यापलधर्मरलोमधुपु ष्पंमहाबल: । शत्रुघ्नोमधुरांनाम पुरीं तत्रचकारयं इति मधुरार्थीटिका याम् ॥ मेदायाम् ॥ मधुल्याम् , यष्टिकायाम् ॥ काकोल्याम् । श तावर्याम् ॥ कुष्माण्डिवल्याम् ॥ पा लङ्क्यशाके ॥ मनोहरायाम् ॥ टाप् ॥

मधुराकृतिः । त्रि० सौम्यरूपे ॥
मधुराम्लः । पुं० ) आम्रातके ॥
मधुराम्लकः । पुं० )
मधुराम्लफलः । पुं० रेफले । आरे ॥
मधुरालापा । स्त्री० शारिकायाम् ॥
मधुरालाबुनी । स्त्री० राजालाब्वाम् ।
मधुरिका । स्त्री० मिस्याम् । शालेये ।
शीतमिषे । मधसौफ० इ० भा० ॥
मधुरोरसोऽस्याः । कप् । स्वार्थे
कन् ॥
मधुरिपुः । पुं० विष्णौ ॥ मधोरसुरवि
शेषस्यरिपुः ॥
मधुरेणुः । पुं० कटभीवृक्षे ॥
मधुरोदकः । पुं० सप्तसमुद्रान्यतमस
मुद्रे । जलससमुद्रे । स्वादूदके ॥
मधुलम् । न० आसवे । मद्ये ॥
मधुलग्नः । पुं० रक्तशोभाञ्जने ॥
मधुलता । स्त्री० शूलीतृणे ॥
मधूलिका । स्त्री० राजिकायाम् ॥
मधुलिट् । पुं० भ्रमरे ॥ मधुलेढि । लिह
आस्वादने । क्विप् ॥
मधुलेही । पुं० भृङ्गे । भ्रमरे ॥
मधुलोलुपः । पुं० भ्रमरे ॥
मधुवटी । स्त्री० तीर्थविशेषे ॥
मधुवनम् । न० मधुरायाम् ॥ कदा
चिन्मधुसंज्ञेनदैत्येनाधि ष्ठितं यतः ।
ततोमधुवनंनाम्नाख्यातमत्रमशीत
लं । पुण्यंमधुवनंतत्रसान्निध्यंनित्य
दाहरेः ॥ मधोःवनम् ॥ किष्किं
न्धायां सुग्रीवस्यवनविशेषे ॥
मधुवलः । पुं० कोकिले ॥
मधुवल्ली । स्त्री० यष्टीमधुनि ॥ क्लीत
नके ॥
मधुवारः । पुं० मधुक्रमे । पुनः पु
नर्मधुपानपरिपाट्याम् । मधुपाना
वसरे ॥ मधुनोमद्यस्यवारोऽवसरः ।
मधुपानावृत्तिरित्यावत् ॥
मधुवारुणी । स्त्री० मधुकपायांवारुण्या
म् ॥
मधुवीजः । पुं० दाडिमे ॥
मधुवीजपूरः । पुं० मधुरफलायाम् ।
महाफलायाम् । मधुकर्कट्याम् ।
मीठाबिजौरा० इ० भा० ॥
मधुवृक्षः । पुं० मधुके । महुवा० इ०
प्रसिद्धे ॥ मधुनामावृक्षः ॥
मधुव्रतः । पुं० भ्रमरे ॥ मधुव्रतंभक्ष्यं
यस्य ॥ यद्वा । मधुभक्षणंव्रतयति
भुङ्क्ते । कर्मण्यण् ॥
मधुशर्करा । स्त्री० मधुजातशर्करायां
म् । सिताखण्ड० इ० गौ० दे०
भा० प्र० द्रव्ये यथा । माध्वीसु
ताग्रथत्वन्नामधुजामधुशर्करा । मा
क्षीकशर्करायैवक्षौद्रजाक्षौद्रशर्करा
॥ यद्यथंयन्मधुप्रोक्तं तद्गुणातच्छ
र्करा । विशेषादबलबृष्याचसर्पर्णक्षी
कदेहिनाम् चपिच । मधुजाश
र्कराकाफपित्तरोगमुक् । छ
र्दीसीसारतृड्दाहरक्तरुग्ज्वरादि

मीय : ॥

मध्यमेश्वर : । पुं॰ काशीस्थे शिवलिङ्ग विशेषे ॥ शर्वाणोमध्यमासिधे ॥ चचमर्वाणोस्थानम् ॥

मध्ययव : । पुं॰ षट्गुर्वसर्षपपरिमाणे ॥

मध्यरात्र : । पुं॰ निशीथे । अर्धरात्रे ॥ मध्यरात्रि : । पूर्वापराधरेतिसूत्रे॰ सर्वैकदेश : कालेनसमस्यते नत्वक्लीब॰व्यापकस्यसामान्यार्थे षत्वादिभ्यस्मि : समासे॰ अह : सर्वैकदेशेऽच् ॥

मध्यलोक : । पुं॰ पृथिव्याम् ॥

मध्यलोकेश : । पुं॰ नृपे । राज्ञि ॥ मध्यलोकानांमर्त्यानामीश : ॥

मध्यस्थ : । त्रि॰ मिलष्टे । मध्यवर्तिनि । विवदमानयोरुभयोरपिहितैषिणि ॥ उभयपक्षरहिते ॥ स्वार्थाविरोधेनपरार्थघटके ॥ यथा । एके सत्पुरुषा : परार्थघटका : स्वार्थस्य ग्राहिणोमध्यस्था : परकीयकार्यकुशला : स्वार्थाविरोधेनये । तेऽमीमानुषराक्षसा : परहितं : स्वार्थतोऽन्यते॰येतुघ्नन्तिनिरर्थकंपरहितंतेकेन जानीमहे । पुं॰ पुरुषे । चनैमुख्या सुखदुःखादिमध्यस्थ : । सुखीऽस्मिदुःखिनाऽस्मीति॰ दुःखीचदुःखदिमध्यमध्यासवर्तत । तदुभयराहित्तोमध्यस्थइति॰ उदासीनपदा[illegible] म

ध्येतिष्ठति । शा॰ । क : ॥

मध्यस्थलम् । न॰ कटिदेशे ॥ यथा । कुचौमरिचसन्निभौसुरनमध्यमध्यस्थलीयष्टीतिमिरमञ्जरीसदृशरोमराजीत्वयी । इति ॥

मध्या । स्त्री॰ मध्यमायाम् ॥ स्वचरायाम्वृत्तौ ॥ नायिकाभेदे ॥

मध्याह्न : । पुं॰ अह्नोमध्यभागे । त्रिधाविभक्तदिनस्यमध्यभागे । पञ्चधाविभक्तस्याह्नस्तृतीयभागेवा ॥ अह्नोमध्यम् । सङ्ख्याविसायेतित्ज्ञापकात्समास : ॥

मध्येचित्तम् । अ॰ चित्तमध्ये ॥ मध्येचित्तस्येतिविग्रहे॰ पारेमध्येषष्ठ्यावेति॰अव्ययीभाव : ॰ निपातनादेदंतत्वम् ॥

मध्वद : । पुं॰ कर्मफलभुजिजीवे ॥ मधुकर्मफलम् ॰ अत्ति । अद॰ । कर्मण्यण् ॥ संज्ञापूर्वकत्वाद्वृद्ध्यभाव : ॥

मध्वाधार : । पुं॰ सिक्थके ॥

मध्वालु : । ) न॰ कन्दविशेषे । मधु,

मध्वालुकम् । ) न॰ रक्तालुकेरोमान्विते । दीर्घसुषिरेति॰ भा॰ । मौधालु इ॰ गौ॰ भा॰ ॥

मध्वासव : । पुं॰ मधूकपुष्पजातमद्य । माध्वके । मधुलि । माध्वीके ॥ मधूकपुष्पमधु । तस्यासव : ॥

मध्वासवशणिक् । पुं॰ शौण्डिके ॥

सा । मधुनःशर्करा ॥
मधुशाख : । पुं० मधुश्रीवे ॥
मधुशिग्रुः । पुं० रक्तशोभाञ्जनवृक्षे । सुनगा० द्र० काश्यादीव्याते ॥ मधुः मधुरः शिग्रुः ॥ मधुप्रधानः शिग्रुर्वा ॥
मधुशीर्षकम् । न० समितामिर्निर्मेष छात्रविशेषे ॥
मधुशेषम् । न० सिक्थके ॥
मधुश्रेणी । स्त्री० मूर्वायाम् । मधुनः श्रेणिरत्र ॥
मधुश्वासा । स्त्री० जीवन्तीवृक्षे ॥
मधुष्ठीलः । पुं० मधूकवृक्षे । महुवा इ० विख्याते ॥ मधुष्ठीवति । ष्ठिवु निरसने । इगुपधेति कः । पृषोदरादिः ॥ मधुष्ठीलो गर्भेऽस्येतिवा ॥
मधुसखः । पुं० कामदेवे ॥
मधुसारथिः । पुं० कामदेवे ॥
मधुसिक्थकः । पुं० स्थावरविषभेदे ॥
मधुसुहृत् । पुं० कामदेवे ॥
मधुसूदनः । पुं० भ्रमरे । वनमालिनि । श्रीकृष्णे । वैदिककर्ममार्गके भगवति दुष्टनिग्रहकर्तरि ॥ मधुनामानमसुरंसूदितवान् सूदयति स्मवा । सूदक्षरणे । नन्द्यादित्वाल्ल्युः ॥ विष्णुकर्णमलोद्भूतंमधुनामामहासुरम् । ब्रह्मणोपचितिंकुर्वन्नुजघानपुरुषोत्तमः ॥ तस्यतावद्धादेवतादार्सवेमानवाः । मधुसूदनमित्याहुर्ऋषयश्चजनार्दनमितिभारते ॥
मधुसूदनी । स्त्री० पालङ्कीशाके ॥
मधुस्रवः । पुं० मधूकवृक्षे ॥ मोरटलतायाम् ॥ न० तीर्थविशेषे ॥
मधुस्रवा । पुं० मधूकवृक्षे ॥
मधुस्रवा । स्त्री० जीवन्त्याम् । डोडी तिगुर्जरदेशभाषयाप्रसिद्धायाम् ॥ मूर्वायाम् ॥ हंसपद्याम् ॥ मधुयष्टिकायाम् ॥
मधुस्वरः । पुं० कोकिले ॥ मधुरस्वरः खरोयस्य सः ॥ मधौस्वरोयस्यवा ॥
मधुहा । पुं० विष्णौ ॥ मधुंदैत्यविशेषंहन्ति । हन० । क्विप् चेतिक्विप् । ब्रह्मभ्रूणवृत्रेषु क्विविति नियमस्याप्रायिकत्वात् ॥
मधूकः । पुं० गुडपुष्पे । मधुद्रुमे । महुवा० इतिख्यातेवृक्षे । अस्यगुणाः मधूकपुष्पंमधुरंशीतलंगुरुबृंहणम् । बलशुक्रकरंप्रोक्तंवातपित्तविनाशनम् ॥ फलंशीतंगुरुस्वादु शुक्रलंवातपित्तनुत् । अहृद्यंहन्ति तृष्णास्रदाहश्वासक्षतक्षयान् ॥ तन्मध्यगुणास्तत्फलवत् । यथा । यस्ययस्यफलस्यैववीर्यंभवतियादृशम् । तस्यतस्यैववीर्येणमज्जानमभिनिर्दिशेत् ॥ तस्यत्वग्गुणाः । मधुत्वक्रक्तपित्तघ्नीव्रणशोधनरोपणी ॥ मद्यार्थे० मन्यसेवा । महुमार्या

म॰ मनस्ताने । उलूकादयश्च सा
धुः ॥ न॰ यष्टीमधुनि ॥ इ॰ रा॰
निर्घण्टः ॥
मधूकपुष्पम् । न॰ मधुद्रुमस्य कुसुमे ॥
मधुच्युतस्य समधूकपुष्पं संशोधि-
तं केसरधूलिवर्जितम् । सम्यग्विलीनं श
भसिताघृताभ्यां सनीरकं जीवनवृद्धि
जीविनाम् ॥ बृंहणीयं सुमधुरं मधू
कं वातहृत् । पित्तप्रकोपशमनं हृ-
द्यं कच्यमुखप्रियम् ॥
मधूच्छिष्टम् । न॰ सिक्थके ॥ मधुन
उच्छिष्टम् ॥
मधूत्थितम् । न॰ सिक्थके ॥
मधूत्सवः । पुं॰ चैत्रावल्याम् ॥
मधूपघ्नः । पुं॰ न॰ मथुरायाम् । ल
वणपुरे ॥
मधूलः । पुं॰ जलजमधूके । मधू-
लके ॥
मधूलकः । पुं॰ जलजमधूके जल
महुवा॰ इतिभाषा । दीर्घपत्रे ॥
मधूलाति । ला॰ आतोनुपसर्गेकः
। मध्वीं यामपीतिदीर्घः । स्वार्थेक
न् । गिरिजातमधूके । गौरजाके ।
अस्यागुणामधूकगुणतुल्याः ॥ मधु
रसे ॥ त्रि॰ तद्वति ॥
मधूलिका । स्त्री॰ मूर्वायाम् । प्रत्य
यस्थादितीत्वम् ॥
मधूली । स्त्री॰ क्षीतनके ॥ मधुक-
र्क्याम् ॥ भार्ग्ये ॥

मध्यः । पुं॰ ग्रहस्फुटसाधकाङ्कविशे
षे । पुं॰न॰ विलग्ने । देहमध्यभा
गे । मध्यमे । अवलग्ने । हृदयपु
ण्डरीकाकाशे । त्रि॰ न्याय्ये । उत्क
र्षापकर्षहीने ॥ यथा॰ मध्यमः ।
अन्तरे ॥ अधमे ॥ मध्यमे ॥ यथा । उ
त्तमाऽधममध्यानि बुद्ध्वा कार्याणि
पार्थिव । उत्तमाधममध्येषु पुरुषेषु
नियोजयेत् ॥ मध्यायति । ध्यै॰ ।
आतोनुपसर्गेकः । यद्वा । मन्यते ।
मन॰ । मांशोभांधश्च वा अघ्न्या
दिः ॥ मध्ये शरीरादेर्भवम् । यत्साम्प्रति
के॰ डत्यः ॥ सङ्ख्याविशेषे ॥ यथा ।
१.................. ॥
मध्यगन्धः । पुं॰ आम्रद्रुमे ॥
मध्यतः । अ॰ मध्ये इत्यर्थे ॥ आद्यादि
त्वात्तसिः ॥
मध्यदेशः । पुं॰ देशविशेषे । मध्यमे
॥ तस्यसीमायथा । हिमवद्विन्ध्ययो
र्मध्यं यत्प्राग्विनशनादपि । प्रत्यगे
व प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥
मध्यश्चासौ देशश्चेति कर्मधारयः ॥
शास्त्रोक्तानाभकर्मसंस्कारीजनोम-
ध्यदेशइतिव्याख्याकाराः ॥
मध्यदेशीयः । त्रि॰ मध्यदेशोद्भवे ॥
मध्यदेशीयजनपदा यथा । तान्त्रि-
केकुरुपाञ्चालाः साल्वाश्च सजाङ्ग-
दसाः । शूरसेनाभद्रकाराबोधकाः
सपटच्चराः ॥ मत्स्याः किराताः ॥

मध्वजा । स्त्री० मद्ये ॥

मन: । पुं० जटामांस्याम् ॥

मनआप: । त्रि० मनोज्ञे ॥

मन:प्रग्रधान् । त्रि० प्रगृहीतमनसि । समाधितचित्ते ॥

मन:प्रसाद: । पुं० विषयचिन्ताव्याकुलत्वराहित्ये ॥ मनस: स्वच्छतायाम् ॥ मनस: प्रसाद: ॥

मन:शिल: । पुं० मन:शिलाया म् ॥

मन:शिला । स्त्री० रक्तवर्णधातुविशेषे । कुनट्याम् । मनोज्ञायाम् । नागजिह्विकायाम् । मनसिल्० इ० भा० ॥ मन:शिलागुरुर्वर्ण्यासरो घ्यालेखनीकटु: । तिक्तास्निग्धाविषश्वासकासभूतकफास्रनुत् ॥ मन:शिलामन्दबलंकरोति जन्तोर्ध्रुवंशोधनमन्तरेण । मलानुबन्धं किलमूत्ररोधं सशर्करंकृच्छ्रगदंचकुर्यात् ॥ तावक्रस्वेदनीदोक्तिमनोगुप्तेतदन्तरम् । तालकोक्तविधौतंस्याद्वैद्रक्ता मन:शिला ॥ अथशोधनम् । पचेत्त्र्यहमजामूत्रे दोलायन्त्रे मन:शिलाम् । भावयेत्सप्तधापित्तै रजाया:सा विशुध्यति ॥ मन:शब्दयाच्याशिला । शाकपार्थिवादि: ॥

मननम् । न० बुद्धौ ॥ युक्तिभिरनुचिन्तने ॥ धारणे ॥ असम्भावनाविपरीतभावनानिरासेनयुक्तैरनुचिन्तने ॥ ऊहे ॥ श्रुतस्यार्थस्याद्वितीयवस्तुनोवेदान्तार्थानुगुणयुक्तिभिरनवरतमनुचिन्तने ॥ केवलपुरुषबुद्धिप्रसूतशुष्कतर्कव्यावृत्त्यर्थंवेदान्तार्थानुगुणेतिविशेषणम् ॥ अर्थोऽस्त्याप्तवाक्योक्तैस्तर्कैर्मननमीरितम् । वेदशास्त्राविरोधप्रचतर्कोपाख्यानचेतर: ॥ आत्मन्यतीतेसर्वस्मात्सर्वरूपेयथाततौ । कोवन्ध: कथवामोक्षोनिर्भेत्तंमननंक्षक ॥

मन: । न० ज्ञानेन्द्रियविशेषे । बुद्धीन्द्रियाणांप्रधानेभगवतीविभूतौ । चित्ते । चेतसि । हृदये । स्वान्ते । हृदि । मानसे ॥ अपिचास्यपर्याया: यथाभारते । मनोमहान्मतिर्ब्रह्मापूर्बुद्धि: ख्यातिरीश्वर: । प्रज्ञासंविच्चितिश्चैवस्मृतिश्चपरिपठ्यते । पर्यायवाचका: शब्दामनस:परिकीर्त्तिता: ॥ इति । न्यायमतेऽस्यगुणा: । यथा । परापरत्वसङ्ख्याद्या: पञ्चवेगाश्चमानसे । मनोग्राह्यं सुखंदु:खमिच्छाद्वेषोमति: कृति: ॥ अयौगपद्याज्ज्ञानानांतस्याणुत्वमिहेष्यते । इति ॥ जन्यज्ञानसामान्यंप्रतित्वङ्मनोयोग: कारणम् । त्वचोयोगोमनसाज्ञानकारणमुदाहृत: ॥ तस्यनवगुणायथा । पौर्वापर्यस्त्वपरिमाणसङ्ख्या: कल्पनाक्षमा । सद

ल्पयन्तिमनीषिणइति ॥ तथा॰च स्तिह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥ ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया बुद्ध्या वसीयतेसापिप्रत्यक्षत्वेनसम्मतेति॥ सोयं सङ्कल्पलक्षणोव्यापारोमानस : समानासमानजातीयाभ्यां व्यवच्छिन्दन्मनोलक्षयति॥ स्यादेतत् । असाधारणव्यापारयोगिनौ यथाप्यहङ्कारौनेन्द्रियम्॰एवं मनोप्यसाधारणव्यापारं नेन्द्रियं भवितुमर्हतीत्यतआहइन्द्रियञ्च॰उत : साधर्म्यात्॰इन्द्रियान्तरै : । सात्त्विकाहङ्कारोपादानत्वसाधर्म्यम् । नत्विंद्रलिङ्गत्वम्॰महत्तत्त्वादीनामपि॰इन्द्रलिङ्गत्वेनेन्द्रियत्वप्रसङ्गात् । तस्माद्व्युत्पत्तिनिमित्तमात्रमिन्द्रलिङ्गत्वंनप्रवृत्तिनिमित्तम् ॥ मनुतेऽनेनेतिविज्ञाननिमित्तान्त : करणे ॥ युगपज्ज्ञानानुत्पत्तिर्मनसोलिङ्गम् ॥ १६ । इतिगोतमसूत्रम् । युगपत्एककाले॰एकात्मनीतिपूरणीयम्॰ज्ञानानामनुत्पत्तिर्यत : सएवधर्मोज्ञानकरणात्वं मनसोलिङ्गं लक्षणमित्यर्थ : । तथाहि । चक्षुरादिषु विषयसम्बन्धेपि॰यस्यासत्त्वभावादेकज्ञानं जनयतितत्सम्बन्धादपरज्ञानं जनयति॰तदेवचाणु निखिलज्ञानजनकंसुखादिसाक्षात्कारासाधारणकारणं तदेकमेवलाघवात् सिद्धं मनइत्यर्थ : ॥ लम्बान्नममभवने ॥

मनएवमनुष्याणांकारणं बन्धमोक्षयो : । बन्धायविषयासक्तं मुक्त्यैनिर्विषयंस्मृतम् ॥ यतोनिर्विषयं नित्यं मन : कार्यं मुमुक्षुणा । निरस्तविषयासङ्गं सन्निरुद्धं मनोहृदि यदायात्युन्मनीभावं तदातत्परमं पदम् ॥ तावदेवनिरोद्धव्यं यावद्धृदिगतंक्षयम् । एतज्ज्ञानञ्चध्यानञ्च शेषोन्यायश्चविस्तर : ॥ मन्यतेनेन मनुतेनेनवा । मनज्ञाने॰मनुअवबोधनेवा॰असुन्॰मनसोनैर्मल्यन्त्वश्वत्थंकरणीयम्॰यथोक्तन्दैवीभागवते । भ्रमभूसर्वेषु तीर्थेषुस्नात्वास्नात्वापुन : पुन : । निर्मलंनमनोयावत्तावत् सर्वंनिरर्थकमिति ॥

मनसा । स्त्री॰ विषहर्याम् । जरत्कारुमुने : पत्न्याम् ॥

मनसादेवी । स्त्री॰ कद्रौ । मनसायाम् ॥ अस्या : प्रणाममन्त्रोयथा । आस्तीकस्यमुने : माता भगिनीवासुकेस्तथा । जरत्कारुमुने : पत्नी मनसादेवीनमोस्तुते ॥ अस्याध्यानं यथा । देवीमम्बामहीनांशशधरवदनांचारुकान्तिं वदान्यांहंसारूढामुदारामरुणितवसनांसर्वदांस

वंदैव । मेराज्ञांमगिडताडीम्नन कर्मविगणे नागरवैरनेकैर्वन्देहं साष्टनागामुरुकुचयुगलांभोगिनीं कामरूपामितितिथ्यादितत्त्वम् ॥

मनसिज । पुं॰ कामदेवे । शृङ्गाररूपे मनसिजायते स । जनी॰ सप्तम्यांजनेड : सप्तम्यांहलीत्यलुक् हलदन्तादितिवा ॥

मनसिशय : । पुं॰ स्मरे । कामदेवे । मनसिशेते । शीङ् । अधिकरणे शेते रित्यच् । हलदन्तादित्यलुक् ॥

मनस्कार : । पुं॰ चित्ताभोगे । मनस : सुखादौ । एकस्मिन्विषयेपि सक्तौ वै ॥ मनस : कारोव्यापार विशेष : । डुकृञ् । भावे घञ् । अत : कृकमीतिसत्वम् ॥

मनस्ताप : । पुं॰ मन : पीडायाम् । अनुतापे । पश्चात्तापे । यथा । परनिन्दानिजोत्कर्षव्यसनायुक्त भापणम् । अयुक्तकर्मकुर्वाणोम नस्तापेविशुद्ध्यतीतिमहानिर्वाणतन्त्रम् ॥ ब्राह्मणीनयदादेवा च्छिन्नयज्ञोपवीतकाम् । मनस्तापेनशुद्धि : स्यादापस्तम्बोऽब्रवीन् मुनि : ॥

मनस्ताल : । पुं॰ दुर्गाया : सिंहे ।

मनस्थ : । वि॰ मनसिस्थितवस्तुनि॥

मनश्शनम् । न॰ चिवचायुद्धौ ।

मनस्वी । पुं॰ शूरे ॥ अभिमानिनि ॥ मनोऽस्यास्ति । असन्तत्वादिनि : । शरभे ॥ वि॰ सुमनसि । प्रशस्तमनोयुक्ते ॥ प्रशंसायांविनि : ॥ क्वचिन्मौशय्याक्वचिदपिचपर्यङ्कशयन : क्वचिच्छाकाहार : क्वचिदपिचशाल्योदनरुचि : । क्वचित्कन्थाधारीक्वचिदपिचदिव्याम्बरधरोमनस्वीकार्यार्थी नगणयतिदु : खंनचसुखम् ॥

मनस्विनी । स्त्री॰ । प्रशस्तमनसिस्त्रियाम् ॥ मान्तत्वयोर्ङीप् ॥

मनहंस : । पुं॰ अतिशर्करीच्छन्द : १५ प्रभेदे ॥ सगणंजिधामयौ धरवसुन्दरम् । भमथततोपिवि धायचामरतीसरम् । मनहंसदत्त मिदस्वपल्लवशाधरम् भक्तिमभुज ङ्गमनायकेनमनोहरम् ॥ यथा । नवमञ्जुमञ्जुलकुञ्जकोकिलकोकिलि॰ मधुमत्तचञ्चलचञ्चरीककुलाकुलि । समयेतिधीरसमीरकम्पितमानसे॰ किमुचण्डमानमनोरथेनविखिद्यसे ॥

मनाक् । अ॰ अल्पे ॥ मन्दे ॥ मननम् । मनज्ञाने । आक् प्रत्यय : ॥

मनाका । स्त्री॰ करिण्याम् । हस्तिन्याम् ॥ मन्यते । मन॰ । बलाकादयश्चेतिसाधु : ॥

मनाक्षरम् । न॰ मंगल्यायाम् । मल्लिकागन्धयुक्तागुरुणि ॥ त्रि॰ ईं-

घत्करे ॥

मनायी । स्त्री॰ मनो : पत्न्याम् ॥ मनुशब्दपुंयोगे॰मनोरौवेत्यैकारा देशस्ततोङीप्च ॥

मनावी । स्त्री॰ मनाय्याम् ॥ मनो : स्त्रीतिपुंयोगेमनुशब्दस्यमनोरौवेत्यौ कारादेशस्ततोङीप्च ॥

मनित . । त्रि॰ बुद्धे । ज्ञाते ॥ मन्यते स्म । मनुधववोधने । क्त : । यस्य- विभाषेत्यस्यानित्यत्वादिट् ।

मनीकम् । न॰ अञ्जने ॥

मनीषा । स्त्री॰ बुद्धौ धिषणायाम् । शेमुष्याम् ॥ ईषणम्॰ईषा । ईष गतिहिंसादर्शनेषु । गुरोश्चहलइत्य प्रत्यय: । टाप । मनसईषा । श- कन्ध्वादि : ॥

मनीषिका । स्त्री॰ मनीषायाम् ॥

मनीषितम् । न॰ मनीषायामभिनिवि ष्ट मनीषितम् । प्रातिपदिकाद्धात्व र्थेवहुलमिष्ठवच्चेति॰ णिचि॰ तद न्तात्॰ क्त : ॥ इच्छायाम् ॥

मनीषी । पुं॰ ज्ञे । प्राज्ञे । धीरे । पण्डिते ॥ मनीषाऽस्यास्ति । व्रीह्या दित्वादिनि ॥ यद्वा । मनसईषी चित्तशुद्धिक्रमेणमनसोवशीकर्त्ता ॥ मनसईपित्तरिसनंद्राईश्वरे ॥ पृषोद रादि : ॥ ब्रह्मविदि ॥ यस्तत्फला भिसन्धौ । सत्त्वशुद्धिद्वारेणमहावा- क्यजन्यात्ममनीषावति ॥ विविक्ति

नि ॥ प्रमाणकुशले ॥

मनु : । पुं॰ ब्रह्मण : पुत्रे । सचप्र- जापतिर्धर्मशास्त्रवक्ताच ॥ स्वाय म्भुवादिषु ॥ प्रतिकल्पे चतुर्दशम- नवोभवन्ति । तेषांनामानियथा । स्वायम्भुव : १ सचशतरूपायांब्रह्मणो जात : । स्वारोचिष: २ । उत्तम: ३ । तामस : ४ । रैवत : ५ । चा क्षुष : ६ । सचध्रुवपौत्रात्रिपुञ्ज- यात्ब्रह्मदौहित्र्यांवीरणकन्यायांवैरि ण्यांजात : । एतेषडतीता : । वैव स्वत : ७ । सचस्वसूर्यात्सञ्ज्ञायां जातोवर्त्तमानएव ॥ सावर्णि : ८। सतुसूर्याच्छायायांभविष्यति । द क्षसावर्णि : ९ । ब्रह्मसावर्णि : १० । धर्मसावर्णि : ११ । रुद्रसावर्णि : १२ । देवसावर्णि : १३ । इन्द्रसावर्णि : १४ । एतेभ विष्यन्ति । भागवतेनवमादिमनूनां नामान्तराख्यातानि । यथा॰ रौ- च्य: ९ असौरुचिप्रजापते : पुत्र. । भौत्य . १० । असौभूतिप्रजाप- ते : पुत्र. । मेरुसावर्णि : ११ अ सौब्रह्मण : पुत्र : । ऋतु: १२ ऋ तुधामा १३ । विष्वक्सेन : १४ ॥ इतिभागवतेनवमाध्यायमारभ्यैकवि शत्यध्यायपर्यन्तचतुर्दशमनूनांनि- रूपणमस्ति ॥ ब्रह्मणोदिवसेब्रह्म- न् मनवश्चचतुर्दश । भवन्तिपरिमा

गस्तेषांकालसंख्याम् ॥ सप्तर्षयः सुराः शक्रो मनुस्तत्सूनवो नृपाः । एककाले हि सृज्यन्ते संह्रियन्ते च पूर्ववत् ॥ चतुर्युगाणां संख्यातं साधिका ह्येकसप्ततिः । मन्वन्तरं मनोः कालः सुरादीनाञ्च सत्तम ॥ अष्टौ शतसहस्राणि दिव्यया संख्यया स्मृताः । द्विपञ्चाशत्तथान्यानि सहस्राण्यधिकानि च ॥ त्रिंशत्कोट्यस्तु सम्पूर्णाः संख्याताः संख्यया द्विज । सप्तषष्टिस्तथान्यानि नियुतानि महामुने ॥ विंशतिश्च सहस्राणि कालोऽयमधिकं विना । मन्वन्तरस्य संख्येयं मानुषैर्वत्सरैर्द्विज ॥ मनौ । मनुष्ये । जिनभेदे । प्रजापतौ ॥ ऋषिविशेषे । स्वायम्भुवप्रणीतस्मृतिविशेषे ॥ मनुते । मनुअव बोधने । शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च : । मनते । मनध्याने । पूर्वेण उः ॥

मनुः । स्त्री० मनोः पत्नीम् ॥ मनोस्त्रीतिविषये । पुंयोगे । मनोरौवेत्यौकारैकाराभावे । तत्सन्नियोगशिष्टो ङीप् च न भवति ॥ पृक्कायाम् ॥

मनुजः । पुं० मनुष्ये ॥ मनोर्जातः । जनी० । पञ्चम्यामिति डः ॥

मनुजपतिः । पुं० नरेन्द्रे । मनुजानांपतिः ॥ सख्युरसंज्ञायाम् ० । ऽ । ० ॥

मनुजी । स्त्री० मनुष्याम् ॥

मनुभूः । पुं० मनुष्ये ॥

मनुराट् । पुं० कुबेरे । निधिनाथे । श्वेतोदरे ॥

मनुषी । स्त्री० मानुषस्त्रियाम् । मनुष्यस्त्रीजातौ ॥ योपधप्रतिषेधे० गवयहयमुकयमनुष्यमत्स्यानामप्रतिषेध इति योपधात्वात् ङीष् । हलस्तद्धितस्येति यलोपः ॥

मनुष्यः । पुं० मानुषे । मर्त्ये । मनुजे । मानवे । नरे ॥ अथ मनुष्यर्वाक्स्रोतोब्रह्मणो नवमः सर्गएकविधः । यथा । अर्वाक्स्रोतस्तु नवमः सत्तरेकविधो नृणाम् । रजोधिकाः कर्मपराः दुःखसुखमानिनः ॥ अपि च । तथाभिध्यायतः सर्गं सत्याभिध्यायिनस्ततः । प्रादुर्बभूव चाव्यक्तादर्वाक्स्रोतस्तु साधकः ॥ यस्मादर्वाक्प्रवर्त्तन्ते ततोऽर्वाक्स्रोतसस्तु ते । ते च प्रकाशबहुलास्तमोद्रिक्ता रजोधिकाः । तस्मात्ते दुःखबहुला भूयोभूयश्च कारिणः । प्रकाशाबहिरन्तश्च मनुष्याः साधकास्तु ते इति वह्निपुराणम् ॥ शास्त्रीयज्ञानकर्मयोग्यो ह्ययम् ॥ अत्रपञ्चमनुष्यविभागोवाराह्याम् ६७ अध्याये । मनोरपत्यम् । मनोर्जातावञ्यतौ षुक् च ॥

मनुष्यतीर्थम् । न० प्रजापतितीर्थे । कनिष्ठामूले ॥

पत्कारे ॥

मनायी । स्त्री॰ मनोः पत्न्याम् ॥ मनुशब्दपुंयोगे॰ मनोरौवैत्यौकारा देशस्ततोङीप् च ॥

मनावी । स्त्री॰ मनाय्याम् ॥ मनोः स्त्रीतिपुंयोगेमनुशब्दस्यमनोरौवेत्यौकारादेशस्ततोङीप् च ॥

मनित । त्रि॰ बुद्धे । ज्ञाते ॥ मन्यतेस्म । मनुअवबोधने । क्तः । यस्य विभाषेत्यस्यानित्यत्वादिट् ।

मनीकम् । न॰ अञ्जने ॥

मनीषा । स्त्री॰ बुद्धौ धिषणायाम् । शेमुष्याम् ॥ ईषणम्॰ ईषा । ईष गतिहिंसादर्शनेषु । गुरोश्चहलइत्य प्रत्ययः । टाप् । मनसईषा । शकन्ध्वादिः ॥

मनीषिका । स्त्री॰ मनीषायाम् ॥

मनीषितम् । न॰ मनीषायामभिनिविष्ट मनीषितम् । प्रातिपदिकाद्धात्वर्थेबहुलमिष्ठवच्चेति॰ णिचि॰ तद् न्तात्॰ क्तः ॥ इच्छायाम् ॥

मनीषी । पुं॰ ज्ञे । प्राज्ञे । धीरे । पण्डिते ॥ मनीषाऽस्यास्ति । व्रीह्यादित्वादिनिः । यद्वा । मनसईषी चित्तशुद्धिक्रमेणमनसोवशीकर्त्ता । मनसईषितरिसर्वज्ञईश्वरे । पृषोदरादि॰ । मह्यापिटि ॥ धल्लसफला भिमर्शी । सत्वशुद्धिद्वारेणमनसावा-पयजन्यात्ममनीषावति ॥ विविक्ति

नि ॥ प्रमाणकुशले ॥

मनुः । पुं॰ ब्रह्मणः पुत्रे । सचप्रजापतिर्धर्मशास्त्रवक्ताच ॥ स्वायम्भुवादिषु ॥ प्रतिकल्पेचतुर्दशमनवोभवन्ति । तेषांनामानियथा । स्वायम्भुवः १ सचशतरूपायांब्रह्मणोजातः । स्वारोचिषः २ । उत्तमः ३ । तामसः ४ । रैवतः ५ । चाक्षुषः ६ । सचप्रचेतोयोगात्रिपुष्करयातप्रह्लादीतिव्याधीरणकन्यायांवैराज्याज्जातः । एतेषड्तीताः । वैवस्वतः ७ । अयञ्चसूर्यात्संज्ञायांजातोवर्त्तमानएव ॥ सावर्णिः ८ । सतुसूर्याच्छायायांभविष्यति । दक्षसावर्णिः ९ । ब्रह्मसावर्णिः १० । धर्मसावर्णिः ११ । रुद्रसावर्णिः १२ । देवसावर्णिः १३ । इन्द्रसावर्णिः १४ । एतेभविष्यन्ति ॥ मात्स्येनवमादिमनूनांनामान्तराण्युक्तानि । यथा॰ रौच्यः ९ असोरुचिप्रजापतेः पुत्रः । भौत्यः १० । असौभूतिप्रजापतेः पुत्रः । मेरुसावर्णिः ११ अयंब्रह्मणः पुत्रः । ऋतुः १२ ऋतुधामा १३ । विष्वक्सेनः १४ ॥ इतिमात्स्येनवमाध्यायमारभ्यषट्त्रिंशत्प्रायपर्यन्तचतुर्दशमनूनांनिरूपणमस्ति ॥ ब्रह्मणोदिवसेब्रह्मन् मनवश्चतुर्दश । भवन्तिपरिमा

न्यद्भवहेमन्तं चीयन्तं भोगवासना : ॥ हस्तंहस्तेनसम्पीड्यदन्तैर्दन्तान् विचूर्ण्य च । अङ्गान्यङ्गै : समाक्रम्य जयेदादौस्वकंमन : ॥ एतावतिभूमितलेसुभगास्ते साधुचेतना : पुरुषा: । पुरुषकथासुचगण्यान्नजितायेचेतसाखेन ॥ हृदयबिलेकृतकुण्डलउल्वणकलनाविषोमनोभुजग : । यस्योपशान्तिमागतमुदितंतस्यायंचन्द्रे ॥ इति ॥ दोलमीचित्तनाशस्य योगोज्ञानञ्चराघव । योगस्तद्वृत्तिरोधोहिज्ञानंसम्यगवेक्षणम् ॥ असाध्य : कस्यचिद्योग :,कस्यचिद्तत्त्वनिश्चय : । प्रकारौद्वौततोदेवोजगादपरमेश्वर :॥,इतिच ॥ मनोनाशाभ्यासस्तु॰ अत्यन्ताभावसम्पत्तौज्ञातुर्ज्ञेयस्यवस्तुन : । युक्त्याशास्त्रैर्यतन्ते येतेप्यत्राभ्यासिन :,स्थिता : ॥ ज्ञातृज्ञेययोर्मिथ्यात्वधीरभावसम्पत्ति : ॥ स्वरूपेणाप्यप्रतीतिरत्यन्ताभावसम्पत्ति : । युक्तिर्योग : । सोयंमनोनाशाभ्यास : ॥

मनोन्मनी । स्त्री॰ योगिनोऽवस्थाविशेषे ॥ यथाहुर्योगतारावल्यांश्रीशङ्कराचार्या : । नेत्रेयथोन्मेषनिमेषशून्येवायुर्यथावर्जितरेचपूर : मनश्चसङ्कल्पविकल्पशून्यंमनोन्मनीसामयिसन्निधत्ताम् ॥ चित्तेन्द्रियाणांचिरनिग्रहेणश्वासप्रवाहेशमितेसमस्ते । निवातदीपायुतनिश्चलाङ्गामनोन्मनीसामयिसन्निधत्तामिति ॥

मनोभव: । पुं॰ कामदेवे ॥ मनसिभवोऽस्य ।

मनोभु: । पुं॰ कन्दर्पे । मनसा॰ मनस :मनसिवाभवति भुव: क्विप् ॥

मनोमय: । पुं॰ पञ्चकोशान्तर्गततृतीयकोशे । इच्छाशक्तिमत्ति॰करणरूपिमनस्तुकर्मेन्द्रियै : सहितंमनोमयकोशोभवतीति ॥ अहन्ताममतांदेहेगृहादौचकरोतिय : । कामाद्यवस्थयाभ्रान्तोनासावात्मामनोमय : ॥ चात्मनि ॥ मनोवृत्तिभिर्विभाव्यमानत्वात् । त्रि॰ मन : प्राये ॥

मनोयोनि : । पुं॰ कामदेवे ॥ मनोयोनिरस्य ॥

मनोरथ : । पुं॰ इच्छायाम् । स्पृहायाम् ॥ मनएवरथोऽत्र । मनसोरथ इववा ॥ मनोरथानामगतिर्नविद्यते । पूर्णेषु पूर्वेषुपुनर्नवानामुत्पत्तय:सन्तिमनोरथानाम् । त्रि॰ मनस्तुष्टिकरे । चित्तपरिकल्पिते॰ चित्तपरिच्छेद्येमनस्यावर्तमाने ॥

मनोरम : । त्रि॰ सुन्दरे । रुचिरे । चारुणि । सुषमे । साधौ । शोभने ॥ मनोरमयति । रम् ॰ । अण्यन्त : । कर्मण्यण् ॥ दक्षिणपश्चिमद्वारगृहे ॥

मनुष्यधर्मा । पुं॰ धनदे । श्रीदे । कुवेरे ॥ मनुष्यस्येवधर्म आचार : । मनुष्यवत्वादिर्वास्य । धर्मादनिच्केवलात् ॥

मनुष्ययज्ञ : । पुं॰ अतिथिपूजने, । नृयज्ञे ॥

मनुष्यलोक : । पुं॰ अधिकृतब्राह्मणादिविशिष्टदेहे ॥

मनोगुप्ता । स्त्री॰ नागजिह्वायाम् । मन : शिलायाम् ॥ मनसागुप्ता । कर्तृकरणसमास : ॥ इक्षुप्रभेदे । मनोगुप्तावातहरीदृष्यामयविनाशिनी । सुशीतामधुरातीवरक्तपित्तप्रणाशिनी ॥

मनोज : । पुं॰ कामदेवे ॥ मनसिजायतेश्रृङ्गारादिरूपेणप्रादुर्भवति । जनी॰ । सप्तम्यांजनेर्ड : । तत्पुरुषेकृतिबहुलमितिबहुलग्रहणात्लुगभावा : ॥

मनोजन्मा । पुं॰ कामदेवे ॥ मनसोजन्मयस्य स : ॥

मनोजव : । पुं॰ हरौ ॥ मनसोवेगइवलवेगोऽस्य सर्वगतत्वात् ॥ हनुमति । मनसोवेगे ॥ त्रि॰ पितृसन्निभे । पितृतुल्ये । अतिशयवेगवति ॥ जवति । जु :सौत्र : । अच् । मनोजव वेगवदास्मिन् ॥

मनोजवस : । पुं॰ पितृसन्निभे ॥ मनोजवतेऽस्मिन् । चौष्यादिकोऽस : ॥

मनोजवृद्धि : । पुं॰ कामवृद्धिक्षुपे ॥

मनोज्ञम् । न॰ सरलकाष्ठे ॥ त्रि॰ शोभने । मनोहरे । सुन्दरे । रुचिरे ॥ मनसाजानाति । इगुपधेति क : । मिहत्प्रियत्नोन जानाति : ॥

मनोज्ञा । स्त्री॰ मन : शिलायाम् ॥ राजपुत्र्याम् ॥ वन्ध्याकर्कोटक्याम् ॥ जात्याम् ॥ मदिरायाम् ॥ स्थूलजीरके ॥

मनोनाश : । पुं॰ मनसोलये ॥ मनसोनाशोनामशक्तिरूपपरिणामंपरित्यज्यसर्ववृत्तिविरोधिनानिरोधाकारेणपरिणाम : ॥ सहस्राङ्कुरशाखात्मफलपल्लवशालिन : । अस्यसंसारवृक्षस्यमनोमूलमितिस्थितम् ॥ सङ्कल्पमेवतन्मन्ये संकल्पोपशमेनतत् । शोषयामियथाशोषमेतिससारपादप: ॥ प्रबुद्धोस्मिप्रबुद्धोस्मिदुष्टश्चौरोमयात्मन: । मनोनामनिहन्म्येनंमनसाहचिरंहृत: ॥ इतिजनक: ॥ वशिष्ठोप्याह । अस्यसंसारवृक्षस्यसर्वोपद्रवदायिन : । उपायएकएवास्तिमनस : स्वस्यनिग्रह : ॥ मनसोभ्युदयोनाशोमनोनाशोमहोदय: । ज्ञोमनोनाशमभ्येतिमनोज्ञस्यहिशृङ्खला ॥ तावन्निशीथवेतालावल्गन्तिहृदिवासना : । एकतत्त्वदृढाभ्यासाद्यावन्नविजितमन : ॥ प्रक्षीणचित्तदर्पस्यनिगृहीतेन्द्रियद्विष : । पद्मि

न्यदूवद्विसन्तौ धीयन्तौ,भोगवासना : ॥ हस्तंहस्तेनसम्पीड्यदन्तैर्दन्तान् विचूर्ण्य च । अङ्गान्यङ्गैः समाक्रम्य जयेदादौस्वकंमन : ॥ एतावतिभूमि ललिसुभगास्ते साधुचेतना : पुरुषाः । पुरुषकथासुचगण्यानजितायैचेत सार्ख न ॥ हृदयबिलकृतकुण्डलव ल्वणकलना बियोमनोभुजग : । यस्योपशान्तिमागतमुदितंतमव्ययंव न्दे ॥ इति ॥ टीकमौविरलाभ्या यौगोह्यानश्वराघव । योगस्तद्वदपि दोषैहिद्यानंसम्यगविदषाम् ॥ यसा ध्य : मास्यचिद्योग :। कस्यचिद्ज्ञान निश्चय : । प्रकारौद्वौततोदेवोजगा द्परमेश्वर :॥ इतिच ॥ मनोनाशा भ्यासस्तु॰ अत्यन्ताभावसम्पत्तौज्ञा तुर्ज्ञेयस्यवस्तुन : । युक्त्याशास्त्रैर्यत न्तौयेप्यचाभ्यासिन :, स्थिरा : ॥ ज्ञातृज्ञेययोर्मिथ्यात्वधीरभावसम्प त्ति : ॰ स्वस्वरूपेणाप्यप्रतीतिरत्यन्ताभावसम्पत्ति :॥ युक्तियौग : । सोयमनोनाशाभ्यास : ॥

मनोन्मनी । स्त्री॰ योगिनोऽवस्थाविशेषे ॥ यथाकुर्योगतारावल्यांश्रीशङ्कराचार्या : । नेत्रेयथोन्मेषनिमेषशून्येवायुर्यथावर्जितरेचपूर : मनश्च सङ्कल्पविकल्पशून्यंमनोन्मनीसामयिसन्निधत्ताम् ॥ चित्तेन्द्रियाणां चिरन्निरोधेश्वासप्रवाहेशमितेसमस्ते । निवातदीपाश्रुतनिश्चलाङ्गा- मनोन्मनीसामयिसन्निधत्तामिति ॥

मनोभवः । पुं॰ कामदेवे ॥ मनसिभवोऽस्य ।

मनोभूः । पुं॰ कन्दर्पे । मनसा॰ मनस :मनसिवाभवति। भुवः क्विप् ॥

मनोमयः । पुं॰ पञ्चकोषान्तर्गततृतीयकोषे । इच्छाशक्तिमति॰करणरूपे मनस्तत्कर्मेन्द्रियै : सहितंमनोमयकोषोभवतीति ॥ अहन्ताममतादिदेगृहादौपवर्तीतिय : । कामाद्यवस्थयाध्वान्तोनासावात्मामनोमय : ॥ चात्मनि ॥ मनोवृत्तिभिर्विभाव्यमानत्वात् ॥ त्रि॰ मन : प्राये ॥

मनोयोनि : । पुं॰ कामदेवे ॥ मनोयोनिरस्य ॥

मनोरथ : । पुं॰ इच्छायाम् । स्पृहायाम् ॥ मनएवरथोऽत्र । मनसोरथ इववा ॥ मनोरथानामसमाप्तिरस्ति कार्यायुतेनाप्यथवाप्रयत्नै : । पूर्वेषु पूर्वेष्वपुनर्नवानामुत्पत्तय:सन्तिमनोरथानाम् । त्रि॰ मनस्तुष्टिकरे । चित्तपरिकल्पिते॰ चित्तपरिच्छेदोमनस्यभावर्तमाने ॥

मनोरम : । त्रि॰ सुन्दरे । रुचिरे । चारुणि । सुषमे । साधौ । शोभने ॥ मनोरमयति । रम् ॰ । ण्यन्त : । कर्मण्यण् ॥ द्विपपश्चिमदारष्टि ॥

मनोरमा । स्त्री॰ मनोज्ञायाम् । का न्तायाम् । मञ्जुलायाम् । मनोह रायाम् । सुंदर्याम् ॥ बुद्धशक्तिवि शेषे । तारायाम् । लोकिश्वरात्म जायाम् ॥ पङ्क्तिश्छन्दः १॰ प्र- भेदे । यथानरजगैर्भवेन्मनोरमा । यथा । तरणिजातटे विहारिणी॰ व्रजविलासिनीविलासतः । मुरारि रस्तु : पुनातु वः ॰ सुकृतशालि नांमनोरमा ॥

मनोवती स्त्री॰ ब्रह्मणः पुर्याम् ॥ यथा । चतुर्दशसहस्राणियोजनानां स्वयम्भुवः । मध्येमनोवतीनामपु रीलोकैश्च वन्दिता ॥ यावत्काराकया नुच्चैर्वियन्मार्गान्महः श्रिया । सावित्र्याः स्वर्णमानेवस्वर्गकामरति वर्तिनी ॥ तस्यामुपासतेदेवामुनय स्तपोधनाः । महायोगेश्वरंसिद्धा यमाद्यैर्भूतवैधसम् ॥ मध्ये ॰ इन्द्रा द्याष्टदिक्पाला ममरावत्याद्यष्टपुरी णांमध्यवर्त्यर्थः ॥ इतिमृगेन्द्रसंहि ता ॥

मनोयित् । पुं॰लोकायतभेदे ॥ सच्चिदा नन्दात्मनएवात्मेतिनिश्चिनोति । म नसः खातन्त्र्याच ॰ घटवदनात्म त्वात् ॰ करणत्वाच्चदीपवदात्मत्वा योगात् ॥

मनोहत : । त्रि॰ प्रतिहते । हतमनो भङ्गे ॥ मनोहतंयस्यसः ॥

मनोहर : । पुं॰ कुन्दवृक्षे ॥ न॰ सुव र्णे ॥ त्रि॰ मनोज्ञे ॥ मनोहरति हरतेरनुद्यमने॰ इत्यच् ॥

मनोहरा । स्त्री॰ जातीपुष्पे ॥ स्वर्णयू थ्याम् ॥ मनोज्ञायाम् ॥ टाप् ॥

मनोहर्त्ता । त्रि॰ मनोहरणकर्त्तरि ॥

मनोहारि । न॰ सुन्दरवाक्ये ॥ त्रि॰ मनोहरे ॥ प्रिये ॥

मनोज्ञा । स्त्री॰ मनःशिलायाम् ॥ मनःशब्दे ज्ञयते । ह्रेञ्शब्दे । चातश्चोपसर्गेइत्यङ् । टाप् ॥

मन्तव्य : । त्रि॰ ज्ञेये ॥ मननीये । भाव्ये । विभावनीये ॥ मन्तव्यश्चो पपत्तिभिः ॥

मन्तु : । पुं॰ अपराधे ॥ मनुष्ये ॥ प्रजापतौ ॥ न॰ मन्त्रणायाम् ॥ म न्यते । मनज्ञाने । कमिमनिजनी त्यादिना॰ तुः ॥

मन्ता । पुं॰ मन्थिनि ॥ मन्यते मन । बहुलमन्यत्रापीति॰ तृच् ।

मन्त्र : । पुं॰ वेदविशेषे ब्राह्मणभिन्ने वेदभागे । याज्यापुरोनुवाक्यादौ । देवेभ्योयेनोह्रियन्तेहविर्दीयतेतत्र । स्वरतोवर्णतोवाहीनस्यमन्त्रस्यानिष्ट फलजनकत्वमुक्तं शिक्षायांमहाभाष्ये च । मन्त्रोहीनः स्वरतोवर्णतोवा मिथ्याप्रयुक्तोनतमर्थमाह । सवाग् वज्रोयजमानंहिनस्तियथेन्द्रशत्रुः स्वरतोपराधादितिशिक्षा । दुष्टः

च ॥

मन्त्रगण्डक : । पुं॰ विद्यायाम् ॥

मन्त्रगूढ : । पुं॰ चरे ॥ मन्त्रोगूढोयस्मिन् ॥

मन्त्रगृहम् । न॰ मन्त्रणागारे ।

मन्त्रज्ञा । स्त्री॰ मन्त्रशक्तौ ॥

मन्त्रजिह्व : । पुं॰ वह्नौ ॥

मन्त्रज्ञ : । पुं॰ चरे ॥ त्रि॰ । मन्त्रविदि ॥

मन्त्रज्वाल : । पुं॰ अग्नौ ॥

मन्त्रणम् । न॰ मन्त्रे ॥ मन्त्रि॰ । भावेल्युट् ॥ मन्त्रणायाम् ॥

मन्त्रणा । स्त्री॰ मन्त्रे ॥ रहसिकर्त्तव्यावधारणे ॥ तत्रवर्ज्जनीयानि यथा । मन्त्रेपञ्चाङ्गतायांक्रियाङ्गुल्योपायसिद्ध्य : । उदयश्चिन्तनोयायस्थैर्यौञ्चश्यादिसूक्ष्य : ॥

मन्त्रणागारम् । न॰ मन्त्रगृहे ॥

मन्त्रद : । त्रि॰ मन्त्रदातरि ॥

मन्त्रदाता । त्रि॰ मन्त्रप्रदानकर्त्तरि । श्रीगुरौ ॥ यदीचितस्ममूर्खस्तनिष्फलिन्नास्तिनिश्चितम् । सर्वकर्मस्वनर्हस्यनरकेतत्पशोःस्थिति : ॥ जन्मदाताऽन्नदाताचामातान्येगुरवस्तथा । पारेकर्त्तुंन शक्यन्तेघोरेसंसारसागरे ॥ विद्यामन्त्रज्ञानदातानिपुण : पारकर्म्मणि । नशक्त : शिष्यमुद्धर्त्तुमीश्वरशंकरे ऽपर : ॥

मन्त्रदीधिति : । पुं॰ अग्नौ ॥

मन्त्रनिर्णय : । पुं॰ मन्त्रनिश्चये ॥ यथा । मन्त्रमूलंयतोराज्यंततोमन्त्रंसुरक्षितम् । कुर्याद्यथातन्नविदु : कर्मणामाफलोदयात् ॥ धर्मार्थकामतत्वज्ञोभीसंशयश्चपरीक्ष्यते । समन्वद्रतिविज्ञेय : श्रेष्ठाश्चखलुविभ्रमा : ॥ एकमेवविपर्ह्न्तिशस्त्रेणैकश्चवध्यते । सराष्ट्रसम्पद्ंहन्तिराजानंमंत्रविभ्रम : ॥ कांरिष्यन्नप्रभाषेतकृतान्येवतुदर्शयेत् । धर्मार्थकामकार्याणि तथामंत्रोनभिद्यते ॥ गिरिपृष्ठमुपारुह्यप्रासादंवारहोगत : ॥ अरण्येनि : शलाकेशात्तमंत्रोविधीयते ॥ तथसामप्रयोक्तव्यं कार्येषुपायवत्स्वपि । दानंसुभ्येपिभेदश्चशक्तेष्वपिनिश्चय : । खडमूकांधवधिरांस्तिर्यग्योनीन्वयोधिकान् । स्त्रीम्लेच्छव्याधितव्यङ्गान्मंत्रकालेनियेधयेत् ॥ इतिसम्यकृत : प्रोक्तोराजनीतिर्विधंमया । यत्त्रिवर्गविवर्द्धस्याद्राजनीतिस्तदुच्यते ॥ इतियुक्तिकल्पतरौनीतियुक्ति : ॥

मंत्रपूत : । त्रि॰ मंत्रेणपवित्रीकृते ॥

मंत्रपूतात्मा । पुं॰ गरुडे ॥ त्रि॰ मंत्रेणपवित्रात्मनि ॥

मंत्रवित् । पुं॰ चरे ॥ मंत्र-

नेत्ररोगे । नेत्रमले ॥ मारणे ॥ म
थ्यतेऽनेन । मथिहिंसासंक्लेशनयोः
। हलश्चेतिघञ् ॥ मन्थने ॥
मन्थनम् । न० नवनीते ॥
मन्थदण्डः । पुं० मन्थाने । मन्थान-
दण्डे । रई० इ० भा० ॥
मन्थनम् । न० विलोडने । क्षुब्धने ।
पुं० मन्थानदण्डे ॥
मन्थनघटी । स्त्री० दधिमन्थनपात्रे ॥
मन्थनी । स्त्री० गर्गर्याम् । मन्थनपात्रे
॥ मथ्यतेऽनयाम् । मन्थविलोडने।
करणेतिल्युट् ॥
मन्थरः । पुं० कोपे ॥ फले ॥ बाधे ।
मन्थाने ॥ सूचके मन्दगामिनि ।
थैरादि ॥ कोषे ॥ केशे ॥ न० कुसु
म्भाम् ॥ त्रि० मन्दे । पृथौ ॥ वक्रे
॥ मन्दगामिनि जडे ॥ सूचके ॥
नीचे ॥ मन्थतिमाद्ये । मथि० ।
बाहुलकादरन् ॥
मन्थरा । स्त्री० कैकेय्यादास्याम् ॥
मन्थरः । पुं० कुठेरे । चामरवाते ॥
मन्थशैलः । पुं० मन्दराचले ॥
मन्था । स्त्री० मेथिकायाम् ॥
मन्थानः । पुं० मन्थदण्डे । बैशाखे
रई० इ० भा० ॥ आरग्वधे ॥ न०
गायत्रीच्छन्दः ६ प्रभेदे ॥ यथा ।
कर्णधाराकन्दमाधायनिःश्वस्य । व-
र्णैरमैर्यत् मन्थानमेतत् ॥ यथा ।
श्रीशागमकृतायपाद्यार्वनेवाय ।
वन्दक्षनन्दस्यभव्यायमुताय ॥ मन्थ
ति । मथि० । बाहुलकादानच् ॥
मन्थानकः । पुं० तृणभेदे । रहिते ।
दृढमूले । तृणाद्रिपे ॥
मन्थिनी । स्त्री० दधिमन्थनपात्रे ।
गर्गर्याम् । कलस्याम् । मथानी०
इ० भा० ॥
मन्दः । पुं० शनैश्चरे । हस्तिजात्य
न्तरे ॥ यौवंमादे । यमे ॥ प्रलये ॥
त्रि० अतीक्ष्णे । अलसे । शीतके ॥
मूर्खे ॥ स्वैरे ॥ अभाग्ये । भाग्यर
हिते ॥ रोगिणि ॥ अल्पे ॥ मदर
ते ॥ खले ॥ अथुश्चितस्त्वेमज्ञाना
धिकारमप्राप्ते ॥ मन्दते । मदिस्तु
तिमोदमदस्वप्नकान्तिगतिषु । पचा
द्यच् ॥ न० ईषदर्थे ॥
मन्दगः । त्रि० मृदुगामिनि । अशीघ्र
गे ॥
मन्दगतिः । पुं० शनौ ॥ त्रि० मन्द
गामिनि ॥
मन्दगामी । त्रि० मन्दगमनशीले ।
मन्थरे ॥ मन्दशब्दोप० गम० तच्छीलः
। अमृक्ष० । सुप्यजातावितिणिनिः
मन्दजननी । स्त्री० सूर्यपत्न्याम् । शनि
मातरि । छायायाम् । तपत्याम् ॥
मन्दटः । पुं० पारिभद्रवृक्षे ॥
मन्दता । स्त्री० आलस्ये । मन्दत्वे ॥
मन्दनम् । न० स्तोत्रे । मन्दते । मदि
। कृपूवृजिमन्दीत्यादिनाक्युः ।

मन्दप्रज्ञ : । वि० जडबुद्धौ ॥ मन्दाल्पप्रज्ञाधीर्यस्य स : ॥

मंदभाग्य : । त्रि० विघ्नाकुले ॥

मंदभू : । पुं० मन्दभूमौ ॥

मन्दर : । पुं० मन्थशैले ॥ मन्दारपादपे ॥ स्वर्गे ॥ हारभेदे ॥ मेरोर्हा क्षार्थिप्राच्यादिदिक्षु तवर्ष पञ्चाशत् सहस्रोच्छ्रायैर्विष्कम्भशैले ॥ तच दीर्घजनसहस्रं प्रतिमानुकदम्बपादपोऽस्ति । सुराङ्गनाक्रीडाप्रधानोऽपि मन्दर : । न० मणिकृतान्तरे ॥ छन्दसिभीयदि । मन्दरमस्यति ॥ घञ् यमन्दर । वैरिभयङ्कर ॥ वि० बहुले ॥ मन्दे ॥

मन्दिरहरिण : । पुं० जम्बुद्वीपोपद्वीपविशेषे ॥

मन्दसान : । पुं० वन्हौ ॥ जीवे ॥ निद्रायाम् ॥ मन्दते । मदि० । कृत्स्विबधिमन्दिसहिभ्य : किदित्यसानच् ॥ वेदभाष्ययौगिकार्थएवपुरस्कृत : ॥

मन्दा । स्त्री० सङ्क्रान्तिविशेषे ॥ अजादित्वाट्टाप् ॥

मन्दाक्षम् । न० लज्जने ॥

मन्दाकिनी । स्त्री० वियद्गङ्गायाम् । स्वर्णदाम् । सुरदीर्घिकायाम् ॥ प्रधानधारायास्वर्गेसाचमन्दाकिनी स्मृता । योजनायुतविस्तीर्णाप्रस्थे नयोजनास्मृता । क्षीरतुल्यजलाथ प्रवहत्युज्ज्वलतरङ्गिणी । वैकुण्ठाद् ब्रह्मलोकस्ततः स्वर्गं समागता ॥ सङ्क्रान्तिविशेषे ॥ यथा । बुधेमैवसंज्ञा तुमन्दाकिनीसानृपाणान्तुसौख्यं भवेत्तत्रमासे ॥ जगतीच्छन्द: १२ प्रभेदे ॥ ननररघटितातुमंदाकिनो । यथा । बलिदमनविधौबभौ सङ्गता० पदनखदलिप्सुमंदाकिनी सुरनिहितसिताम्बुजाब्जनिभाम्बर तुजगदघसपीताम्बर : ॥ मंदमकति० सम्पौला । चक्रकुटिलायागतौ । सुधीतिषिनि : । ङीप् ॥

मंदाक्रान्ता । स्त्री० अत्यष्टिच्छंद : १७ प्रभेदे । मंदाक्रान्ताम्बुधिरसनगैर्मोभनौतौगयुग्मम् । यथा । प्रेमालापै : प्रियवितरणै : प्रीणिताशिष्टनार्यो मंदाक्रान्तातदनुनियतंवश्यता सैतियाणा । एवंधिष्ण्यावचनसुधयाधाधिकाया : सखीनांप्रीत: प्रायात् स्मितसुवदनोदिवकोमहनोन : ॥

मंदायम् । न० छन्नायाम् ॥ मदमयं वागाकाथ ॥

मंदाग्नि: । पुं० पक्वनिष्कासनाधाग्निविशेषे ॥ कफद्वाराल्पजठरानले ॥ तस्यनिदानादियथा । मदस्तीक्ष्णोथ विषम : समश्चेतिचतुर्विध : । कफपित्तानिलाधिक्यात्तत्साम्याज्जाठरोऽनल : ॥ विषमोवातजान्रोगांस्तीक्ष्ण : पित्तसमुन्नतान् । करो

नेत्ररोगे । नेत्रमले ॥ मारुते ॥ म
थ्यतेऽनेन । मथि(हिंसासंक्लेशनयोः
। हलश्चेतिघञ् ॥ मन्थने ॥
मन्थजम् । न० नवनीते ॥
मन्थदण्ड: । पुं० मन्थाने । मन्थान-
दण्डे । रई० इ० भा० ॥
मन्थनम् । न० विलोडने । क्षुब्धने ।
पुं० मन्थानदण्डे ॥
मन्थनघटी । स्त्री० दधिमन्थनपात्रे ॥
मन्थनी । स्त्री० गर्गर्याम् । मन्थनपात्रे
॥ मथ्यतेऽनया । मन्थविलोडने।
करणेल्युट् ॥
मन्थर: । पुं० कोषे ॥ फले ॥ बाधे ।
मन्थाने ॥ सूचके मन्दगामिनि ।
वैशाखे ॥ कोपे । केशे ॥ न० कुसु
म्भाग्रम् ॥ त्रि० मन्दे । पृथौ ॥ वक्रे
॥ मन्दगामिनि जडे ॥ सूचके ॥
नीचे ॥ मन्थतिपाद्रौ । मथि० ।
बाहुलकादरच् ॥
मन्थरा । स्त्री० कैकेय्यादास्याम् ॥
मन्थक: । पुं० कुठेरे । चामरवाते ॥
मन्थशैल: । पुं० मन्दराचले ॥
मन्था । स्त्री० मेथिकायाम् ॥
मन्थान: । पुं० मन्थदण्डे । वैशाखे
रई० इ० भा० ॥ आरग्वधे ॥ न०
गायत्रीछन्द: ६ प्रभेदे ॥ यथा ।
कर्णध्वजानन्दमाधायनित्यक्ष । व-
र्णैरसर्यत्र मन्थानमेतत् ॥ यथा ।
गीतांशुवक्त्रायपाथोजनेत्राय ।

वन्दस्वनन्दसम्व्यायपुत्राय ॥ मन्थ
ति । मथि० । बाहुलकादानच् ॥
मन्थानक: । पुं० तृणभेदे । रहिते ।
दृढमूले । तृणाङ्घ्रिपे ॥
मन्थिनी । स्त्री० दधिमन्थनपात्रे ।
गर्गर्याम् । कलश्याम् । मथानी०
इ० भा० ॥
मन्द: । पुं० शनैश्चरे । हस्तिजात्य
न्तरे ॥ शीर्षपादे । यमे ॥ प्रलये ॥
त्रि० अतीक्ष्णे । अलसे । द्योतके ॥
मूर्खे ॥ स्वैरे ॥ अभाग्ये । भाग्यर
हिते ॥ रोगिणि ॥ अल्पे ॥ मदर
ते ॥ खले ॥ अशुभचित्तत्वेनज्ञाना
धिकारसम्प्राप्ते ॥ मन्दते । मदिस्तु
तिमोदमदस्वप्नकान्तिगतिषु । पचा
द्यच् ॥ न० ईषदर्थे ॥
मन्दग: । त्रि० मृदुगामिनि । अशीघ्र
गे ॥
मन्दगति: । पुं० शनौ ॥ त्रि० मन्द
गामिनि ॥
मन्दगामी । त्रि० मन्दगमनशीले ।
मन्थरे ॥ मन्दं गच्छति० तच्छील:
। गमृ० । सुप्यजातौणिनि:
मन्दजननी । स्त्री०सूर्यपत्न्याम् । शनि
मातरि । छायायाम् । तपत्याम् ॥
मन्दट: । पुं० पारिभद्रवृक्षे ॥
मन्दता । स्त्री० आलस्ये । मन्दत्वे ॥
मन्दनम् । न० स्तोत्रे । मन्दते । मदि
। कृपृवृजिमन्दीत्यादिनाक्युः ॥

मन्दप्रज्ञ : । वि० जडबुद्धौ ॥ मन्दाज्ञाप्रज्ञाधीर्यस्य : ॥

मंदभाग्य : । वि० विधुरकुले ॥

मंदभू : । पुं० मन्दभूमौ ॥

मन्दर : । पुं० मन्थशैले ॥ मन्दारपादपे ॥ स्वर्गे ॥ हारभेदे ॥ मेरोर्दार्थांग्राच्यांदिग्विशते तवर्णे पश्चायत् सहस्रोच्छ्रायविष्कम्भशैले ॥ तत्र शीतलसहस्रसूत्तिमान्कदम्बपादपोस्ति । सुराङ्गनाक्रीडाप्रधानोऽस्ति मन्दर : । न० मणभेदान्तरे ॥ छन्दसिभोयदि । मन्दरमस्पृति ॥ शङ्कराचार्य । वैरिभयङ्कर । वि० बहुले ॥ मन्दे ॥

मन्दिरद्वारिप : । पुं० जम्बुद्वीपमध्यद्वीपविशेषे ॥

मन्दसान : । पुं० वह्नौ ॥ जीवे ॥ निद्रायाम् ॥ मन्दते । मदि० । क्ष छिद्रविमन्दिसडिभ्य : किदिच्चसानच् ॥ वेदभाष्येयौगिकार्थएवपुरस्कृत : ॥

मन्दा । स्त्री० सङ्क्रान्तिविशेषे ॥ च लादित्वाट्टाप् ॥

मन्दायम् । न० स्तवने ॥

मन्दाकिनी । स्त्री० वियद्गङ्गायाम् । स्वर्गाख्याम् । सुरदीर्घिकायाम् ॥ प्रधानधारायास्सैसाचमन्दाकिनी स्मृता । योजनायुतविस्तीर्णाप्रस्रे नयोजनान्यमृता ॥ क्षीरतुल्यजलाश्च प्रवहत्युत्तुरङ्गिणी । वैकुण्ठाद्‍ ब्रह्मलोकस्वतत : स्वर्गसमागता ॥ सङ्क्रान्तिविशेषे । यथा । बुधेभे वसंज्ञेतुमन्दाकिनीसानृपाणान्सुखी ख्यं भवेत्तत्रमासी ॥ जगतीच्छन्द: १२ प्रभेदे ॥ ननररघटितातुमंदाकिनी । यथा । बलिदमनविधौबभौ सङ्गता० मदमलकदम्बकपर्वमंदाकिनी सुरनिहितसितास्व् जलदन्निभाभ्वर तुलगदर्व सपीतास्वर : ॥ मंदमवति० तन्वीता । चकुटिलायागतौ । सुपीतिथिनि : । ङीप् ॥

मंदाक्रान्ता । स्त्री० अत्यष्टिच्छंद : १७ प्रभेदे ॥ मंदाक्रान्ताम्बुधिरसनगैर्मोभनौतौगयुग्मम् । यथा । प्रेमालापे : प्रियवितरणे : प्रोषिताकिङ्ग नार्यं मंदाक्रान्तातदनुनियतंवश्यता मेतियाता । एवंशिक्षावचनसुधयारावितकायाः सखौनांप्रीतः पौयात् स्थितसुवदनोदेवकीनन्दनोम : ॥

मंदाक्षम् । न० लज्जायाम् ॥ मन्दमच वागावाच ॥

मदाग्नि : । पुं० अर्कनिष्कासनायाग्नि विशेषे ॥ कफद्वारास्यजठरानले ॥ तत्रग्निदानादिवद्या । मद्स्तीक्ष्णोथ विषम : समश्चेतिचतुर्विध : । क फपित्तानिलाधिक्यात्तत्साम्याज्जाठरोऽनल : ॥ विषमोवातजान्रोगांस्तीक्ष्ण : पित्तसमुद्भवान् । करो

च्यनिस्तथामंदीविकारानृकफसम्भवान् ॥ समासमाग्ने रक्षितामात्रा सम्यग्विपच्यते । चल्पापिनैवसंदाग्ने र्विषमाग्ने सुदेहिन : ॥ कदाचित्पच्यतेसम्यक् कदाचिन्नपच्यते ॥ इति ॥ तस्यौषधंयथा । चित्रकस्याष्टभागानिशूरणस्यचषोडश । शुण्ठ्याश्चत्वारिभागानिमरिचानांद्वयं तथा ॥ पिप्पलीपिप्पलीमूलंविडङ्गानांचतुष्टयम् । भल्लीसूर्यास्तिभागा श्चत्रिफलायाश्चतुष्टयम् ॥ द्विगुणं नग् ड् नैपामोदकानिविकारयेत् । तन्नयपर्मवौषं विपाण्डु रोगस्यकामलाम् ॥ अतिशीघ्रतमन्दाग्निश्री घ्राद्यन्निवारयेत् । इ० ॥

मन्दायु : । त्रि० अल्पायुषि ॥

मन्दार : । पुं० सुरद्रुमविशेषे । पारिभद्रे । निम्बतरौ । चकायन० इ० भा० । अर्कपर्णे । चाक० इ० भा० ॥ मन्दते० मोदयति । मदिस्तुत्यादौ । अद्भिमदिमन्दिभ्यआरन् ॥ मन्दायराथम् । यद्वा । मन्दाआराधा राग्रस्यसरलत्वात् । मन्दस्थतिवाच्गतौ ॥ कामं स्वर्ग । मन्दानियर्त्तिं । अण् । मन्दे रयंतेवा । पचा० तीर्थविशेषे ॥

मन्दारु : । पुं० पारिजाते । मन्दते० मदि० । वाहुलकादारु ॥

मन्दिकुकुर : । पुं० मत्स्यविशेषे ॥

मन्दिर : । पुं० मकरावासे । समुद्रे ॥ जानुपश्चाद्भागे ॥ न० नगरे ॥ आगारे । निशान्ते । वस्त्ये । सदने ॥ देवतागृहे ॥ मन्दते० मन्द्यते० सुप्यतेऽत्रवा । मदि० । इषिमदिमुदीतिकिरच् ॥

मन्दिरपशु : । पुं० विडाले ॥

मन्दिरा । स्त्री० मन्दिरे ॥ अजादित्वाट्टाप् ॥

मन्दुरा । स्त्री० वाजिशालायाम् ॥ शयनीयार्थवस्तुनि । मादरी० इ० भा० ॥ मंद्यतेऽत्र । मदिस्तुत्यादौ । मन्दिवासीत्युरच् ॥

मंदेह : । पुं० राक्षसविशेषाणांसंज्ञायाम् ॥ यथा । सन्ध्याकालेतुसम्प्राप्तेरौद्रे परमदारुणे । मंदेहाराक्षसाघोरा : सूर्यमिच्छन्तिखादितुम् ॥ प्रजापतिकृत : शापस्तेषांमैत्रेयरक्षसाम् ॥ अक्षयत्वंशरीराणां मरणञ्चदिनेदिने ॥ तत : सूर्यस्यतैर्युद्धं भवत्यत्यन्तदारुणम् । ततोद्विजोत्तमास्तोयं प्रक्षिपन्तिमहामुने ॥ ओंकारब्रह्मसंयुक्तं गायत्र्याभिमन्त्रितम् । तेनदह्यन्तितेपापावज्रीभूतेनवारिणा इत्यादि- विष्णुपुराणे द्रष्टव्यम् ॥

मंदोदरी । स्त्री० रावणस्यपत्न्याम् । मयासुरदुहितरि ॥

मंदोदरीश : । पुं० रावणे ॥ मंदो

त्कोव्यस्तुवर्षाणांमानुषेणद्विजोत्त- मा : । सप्तर्षयस्तथान्यानिमियुता न्यधिकानितु ॥ विंशतिस्तुसहस्रा- णिकालोय : साधिकांविना । मन्व न्तरस्यसङ्ख्येपालिङ्गेऽस्मिन्क- थितादिजा : ॥ ययाङ्का : ॥ ३०६७२०००० । एवंचतुर्दशमन्व रैर्ब्रह्मदिनंभवति ॥ ब्रह्मणोदिन मध्येचतुर्दशमन्वन्तराणिभवन्ति- । एकोमनुर्यावदधिकारीभवतिस कालोमन्वन्तरसंज्ञकोभवति । तत्र मनूनांनामानि यथा । स्वायम्भुवो मनु : पूर्वंततः स्वारोचिषोमनु : । उत्तमस्तामसश्चैवरैवतश्चाक्षुषस्त या ॥ षडेतेमनवोऽतीतासाम्प्र तं वैवस्वतोमनु : । सावर्णः पञ्चरौ च्यश्चभौच्यश्चागामिनस्त्वमी ॥ पुरा णसर्वम् ॥ मन्वन्तरं मनुर्देवामनु पुत्रा : सुरेश्वर : । ऋषयोंऽशाव तारश्चहरे : षड्विधमुच्यते ॥

मन्वादि : । स्त्री॰ मासविशेषे युतिथि विशेषे ॥ अश्वयुक्शुक्लनवमी॰ कार्त्तिकेद्वादशीसिता । तृतीया चैत्रमासस्य॰ तथाभाद्रपदस्यच ॥ श्रावणस्याष्टमीकृष्णा पौषस्यैकाद शीतथा । आषाढस्यापिदशमी मा घमासस्यसप्तमी ॥ कार्त्तिकीफा ल्गुनीचैत्री ज्यैष्ठेपञ्चदशीसिता । माघमासेतुदृष्टैवकार्त्तिकीचतथै

वच ॥ एतामन्वादय : प्रोक्ताद्त्त स्याक्षयकारिका : ॥

मपष्ट : । पुं॰ )
मपष्ठक : । पुं॰ ) वनमुद्गे ॥
मपुष्टक : । पुं॰ )

मम । अ॰ षष्ठ्यन्तकप्रतिरूपकमव्यय म् । ममेत्यभिमाने ॥

ममता । स्त्री॰ मदीयत्वाभिमाने ॥ भावेतल् । ममत्वे ॥

ममतायुक्त : । वि॰ कृपणे ॥

ममत्वम् । न॰ ममतायाम् ॥ भावे त्व : ॥

मयापताल : । पुं॰ विषये ॥ मय्य ति । मय्यस्यमेव । मय्यतेयत्सोपो मयश्चापतन्त्वालप्रतिमयते रालप्र त्ययस्यपतन्त्वागमोधातोर्यलो पोमकारश्चाप्यस्य ॥

मय : । पुं॰ दैत्यानांशिल्पिनि । मा यविनांशिल्पिनाम्ब्राचार्ये ॥ वेसरे । अश्वतरे ॥ उष्ट्रे । करभे ॥ मीनाति॰ मयतेवा । मीङ्हिंसा याम् ॰ मयगतौवा । पचाद्यच् ॥

मयट : । पुं॰ तृणहर्म्ये । तृणयुक्त हर्म्ये ॥

मया स्त्री॰ चिकित्सायाम् ।

मयु : । पुं॰ किन्नरे ॥ मृगे ॥ मिनो ति । डुमिञ्प्रक्षेपणे । भृमृशीतृ चरित्सरितनिधनिमिमस्जिभ्यउ : मृत्यु : । मीनातीत्यस्यन्तुवाहुल कात् ॥

मयुराज : । पुं० कुवेरे ॥ मयूनांराजा टच् ॥

मयुष्टक : । पुं० वनमुद्गे । मकुष्टके । मोठ०इ०भा० ॥ तिष्ठति । ष्ठा० । कुः म् । मयुष्टासौष्ठकश्च । पूर्वपदादितिपत्वम् ।

मयूख : । पुं० किरणे । मोख०इ०भा० ॥ ज्वालायाम् ॥ शोभायाम् ॥ दीप्तौ ॥ मिमोते । माङ् माने । माङ ऊखोमयश्च व्यू खप्रत्ययोमया देशश्च ॥

मयूर : पुं । बर्हिणे । नीलकण्ठे । शिखावले । कैकिनि । मोर०इ०भा० ॥ तस्यमांसगुणा : । यथा । मयूर : श्रोत्रनेत्राग्निमेधावर्णस्वरायुषाम् । हितोवल्योगुरुश्चोष्णोवातघ्नः शुक्रमांसदः ॥ हेमन्तकालेशिशिरेवसन्तेसेव्यंहिमायूरमुशन्तिमांसम् । ग्रीष्मेहिवर्षाद्विभौजनेचवर्षाशरद्गीष्मसुखं प्रपथ्य : । एतन्मांसमेरण्डतैलभृष्टं विषतुल्यम् । बर्हिचूडाख्यौषधौ । खराश्वायाम् । कारव्याम् ॥ अपामार्गे ॥ मिनातिरोगम् । मीञ् हिंसायाम् । मिनातेरुरन् ॥ यद्वा । मयते । मयगतौ । खर्जादित्वादूर : ॥ मह्यांरौतिवा । अन्येभ्योपीतिड : । पृषोदरादि : ॥

मयूरक : । पुं० अपामार्गे ॥ मयूरे ॥ मयूरशिखायाम् ॥ न० तुत्थाञ्जने ॥

मयूरप्रतिकृति : ॥ कन् । मयूरंकायतिवासादृश्यात् । कै० । आतइतिक : ॥

मयूरग्रीवकम् । न० तुत्थे ॥

मयूरग्रीवा । स्त्री० तुत्थे ॥

मयूरचटक : । पुं० गृहकुक्कुटे ॥

मयूरचूडम् । न० स्थौणेयके ॥

मयूरचूडा । स्त्री० मयूरशिखायाम् ॥

मयूरजङ्घ : । पुं० श्योनाके ॥

मयूरतुत्थम् । न० तुत्थे ॥

मयूरपत्रकम । न० स्तनाद्दौनखाघाते ॥

मयूरविद्दला । स्त्री० अम्बष्ठायाम् ॥

मयूरशिखा । स्त्री० बर्हिचूडायाम् । शिखिन्याम् । शिखावलाख्यक्षुपे ॥ मयूराद्याशिखाशोभासदृक्षुपे ॥ कृष्णदां । नीलकण्ठशिखालक्ष्मीपि साद्धें प्रातिसारजित् ॥

मयूरका । स्त्री० अम्बष्ठायाम् ॥

मयूरी । स्त्री० मयूरस्त्रीजातौ । मोरनी०इतिभाषा ॥

मरक : । पुं० मार्याम् । मारके । मरी०इतिभाषाप्रसिद्धे मरणे ॥ तस्यकारणादियथा । यावन्मार्तण्डसूनुर्गविधनुषिभयंमण्डलेशक्तिनायांतावद्दुर्भिक्षपीडाभयमितिचसर्वसंशयंयांतिलोका : । शाकाकारातयोर्भौमनुजभयकरीकेकरावैश्च भौमै : शून्यग्रामाभवेयुर्नरपतिरहिताभूरिदुष्कालमारी । मरकमारी

मरहट्टा । पुं॰ तालाङ्गभेदे ॥ यथा । आदौकुरुपट्कलमचचतुष्कलम्‌ सानन्दमितोपि द्वयवर्षे कादश भवतिवशमधिकशुधासवलोमि ॥ विंशतिनवसङ्ख्यंभणितसुमुख्यं च्छितगुणगणकोटिमरहट्टाखत्तंकि लनयकनलिकतरिपुविमतकरोटि ॥ यथा । अभिमतधनदातारिविधिताहादत्तरगरशील॰ दुरितद्रु मदाहीविघ्नविगाहीकल्पषचयहत सील॰ भुवनत्रयवंदितहरशिरसिस्थि रवास॰ दहतुतवडवार्पदेशितुरापत सुखतातिमिरविलास ॥

मराकाली । स्त्री॰ सलिकाल्याम् ॥

मराल: । पुं॰ राजहंसे ॥ कारण्डवे ॥ खञ्जने ॥ वारिवाहे ॥ तुरङ्गमे ॥ दाडिमोविपिने ॥ त्रि॰ स्निग्धे ॥ त्रि॰ मसृणे ॥

मरालक: । पुं॰ कलहंसे ॥

मरिचम् । न॰ कोलके । कृष्णे । ऊषणे । धर्मपत्तने । कालीमिरच॰ इतिभाषा॰ ॥ मरिचकटुकं तीक्ष्णंदीपनकफवातजित् । उष्णं पित्तकरंरूक्षंश्वासशूलक्रमीन्हरेत् ॥ तदार्द्रंमधुरपाकेनात्युष्णंकटुकं गुरु । किञ्चित्तीक्ष्णगुणंश्लेष्मप्रसेकिस्यादपितलम् ॥ म्रियतेविषमनेन । मृङ्प्राणत्यागे । बाहुलकादिच: ॥ मकोलि : पुं॰ मरुवक

क्षुपे ॥

मरिचपत्रक: । पुं॰ धजकर्णे । सालतरो: प्रभेदे ॥

मरिमा । पुं॰ मृत्यौ ॥ म्रियते । मृङ्॰ । जनिमृङ्भ्यामिमनिच् ॥

मरिष्यमाण: । त्रि॰ आसन्नमरणे ॥

मरीचम् । न॰ वेल्लजे । मरिचे । कृष्णमरिच॰ दू॰ भा॰ । म्रियतेविषमनेन । मृङ्॰ । बाहुलकादीच: ॥

मरीचि: । पुं॰ ब्रह्मणोऽर्थ्यमानसपुत्रे॰ मुनिविशेषे ॥ प्रजापतौ । मरुतांमध्येभगवद्विभूतौ ॥ पुं॰ स्त्री॰ चन्द्रसूर्ययो: किरणे । गभस्तौ । षट्त्रसरेणुपरिमाणे॰ इति वैद्या: । म्रियतेतमोऽस्मिन् । मृङ्॰ अजियमिशीङ्भ्यश्चेति: ॥ त्रि॰ कृपणे ।

मरीचिका । स्त्री॰ मृगतृष्णायाम् ॥ ग्रीष्मे मरुदेशसिकतादायकरा: प्रतिफलिता: दूरस्थानांजलत्वेनाभांति॰ तदाचिकामृगतृष्णिकेति॰ टीकाकार: ॥ मरीचिरिव । इवेप्रतिकृताविति कन् ॥

मरीचिप: । पुं॰ तपोविशेषाख्ये- विसंज्ञे तापसान्तरे ॥ चन्द्रिकापायिनि ॥

मरु: । पुं॰ गिरौ । पर्वते ॥ धन्वनि । दुर्मिक्षे । निरुदकदेशे । मारवाड॰ इ॰ भाषा ॥ गुर्जरात्तुदंगेतुवारिकातोदिदृक्षो । म

मरुद्रथ : । पुं॰ अश्वे । देवरथे ॥

मरुद्द्रुम : । पुं॰ विट्खदिरे । अरिमेदे ॥

मरुद्वर्त्म । न॰ आकाशे ॥

मरुद्वाह : । पुं॰ धूमे ॥ वह्नौ ॥

मरुद्विप : । पुं॰ उष्ट्रे ॥

मरुन्माला स्त्री॰ पृक्कायाम् । मरुन्निर्मल्याम् । मलधारणे । घञ् ॥

मरुप्रिय : । पुं॰ उष्ट्रे ॥ मरुदेशविशेष : प्रियोऽस्य ॥

मरुभू : । स्त्री॰ दशेरकमारवाड॰-इ॰ प्र॰ ॥ निर्जलदेशे ॥

मरुभूरुह : । पुं॰ करीरवृक्षे ॥

मरुल : । पुं॰ कारण्डवपक्षिणि ॥

मरुला । स्त्री॰ केरलदेशप्रसिद्धायां नद्याम् ॥

मरुव : । पुं॰ मरुवके ॥

मरुवक: । पुं॰ समीरणे । प्रस्थपुष्पे । फणिज्झके मरुवा॰ इ॰ भा॰-प्र॰पुष्पे ॥ पिण्डीतके । श्वसने । खरवाटयां । मदनद्रुमे । मयनफल इ॰ भाषा ॥ मरु वाति । वा॰ । धान्यशिल्पिसंज्ञयो: ॥ व्याघ्रे । राहौ । खरपत्रे । नागदौना॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ क्षुपविशेषे ॥ त्रि॰ भयानके ॥

मरुसम्भवम् । न॰ चाणक्यमूलके ॥

मरुसम्भवा । स्त्री॰ महेन्द्रवारुण्याम् क्षुद्रदुरालभायाम् ॥

मरुस्था । स्त्री॰ क्षुद्रदुरालभायाम् ॥

मरूक : । पुं॰ मृगविशेषे ॥ मयूरे ॥ मत्स्ये ॥ मारयति॰ म्रियतेवा । मृङ्॰ । मृकणिभ्यामूकोकणाविष्यत : ॥

मरूद्वा । स्त्री॰ कार्पास्याम् ॥ यवासे । क्षुद्रखदिरे ॥

मरोखि : । पुं॰ मकरे । घसिदंष्टके । मगर॰ इ॰ भा॰ प्र॰ यादसि ॥

मरोलिक : । पुं॰ मकरे ॥

मर्क : । पुं॰ देहे । शरीरे । वानरे । वायौ ॥ मर्कति॰ मर्कयतिवा । मर्कि : सौत्रोधातुरितिकश्चित् । मर्कशब्दे॰ चौरादिकइति॰ सिद्धौ स्यात्सूचैकैयट: । पृणभीकापाभ्यस्तिमर्त्तिभ्य : कन् । नचैवंपिलीपतस्यानियतत्वात्॰ तुल्यंनस्यादिति वाच्यम्॰ पूर्वंचासिद्ध तदभावात् ॥

मर्कक : । पुं॰ महिगण्डखगे । हाडगिल॰ इ॰ गौ॰ दे॰ भा॰ ॥

मर्कट : । पुं॰ वानरे । लूतायाम् । ऊर्णनाभे । चौरस्थान्तरे ॥ महिगण्डे । हाडगिल॰ इ॰ भा॰ प्र॰ खगे ॥ मर्कति । मर्कि: सौत्रोधातुर्गत्यर्थो । शकादिभ्योऽटन् ॥ स्थावरविषभेदे ॥

मर्कटक : । पुं॰ शस्यप्रभेदे ॥ वानरे॰ लूतायाम् ॥ मत्स्यविशेषे ॥ दैत्यवि

ग्रीवे ॥ संज्ञायांकन् ॥
मर्कटतिन्दुकः । पुं० कुपीलौ ।
मर्कटपिप्पली । स्त्री० अपामार्गे ॥
मर्कटप्रियः । पुं० क्षीरवृक्षे ॥
मर्कटवासः । पुं० भाषायसे ॥ लूतातन्तौ । मकडीकाजाल० इ० भा० ॥
मर्कटशीर्षम् । न० हिङ्गुले ॥
मर्कटास्यम् । न० ताम्रे ॥ वानरमुखे ॥ पुं० कीटविशेषे ॥ त्रि० वानरमुखसदृशमुखविशिष्टे ॥
मर्कटी । स्त्री० करञ्जभेदे । मकडाकरेंजुया० इ० भा० ॥ शूकशिम्ब्याम् ॥ मर्कटीवद्विविधचेष्टाहेतुत्वात् ॥ अजमोदायाम् ॥ अपामार्गे ॥ वानर्याम् ॥ गौरादित्वान्ङीष् ॥
मर्कटेन्दुः । पुं० काकतिन्दुकि ॥
मर्करः । पुं० भृङ्गराजे ॥
मर्करा । स्त्री० निष्फलायाम् ॥ दर्व्याम् ॥ सुरङ्गायाम् ॥ भाण्डे ॥
मर्त्तः । पुं० धावके । रजके ॥ पीठमर्दे । स्त्री० शुनी । मार्ष्टि । मृजशुद्धौ । मृजेर्गुणप्रत्ययः ॥ मार्जनया ॥
मर्त्तः । पुं० मर्त्यलोके ॥ मानुषे । म्रियन्तेऽत्र । मृङ्० । हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्निति तन् ।
मर्त्यः । पुं० मनुष्ये ॥ म्रियते । मृङ्० । हसिमृग्रिणिततन् । ततः स्वार्थेयत् । प्राक्प्रबोधात्० सर्वोहिमर्त्यः ॥ मध्यलोके ॥ म्रियन्तेऽत्रेतिमर्त्यः । हसिमृग्रिणि० मृङ्धातोस्तन् । मर्त्तः । ततोमर्त्तएवदिष्टः स्वार्थेयत् ॥ मर्त्तभवोवा । दिगादेराकृतिगणत्वाद्यत् ॥
मर्त्यमुखः । पुं० यक्षे ॥
मर्त्या । स्त्री० मानुषस्त्रियाम् ॥
मर्त्येन्द्रा । स्त्री० मातरि ॥ अनिद्रम्याम् ॥ राजमातरि ॥
मर्दनम् । न० चक्षुसमर्दने । पादमर्दनादौ । संवाहने ॥ मृदक्षोदे । ल्युट् । कदने ॥ चूर्णने । त्रि० मर्दयितरि ॥ मर्दयति । मृदक्षोदे० मृदमर्दनेवा । हेतुमच्चिणन्तात्कर्त्तरिल्युट् । बहुलमन्यत्रापीतियुक्ता ॥
मर्दलः । पुं० वाद्यभेदे ॥ मर्दलो मर्दल इति ख्यातो० मृदमर्दः ॥ मर्दसुपमर्दलाति० । ला० । घोऽसंज्ञेतिकः ॥
मर्दितः । त्रि० चूर्णिते ॥ ग्रथिते ॥
मर्दिता । त्रि० मर्दयितरि ॥
मर्दी । त्रि० मर्दयितरि ॥
मर्मकीलः । पुं० भर्त्तरि ॥
मर्मज्ञः । त्रि० मर्मविदि । तत्त्वज्ञे ॥
मर्म । न० स्वरूपे । तत्त्वे ॥ यथा ।

मृगयानभिगीयवेन्द्यैरपिधर्म्मागम-
मर्म्मपारगैः। स्मरसुन्दरमायद्-
ध्वजस्तवधर्म्मः सदयोदयोज्ज्वलाः॥
सन्धिस्थाने॥ जीवस्थाने॥ यथा-
पंगाचरन्तीमवाप्यजीवतक्षणचित्।
नसंवसेत्सुतपोपमकंवैमर्म्मणिस्पृ-
शेत्॥ अवधि॥

मर्म्मरः। पुं० वस्त्रविशेषे॥ शुष्कप-
र्णध्वनौ॥ वस्त्रपर्णानांस्वनिते।
मर्मरस्मरड्मरड्० इतिभाषा॥
मर्म्मराति। रा० बः॥ अनुकरण-
शब्दोऽयं॥

मर्म्मरी। स्त्री० पीतदारुणि॥

मर्म्मरीकः। त्रि० दीनजने॥ म्रियते।
मृङ्०। पर्फरीकादित्वाद्दीकन्०धा
तोर्द्वित्वंनुक्चाभ्यासस्य॥

मर्म्मवित्। पुं० मर्म्मज्ञे। कार्पटि-
के॥

मर्म्मवेदी। पुं० मर्म्मविदि॥

मर्म्मस्पृक्। त्रि० मर्म्मपीडके। अरु-
न्तुदे॥ मर्म्मस्पृशति। स्पृशउपता
पे। स्पृशोऽनुदकइति० क्विन्॥

मर्म्माविद्०द्। त्रि० सन्धिस्थानवेधक
र्त्तरि॥ मर्म्मणि मर्म्माणिविध्य
ति। व्यधताडने। क्विप्। ग्रहिज्ये
तिसम्प्रसारणम्। नहिवृतीतिदी-
र्घः॥

मर्म्मिकः। त्रि० मर्म्मज्ञे॥

मर्म्मुरः। पुं० तुषानले॥

मर्य्यः। पुं० मरणधर्म्मणि। मनु-
ष्ये॥

मर्य्या। अ० सीमायाम्॥

मर्य्यादा। स्त्री० सीमनि। अवधौ।
तेनविनेत्यर्थे॥ स्थितौ। धारणा-
याम्। सम्यक्स्थितौ॥ अनुलङ्घनी
यायांव्यवस्थायाम्॥ स्थित्यनतिक्र
मे॥ कुलभूमौ॥ मर्य्येतिसीमार्थेऽ-
व्ययम्। तत्रदीयते। डुदाञ्०।
आतश्चोपसर्गइत्यङ्॥

मर्षः। पुं० क्षान्तौ॥ मर्षणम्। मृ-
षतितिक्षायाम्॥ घञ्॥

मर्षणम्। न० अपराधिसत्यपिकोपा-
नाविष्करणे। क्षमायाम्। मृष०
भावेल्युट्॥

मर्षितः। त्रि० क्षान्तियुक्ते॥ मृषेः
कर्त्तरिक्तः। भावेक्ते क्लीबम्॥

मर्षितवान्। त्रि० क्षान्ते॥ मृषेः
कर्त्तरिक्तवतुः॥

मर्षी। त्रि० क्षमाशीले॥

मलः। पुं० न० पापे। किल्बिषे॥
विषि। विष्ठायाम्। यथा। मला
यत्तं वलंपुंसांशुक्रायत्तन्तुजीवनम्।
तस्माद्यत्नेनसंरक्षेत्यक्ष्मिणोमलरे-
तसी इति॥ किट्टे। मण्डूरादौ॥
खेदादौ॥ वसाशुक्रमसृङ्मज्जा[illegible]
मूत्रविट्कर्णविण्नखाः। [illegible]
पिकाखेदोद्वादशैतेनृणां[illegible]॥
वातादिषु। यथा। [illegible]

षामलिनीकरणान्मला : । धारणा
द्वातवर्गस्तु वातपित्तकफास्त्रय: ॥
सर्वेषामेवरोगाणांनिदानंकुपिता-
मला : । तत्प्रकोपस्यतुप्रोक्तं विवि-
धाहितसेवनम् । हरिहसन्तोऽपिप्रायं
पित्तं शरद्भिर्निर्हरेत् वर्षासुशमयेद्
वायुंप्राग्विकारसमुच्छ्रयात् ॥ अथ-
विशिषमाहभावप्र : कफपित्तानि
ला : पूर्वमध्यान्तेषुव्यवस्थिता : ।
देहाहोरात्रिवयसांसम्भिव्यपिकफा
निलाविति ॥ अस्यार्थ : । कफपि-
त्तानिला : देहाहोरात्रिवयसांपूर्व
मध्यान्तेषुयथासंख्यंव्यवस्थिता : ।
देहस्यपूर्वभागेशिरआरभ्यवक्षोन्त-
कफोव्यवस्थित : । मध्येचामाशय-
मारभ्यनाभ्यन्तं पित्तं व्यवस्थितम् ।
अन्ते नाभ्यधोभागेवायुर्व्यवस्थित:
। शिरोमूलत्वात्देहस्य पूर्वादिक
ल्पना । अह्नस्त्रिधाविभक्तस्यपूर्व-
भागेकफोमध्ये पित्तमन्ते वायु : ।
एवंरात्रेरपिवयसोऽपिपूर्वभागेबाल्या
वस्थायांश्लेष्मामध्ये तरुणावस्थायां-
पित्तमन्ते हद्धावस्थायांवायु : ।
सन्धिष्विति । देहाहोरात्रिवयसा-
मित्यस्य । तत्तद्देहस्यपूर्वभागमध्य-
भागयो : सन्धौकफोव्यवस्थित: म
ध्यभागान्त्यभागयो : सन्धौपक्वाश-
याख्योवायु : एतत्त्रयश्चासद्व्याप्य
स्थितोलभ्यते । अह : सन्धौराज्या-
साकमह : सन्धि : प्रात : संज्ञक
स्तस्मिन्कफ : । अह्नासाकंरात्रे :
सन्धि : सायंतस्मिन्वात : । वय:
सन्धौबाल्यतारुण्ययो: सन्धौश्लेष्मा
तारुण्यद्वद्धत्वयो : सन्धौवायुरिति
॥ मृज्यतेऽसौ । मृजूशुद्धौ । मृजेष्टि
लोपश्चेतिकाल : ॥ मलयति । मल
तल्कृतौ० अदन्त : । मलतेवा ।
मलधारणे । पचाद्यच् ॥ कर्पूरे ॥
त्रि० कृपणे । कदर्ये ॥
मलघ्न : । पुं० शाल्मलीकन्दे । त्रि०
मलनाशके ॥
मलघ्नी । स्त्री० नागदमन्याम् ॥
मलजम् । न० पूये ॥ त्रि० मलोद्भवे ॥
मलदूषित : । त्रि० मलिने ॥ मलेनदू
षित : । कर्तृकारकेइतिसमास: ॥
मलद्रावी । पुं० जयपाले ॥
मलधी: । पुं० आसिमि ॥
मलन : । पुं० पटवासे । पंशुकालये
॥ न० मर्द्दने । पीडना० मलना०
हू० भा० ॥
मलपू : । स्त्री० काकोदुम्बरिकाया-
म् ॥ मलयूस्तम्भकृत्तिक्ताशीतला
तुवराजयेत् । कफपित्तव्रणश्वित्रकु
ष्ठपाण्डुर्शकामला : ॥ मलात्पापा
-त् । पुनाति । पूञ्पवने । क्विप् ॥
मलभुक् । पुं० काके ॥
मलमेदिनी । स्त्री० कटुकायाम् ॥
मलमास : । पुं० । अधिमासेमलि-

त्तुचे ॥ यस्मिन् मासे न सङ्क्रान्तिः सङ्क्रान्तिद्वयमेव वा । मलमासः स विज्ञेयो मासस्त्रिंशत्तमो भवेत् ॥ गर्गस्तु । अमावास्याद्वयं यत्र रविसङ्क्रान्तिवर्जितम् । मलमासः स विज्ञेयो मासः शुद्धाल्पतरः ॥ तथा च ब्रह्मसिद्धान्ते । चान्द्रो मासो ह्यसङ्क्रान्तो मलमासः प्रकीर्त्तितः ॥ सत्यव्रतस्तु । राशिद्वयं यत्र मासि सङ्क्रमेत दिवाकरः । नाधिमासो भवेदेष मलमासस्तु केवलम् ॥ एकत्र मासद्वितयं यद्विश्वाद्यं ऽधिकान्तपरोऽधिमासः । ज्योतिषस्तु स्मृतिराह मासं चतुर्दशं क्वापि नपालिष्टम् ॥ अथ मासश्चान्द्र एव न सौरः । अस्मिन्त्रयोदशो मासः समभ्युपगम्यते । असौ चान्द्रो न तु सौराब्दास्तिसौरत्रयोदशः ॥

मलमासत्वम् । न० रविसङ्क्रान्त्यभावविशिष्टचान्द्रमासत्वे ॥

मलयः । पुं० ऋष्यमूकप्रदेशान्तरे । स्वनामप्रसिद्धेऽद्रिविशेषे । पाथारे । दक्षिणाचले । चन्दनाद्रौ ॥ ज्ञातमालाताम्रपर्णी प्रसुतामलयोद्भवाः ॥ शैलाद्रौ ॥ देशविशेषे । मलैवार० इ०भा० ॥ आरामे । नन्दनवने ॥ अष्टद्वीपोपद्वीपान्तर्गतद्वीपविशेषे ॥ मलते । मलधारणे । बलिमलितनिभ्य : कयन् ॥ ऋषभदेवस्यपस्मेपुत्रे ॥

मलयगन्धिनी । स्त्री० उमायाः सखीविशेषे ॥

मलयजः । पुं० राहुपक्षे ॥ पुं०न० चन्दने ॥ मलयेजातः । सम्भ्यांत शैङ्गः ॥

मलया । स्त्री० त्रिवृतायामोषधौ ।

मलयाचलः । पुं० सह्याद्रिसमीपस्थे शैलविशेषे । दक्षिणाचले ॥ सर्वाभिसेव्योऽस्तिमवान् भोगिनामालयाचलः ॥

मलयानिलः । पुं० वासन्ते । वसन्तकालिकवायौ ॥

मलयालः । पुं० देशविशेषे । यथा । सुराम्बिकासमारभ्यकर्णयाश्रमाग्-शिवे । मलयालाभिधो देशो मन्त्रसिद्धिप्रदश्च ॥

मलयूः । स्त्री० मलय्वाम् । काकोदुम्बरिकायाम् ॥ मलं यवति । युञ् गुप्सायाम् । क्विप् । बाहुलकाद्दीर्घः ॥ यद्वा । मलते । मलधारणे । बाहुलकादयूः ॥

मलयोद्भवम् । न० चन्दने ।

मलवर्त्म । न० गुदे ॥

मलविलासिनी । स्त्री० मङ्खपुष्प्याम् ॥

मलहन्ता । पुं० मालखीकन्दे ।

मला । स्त्री० भूम्यामलक्याम् ॥

मलाका । स्त्री० दूत्याम् । कामिन्या

म् ॥ हस्तिन्याम् ॥

मलापकर्षणम् । न॰ पापमोचने ॥ मलस्य दूरीकरणे ॥

मलापहा । स्त्री॰ नदीविशेषे ॥ यथा । मलापहाभीमरथीचघट्टगायथाचक्रा ख्याअसलाम्यगाशुभे : । मलापहा घट्टगयोस्तथाधिपथ्यं सदुस्लाद्गुतरं- सुकाभिदम् ॥

मलावहम् । न॰ मलिनीकरणे । पा पविशेषे ॥ यथा । क्रमिकीटवयोह त्याभद्यानुगतभोजनम् । फलैध : कुसुमस्तेयमधैर्यञ्चमलावहम् ॥

मलारि : । पुं॰ सर्वक्षारे । सायण॰ प्र॰ भा॰ ॥

मलिनम् । न॰ दोषे ॥ टङ्कणे । घोले ॥ त्रि॰ मलयुक्ते वस्तुनि । मलीमसे । कच्चरे । मलदूषिते ॥ यथा । यथाभवतिबालानांगगनं मलिनं मलै : । तथाभवत्यबुद्धाना मात्मापिमलिनोमलै रिति ॥ मलै : कीचकर्दमपांशुरात्मा । चव्यचम ले घं नरक्षोधूमादिभिराकाशदूष्य धं : ॥ निश्चनै र्मिलिस्कक्रियाख्या गिनि ॥ कृष्णे । दूषिते ॥ मलो स्यास्ति । ज्योत्स्नातमिस्रे तिसाधु: ॥ यद्वा । मलते । मल॰ । वहु लमन्यत्रापीतीनच् ॥

मलिनमुख : । पुं॰ वह्नौ ॥ गोला ङ्गूले॰ कपौ ॥ प्रेते ॥ त्रि॰ क्रूरे । खले ॥

मलिनात्मा । पुं॰ कृष्णदेहे ॥ दुष्टचित्ते ॥ नयरिचयोमलिनात्मनां प्रधानम् ॥

मलिनाम्बु । न॰ मस्याम् ॥

मलिनास्य : । त्रि॰ खले ॥

मलिनिमा । पुं॰ कृष्णत्वे ॥ मलिनत्वे ॥ मलिनस्वभाव : । इमनिच् ॥

मलिनी । स्त्री॰ रजस्वलायांनार्या म् । ऋतुमत्याम् ॥ मलोऽस्त्यस्याः । अतइनिठनौ ।

मलिनीकरणम् । न॰ मलापहे ॥

मलिम्लुच : । पुं॰ मलमासे ॥ यथा । तमतिक्रम्यतुरविर्यदागच्छेत् कथञ्चन । आद्योमलिम्लुचोज्ञेयो द्वितीय : प्रकृत : स्मृत : ॥ यद्वा द्यत्यिलासमतिक्रम्यतत्पूर्वमासा न्त्यपरस्तिराशिस्थ : सन्सूर्योऽ तिबाह्यगच्छेत् मासान्तरे राश्यन्त रसंयोगं गच्छेत्॰ तदाद्योऽति क्रान्तमासोमलिम्लुचोज्ञेय : । मलो सन्म्लोपति॰ गच्छतीति॰ मलि म्लुच : । द्वितीयस्तुप्रकृत : शुद्ध : कर्मार्हत्वात् ॥ चौरे ॥ ज्वलने ॥ वाते ॥ मल्यते । मल॰ । दूष् । मलिं धृतं म्लोचति । म्लुच स्तेये । मूलविभुजादित्वात्क : ॥

मलिम्ला । स्त्री॰ ऋतुमत्यांनार्याम् ॥

मलीमस : । पुं॰ पुष्पकासीसे ॥ लौहे ॥ मलिने ॥ मलोऽस्यास्ति । ज्योत्स्नातमिस्रे तिसाधु : ॥

मलूक : । पुं॰ कृमिविशेषे ॥

मल्ल : । पुं॰ पात्रे ॥ कपोले ॥ मल्लभेदे ॥ बलीयसि ॥ झल्ल । लिच्छिवी । वाहुयोधिनि॰ मल्लिनाथप्रसिद्धे ॥ अयमव्रात्यात् क्षत्रियात्सवर्णायांजात : । यथा मनु : । झल्लोमल्लश्चराजन्याद्व्रात्यान्निच्छिविरेवच । नटश्चकरणश्चैव खसोद्रविडएवच ॥ इति ॥ देशविशेषे ॥ यथा । दशार्णानवराष्ट्रश्च मल्ला : शाल्वा : युगन्धरा : । इति । विराटपर्वणि १ अध्याय : ॥ वर्णसङ्करजातिविशेषे । माला॰ इ॰ गौ॰ दे॰ भा॰ प्रसिद्धे ॥ अयञ्च लेटात्तीवरकन्यायांजात : । इ॰ ब्र॰ वै॰ पु॰ ॥ तन्त्रवाय्यांकुम्भकाराज्जात : । ब्र॰ प॰ पु॰ ॥ मियुद्धकुशलोमल्ल स्तद्वृत्तिकपराश्च : ॥

मल्लक : । पुं॰ दन्ते ॥ पुं॰ स्त्री॰ दीपाधारे ॥ कोशिकायाम् । नारिकेलफलनिर्मितपात्रे ॥ नरेली॰ इ॰ भा॰ ॥ मल्लते । मल्लधारणे । क्वन् ॥

मल्लतूर्यम् । न॰ वाद्यविशेषे । महारणे ॥

मल्लनाग : । पुं॰ ऐरावते ॥ वात्स्यायनमुनौ ॥ कामशास्त्रविशेषे ॥ लेखहारे ॥

मल्लभू : । स्त्री॰ मल्लभूमौ ॥

मल्लभूमि : । स्त्री॰ रङ्गभूमौ । अखवाटि । अखाड़ा॰ इ॰ भा॰ ॥ देशविशेषे ॥

मल्लयात्रा । स्त्री॰ मालव्याम् । मल्लानांयुद्धार्थप्रयाणे ॥

मल्लयुद्धम् । न॰ नियुद्धे । बाहुयुद्धे । मल्लानांसंग्रामे ॥

मल्ला । स्त्री॰ नार्याम् ॥ पत्रवल्ल्याम् ॥ मल्लिकायाम् ॥

मल्लार : । पुं॰ वर्षारागाणांमध्येश्रेष्ठरागे ॥ मेघमल्लाररागस्यगानंवर्षासुसर्वदा ॥

मल्लारी । स्त्री॰ वसन्तरागस्यरागिण्याम् ॥ यथा । आन्दोलिताचदेशाख्या लोलाप्रथममञ्जरी । मल्लारीचेतिरागिण्योवसन्तस्यसदानुगा : ॥ मेघरागस्यरागिण्याम् ।

मल्लि : । पुं॰ धारणेविशेषे ॥ स्त्री॰ मल्लिकायाम् ॥ मल्लते । मल्ल॰ । सर्वधातुभ्यइन् ॥

मल्लिक : । पुं॰ मलिनचञ्चुचरणयुक्तहंसविशेषे । किञ्चिद्धूम्रवर्णैश्चञ्चुचरणैरुपलक्षितहंसप्रभेदे ॥ मल्लते । मल्ल॰ । इन् । स्वार्थेक : ॥

मल्लिका । स्त्री॰ तणशून्ये । भूपद्याम् ।

म०अपलम् ॥ अस्यचिकित्सायथा । धर्मकीलंशतुमर्षिंमशकांस्तिलका लकान् । उत्कृत्यशस्त्रेणदहेत्तथा क्षारेणवासग्निपरः ॥ अपिच । स पुमानन्तुसूर्यंत्यधर्मीमशकमायमः ॥ इति ॥

मशकी । पुं० उडुम्बरवृक्षे ॥

मशकरी । स्त्री० चतुष्पदाम् । शयन तिरस्करिण्याम् ॥

मशुनः । पुं० कुकुरे ॥

मसनम् । न० सोमराजौषधे ॥

मसरा । स्त्री० मसूरे ॥

मसारः । ) पुं० इन्द्रनील
मसारकः । ) पुं० मणौ ॥

मसिः । स्त्री० लिपिप्रयोजनायाम् । मषाङ्गणि । मस्याम् ॥ मस्यति । मसीपरिणामे । इन् ॥ शेफालिका वृक्षे ॥

मसिकूपी । ) स्त्री० मस्या-
मसिधानम् । ) न० धा-
मसीधाना । ) स्त्री० रे ।
मसिकूपिकायाम्

मसिनम् । न० सपिंडके ॥

मसिपथः । पुं० लेखके ॥

मसिप्रसूः । स्त्री० मस्याधारे ॥ मस्याः प्रसूः ॥ लेखन्याम् ॥

मसिमणिः । पुं० मस्याधारे ।

मसिवर्द्धनम् । न० रसगन्धे ॥

मसी । स्त्री० मेलायाम् । लिपिसाधन विशेषे । स्याही० इ०गौ०भा० । स्याही० इ० भाषा० ॥ शेफालिका वृक्षे । मस्यति । मसी० । पचाद्यच् । गौरादित्वात् ङीष् ॥

मसीजलम् । न० मस्याम् ॥

मसीधानम् । न० मस्याधारे ॥

मसीधानी । स्त्री० मस्याधारे ॥

मसीना । स्त्री० क्षमाख्याख्यातधान्ये । उमायाम् ॥

मसीमः । पुं० कायस्थे ॥ मस्याईः ॥

मसुरः । पुं० मसूरे । मङ्गल्यके ॥ मस्यति० मस्यतेवा । मसी० । मसेरुरन् ॥ उपधाने ॥ मसुरा । स्त्री० वेश्यायाम् । व्रीहिभेदे ई टाप् ॥

मसूरी । स्त्री० पापरोगे । मसूर्याम् ॥

मसूरः । पुं० व्रीहिभेदे । मङ्गल्यके ॥ मसूरोमधुरः पाकेसङ्ग्राही शीतलोलघुः । कफपित्तास्रजिद् रूक्षोवातलोज्वरनाशनः ॥ मस्यति० मस्यतेवा । मसी० । मसेरूरन्निति पाणिनिकारन् । उपधाने ॥

मसूरकः । पुं० उपबर्हविशेषे । चातुरे । चक्रगद्दी । गोलतिर्द्दा भा०इ०भा० ॥ मसूरे । स्वार्थे कः ॥

मसूरविदला । स्त्री० कृष्णत्रिवृतायाम् ॥ मसूरस्यविदलमस्याः ।

मसूरा । स्त्री॰ मसूर॰ इ॰ प्रसिद्धे ब्रीहिभेदे । मङ्गल्यके ॥ वेश्यायाम् ॥ टाप् ॥

मसूरिका । स्त्री॰ कुट्टन्याम् ॥ मङ्गल्यके ॥ मसूरीरोगे । शीतलाख्यरोगे ॥ मसूराकृतिसंस्थानाः पिडकाः स्युर्मसूरिकाः ॥ चतोसारे ॥ मशहर्याम् ॥ यथोक्तं पाश्वेक्रियायोगसारे । दंशांश्च मशकांश्चैव यथाकालेनिवारयेत् । मसूरिकाभिः प्राच्छन्नमञ्चाथिनसुच्युतमिति ॥

मसूरी । स्त्री॰ पापरोगे । रक्तवच्याम् । शीतलाख्यरोगे ॥ पिडति ॥ रक्ता विहति ॥

मसृणः । पुं॰ सोमे ॥ त्रि॰ चाक्कणे । अकठिने । स्निग्धे ॥ मसति । मसी॰ बाहुलकात्॰ ऋण ः ॥ यद्वा । सम् ऋणोति । ऋणुगतौ ॥ इगुपधेतिक ः । पृषोदरादिः ॥

मसृणा । स्त्री॰ उमायाम् । पत्नाम् ॥

मस्करः । पुं॰ वेणौ । वंशे ॥ मस्कतेऽनेन । मस्कगतौ । बाहुलकादरः ॥ यद्वा । मद्वतीमषिमयडने । चरः । चागमशास्त्रयानित्यत्वान्नुम् । मस्करमस्करिणौवेणुपरिव्राजकयोरितिसुट् ॥ रघुवंशे ॥

मस्करी । पुं॰ परिव्राजके । भिक्षौ । संन्यासिनि ॥ मस्कनम् । मस्कगतौ । बाहुलकादरः । मस्करोज्ञानंगतिर्ज्ञानंऽस्यास्ति । मस्करमस्करिणावितीनिः ॥ यद्वा । मस्करोवेणुरस्यास्ति । इनिः ॥ यद्वा । माकर्तुं कर्म निषेद्धुं शीलमस्य । मस्करमस्करिणावितिसाधुः ॥ यद्वा । मस्करइवशुक्लमन्तः करणमस्यास्ति । प्राग्वन्निपातः ॥ यद्वा । मस्कते । मस्कि॰ । बाहुलकादरः । चागमशास्त्रस्यानित्यत्वान्नुम् ॥ मस्करो निधिर्भेदोऽस्यास्ति । पूर्ववन्निपातः ॥ चन्द्रे ॥

मस्तम् । न॰ मस्तके ॥ मस्यतेऽस्य । मसी॰ । क्तः ॥

मस्तकः । पुं॰ न॰ उत्तमाङ्गे । शिरसि । मूर्द्धनि । स्वार्थेकन् ॥

मस्तकस्नेहः । पुं॰ शिरोमज्जनि ॥

मस्तकाख्यः । पुं॰ शिखरे । उपशिरसि । मस्तकमित्याख्यायस्य ॥

मस्तदारु । न॰ देवदारुणि ॥

मस्तमूलकम् । न॰ शिरोधौ ॥

मस्तिष्कम् । न॰ गोर्दे । मस्तकस्थघृताकारस्नेहे । मस्यते॰ मसनं वा॰ । मसी॰ । तिक् । मस्तिं मस्कते । मस्कगतौ । पचाद्यच् । पृषोदरादिः ॥

मस्तु । न॰ दधिभवमण्डे । दधिजले । गौड॰ इ॰ माथा । दध्नस्तु परियोभागोघनः क्षीरसमन्वितः । स लोकेसरइत्युक्तोदध्नोमण्डस्तुमस्त्विति ॥ मस्तुकमपरंयस्त्वा मधुमुशा-

भिलापकरः । सौतोविशेषसंज्ञा दिक्षफलप्रानिलापहम् । सघ्यं-प्रौचनशीघ्रं भिनत्तिमलसंद्यहम्। चपिच । उष्णाऽरुं कफपित्तंदृश्म इरंवस्थं कषायंसरंभुजिच्छन्दकरं वो चरगदप्रौशार्यसांनाशनम् । सौत : सुहिकरंकफानिलहरंविष्टम्भ शूलापहम्पाण्डुश्वासविकारगुल्म शमनमसृप्रशस्तं लघु ॥ मस्तके । मस्ते० । सितमौतितुल् ॥

मस्तुलुङ्गः : । पुं० मस्तकस्थमृताकार स्नेहे । मस्तिष्के ॥

मस्तुलुङ्गका : । पुं० मस्तिष्के ॥

मह : । पुं० उत्सवे ॥ तेजसि ॥ महिषे ॥ महनम् । महपूजायाम् । घञ् । सञ्ज्ञापूर्वकत्वाद्धाभाव : । चोक्षा ॥ यद्वा महति । घच् । यज्ञे ॥

महक : । पुं० महामोदे । महक० कू० भा० ॥

महत् । न० राज्ये ॥

महान् । पुं० ध्यानक्रियाशक्तिमतिम हत्तत्त्वे । बुद्धितत्त्वे । अध्यवसाय लक्षणे ॥ यथा । सविकारात्प्रधा नात्महत्तत्वं प्रजायते । महानि-तियत : ख्यातिर्लोकानांजायतेस दा ॥ सर्वकार्याणिचयाऽधिकत्वात् कारणे० हिरण्यगर्भे । प्रथमजे । दुर्गायाम् । महान्व्याप्यस्थितासर्वं महान्यथाप्रकृतिमंतेतिदेवीपुराणात् ॥ उष्ट्रे ॥ नवधाभक्तियुक्तश्रीहरिभक्ते । शिवशेषधर्मादौ ॥ त्रि० वृद्धे । विशदृष्टे । गुरुति । विशाले । बड्डे । विपुले । उत्कटे ॥ चतिप्रमाणे । चप्रमेये । चामातमधुरसांसारिकसुखनिस्पृहे ॥ यथा । महत्से वांद्वारमाहुर्विमुक्तेस्तमोद्वारयोषितांसङ्गिसङ्गम् । महान्तस्ते समचित्ता : प्रशान्ताविमन्यव : सुहृद : साधवोये ॥ महति । मह० । वर्तमानेपृषदृहन्महदिति निपातित : ॥ महत्सेवा । महच्छब्दस्मयो गमिभेयथा। मद्देहितेसेवतयामां सेवेन्द्रियेविज्ञये । याचायाम पिनिन्द्रायांमहच्छब्दोनदीयते ॥ इति ॥ देशादिपरिच्छेदशून्ये सर्वग तेपरमात्मनि ॥

महती । स्त्री० नारदस्यवल्लक्याम् ॥ महतस्तन्त्रीवीणामहतीति० स्वामी ॥ विस्तृतायाम् । वृहत्प्रमाणायाम् ॥ वृहत्याम् ॥ वार्ताक्याम् ॥ रू-द्धते । मह० । वर्तमानेपृषदिति साधु : । गौरादि : ॥

महतीद्वादशी । स्त्री० श्रवणद्वादश्याम् । वामनद्वादश्याम् ॥

महत्तत्त्वम् । न० चतुर्विंशतितत्त्वान्तर्गतद्वितीयतत्त्वे । प्रकृतिसत्वन्ने सम ष्टिबुद्धिरूपे ॥ तत्पर्यायाद्योकाम

ह्यभावत्वे । यथा । महानात्मामति र्विष्णुर्जिष्णुः शम्भुश्चवीर्य्यवान् । बुद्धिः प्रज्ञोपलब्धिश्च तथाख्याति र्धृतिःस्मृतिः ॥ पर्य्यायवाचकैः शब्दैर्महानात्माविभाव्यते ॥

महत्तरः । पुं॰ शूद्रविशेषे । ग्रामकूटे । महत्ता॰ इ॰ मा॰ ॥ इ॰ चि॰ क्षात्रश्रेय : ॥

महत्सुखम् । न॰ हस्तीसहस्राख्ययज्ञे ॥

महत्त्वम् । न॰ महतोभावे । यथा । महत्त्वंषड्विधेहेतुरिन्द्रियकारणंमतम् । इ॰ भा॰ प॰ । महत्त्वंषड्विधइति । द्रव्यप्रत्यक्षेमहत्त्वंसमवायसम्बन्धेनकारणम् । द्रव्यसमवेतानां गुणकर्मसामान्यानांप्रत्यक्षे॰ स्वाश्रयसमवेतसमवायसम्बन्धेनकारणम् । इ॰ सिद्धान्तमुक्तावली ॥ स्वाध्यक्षसर्वसम्बन्धित्वे ॥ श्रेष्ठतायाम् ॥

महत्पुष्पा । स्त्री॰ हस्तिघोषायाम् ॥

महद्ब्रह्म । न॰ अव्याकृते॰ प्रकृतौ॰ त्रिगुणात्मिकायांमायायाम् । सर्वकार्य्यविषयाधिपत्यात्कारणंमहत्॰सर्वकार्य्याणांबृद्धिहेतुत्वरूपात्॰ बृंहणत्वाद्वा॰ ब्रह्मणत्वाद्वा॰ ब्रह्मच भवत्यव्याकृतम् । महच्चतद्ब्रह्मचेतिविग्रहः ॥

महद्भूतम् । न॰ परमात्मनि ॥ महत् ब्रह्मविदोत्कर्षेवर्तमानत्वात्॰भूतंपरमार्थसत्यम् । महच्चतद्भूतञ्च ॥

महनीयः । त्रि॰ पूजनीये ।

महर्घता । स्त्री॰ अधिकान्यूनत्वे ॥

महर्द्धिः । स्त्री॰ सम्पदी । ऋद्धेराधिक्ये ॥

महर्लोकः । पुं॰ भूरादिसप्तलोकान्तर्गतचतुर्थलोके ॥ चतुर्मुखदिनस्यान्तेमगदेतच्चराचरम् । ग्रहादिब्रह्मसर्वंचलोकंभूर्भुवादिकम् ॥ जनंप्रयान्तितापार्तामहर्लोकनिवासिनः ॥ चतुर्थेतुमहर्लोकेतिष्ठन्तिकल्पवासिनः ॥ अपिच । महोहिकोटिर्यत्रासतेमरीच्यादिमुनिव्रजः ॥ भूपृष्ठाद्विकोट्यर्द्धप्रयोमरीच्यादिमुनिवृन्दस्थानंमहर्लोकइत्यर्थः ॥

महर्षभी । स्त्री॰ कपिकच्छ्वाम् ॥

महर्षिः । पुं॰ व्यासादिषु ॥ भगवादिसप्तसु ॥ वेदतदर्थद्रष्टृषु॰ सर्वेषु॰ विद्यासम्प्रदायप्रवर्त्तकेषु ॥ भृगुंमरीचिमत्रिञ्चपुलस्त्यंपुलहंक्रतुम् । वसिष्ठञ्चमहातेजाः सोऽसृजन्मनसासुतान् ॥ सप्तब्रह्माणइत्येते पुराणेनिश्चयङ्गताः ॥ महांश्चासौ॰ ऋषिश्च । कृत्स्नस्यवेदस्यदर्शनात् । । अन्येतुवेदैकदेशदर्शनादृषयः ॥

महल्लकः । पुं॰ अन्तःपुरचरे । सौविदल्ले । कत्थ्यिनि ॥ महतीव्याधि । का॰ । वा : । क : ॥

महल्लिकः । पुं॰ अन्तःपुरचरे ।

चन्द्र : पुरस्थायिजने । तत्पर्याय
था । मुक्तमुन्योऽनुपशोव : सो
स्वभावोमहर्षिक : । इति ॥

महः । न० उत्सवे ॥ तेजसि ॥ मह-
नम् ० महते वा । मह पूजायाम् ।
सर्वधातुभ्योऽसुन् ।

महसम् । न० ज्ञाने । महति० महा-
तेवा । मह० । अत्यविचमितमिन
निरभियभिनभितयियस्तिपक्षिप-
निमडिभ्योऽसच् । प्रकारे ।

महा । स्त्री० गोपशुराम् । पृश्निप-
र्णीविशेषे । धेनौ । महातेपूज्यते ।
मह० । घञोयचेति० घ : ।

महाकच्छ : । पुं० समुद्रे । प्रचेत-
सि । वरुणे ॥ पर्वते । महान् क-
च्छोयस्यास : । आन्महतइत्यात्व-
म् ।

महाकरटकिनी । स्त्री० क्षुद्रभेदे ।
विश्वसारके । नागफणीवृक्ष० इ०
भा० । फणिमनसा० इति० दे० भा० ।

महाकन्द : । पुं० लशुने । चाणक्य
मूलके । मूलके ॥ रक्तलशुने । रा-
जपलाण्डौ ॥

महाकपित्थ : । पुं० बिल्ववृक्षे । म-
हांश्चासौकपित्थश्च । कर्मधा० ।

महाकपित्थाख्य : । पुं० बिल्वे ।

महापारद्ग : । पुं० [illegible] ।

महाकर्णिकार : । पुं० आरग्वधे ।

महाकान्ता । स्त्री० पृथिव्याम् ।

महाकाय : । पुं० वृषाणके । प्रमथ-
विशेषे । शिवद्वारपाले ॥ बृहच्छरी-
रे । त्रि० तद्वति ॥

महाकार्त्तिकी । स्त्री० रोहिणीनक्षत्रयु-
क्तायांकार्त्तिक्यांपूर्णिमायाम् ।

महाकाल : । पुं० महादेवे । प्रमथ-
विशेषे । महाभीमे । लताविशेषे ।
किम्पाके ॥ खण्डखण्डायमान
विष्णुस्वरूपसमये । तत्सन्निधानम-
हाकाल : शाक्तरीतदेवता ॥

महाकाली । स्त्री० परदेवतायाम् । म-
हाकालपत्न्याम् ॥ जिनानांचतु-
र्विंशतिशासनदेवतान्तर्गतदेवीवि-
शेषे ॥

महाकाव्यम् । न० सर्गबन्धे ॥

महाकुमुदा । स्त्री० काश्मर्याम् ।

महाकुम्भी । स्त्री० कट्फले ॥

महाकुल : । त्रि० कुलीने । आर्ये ।
सभ्ये । सज्जने । साधौ ॥ महच्च
तत्कुलञ्चमहाकुलम् । आन्महतइ-
त्यात्वम् । महाकुलमस्यास्ति । अ-
च् ॥ महत्कुलमस्त्येतिविग्रहे ।
न० सत्कुले ॥

महाकुलीन : । त्रि० महाकुले ॥ म-
हाकुलस्यापत्यम् । कुलात् ख : ।
इत्यनुवृत्तौ । महाकुलादञ्खञौ
इतिपक्षे ख : ।

महाकूप : । पुं० पादावर्त्ते ।

महाकूल : । पुं० मल्लूने ।

महाकोषफला । स्त्री॰ देवदालीलतायाम् ॥

महाकोशल : । पुं॰ देशविशेषे । यथा । गोकर्णग्रामात् पूर्वभागेचार्यावर्त्तासुचोत्तरे । तीरभुक्तात् पश्चिमे-तुमहापुरांचसवत : । महाकोशलदेशश्च सूर्यवंशपरायण : ॥

महाकोषातकी । स्त्री॰ हस्तिघोषायाम् । पिनुयां॰ घीयातोरड़ी॰ इ॰ भा॰ प्र॰ शाके । महाकोषातकी स्निग्धासराप्रित्तानिलापहा ॥

महाक्रतु : । पुं॰ अश्वमेधे । महांश्चासौ क्रतुश्च ॥

महाखर : । पुं॰ अश्वतरे ॥

महागद : । पुं॰ ज्वरे ॥

महागन्ध : । पुं॰ कुटजवृक्षे । अम्बुवेतसे ॥ न॰ हरिचन्दने । महान् गन्धोयस्य॰ यस्मिन्वा ॥ बोले ॥

महागन्धा । स्त्री॰ चामुण्डायांदिव्यायाम् । केविकापुष्पे । नागबलायाम् ।

महागर : । पुं॰ गव्यै । वत्सगर्भे ॥

महागिरि : । पुं॰ वीरभेदे । वृहत्पर्वते ॥

महागुरु : । पुं॰ मातरि । पितरि ॥ आचार्ये ॥ यथा । मातापितावा नृ दातामहान्तोगुरव : स्मृता : । स्मृति । महांश्चासौगुरुश्च । यान्मह तत्वाज्ञानम् । स्त्रिया : पतिरेवम हागुरु : ॥

महागुल्मा । स्त्री॰ सोमवल्ल्याम् ॥

महागुहा । स्त्री॰ पृश्निपर्ण्याम् ॥

महागोधूम : । पुं॰ पश्चाद्देशभवेगोधूमविशेषे । वडा॰ गोहूं॰ इ॰ भाषा ॥

महाग्रह : । पुं॰ सूर्ये ॥

महाग्रीव : । पुं॰ उष्ट्रे । त्रि॰ दृहत्ग्रीवायुक्ते ।

महाघूर्णा । स्त्री॰ सुरायाम् । महती घूर्णावस्थायस्या : ॥

महाघोर : । त्रि॰ अतिशयभयानके ।

महाघोष : । पुं॰ अतिघोषणे । महाशब्दे । न॰ हट्टे । आपणे ॥ त्रि॰ महाशब्दयुक्ते ॥

महाघोषा । स्त्री॰ ककटश्चृङ्ग्याम् । कुन्दुरुवयाम् ॥

महाङ्ग : । पुं॰ उष्ट्रे । महान्त्यङ्गान्यस्य । अर्शआदित्वादच्‌ब्रीहि : । गौधुरके । महामूषिके । रक्तचित्रके ॥ त्रि॰ वृहदवयवयुक्ते ॥

महाचञ्चु : । पुं॰ वृहच्चञ्चुमतिखगे । शाकविशेषे । सुचञ्चुकायाम् । दीर्घपत्र्याम् । दिव्यगन्धायाम् ।

महाचण्ड : । पुं॰ कालपुरुषे ॥ त्रि॰ प्रचण्डे ।

महाचीन : । पुं॰ देशभेदे । यथा कैलासीरंसमारभ्यमस्यंपरित : प-

महाढ्यः । पुं॰ कदम्बे ॥ त्रि॰ अतिशयधनवति ॥

महातपाः । पुं॰ विष्णौ ॥ महत्सृष्टिविषयं तपोज्ञानमस्य । ऐश्वर्यप्रतापो वा महदस्य ॥

महातमःप्रभा । स्त्री॰ अतिशयान्धकारमये नरकविशेषे ॥

महातरुः । पुं॰ स्नुहीवृक्षे ॥ बृहद्वृक्षे ॥

महातलम् । न॰ पातालप्रभेदे ॥

महातारा । स्त्री॰ जिनानां देवीविशेषे ॥

महाताली । स्त्री॰ आवर्त्तक्याम् ॥

महातिक्तः । पुं॰ महानिम्बे ॥ त्रि॰ अतिशयतिक्तरसयुक्ते ॥

महातिक्ता । स्त्री॰ यवतिक्तायाम् ॥ पाठायाम् ॥

महातीक्ष्णा । स्त्री॰ भल्लातकवृक्षे ॥ त्रि॰ अतिशयतीक्ष्णे ॥

महातुम्बी । स्त्री॰ राजालाब्वाम् ॥

महातेजाः । पुं॰ अग्नौ ॥ कार्त्तिकेये ॥ विष्णौ ॥ यथा, तेजस्विनो यद्यपि नराजसाभास्करादयः । तस्मात्तोमहद्भ्यस्तेतिमहातेजाः सईश्वरः ॥ शौर्यशौर्यादिभिर्धर्म्मैर्महद्भिः समलङ्कृतः । इतिवास्यान्महातेजाः मधुपातनईश्वरः ॥ न॰ पारदे ॥ त्रि॰ अतिशयतेजस्विनि ॥ महदुत्कृष्टं तेजो यस्य स न्यलक्षणमस्य ॥

महात्मा । त्रि॰ महामनसि । महाशये ॥ अत्यन्तशुद्धान्तःकरणत्वाज्जीवन्मुक्ते ॥ सर्वोत्कृष्टे ॥ रजस्तमोमलरहितान्तःकरणे । शुद्धसत्त्वे । समुत्पन्नसम्यग्दर्शने ॥ साधूनामभयदायके । परमोदारचित्ते ॥ परमकारुणिके॥ सर्वेश्वरे॰ सर्वज्ञे॰ परमात्मनि ॥ अथ बुद्धौ ॥ महानुपनीकजन्मसुकृतैः संस्कृतः शुद्धतामापद्यमभिभूतः ॰ आत्मा ।॰ अन्तःकरणं यस्य सः । महाशयासाक्षात्कार्थेतिवा ॥

महात्ययः । पुं॰ चतुर्थक्षि॰ विपमज्वरे ॥ गम्भीरे ॥ सर्वातिकष्टे ॥

महादण्डः । पुं॰ यमदूतप्रभेदे ॥

महादन्तः । पुं॰ गजदन्ते । ईशादन्ते । इह हस्तमार्गे ॥ त्रि॰ महति ।

महादानम् । न॰ श्रेष्ठदाने । तुलापुरुषादिषोडशप्रकारे ॥ यथा । आद्यन्तु सर्वदानानां तुलापुरुषसंज्ञितम् । हिरण्यगर्भदानञ्च ब्रह्माण्डं तदनन्तरम् ॥ कल्पपादपदानञ्च गोसहस्रन्तु पञ्चमम् । हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च । पञ्चलाङ्गलकं तद्वद्धरादानं तथैव च ॥ हिरण्याश्वरथस्तद्वद् हेमहस्तिरथस्तथा ॥ द्वादशं विष्णुचक्रञ्च ततः कल्पलतात्मकम् । सप्तसागरदानञ्च रत्नधेनुस्तथैव च । महाभूतघटस्तद्

नृपोऽथ : परिकीर्त्तित : ॥

महादारु । न॰ देवदारुणि ॥

महादाह : । पुं॰ नरकान्तरे ॥

महादेव : । पुं॰ शिवे ॥ महांश्चासौ-
देवश्च । कर्म्मधारयस्तम् । म-
हान्देवोऽनृत्यादिरूपाक्रीडायस्येतिवा
॥ ब्रह्मादीनांसुराणाञ्चमुनीनांब्रह्म
वादिनाम् । तेषाञ्चमहतोदेवोमहा
देव:प्रकीर्त्तित: ॥ महतीपूजितावि
श्वे मूलप्रकृतिरीश्वरी । तस्यादेव: पू
जितश्चमहादेव : सपस्मृत: ॥ इ॰
ब्र॰ वै॰ पु॰ ॥ सर्व्वदेवानांमहनीय
त्वाच्चमहादेव: । तथोक्तं साम्बपुरा-
णे । पूज्यतेयत्सुरै : सर्व्वैर्महांश्चैव
प्रमाणत : । धातुर्महेतिपूजायांम
हादेवस्ततस्मृत : ॥ स्कान्देपि । म
हतामपिदेवानामहमेवमहान्यत : ।
नतुमत्तोमहाणन्योमहादेवस्ततोह्य
हमिति ॥ कोटयोब्रह्मणानामग
त्यागमकोटय : । मद : प्रलयमा-
यान्तिमहादेवेतिकीर्त्तनात् ॥ महा
देवमहादेवमहादेवेतिवादिनम् ।
वत्सं गौरिवगौरीशोधावन्तमनुधाव
ति ॥ अघोऽसमघवं शिरसि । सर्वा
न्भावान्परित्यज्यात्मज्ञानयोगैश्व
र्ये महतिमहीयतेतस्मादुच्यतेमहा-
देवइति । महार्णवेविष्णुसहस्रनाम
भाष्यटीकायांद्रष्टव्य : ॥

महादेवी । स्त्री॰ दुर्गायाम् ॥ महतो-
ब्रह्मादीनपिदेवयतिसर्गादिभिर्व्यव
हारयति॰ इतिमहादेवी । दिवु॰ ।
पच् । टित्वान्ङीप् ॥ पूज्यतेयासु
रै : सर्वैर्महतीचप्रमाणत: । धातु
र्महेतिपूजायांमहादेवीतत : स्मृते
तिदेवीपुराणम् । सर्वद्रष्ट्रीमहादेवी
द्रष्टासाक्षीचसैवहीतिदेवीभागवत-
म् । द्रष्टानीव : साक्षी॰ ईश्वर: ॰
दृश्यंसर्वंजगत्॰ दृश्यंच सैवभगवती
भवतीत्यर्थ: ॥ राज्ञ्याम् । महिष्या
म् । पट्टदेव्याम् ॥

महादैत्य : । पुं॰ भौत्यमन्वन्तरीयदै-
त्यविशेषे ॥ वस्त्वृद्दैत्ये ॥

महाद्युति : । त्रि॰ ईश्वरे ॥ भगवती-
याश्चाभयन्तारव्याविनीद्युतिर्यस्य
लक्ष्मणाख्यकामाश्विराभवेनस्थित
साधनोन्मुखे॰ पुरुषर्षभे । महती
द्युतिरस्य ॥

महाद्रिभृत् । पुं॰ हरौ महान्तमद्रिं-
मन्दरंगोवर्द्धनंवाऽमृतमथनेगोरक्ष-
णेवाधृतवानितिव्युत्पत्ति: फलिता
र्थेकथनपरा । यस्तुसम्तुमहाद्रयेध
त्योति॰ धर्म्मुमुपगल्भते । रिभृ-
याधामलब्धे । क्विप् । क्विन्प्रत्यय
स्मृत : ॥

महाद्रुम : । पुं॰ पामल्वे ॥ महांश्चा
सौद्रुमश्च ॥ तस्य द्रुमे ॥

महाद्रोणा । स्त्री॰ देवकुलन्यायाम् । दि
व्यपुष्पायाम् ॥

यथा । महानिशातु विज्ञेया मध्यस्थं प्रहरद्वयम् । तस्यां स्नानं न कुर्वीत काम्यनैमित्तिकादृते ॥ स्मृत्यन्तरम् । ख्यानिशासार्द्धप्रहरोपरिप्रहरद्वयमिति रघुनन्दनः । देवलोक्तमहानिशा रात्रिमध्यमदण्डद्वयात्मिकासा द्वितीयप्रहरशेषदण्डतृतीयप्रहरप्रथम दण्डरूपा ॥

महानीलः । पुं० रत्नवि०। अतिशयनील वर्णे ॥

महानीलः । पुं० भृङ्गराजे ॥ नागविशेषे ॥ सिंहलद्वीपाकरोद्भूते० मणिविशेषे ॥ सिंहलस्याकरोद्भूता महानीलास्तु ते स्मृताः पूर्वागमश्योक्ताः । तल्लक्षणं यथा । यस्तु वर्णस्य भूयस्त्वात् क्षीरे शतगुणे स्थितः । नीलतां तनुयात् सर्वं महानीलः स उच्यते ॥ इति गारुडे ७२ अध्यायः ॥

महानीला । स्त्री० महाजम्ब्वाम् ॥

महानीली । स्त्री० नीलापराजितायाम् ॥ बृहन्नील्याम् । श्रीफलिकायाम् । शिशार्द्रायाम् ॥

महानुभावः । पुं० औदार्ये ॥ महामये । सुकृतिनि । महासात्त्विके ॥ महान् श्रुताध्ययनतपआचारादिनियमनोऽनुभावः प्रभावो यस्य सः ॥

महान्तकः । पुं० महेन्द्राचलपीठस्थे शिवे । स्त्री० देवीविशेषे ॥ महेन्द्रे च महान्तिका ॥

महापक्षः । पुं० बहुपुत्रादिपरिजने ॥

महापञ्चमूलम् । न० बृहत्पञ्चमूले । तद्यथा । बिल्वोऽग्निमन्थः श्योनाकः काश्मर्यः पाटला तथा । सर्वैस्तु मिलितैरेतैः स्यान्महापञ्चमूलकम् ॥

महापञ्चविषम् । न० द्रव्यविषपञ्चके ॥ तद्यथा । शृङ्गीकः कालकूटश्च मुस्तको वत्सनाभकः । शङ्खकर्णीतियोगोऽयं महापञ्चविषाभिधः ॥

महापञ्चाङ्गुलः । पुं० स्थूलैरण्डे ॥

महापत्रः । पुं० शाकवृक्षे ॥ मानके । मानकच्० इ० गौ० दे० भा० प्र० कन्दे ॥ त्रि० बृहत्पर्णयुक्ते ॥ महान्ति पत्राण्यस्य सः ॥

महापद्मा । स्त्री० महाजम्ब्वाम् ॥

महापथः । पुं० प्रधानेऽध्वनि । घण्टापथे । राजवर्त्मनि ॥ आकाशे ॥ पितृतीर्थपथि ॥ श्मशाने ॥ महान् पन्थाः । ० षः ॥

महापथगमः । पुं० मरणे ॥

महापद्मः । पुं० अष्टनागान्तर्गतनागविशेषे । पतिशुक्ले । दशबिन्दुकमस्तके ॥ कुबेरस्य नवनिधान्तर्गतनिधिविशेषे ॥ नवकोटिसङ्ख्यायाम् । १००००००००००००० न० सितपद्मे ॥

महापातकम् । न० ब्रह्महत्यादिषु ॥

महापासक : । पुं॰ गोमिनि । चेलुके । बुद्धभिक्षुशिष्ये ॥

महापिण्डीतक : । पुं॰ कृष्णवर्णमदनद्रुमे । वाराहे ॥

महापिण्डीतरु : । पुं॰ वृक्षविशेषे । श्वेतपिण्डीतके । ग्रन्थकोषतरौ । शरे । पिण्डीतरौ । पेण्डिरा॰ इ॰ भा॰ ॥

महापीठम् । न॰ एकपञ्चाशत्पीठे ॥

महापीलु : । पुं॰ वृहत्पीलुवृक्षे । महाफले । मधुपीलौ ॥

महापुराणम् । न॰ एकादशलक्षणयुक्ते व्यासप्रणीतेऽष्टादशसङ्ख्यकपुराणविशेषे ॥ तल्लक्षणं यथा । सृष्टिश्चापिविसृष्टिश्चस्थितिस्तेषाञ्चपालनम् । कर्मणांवासनावार्त्तामनूनाञ्चक्रमेणच । वर्णनं प्रलयानाञ्चमोक्षस्यचनिरूपणम् । उत्कीर्त्तनं हरेरेवदेवानाञ्चपृथक् पृथक् ॥ दशाधिकंलक्षणञ्चमहतांपरिकीर्त्तितम् ॥ इतिब्रह्मवैवर्त्ते कृष्णजन्मखण्डे १३२ अध्याय : ॥

महापुरुष : । पुं॰ नारायणे । श्रेष्ठनरे ॥ लक्षणं पाराशर्य्या ६७ अ॰ ॥ ब्रह्मात्माभेदज्ञानिनि॰ जीवन्मुक्ते ॥ महांश्चासौपुरुषश्च । सम्मदादिति समास : । आन्महत इत्यात्वम् ॥

महापुरुषदन्ता । स्त्री॰ शतमूल्याम् ॥

महापुरुषदन्तिका । स्त्री॰ शतावर्य्याम् ॥

महापुष्पा । स्त्री॰ अपराजितायाम् ॥

महापृष्ठ : । पुं॰ उष्ट्रे त्रि॰ वृहत्पृष्ठे ॥

महापौरुषिक : । पुं॰ वैकुण्ठनाथानुचरे ॥

महाप्रकृति : । स्त्री॰ दुर्गायाम् ॥

महाप्रपञ्च : । पुं॰ स्थूलसूक्ष्मकारणप्रपञ्चानांसमष्टौ ॥ यथाऽपान्तरवनानांसमष्टिरेकं महद्वनम्॰ यथाऽवान्तरजलाशयानांसमष्टिरेकोमहान् जलाशयोभवति॰ तद्वत्स्थूलसूक्ष्मकारणशरीरप्रपञ्चानामपिसमष्टिरेकोमहाप्रपञ्चोभवतीति ॥

महाप्रभ : । त्रि॰ अतिशयदीप्तियुक्ते ॥

महाप्रभाव : । त्रि॰ अतिशयतेज : शक्तिविशिष्टे ॥

महाप्रभु : । पुं॰ जगन्नाथे ॥

महाप्रलय : । पुं॰ सर्वसंहारे । एककालिकसमस्तजन्यपदार्थनाशे ॥ महांश्चासौप्रलयश्च ॥ न्यायमते च न्यभावानधिकरणे कालोमहाप्रलय : ॰ सचचरमध्वंसरूप : ॥

महाप्रसाद : । पुं॰ विष्णुनैवेद्यादौ ॥ यथा । पादोदकञ्चनिर्माल्यंनैवेद्यञ्चविशेषत : । महाप्रसादइत्युक्त्वाग्राह्यं विष्णो : प्रयत्नत : ॥ ब्राह्मणप्रमंजन्नं प्राप्तमपि तत्र तु निः । तन्माहात्म्यं महानिर्वाणतन्त्रेसम्यक्

निरूपितम् ।

महाप्रस्थानम् , न॰ शास्त्रीयदेहत्या गविशेषे ॥ महत्॰ आवृत्तिशून्यं प्र स्थानम्॰ सर्पहस्तिकसिंहव्याघ्रादि विषमभूम्याद्यपविहारेणागमनं याव च्छरीरपातं तन्महाप्रस्थानम्॰ इत्यु च्यते ॥

महाप्राण : । पुं॰ द्रोणकाके ॥

महाप्रेत : । पुं॰ ब्रह्मादिषु ॥ यथा । ब्रह्माविष्णुश्चरुद्रश्चईश्वरश्चसदाशि व : । एतेपञ्चमहाप्रेताभूताधिपतयो मता : ॥ चत्वारोमञ्चचरणा : पञ्चम : प्रच्छद:पट : । सच्चित्प्रकाशरूपेणशि वेनाभिन्नविग्रहा : । तन्नासनेसमा सीनानिर्भरानन्दरूपिणीति ॥

महाफल : । पुं॰ मालूरे । विल्वे ॥ त्रि॰ उत्कृष्टफले ॥ न॰ इन्द्रत्फले ॥

महाफला । स्त्री॰ इन्द्रवारुण्याम् ॥ राजजम्बाम् ॥ तुम्ब्याम् ॥ महा कोशातक्याम् ॥ मधुबीजपूरे ॥

महाफेना । स्त्री॰ अब्धिफेने । हिरडी रे ॥

महाबल : । पुं॰ वायौ ॥ बुद्धे ॥ न॰ सीसके ॥ त्रि॰ बलोत्कटे । बलीय सि ॥ महासामर्थ्ये ॥ महत्प्रकृष्ट बलमस्य ॥

महाबला । स्त्री॰ पतिबलायाम् ॥ पी तपुष्पाम् । पीतवाट्यालके ॥

महाबोधि : । पुं॰ बुद्धे ॥

महाब्राह्मण : । पुं॰ निन्दितब्राह्मणे । काश्या॰ अचारख॰ नृ॰ भा॰ ॥

महाभद्रा । स्त्री॰ काश्मर्याम् ॥ गङ्गा याम् ॥

महाभट : । पुं॰ अतिशययोद्धरि ॥

महाभाग : । त्रि॰ अतिधन्ये ॥ दयाद्य दगुणयोगोमहाभागता॰ तद्विशिष्टे । महान्भागोभाग्यमस्य ॥ महान् असाधारणोभागऐश्वर्यादिभगसमु दायोयस्यवा ॥

महाभागा । स्त्री॰ महालयतीर्थस्थायां देव्याम् ॥

महाभारतम् । न॰ व्यासप्रणीतेतिहास शास्त्रे ॥ तन्नामकारणं यथा । एक तश्चतुरोवेदाभारतञ्चैतदेकत : । पुराकिलसुरै : सर्वै : समेत्यतुलया धृतम् ॥ चतुर्भ्य : सरहस्येभ्योवेदे भ्योह्यधिकंयदा । तदाप्रभृतिलोकेऽ स्मिन्महाभारतमुच्यते ॥ महत्त्वा द्भारतत्वाच्चमहाभारतमुच्यते ॥

महाभाष्यम् । न॰ पातञ्जलेव्याकरण भाष्ये ॥

महाभिलाष : । त्रि॰ महेच्छे ॥ महा नभिलाषोऽस्य ॥

महाभिष : । पुं॰ राजर्षिविशेषे । प्र तीपे । शन्तनौ ॥ यथा । महाभि षोनृपोऽख्यात : प्रतीपस्सुतस्तदा । शन्तनुर्नामराजर्षिर्धर्मात्मासत्यस ङ्गरइति ॥

महाभीता । स्त्री० लज्जालुवृक्षे ॥ त्रि० अतिशयभययुक्ते ॥

महाभीम: । पुं० शान्तनुनृपे ॥ भृङ्गिनामकशिवद्वारपाले ॥ त्रि० अतिशयभयानके ॥

महाभीरु: । पुं० कीटविशेषे । गोपालिक० शू० गौ० दे० भा० प्र० ॥ ग्वाली० शू० दे० भा० ॥ अतिशयभयशीले ॥

महाभीष्म: । पुं० शान्तनुनृपे ॥

महाभूतम् । न० व्योमादिपञ्चसु । भूम्यादिपंचसु ॥ महाभूतानिपंचैव खानिलाग्न्यम्बुभूमय: ॥

महाभृङ्ग: । पुं० नीलभृङ्गराजे ॥

महाभैरव: । पुं० शरभरूपिशिवे ॥

महाभोग: । त्रि० नारायणे ॥ अतिसुखिनि ॥ महान्भोग: सुखरूपो ऽस्य ॥

महाभोगा । स्त्री० दुर्गायाम् । महार्थसाधिनीदेवीमहाभोगाततः स्मृता ॥

महामण्डूक: । पुं० पीतमण्डूके ॥

महामति: । त्रि० अतिशयबुद्धिविशिष्टे ॥

महामद: । पुं० मत्तगजे ॥ त्रि० अतिशयदर्पयुक्ते ॥

महामनाः । त्रि० सदन्तःकरणे ॥ उत्कृष्टे । महेच्छे । उदारे । महाशये । अक्षुद्रचित्ते । सर्वश्रेष्ठोऽस्मीतिमन्यमाने ॥ महद्भ्योरमन्यैरसममा न्मानंमन्यमानंमनोयस्य स: ॥ परमेश्वरे ॥ सृष्टिस्थित्यन्तकर्माणिजगतांमनसैवकरोतीतिमहामना: ॥ मनसैवजगत्सृष्टिंसंहारञ्चकरोतिय इतिविष्णुपुराणम् ॥ मनसैव० सङ्कल्पमात्रेणैव ।

महामाघ: । पुं० योगविशेषे ॥ माघीमघवसंयुक्तामघायांगुरुश्चेद्‌ा । महामाघस्तदाप्रोक्तोनदीदाशादि वर्ज्जयेत् ॥

महामात्र: । पुं० प्रधाने । अमात्ये । सेनान्यादौ ॥ समृद्धे । हस्तिपकाधिपे । हस्तिशिक्षाजीविनि ॥ महतीमात्रापरिच्छेदोऽस्य ॥

महामात्री । स्त्री० आचार्यपत्न्याम् । महामात्र्योपाधाम् ॥

महामानसी । स्त्री० जिनानांविद्यादेवीभेदे ॥

महामाय: । पुं० हरौ ॥ मायाविनामपिमायाकारित्वात् ॥ महतीमहिष्ठामायास्य । महामायात्वंचमायाविनामपिमयशम्बरप्रभृतीनांविविधप्रपंचविस्मयकारिमायाप्रयोक्तृत्वात् ॥

महामाया । स्त्री० दुर्गायाम् ॥ ईश्वरज्ञाम् ॥ विसदृशप्रतीतिसाधनंमाया० तस्यामहत्त्वसर्वविषयत्वमितिव्याख्यानात् तस्या: स्वरूपंयथा । कालिकापुराणे । गर्भान्तर्ज्ञानसम्पन्नंप्रेरितंसूतिमारुतै:

। तथन्न ज्ञानरहितंकुरुवैथानिरन्त
रम् ॥ पूर्वालिप्तं वैसम्बद्धसंस्कारेण-
नियोजयेत् । आहारादीस्ततोमोहं-
ममत्वं ज्ञानसंशयम् ॥ क्रोधोपरोध
लोभेषुक्षिप्त्वाक्षिप्त्वापुनः पुनः । प-
श्चात्कामेनसंयोज्यचिन्तायुक्तमहर्नि
शम् ॥ आमोदयुक्तं व्यसनासक्तं ज-
न्तुं करोतिया । महामायेतिसाप्रो
क्तातेनसाजगदीश्वरी ॥ इति ॥

महामायी । पुं॰ ईश्वरे ॥

महामायी । स्त्री॰ दुर्गायाम् ॥

महामारी । स्त्री॰ महाकाल्याम् ॥ का
मयँमभूतायांमहाजनचयकर्यांदेव
तायाम् । संहारकर्त्री । महतीमा
रयतीतितथा । महतीचासौमारी
चेतिवा ॥ व्याप्तंतयैतत्सकलंब्रह्मा
ण्डं मनुजेश्वर । महाकाल्यामहा-
कालिमहामारीस्वरूपया ॥ सैवका-
लेमहामारीसैवसृष्टिर्भवत्यजा ॥ स्थि
तिंकरोतिभूतानांसैवकालेसनातनी-
तिमार्कण्डेयपुराणम् ॥ अतिशय-
मारके ॥

महामार्ग : । पुं॰ राजमार्गे ॥

महामालिनी । स्त्री॰ नाराचाभिधेछ-
न्दोविशेषे ॥ यदिहनयुगलंततोवेदरे
फैर्महामालिनीतिलक्षणम् ॥

महामाष : । पुं॰ राजमाषे । चौरा॰
लोबिया॰ पू॰ भा॰ ॥

महामुख : । पुं॰ कुम्भीरे । न॰ बृह
न्मुखे । त्रि॰ तद्वति ॥

महामुण्डी । स्त्री॰ महाश्रावणिका-
याम् ॥

महामुनि : । पुं॰ नारायणे ॥ भग-
वद्ये ॥ बुद्धे काले ॥ कृपाचार्ये ॥
व्यासे ॥ महांश्चासौमुनिश्च । सन्म
हदितिसमास : । आन्महतइत्या
त्वम् । वशिष्ठे ॥ तुम्बुरुवृक्षे ॥
न॰ कुस्तुम्बुरुणि । धन्याके ॥

महामूर्त्ता पुं॰ शिवे ॥ त्रि॰ बृहन्मस
कयुक्ते ॥

महामूढ : । पुं॰ राजपलाण्डौ ॥ त्रि
विशिष्टे ॥

महामूल्य : । पुं॰ पद्मरागे ॥ न॰ म
हार्घे ॥ त्रि॰ तद्वति ॥

महामूषिक : । पुं॰ बृहदुन्दुरौ । महा
र्घे ॥

महामृग : । पुं॰ हस्तिनि ॥ शरभे ॥

महामृत्युञ्जय : । पुं॰ मृत्योर्म्हत्युक
रे शिवमन्त्रविशेषे ॥ नित्यमष्टशत
जप्त्वामृत्युंमृत्युपयं नयेत् ॥

महामेघ : । पुं॰ अतिशयमेघे ॥

महामेद : । पुं॰ अष्टवर्गान्तौषधे ।
पुरीषधे ॥ वृहन्मेदे ॥

महामेदा । स्त्री॰ अष्टवर्गान्तौषधविशे
षे । वसुच्छिद्रायाम् । जीवन्याम् ।
पांशुरागिण्याम् ॥ महामेदाभिधः
कन्दोमोरङ्गादौप्रजायते । शुक्रार्द्र
कनिभ :कन्दोलताजात:सुपाण्डुर:

ल्युट् । रजकरञ्जनरञ्जनरजस्युप सङ्ख्यानान्नलोप : ॥ रञ्जे : क्युन् वा ॥ महच्चतद्रञ्जनं च । सन्महदिति समास : ॥

महारण्यम् । न० अरण्यान्याम् ॥ महच्चतदरण्यञ्च । सन्महत्परमोत्तमोत्कृष्टा : पूज्यमानैरितिसमास : । आन्महतस्समानाधिकरणजातीययोरित्यात्वम् ॥

महारत्नम् । न० मुक्तादिनवसु ॥ मुक्ताफलंहीरकञ्चवैदूर्यंपद्मरागकम् । पुष्परागञ्चगोमेदंनीलंगारुत्मतं तथा ॥ प्रवालयुक्तान्युक्तानिमहारत्नानिवैनव ॥

महारथ : । पुं० रथिकविशेषे । अद्धुतधन्विभि : सहयोद्धरि ॥ यथा । एकोदशसहस्राणियोधयेद्यस्तुधन्विनाम् । शस्त्रशास्त्रप्रवीणश्चमहारथइतिस्मृत : ॥ अपिच । आत्मानं सारथिञ्चाश्वान्रक्षन्युद्ध्येत योनर : । समहारथसंज्ञ : स्यादित्याहुर्नीतिकोविदा : ॥ शिवे ॥ विष्णौ ॥ महान्महात्मा० नन्दी० गरुडोवारथोयस्यस : ॥

महारम्भम् । न० गडलवणे । सांभर० इ० भा० ॥

महारस : । पुं० खर्जूरे ॥ कोशकारे । इक्षुविशेषे । कोसिआर० इ० भा० ॥ कशेरुणि ॥ पारदे । रसेन्द्रे ॥ न० काञ्जिके ॥

महारसाष्टकम् । न० हिङ्गुलाद्यष्टसु ॥ यथा । दरदंपारद : सस्यंवैक्रान्तं कान्तमभ्रकम् । माक्षिकं विमलञ्चेतिस्युरेतेऽष्टौमहारसा : ॥

महाराज : । पुं० बुद्धभेदे । मञ्जुघोषे ॥ असपत्नराज्यवति । नृपश्रेष्ठे ॥

महाराजचूत : । पुं० उत्तमाम्रे । मन्मथानन्दे ॥

महाराजद्रुम : । पुं० आरग्वधे ॥

महाराजिक : । पुं० गणदेवताविशेषे ॥ सत्यसुधन्वसवनादयोविंशत्यधिकशतद्वयसङ्ख्याता गौरवाभ्रदर्शिता : । महाराजिकनामानो द्विशतेविंशतिस्तथा ॥ महतीराजि : पङ्क्तिर्येषामितिविग्रहेणीशादिभावे तिकाप् ॥

महारात्रि : । स्त्री० महाप्रलये ॥ अर्द्धरात्रात्परं मुहूर्त्तद्वयी ॥ ब्रह्मणयोपलक्षितायांमहाप्रलयरात्राम् ॥ ब्रह्मणस्तुनिपातेचमहाकल्पोभवेन्नृप । प्रकीर्त्तिता महारात्रि : साएवचपुरातनैरितित्र० वै० पु० ॥

महाराष्ट्र : । पुं० देशविशेषे ॥ चित्रकूटंसमारभ्यमध्येचोज्जयिनीशिवे । मार्जारतीर्थराजेन्द्रकोलापुरनिवासिनी ॥ तावद्देशोमहाराष्ट्र : कर्णाटस्वामिगोचर : । इ० शक्तिसङ्गमे ७ पटल : ॥ अपिच । नैऋतेद्र

विज्ञानरत्नमहाराष्ट्राश्वरैक्षत : । जवन : पह्लव : सिन्धु : पारसीकाद्योमता : ॥ इ० ज्योतिषतत्त्वे कूर्मचक्रम् ॥

महाराष्ट्री । स्त्री० जलपिप्पल्याम् ॥ शाकविशेषे । मरैठी० इ० भा० ॥ भाषाप्रभेदे ।

महारिष्ट : । पुं० महानिम्बे । गिरिनिम्बे ।

महारुद्र : । पुं० महादेवे ।

महारूप : । पुं० शिवे ॥

महारूपकम् । न० नाटके ॥

महारोग : । पुं० पापरोगे ॥ स चाष्टविधो यथा । उन्माद : १ । त्वग्दोष: २ । राजयक्ष्मा ३ । श्वास: ४ । मधुमेह : ५ । भगन्दर : ६ । उदर : ७ । अश्मरी ८ । इति ॥

महारोगी । त्रि० महारोगयुक्ते ॥

महारौरव : । पुं० नरकान्तरे ॥ महारौरवसंज्ञस्तु यथोक्तं ताम्रसम्पुटम् । धक्यतीव्रदिवाकारैर्महारौरवनायक : ॥ देवद्रव्यापहारी च पच्यते कल्पमक्षयम् ॥ महान्रौद्रोरवोऽत्र । भक्षणाद्दित्वाद्दलोप : । यद्वा । रुरुभिर्मृगाख्यैर्मृगै : ० महारौरवम् । अण् ॥

महार्घ : । पुं० लावकाख्यखगे ॥ त्रि० महामूल्ये ॥

महार्णव : । पुं० महासमुद्रे ॥

महार्थ : । पुं० परमार्थे ॥

महार्ह : । पुं० वृक्षविशेषे । महाजाड़० गौ० दे० भा० ॥

महार्द्रम् । न० चन्दने ॥

महार्द्रकम् । न० वनार्द्रके ॥

महार्बुदम् । न० दशार्बुदे । शतकोटि १००००००००० सङ्ख्यायाम् । घने ॥

महार्ह : । पुं० विष्णौ । मह : पूजातामर्हति । अर्हइतिसूत्रात्‌अर्हतेः कर्मण्युपपदेऽच्प्रत्यय : ॥ न० श्वेतचन्दने ॥

महालक्ष्मी : । नारायणपत्न्याम् । राधायाम् । यस्याश्चाराधनामोहिता ब्रह्मविष्णुशिवादय : । वैष्णवास्तां महालक्ष्मीं परां राधां वदन्ति ते ॥ यद्वा महालक्ष्मी : प्रिया नारायणस्येति ब्र० वै० पुराणम् ॥

महालय : । पुं० विहारे ॥ तीर्थस्थल भागादेव्याधिवे ॥ परमात्मनि ॥ पितृणामुत्सवाश्रये कन्यागतापरपक्षे कन्यागत० इ० भा० ॥

महालसा । स्त्री० देवीविशेषे । दक्षिणदेशे० महालसादेव्यानमिति विख्याते० देवीस्थाने ॥

महालिकटभी । स्त्री० श्वेतकिणही वृक्षे ॥

महालीलसरस्वती । स्त्री० तारादेव्या : प्रभेदे ॥ लीलया वाक्प्रदा चेति तेन

लीलसरस्वती ॥

महालोध्रः । पुं० लोध्रे । पटियालो ध० इ० भा० ॥

महालोलः । पुं० काके ॥ त्रि० अतिचञ्चले ॥

महालोहम् । न० अयस्कान्ते ॥

महावनम् । न० महारण्ये ॥ वृन्दावनस्थचतुरशीतिक्रोशान्तर्गतवनविशेषे ॥

महावपः । पुं० महामेदे ॥

महावरा । स्त्री० दूर्वायाम् ॥

महावराहः । पुं० आदिवराहे ॥ महांश्चासौवराहश्च । महत्त्वञ्चास्यातिविपुलशरीरधारणात्पृथिव्युद्धरणाय ॥

महावरोहः । पुं० प्लक्षवृक्षे ॥

महावलिः । पुं० नरबलौ ॥

महावल्ली । स्त्री० माधवीलतायाम् ॥

महावसः । पुं० शिशुमारे ॥

महावाक्यम् । न० परमार्थबोधकवेदोक्तोपदेशवाक्यविशेषे । सङ्ख्यापरपर्यायेप्रतिज्ञादावुत्सर्गवाक्ये । योग्यताकांक्षासत्तियुक्तवाक्यसमूहे ॥

महावारुणी । स्त्री० तिथिविशेषे ॥ तद्यथा । शनिवारसमायुक्तासामहावारुणीस्मृता । गङ्गायांयदिलभ्येतकोटिसूर्यग्रहैः समा ॥ सा० वारुणीस्वर्यः ॥ महामहावारुणी तु । यथा । शुभयोगसमायुक्ताशनौशतभिषायदि । महामहेतिविख्याता

तावत्कोटिकुलमुद्धरेत् ॥

महाबाहुः । पुं० स्कन्दे । श्रीरामे ॥ महान्तौबाहूयस्य । यस्यबाहोर्महत्त्वं ख्यातंयुद्धकाण्डे । पितामहान्द्रा महानुग्रहात्पृथिव्यांयेमहासुराः सङ्ख्यापवान्हन्यामिन्द्रान्हरि गणेश्वरेति ॥

महाविद्या । स्त्री० देवताविशेषे ॥ यथा । कालीतारामहाविद्याषोडशीभुवनेश्वरी । भैरवीछिन्नमस्ताचविद्याधूमावतीतथा । बगलासिद्धविद्याचमातङ्गीकमलात्मिका । एतादशमहाविद्याः सिद्धविद्याः प्रकीर्त्तिताः ॥ तासांदशावतारत्वं यथा । प्रकृतिर्विष्णुरूपाचपुंरूपश्चमहेश्वरः । एवंप्रकृतिभिर्द्दिनभेदात्तुप्रकृतेर्दश । कृष्णरूपाकालिकास्याद्रामरूपाचतारिणी । बगलाकूर्म्ममूर्त्तिःस्यान्मीनोधूमावतीभवेत् ॥ छिन्नमस्तानृसिंहः स्याद्वराहश्चैवभैरवी । सुन्दरीजामदग्न्यः स्याद्वामनोभुवनेश्वरी । कमलाबौद्धरूपास्याद्दुर्गास्यात्कल्किरूपिणी । स्वयंभगवतीकालीकृष्णस्तुभगवान्स्वयम् ॥ स्वयञ्चभगवान्कृष्णः कालीरूपोभवद्वै ॥

महाविराट् । पुं० महाविष्णौ ॥

महाबिलम् । न० नभसि । हृच्छिद्रे ॥

महाविषः । पुं० द्विमुखसर्पे । काल

। शरत्कालेऽश्वयुजात्सैव प्रोक्ता म
हाष्टमी। महारात्रिरिति ख्याता तस्या
मर्च्चयेत्सुधीः॥ अष्टम्यां रुधिरै
र्मांसैर्महामांसैः सुगन्धिभिः। पू
जयेद्बहुजातीयैर्बलिभिर्भोजनैः शि
वाम्। सिन्दूरैः पट्टवासोभिर्नाना
विधविलेपनैः। पुष्पैरनेकजातीयैः
फलैर्बहुविधैरपि॥ उपवासं महाष्टम्यां
पुत्रवान्न समाचरेत्। यथा तथैव पूता
त्मा व्रतीदेवीं प्रपूजयेत्॥ पूर्ववि
द्धामहाष्टम्यां नवम्यां बलिभिस्तथा
। विसर्ज्जयेद्दशम्यां तु श्रवणे तां वरो
त्सवैः। तथाहैरावणा यथा।
कन्यायां खरवाविपि शुक्लाष्टम्यां प्रप
जयेत्। सोपवासो निशार्द्धे तु महा
विभवविस्तरैः॥ पूजां समारभे
द्व्यानचर्य्ये वारुणे पिता। पशुघा
तश्च कर्त्तव्यो गवयाय वधस्तथा विदे
वीपुराणे यावपदेतपुर्व्वापाठोऽन्यत
पुरिरघुनन्दनः॥ महाष्टम्युपवा
से पारयन्तु। अष्टम्यां समुपोष्यैव
नवम्यामपरेऽहनि। सच्चमांसो
पहारेण दद्यान्नैवेद्यमुत्तमम्॥ ते
नैव विधिनान्नन्तु स्वयं भुञ्जीत नान्य
थेति॥

महासन्नः। पुं० कुवेरे। त्रि० अति-
निकटे॥

महासमङ्गा। स्त्री० हस्तबलायाम्।
खिरहिट्टयाम्। बलायाम्। ककहि

या० वंधो० खवैटो० दु० भा०॥

महासर्ज्जः। पुं० असनवृक्षे॥ प-
नसे॥

महासहः। पुं० कुब्जकवृक्षे॥ त्रि०
अतिसहे॥

महासहा। स्त्री० माषपर्ण्याम्। अम्ला
नौ। कठसरैय्या० इ० भा०॥ मह
तीचासौसहाच। सन्महदितिसमा
सः। आन्महतइत्यात्वम्॥

महासान्तपनम्। न० व्रतविशेषः।
यथा याज्ञवल्क्यः। कुशोदकञ्च गो
क्षीरं दधिमूत्रं शकृद्घृतम्। ज
ग्ध्वापरेऽह्न्युपवसेत्कृच्छ्रं सान्त
पनं चरन्॥ त्र्यहसाध्यसान्तपनस्तु
स्मृतः। पृथक् सान्तपनद्रव्यैः षड
हः सोपवासकः। सप्ताहेन तु कृच्छ्रो
ऽयं महासान्तपनं स्मृतम्॥ म
हासान्तपनं धेनुषट्कदानसम
म्।

महासारः। पुं० दुर्खदिरे। त्रि०
वृक्षियुक्ते॥

महासाहसम्। न० अतिबलात्कारक्षत
ख्यायें। अतिशयसाहसे॥

महासाहसिकः। त्रि० अतिसाहसयु
क्ते॥ अंसधामप्रहारिणि। महांचा
सौसाहसिकश्च॥

महासिंहः। पुं० शरभे। पर्वताश्रये।
देव्याः सिंहे। यथा। तीक्ष्णदंष्ट्रः
करालास्यः शटाघोभितकन्धरः।

चतुरङ्गिर्वैश्वानरोमहाहविः प्रकीर्तितइति ॥
महासुखः । पुं० बुद्धे ॥ न० क्रीडारते । प्रचुरसुखे ॥ त्रि० तद्वति ॥
महासुगन्धा । स्त्री० गन्धनाकुल्याम् ॥ त्रि० अतिसुगन्धयुक्ते ॥
महासूक्ष्मा । स्त्री० वालुकायाम् ॥ त्रि० अतिशयसूक्ष्मे ॥
महासेनः । पुं० कार्त्तिकेये ॥ महासैन्यपतौ । भौमभेदे ॥ महती सेनाऽस्य ॥
महास्कन्धः । पुं० करभे ॥ त्रि० उन्नतस्कन्धयुक्ते ॥
महास्कन्धा । स्त्री० जम्बूवृक्षे ॥
महास्कन्धी । पुं० करभे ॥
महास्थली । स्त्री० पृथिव्याम् ॥ श्रेष्ठस्थाने ॥
महास्नायुः । पुं० कण्डरायाम् ॥
महास्वन्वी । पुं० शिवे ॥
महास्वनः । पुं० वाद्यप्रभेदे । महत्तूर्ये ॥ विष्णौ ॥ महान्कम्पितः स्वनः नादोऽस्य । यद्वा । महान् स्वनः श्रुतिलक्षणोनादोऽस्य ॥ सम्महदितिसमासे॰चात्त्वम् । उच्चशब्दे ॥ त्रि० तद्वति ॥
महाहनुः । पुं० शिवे ॥ हनूमति ॥ त्रि० बृहद्धनुयुक्ते ॥
महाहविः । न० गोघृते ॥ ब्रह्मणि ॥ महद्भूतसंविद्॰ब्रह्माग्निसर्वंजगत्तदात्मतयाहूयतेऽत्रेतिमहाहविः । यद्वा महान्तिहवींषिआज्यपुरोडाशपशुसोमादिरूपाण्यस्य॰ इन्द्रादिदेवतारूपस्ययजमानरूपस्येतिमहाहविः ॥
महाहासः । पुं० अट्टहासे ॥
महाहिगन्धा । स्त्री० गन्धनाकुल्याम् ॥
महाह्रस्वा । स्त्री० कपिकच्छ्वाम् । शूकशिम्ब्याम् ॥ त्रि० अतिखर्वे ॥
महि । अ० महिमनि ॥
महिः । स्त्री० भूमौ । मह्यते । मह पूजायाम् । चुरादिरदन्तः । व्यामादर्थेङ् : ॥
महिका । स्त्री० हिमे ॥ मह्यते । मह॰ क्वुन्शिल्पिसंज्ञयोः ॥
महितः । त्रि० पूजिते ॥ मह्यतेस्म ॥ मह॰ । मतिबुद्धिपूजार्थेभ्यश्चेति क्तः ॥
महिनम् । न० राज्ये । त्रि० पूजनीये ॥ मह्यते । मह॰ । महेरिनण्चेति इनन् ॥
महिमा । पुं० शिवैश्वर्ये । ऐश्वर्यातिशये । भूतिप्रभेदे ॥ महान्भवति॰ येनसमस्तब्रह्माण्डव्यापीनस्सम्भवेति । विभूतिविस्तारे । आत्मनः धर्मनिमित्तविषयराहित्ये ॥ महतो भावः । पृथ्वादिभ्य इमनिच् । उत्कर्षे ॥
महिमवत् । त्रि० ऐश्वर्यवति ॥
महिरः । पुं० वीर्ये । मिहिरे । सूर्ये ।

द्युतिविशारदशेष : ॥

महिला । स्त्री० फलिन्याम् । शुन्द्राया म् । प्रियङ्गौ ॥ स्त्रियाम् । योषिति ॥ रेणुकानामगन्धद्रव्ये ॥ मदमत्ता याम्प्रयोषायाम् ॥ महति० महती वा । मह० । सलिलयतीति०इच च । टाप् ॥

महिलाह्वया । स्त्री० श्यामायाम् । प्रियङ्गौ ॥ महिलायाआह्वयोय स्या : ॥

महिष : । पुं० तुलाये । फासरे । यमवाहने । भैंसा० इ० भा० ॥ महिषस्यामिषंस्वादुस्निग्धोष्णांवास नाशनम् । निद्राशुक्रवणस्तन्यतनु दार्व्य्यंचारगुरु ॥ दध्यस्वरूपिविण् मूत्रं वातपित्तास्त्रनाशनम् ॥ महति ० मद्यतेवा । मह ० । चविमच्छो टिषच् । यदामंडलेमहिषतीतिषच् । आगमशासनस्यानित्यत्वाद्गुम् ॥ यज्ञध्वजविशेषे ॥ असुराधिप विशेषे । महिषासुरे ॥ श्मश्रुधारि विश्रे म्भवाताविशेषे ॥ पुराय्य मियवासीत्समरेणाश्रवेदाद्यनधि कारेविणान्यस्यधर्मनाशकृतः ॥

महिषकन्द : । पुं० महाकन्दविशेषे । शुभालौ ॥

महिषघ्नी । स्त्री० दुर्गायाम् ॥

महिषध्वज : । पुं० यमे ॥ यज्ञविशेषे ॥ महिषोध्वजोयस्य स : ॥

महिषमर्दिनी । स्त्री० दुर्गायाम् ॥

महिषवल्ली । स्त्री० लताविशेषे । सौ म्यायाम् ॥

महिषवाहन : । पुं० यमे ॥

महिषाक्ष : । पुं० )

महिषाक्ष : । पुं० ) गुग्गुलौ । भद्र खनसमप्रभे ॥

महिषाक्षादि । न० महिषाक्षादिपञ्चा ङ्गगणे ॥ यथा । महिषाक्षस्तथा राजनिर्यास : सर्जकस्तथ । क्षव्य गुरु:काद्स्वमहिषाक्षादिपञ्चकम् ॥

महिषासुर : । पुं० महासुरविशेषे । रक्तासुरसमर्थे ॥

महिषासुरसम्भव: । पुं० भूमिजगुग्गुलौ ॥

महिषासुरघ्नी । स्त्री० दुर्गायाम् ॥

महिषी । स्त्री० कृताभिषेकायांराज्ञ : पत्न्याम् ॥ महती । मह० । टिषन् डीषिच्च । टित्वान्ङीप् ॥ औष धीभेदे ॥ सैरिभ्याम् । मन्दगमना याम् । महाशीरायाम् । भैंस० इ० भा० ॥

महिषीगोष्ठम् । न० महिषीशालाया म् । भैंसवाडा० इ० भा० ॥ महि षीणांस्थानम् । गोष्ठच् ॥

महिषीदुग्धम् । न० महिषीक्षीरे । सैरिभ्या : दुग्धं ॥ माहिषंमधुरं गव्यात्स्निग्धंशुक्रावहंगुरु । निद्रा करमभिष्यन्दिक्षुधाधिक्यकरं हिम म् ॥

इन्द्रे ॥ महांश्चासौ॰इन्द्रश्चमहान्वा अयमभूदोऽवमवधीदितिश्रुतेः । ईश्वरे । विष्णौ ॥

महेन्द्रकदली । स्त्री॰ कदलीप्रभेदे ॥

महेन्द्रतनया । स्त्री॰ सरिद्वरे ॥

महेन्द्रनगरी । स्त्री॰ अमरावत्याम् ॥

महेन्द्रपर्वतः । पुं॰ तीर्थविशेषे ॥

महेन्द्रमहद्भित् । पुं॰ मोकापुं ॥

महेन्द्रवारुणी । स्त्री॰ लताविशेषे । चित्रवल्ल्याम् । महाकालायाम् । वडीमालाए॰ इ॰ गौ॰ दे॰ भा॰ ॥

महेन्द्राणी । स्त्री॰ इन्द्रयोषिति । पुलोमजायाम् ॥ महेन्द्रस्याणी । महतीचासाविन्द्राणीचेति वा ॥

महेन्द्रियम् । त्रि॰ माहेन्द्रे ॥ महेन्द्रो देवता■ । महेन्द्राद्घाणौचेतिघः ॥

महेन्द्रीयम् । त्रि॰ माहेन्द्रे ॰ हविरादौ ॥ महेन्द्रोदेवताऽस्य । महेन्द्राद्घाणौचेतिचकाराच्छः ॥

महेरणा । स्त्री॰ कुन्दुरुक्याम् । शल्लकीवृक्षे । महतीरणमस्याः ॥ महमुत्सवमीरयतिवा । ईर॰ । ल्युः ॥

महेला । स्त्री॰ महिलायाम् ॥ वामायाम् ॥ महस्यउत्सवस्य॰ पृथा भूमिः ॥ यद्वा । महति॰ महतेया । सलिकलीलीचेत् । पृषोदरादिः ॥ माया : ईलाक्रीडाया । परमेष्ठारतोऽप्यपारदारिकइतिदमयन्तीकाव्यम् ॥

महेलिका । स्त्री॰ महेलायाम् ॥ स्वार्थेकन् ॥

महेशः । पुं॰ शिवे ॥ महेशाज्ञापरो देवः ॥

महेशबंधुः । पुं॰ श्रीफलवृक्षे । बिल्वे । महेशस्यबन्धुरिव ॥

महेशिता । त्रि॰ परमेश्वरे । परदेवतायाम् ॥ महांश्चासावीशिताच । सम्महदितिसमासः ॥

महेश्वरः । पुं॰ शिवे । महादेवे । महेश्वरस्त्र्यम्बकएवनापरइतिरघुः ॥ विश्वस्थानाश्चसर्वेषांमहतामीश्वरः स्वयम् । महेश्वरइतिगीयंप्रवदन्तिमनीषिणः ॥ महांश्चासावीश्वरश्च । सन्महदितिसमासः ॥ त्रि॰ अधीश्वरे ॥

महेश्वरी । स्त्री॰ महेश्वरपत्न्याम् । भगवत्याम्परदेवतायाम् । अपराजितायाम् ॥ पित्तलप्रभेदे । अपिवायाम् । ब्रह्मरीच्याम् । राजरीत्याम् । महतीचासावीश्वरीच ॥

महेष्वासः । पुं॰ हरौ । शिवे । महान्विस्तृतइष्वासस्त्रूपुर्धेयोयस्यसः ॥ त्रि॰ उत्तमधानुष्के ॥

महैरण्डः । पुं॰ स्थूलैरण्डे ॥

महैला । स्त्री॰ स्थूलैलायाम् ॥

महोक्षः । पुं॰ वृहद्वृषे । वृषभे ॥ महांश्चासावुक्षाच । अचतुरेति साधुः ॥

स्वदात्मप्रिय द्रव्यंतत्तदिष्टायकल्प येत् ॥ यलिदानविधौदेवविहि-त : पुरुष: पशु: । स्त्रीपशुर्नचकर्त्त व्यक्तचर्गाभवशासनात् ॥ मन्यये-देवादिप्रीत्यर्थम् । गलखाने । म मिर्दीवंचे सिस : ॥

मांस : । पुं॰ काले । कीटे ॥

मांसकारि । म॰ रक्ते । रुधिरे ॥

मांसच्छदा । स्त्री॰ मांसरोहिणीविशे षे । मांसाम् । सुलोमायाम् ॥

मांसजम् । न॰ मेदसि ॥

मांसतेज : । न॰ मेदसि ॥

मांसदलन : । पुं॰ प्रीष्मप्रके ॥

मांसद्रावी । पुं॰ अम्लवेतसे

मांसपचनम् । न॰ मांसपाके ॥

मांसपेशी । स्त्री॰ गर्भस्यावयवविशेषे॥ यथा । बुद्बुद: सप्तरात्रे चमांसपेशी भवेत्तत: । द्विसप्ताहात्भवेत्पेशी रक्तमांसविलादृढा ॥ बीजस्येवा-ङ्कुरा : पेश्य : पञ्चविंशतिराम्ब-रा : ॥

मांसप्रलेह : । पुं॰ प्रलेहविशेषे ॥ प-थ्यप्रलेहम् ॥

मांसफला । स्त्री॰ वार्त्ताक्याम् ॥

मांसभक्ष : । त्रि॰ मांसभक्षणकर्त्त-रि ।

मांसमाषा । स्त्री॰ माषपर्ण्याम् ॥

मांसरस : पुं॰ भोज॰ रसा॰ इति ख्यातेमांसव्यञ्जने ॥ सिद्धमांसरसो रुच्य : श्रमश्वासक्षयापह : । प्रीण नोवातपित्तघ्न : क्षीणानामल्परेत-साम् ॥ विश्लिष्टभग्नसन्धीनांशुष्का-णांशुक्रकाङ्क्षिणाम् । स्त्रीक्षीण लक्षीणानांज्वरक्षीणक्षतोरसाम् ॥ शस्यतेस्वरक्षीणानांदृष्ट्यायु: श्रवणा र्थिनाम् ॥

मांसरोहिणी । स्त्री॰ सुगन्धिद्रव्यविशे षे । अग्निरुहायाम् । चर्मकषाया म् । विकषायाम् । स्यान्मांसरो हिणीवृष्यासरादोषत्रयापहा ॥

मांसलम् । न॰ काव्यस्यगौडीरीत्यन्त र्गतस्त्रौजोगुणस्याङ्गविशेषे ॥ यथा । ओज : समासभूयस्त्वं मांसलंपदड म्बरम् ॥ त्रि॰ बलवति । बलयति ॥ स्थूले ॥ यथा । निम्नाभवक्षुरेखा : स्फुनिंद्रव्याधियुक्ते : क्षुपै : । मां सक्षेत्रधमोपेताभवन्त्येवमेन्द्रैर : ॥ मांसमस्त्यस्य । सिध्मादित्वाल्लच् ॥ पुं॰ माषे ॥

मांसलफला । स्त्री॰ वृन्ताक्याम् ॥

मांसविक्रयी । त्रि॰ वैतंसिके । कौ-टिके ॥ सकृदपिमांसविक्रयकारि-णि ॥ सद्य : पततिमांसेनलाक्षया लवणेनच ॥

मांसव्यध : । त्रि॰ मांसखण्डने ॥ मां -सस्यव्यधनम् ॥ व्यधजपोरनुपस र्गे॰ इत्यप् ॥

मांसशृङ्गाटकम् । न॰ मांसप्रकारवि

माक्षीम् । अ० अभ्यर्णे ॥
माकोट : । पुं मुकुटे शब्दार्थसारे ॥
माकोटे मुकुटे ध्वरीतिदेवीगीता ॥
माक्षिकम् । न० मधुनि ॥ मक्षिका-
भि : कृतम् । संज्ञायामित्यण् ॥
तैलवर्णमधुनि ॥ मक्षिका : पिङ्गव
र्णास्तु :महत्योमधुमक्षिका : । ता-
भि : कृततैलवर्णं माक्षिकंपरिकी-
र्तितम् ॥ माक्षिकंमधुषुश्रेष्ठं शेत्राम
यद्वरंलघु । ध्यामलाग्नं : घाताश्वास
कासक्षयविनाशनम् ॥ धातुमाक्षि
कि । स्वर्णमाक्षिके ॥ तापिच्छे ।
पीतमाक्षिके ॥ माक्षिकंद्विविधं प्रो
क्तंहेमाद्यं तारमाक्षिकम् । भिन्नव-
र्णंविशेषत्वाद्रसवीर्यादिकपृथक् ॥
तारपाठादिकेतारमाक्षिकञ्चप्रशस्त
म् । दृष्टिहेमाभकंयन्तु रोगघ्नलघु-
श्विदम् ॥
माक्षिकजम् । न० सिक्थके ॥
माक्षिकधातु : । पुं० माक्षिके । स्वर्ण
माक्षिके ॥
माक्षिकफल : । पुं० मधुनारिकेर-
के ॥
माक्षिकशर्करा । स्त्री० सिताखण्डे ॥
माक्षिकाश्रयम् । न० सिक्थके ॥
माक्षीकम् । न० मधुनि ॥
माक्षीकशर्करा । स्त्री० सिताखण्डे ॥
मागध : । पुं० वैश्यात् क्षत्रियायामु-
त्पन्ने वर्णसङ्करजातिविशेषे । भाट

प्रतिस्थारी । शुक्लजीरके ॥ जरास-
न्धनृपे ॥ कीकटदेशान्तर्वर्त्तिदेश-
विशेषे । मगधे ॥ पाणिजन्दे ॥
वंशक्रमेणाभद्रस्ववेदिनिराजायस्तु-
तिकारिणि । मधुके । बन्दिनि ।
स्तुतिपाठके । तस्योत्पत्तिर्विष्णुपु
राणे यथा । ततोऽस्य दक्षिणं हस्तं म-
मन्थुस्ते तदाद्विजा : । मथ्यमानेष
तथाभूत्पृथुर्वैण्य : प्रतापवान् । त
स्यैवजातमात्रस्ययज्ञे पैतामहेशुभे-
। सूत : सूत्यांसमुत्पन्न : सौत्येऽह
निमहामते । तस्मिन्नेवमहायज्ञे ज
ज्ञे प्राज्ञोऽथमागध : । प्रोक्तौतदामु
निवरैस्तावुभौसूतमागधौ । स्तूय
तामेषनृपति : पृथुर्वैण्य : प्रतापवा
न् ॥ सुत्यामितिसूति : ० अभि
षूति : ० अभिषूयतेयस्यांकालसो-
मोऽस्यामितिसूति : सोमाभिषव-
भूमिस्तस्याम् । सौत्येऽहनि० तस्मि
न्नेवदिने० इत्यर्थ : ॥ वंशपरंपरा
प्रशंसकोध्यायम् ॥ मगधस्यायमिति
। मगधपरिवेशने कण्ड्वादिर्यगन्त :
। अच् । यस्यहलइतियलोप : ।
मत्वाय्यण् ॥ मागधाव शप्रशंसका :
। वंशोदीरणे नयेवाचनं ० वैमाग
धात्वथ : ॥ त्रि० मगधेभवे ॥
मागधादेवी । स्त्री० राधिकायाम् ॥
मागधी । स्त्री० यूथिकायाम् । पिप्पल्या
म् । यूथ्याम् ॥ भाषाप्रभेदे ॥

ध्वासवे ॥ मधूकपुष्पंमधु । मधुना क्रतः सन्धित : । कुलालादिभ्यो-वुञ् ॥

माधवद्रुमः । पुं॰ आम्रवृक्षे ॥ माधवश्चासन्तस्तद्द्रुमः ॥

माधवप्रियम् । न॰ पीतचन्दने ॥

माधविः । पुं॰ प्रद्युम्ने ॥ माधवस्यापत्यम् । अतइञ् ॥

माधविका । स्त्री॰ माधवीलतायाम् ॥ सङ्कोर्तिवृत्ति २४ प्रभेदे ॥ यथा । भवन्तिपुरोजगधाधदिसमत्तरीयगधोचितदाचारयन्त : प्रकाममतीयसुदेगनुमाधविकामितिताक्षयन्त्यतिसन्त : । तुषारधराधरराजसुतापरिचारकभूमिमलेयमयन्तसमाजयमानयज्ञामहोसिमहोदरमर्यंश्वरस्तवामन्त : ॥

माधवी । स्त्री॰ सितौ ॥ मधुशर्करायाम् । सिताखण्डे । कुट्टन्याम् ॥ मदिरायाः प्रभेदे ॥ यथा । पीत्वा दामाधवीमिष्टांशारयामिरथाङ्कये॰ षासिमद्विय प्रतिदेवीपाक्य भागवते । गोमशिष्यादिसम्पत्ती ॥ दुर्गायाम् ॥ तुलस्याम् ॥ सुभद्रायाम् ॥ पुष्पराराधिशेषे । अतिमुक्ते । पुण्ड्रके । वासन्त्याम् । पातायाम् ॥ माधवीमधुरामीताच्योदीयध्यापथा ॥ मधौपुष्प्यति । कालान्तापुपुण्यापञ्चभागिधिनिपुष्प्यदर्च-

च । ङीप् ॥ उर्व्याम् । भूमौ ॥ त्वय्याहंस्वदाधारास्वसृष्टास्यामुपाश्रिता । माधवीमिचकोकोयमभिधत्तेसतोऽभिमामितिविष्णुपुराणम् ॥

माधवेष्टा । स्त्री॰ वाराहीकन्दे ॥

माधवोचितम् । न॰ कक्कोलके ॥

माधवोद्भवः । पुं॰ राजादन्याम् ॥

माधुकः । पुं॰ वर्णसङ्करजातिविशेषे ॥

माधुपर्किकम् । न॰ मधुपर्कोद्दानकाले पूज्यतयाऽऽलब्धे धनादौ ॥

माधुमतः । पुं॰ काश्मीरदेशे ॥ काश्मीरास्तुमाधुमताः सारस्वतास्तुविन्ध्यपिका : ॥ इतिहेमचन्द्रः ॥ मधुमदभिजनोऽस्य । सिन्धुतक्षशिलादिभ्योऽणाधिकरण् ॥

माधुरम् । न॰ मल्लिकायाम् ॥ त्रि॰ मधुरसम्बन्धे ॥

माधुरी । स्त्री॰ मद्ये ॥ माधुर्य्ये ॥ विकांक्षापदारविन्दरश्मिसासामाधुरी माधुरी ।

माधुर्य्यम् । न॰ निसर्गसौम्यत्वे ॥ रामणीयके ॥ रसिकतायाम् ॥ काव्यगुणभेदे ॥ यथा । चाल्हादकत्वं माधुर्य्यंशृङ्गारेद्रुतिकारणम् । शृङ्गारे॰ पर्य्यासुमग्नोभद्रुतिर्गाणरम्यमिय । सम्भत्वंपुनरोघ : प्रसादयोरपि । करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् । अध्यात्मद्रुतिहेतु

स्यात् ॥ मधुरस्यभाव: । दृढादित्वात् ष्यञ् ॥

माधूकम् । त्रि॰ मधूकस्यावयवे ॥ तद्विकारे कोपधाद्वा अण् ॥ मधुरभाषिणि ॥

माध्यन्दिन: । पुं॰ यजुर्वेदीयशाखाविशेषाध्यायिनि ॥ त्रि॰ मध्याह्ने ॥ मध्येभव: । मध्यमध्यन्दिनण्चास्मादितिवृत्ति: ॥

माध्यमम् । त्रि॰ मध्यमीये ॥ मध्येभवम् । मध्यान्मश्॰ इतिवृत्ति: ॥

माध्यमिक: । पुं॰ बौद्धमतभेदेशून्यवादिनि ॥ विज्ञानं क्षणिकं नास्तादिद्यद्भनिमेषवत् । अन्यस्यानुपलब्धत्वाच्छून्यं माध्यमिकाण: ॥

माध्यस्थम् । न॰ मध्यस्थत्वे ॥ यत्रे गुण्यान्तृप्यपक्षमाध्यस्थम् ॥ मध्यस्थस्यभाव: । ष्यञ् ॥ मध्यस्थकरणे ॥

माध्याह्निक: । पुं॰ पञ्चकी ॥ त्रि॰ मध्याह्नभवे ॥ ठञ् ॥

माध्वकम् । न॰ माध्वीके ॥

माध्वी । स्त्री॰ मद्ये ॥ मध्वादिजातसुरायाम् । मधुरकर्कटफल्यां ॥

माध्वीकम् । न॰ मधूकपुष्पै: कृतेमद्ये । मध्वासवे । माधवके ॥ स द्विधा-द्राक्षा-तच्चाविकार: । तस्यविकारइत्यण् । ककुदादेर्य-ष्यञ् वा । पृषोदरादि: ॥ मधुन: प्रभेदे ॥

माध्वीकफल: । पुं॰ मधुनारिकेरके ॥

माध्वीमधुरा । स्त्री॰ मधुखर्जूरिकायां ॥

मान: । पुं॰ चित्तसमुन्नतौ ॥ चित्तस्यसमुन्नतिरुद्धतामान: । धनाद्युत्कर्षेणात्मनिचित्तोन्नतिमानि: । मत्समोनान्योस्तीतिमननंमान: ॥ गर्वे । अपूज्यत्वेपिपूज्यत्वस्यापत्ते ॥ आत्मनिपूज्यत्वाध्यासे ॥ पूज्यत्वे ॥ यथा । अधमा: कलिमिच्छन्तिसन्धिमिच्छन्तिमध्यमा: । उत्तमामानमिच्छन्तिमानोहिमहतांधनम् ॥ मानोहिमूलमर्थस्यमानेगतेधनेनकिम् । प्रभ्रष्टमानदर्पस्यकिंधनेनकिमायुषा । सत्कारे । आत्मन्यविद्यमानगुणारोपेणोत्कर्षबुद्धौ ॥ प्रत्युत्थानाभिवादनादौ ॥ गुणवतिनिजंपरवधौकृपस्मयोपि मानेनाभवति ॥ ग्रहे ॥ आदरे । सम्माने ॥ कोपविशेषे ॥ स्त्रीणामीर्ष्याकृत: कोपोमानोन्यासङ्गिनिप्रिये । प्रियापराधसूचिकानेष्यामान: ॥ अनुरक्तयोर्दम्पत्योर्भावविशेषे ॥ यथा । दम्पत्योर्भावएकत्रसतोरप्यनुरक्तयो: । स्वाभीष्टाश्लेषवीक्षादिनिरोधोमानउच्यते ॥ न॰ प्रमाणे । प्रस्थादौ ॥ अनुप

स्यात् ॥ मधुरस्यभाव : । दृढादित्वा त्ष्यञ् ॥

माधूकम् । त्रि० मधूकवृक्षावयवे ॥ तद्विकारे कोपधात्वे ग्वण् ॥ मधुरभाषिणि ॥

माध्यन्दिन : । पुं० यजुर्वेदीयशाखाविशेषाध्यायिनि ॥ त्रि० मध्यमे ॥ मध्येभव : । मध्यमध्यन्दिनण्चास्मादिति वक्तव्ये : ॥

माध्यमम् । त्रि० मध्यमीये ॥ मध्येभवम् । मध्यान्मण्०इति वक्तव्ये : ॥

माध्यमिक : । पुं० बौद्धानामभेदेशून्यवादिनि ॥ विज्ञानं चणिकं नास्त्याविद्युद्भ्रनिमेषवत् । अन्यस्यानुपलब्धत्वाच्छून्यं माध्यमिका जगु : ॥

माध्यस्थम् । न० मध्यस्थत्वे ॥ चर्वे गुण्यात्पुरुषस्यमाध्यस्थम् ॥ मध्यस्यभाव : । ष्यञ् ॥ मध्यस्थकर्मे ॥

माध्याह्निक : । पुं० सन्ध्यके ॥ त्रि० मध्याह्नभवे ॥ ठञ् ॥

माध्यकम् । न० माध्वीके ॥

माध्वी । स्त्री० मद्ये ॥ मध्वादिकृतसुरायाम् । मधुरवाक्यकस्यां ॥

माध्वीकम् । न० मधूकपुष्पै : कृतेमद्ये । मध्वासवे । माधवके ॥ मृद्वीका०द्राक्षा०तस्याविकार : । तस्यविकारइत्यण् । अनुदात्तादेश्चञ् वा । पृषोदरादि : ॥ मधुन : प्रभेदे ॥

माध्वीकफल : । पुं० मधुनारिकेरके ॥

माध्वीमधुरा । स्त्री० मधुखर्जूरिकायां ॥

मान : । पुं० चित्तसमुन्नतौ ॥ चित्तस्यसमुन्नतिरमुद्रतामान : । धनायुत्कर्षैरात्मनिचित्तोन्नतिमानि : । मत्समोनान्योस्तीतिमननंमान : ॥ गर्वे । अपूज्यत्वे मिपूज्यत्वख्यापने ॥ आत्मनिपूज्यत्वाध्यारो ॥ पूज्यत्वे ॥ यथा । अधमा : कलिमिच्छन्तिसन्धिमिच्छन्तिमध्यमा : । उत्तमामानमिच्छन्तिमानोहिमहतांधनम् ॥ मानोहिमूलमर्थस्यमानेम्लानेधनेनकिम् । प्रभ्रष्टमानदर्पस्यकिंधनेनकिमायुषा । सत्कारे । आत्मन्यविद्यमानगुणारोपिणोऽस्यार्थमुखे ॥ प्रत्युत्थानाभिवादनादौ ॥ गुणवतिनिरुपहस्थसाधौ वक्तव्योपि मानेजनभवति ॥ ग्रहे ॥ आदरे । सम्माने ॥ कोपविशेषे ॥ स्त्रीणामीर्ष्याकृत : कोपोमानोऽन्यासङ्गिनिप्रिये । प्रियापराधसूचिताश्चेष्टामान : ॥ अनुरक्तयोर्दम्पत्योर्भावविशेषे ॥ यथा । दम्पत्योर्भावएकत्रसतोरप्यनुरक्तयो : । स्वाभीष्टाश्लेषवीक्षादिनिरोधोमानउच्यते ॥ न०प्रमाणे । ग्रन्थादौ ॥ अनुर

चतुष्ट्‌यिवर्गेष्वविशेषात् चैतन्यो
त्कर्षनिष्कर्षतारतम्याभ्यामूर्द्धाधोम
ध्यभावेन चैविध्यंबोध्यम् ॥ न०
मनुष्यत्वे ॥ मनुष्यशरीरे ॥ मानु
ष्ये कदलीस्तम्भानि : सारेसारमार्ग
णम् ॥

मानुष्यकम् । न० मानुषसङ्घे । मनु
ष्याणांसमूह : । गोत्रोक्षोष्ट्रोरभ्ररा
जराजन्यराजपुत्र० इत्यमनुष्याद्वाद्
ञ् । प्रकृत्याश्रीराजन्यमनुष्ययुवान
इतियलोपेन ॥ मनुष्याणांभावेयो
पधाद्गुरूपोत्तमाद्वुञ् ॥

मानोज्ञकम् । न० मनोज्ञतायाम् ॥
मनोज्ञस्यभाव : । द्वन्द्वमनोज्ञादि
भ्यश्चेतिवुञ् ॥

मान्मथिश्वाम् । न० मन्मथशब्दे०
दशाधि ॥

मान्द्यम् । न० मन्दत्वे । मन्दत्वभावे
भावयो : ॥ पत्यन्तपुरोहितादिभ्यो
यक् ॥ रोगे ॥

मान्धाता । पुं० युवनाश्वनृपात्मजे ॥
यौवनाश्वे राजनि ॥ मामयंधास्य
तीतिदेवराड्वचनात्० मान्धाता
नामसोऽभवत् । यावत्सूर्यउदेति
यावच्चप्रतितिष्ठति। सर्वंतद्यौवना
श्वस्यमान्धातु : क्षेत्रमुच्यते ॥

मान्य : । त्रि० पूज्ये । मन्तव्ये ।
माननार्हे ॥ मानपूजायामस्मात्तु रा
दिषण्णादर्हार्थे यत्प्रत्यय : ॥

मान्यस्थानम् । न० पूज्यस्यकारणे ॥
॥ यथा । वित्तंबन्धुर्वय : कर्म वि
द्याभवतिपञ्चमी । एतानिमान्य
स्थानानिगरीयोयद्यदुत्तरम् ॥ प
ञ्चानांत्रिषुवर्णेषुभूयांसिगुणवन्ति
च । यत्रस्यु : सोऽत्रमानार्ह : शू
द्रोपिदशमींगत : ॥

मान्या । स्त्री० पूजायाम् । मनुष्या
जायामोषधी ॥

मापक : । पुं० प्रमापके । प्रमाणनिष्ठ
। शब्दे ॥

मापत्य : । पुं० कामदेवे ॥

मापन : । पुं० तुले ॥ न० परिमा
णे ॥

मापित : । त्रि० परिच्छिन्ने ॥ माङ्
माने ॥ण्यन्तात्कर्मणिक्त : ।
अर्त्तिह्रीव्लीरीक्नूयीत्यादिनापुगागम : ॥

माभी : । स्त्री० अभये ॥ नञर्थे मा
शब्दस्याभीशब्देन सुप्सुपेतिसमा
स : ॥

माभीद : । त्रि० अभयप्रदे ॥ माभीं
ददाति । दुदाञ्० । आतश्चोपसर्गे
क : ॥

मामक : । पुं० मातुले ॥ कृपणे ॥
त्रि० मदीये ॥ ममतायुक्ते ॥ ममा
यम् । अण् । ममकादेश : ॥

मामकीन : । त्रि० मदीये । मामके ।
ममाऽयम् । युष्मदस्मदोरन्यतरस्यां
खञ्चेति खञ् । तवकममकावेक

यंसङ्गाश्रया । सङ्गाऽज्ञानादि: । शुभायावन्तोत्पत्तिस्थायिनीमायाशक्ति मीमांस्तोत्यर्थ: । एतेन मायाशक्त्या सद्वितीयत्त्वं ब्रह्मणोस्तीति । कथंज-गत्सृष्ट : पूर्वं ब्रह्मसजातीयभेदशून्य मितिगन्तव्यापरास्ता । शक्ते : श-शान्तिरेकात् । नहिवह्निशक्तिर्व-ह्नः : पृथक्त्वेन । क्वचित्कदापि दृश्यते । किञ्चद्वितीय: सत्यपदा र्थोनास्तीत्यं नैकमेवाद्वितीयंब्रह्मेति श्रुतेरर्थ: । तथाचासत्यामायया स-द्वितीयत्वे विरोधाभावात् । इति ॥ विश्वं मास्यस्याम् । मिमीतेवा । मामाने । माङ् मानेया । मायाश सत्रियोय: । मायातिवा । यातो सुर्घातिक : ॥ यथोक्ताशारे ॥ तत्र थयाम् । क्वचित्कौशुण्डयुक्तोकु सुय इत्यापाटनृपयुक्तकुरुकारम् । मायाशक्तिबिम्बनागोदितमौरव् कामात ऽद्द : पण्डितवत्स्युत्सा रम् ॥ यथा । उदाराभासम्प्रतिरा-धामधुनासि । सर्व सर्व । तत्प्रति-वाराकिमुदासि । विलोकुञ्जं शून्यम येऽयास्तारस्यप्रमाणचाथ भाविव्यं थावद्गत्या : ॥

मायाकार : । त्रि० ऐन्द्रजालिके । प्रातिहारिके । माया० खजलता दीजलस्थलादिभ्रानंकरोति । कृञ् अ० । कर्म्मण्यण् ।

मायाकृत् । पुं० मायाकारे । प्राति हारिके ॥

मायाजीवी । पुं० प्रातिहारिके । बा-जीकर इ० भा० प्रसिद्धे ॥

मायाति : । पुं० नरबले ।

मायाद : । पुं० कुम्भीरे ॥

मायादेवी । स्त्री० शाक्यमुनेर्जनन्या म् ॥

मायादेवीसुत : । पुं० शाक्यमुनी । शाक्यसिंहे । गौतमे । धर्म्मबन्धौ । बुद्धभेदे ॥ मायाचासौदेवीच । त स्या : सुत : ॥

मायाधमन : । पुं० मायाधमने० भ-रावति ॥

मायाफलम् । न० फलविशेषे । छि-द्राफले । मायिफले । माजूफल० इ० गौ० भा० ॥

मायामय : । त्रि० मायाविनाकृते ॥ न० जगति ॥ ननिरूपयितुं शक्या विस्पष्टं भासतेचया । सामायेती न्द्रजालादीलोका: सम्प्रतिपेदिरे ॥ स्पष्टं भातिजगच्चेदमशक्यंतन्निरूप-णम् । मायामयंजगत्तस्मादीक्ष स्वापक्षपातत : ॥

मायामोह : । पुं० चर्हद्धर्म्मप्रवर्त्तके० भगवद्देहोऽसुराणांमोहायोत्पन्ने ॥

मायारसिक : । त्रि० परप्रतारके ॥ मायायांरसिक : ॥

मायावान् । त्रि० मायासंयुक्ते । मा

याविनि,॥ मायास्यस्याश्रिन्वाम तुप् ॥
मायावती । स्त्री॰ कामदेवपत्न्याम् । रत्याम् ॥ वनित्वान्ङीप् ॥
मायावी । पुं॰ यांसासुरे । बिडाले ॥ त्रि॰ मायाकारे । व्यंसके । ऐन्द्रजालिके ॥ मायास्ति॰ यस्मिन्वा । यस्मायामेधास्रजोविनि : ॥
मायाविनोद: । पुं॰ दैत्यदानवादौ ॥ मायायामायायांवाविनोदयस्मात्-रवििशिष्ट: क्रीडायामस्ये तिविग्रह: ॥
मायाशक्ति : । स्त्री॰ आवरण विक्षेप शक्तिसम्पन्नायाम् ॥
मायासीता । स्त्री॰ योगेनानिकृत सीताप्रकृतौ ॥
मायासुत: । पुं॰ बुद्धे ॥ मायाया : सुत : ॥
मायिक : । पुं॰ मायाकारे ॥ माया-स्तिपस्य । व्रीह्यादिपाठाट्ठन् ॥ न॰ मायाफले ॥ त्रि॰ मायात्मके ॥
मायी । पुं॰ मायाकारे । धूर्त्ते । अखिले ॥ मायाविनि । मायाशक्तिमति॰ महेश्वरे । मायाया : प्रकृते र्नियामके ॥ मायान्तुप्रकृतिंविद्या-न्मायिनन्तुमहेश्वरम् । समाख्यस्तधीत्याहु : प्रवे ताश्वतराखिल ॥ मायाचस्य॰ अस्तिन्वाचस्ति । व्री ह्यादिपाठादिनि : ॥
मायु : । पुं॰ पित्ते ॥ मिनोति॰ मा-चिपतिदेहेऽवसाय्यम् । कृमिजन्यपरिषदे । उवापाजिमीस्यु ण् ॥
मायुराज : । पुं॰ कुवेरात्मजे । नग्न कवौ ॥
मायूरम् । न॰ मयूरसमूहे ॥ मयूराणां समूह : । भक्षुदात्तादेरञ् ॥ मयूरमांसे,॥ मयूरस्यावयवोविकारो-वा । प्राणिरजतादिभ्योऽञ् ॥ मायूरंपाशित मांसंघृतैकोपस्करान्वितै । ईषत्पायसंयुक्तं मरिचैलासमन्वितम् ॥ अपायसुप्य मायूरंक्षणानिल-वर्जितम् । वर्षाकालेमतमृसेव्यं दुष्ट-कीटादिभक्षणात् ॥
मायूरिक : । पुं॰ मयूरवार्ग्मणिग्राहक-निके ॥ मयूरान्हन्तिपक्षिमत्स्यम्न-गान्हन्तीतिठक् ॥
मायूरी । स्त्री॰ अजमोदायाम् ॥
मार : । पुं॰ अनङ्गे । अरे । मारय-ति॰विरहिणम् । पचाद्यच् ॥ म-रणे ॥ विघ्ने ॥ धत्तूरे । मारणे ॥ म्रियतेऽनेन । मृङ् ॰ । करणे-घञ् ॥
मारक : । पुं॰ मरके । उत्पाते ॥ प-क्षिविशेषे । घातपक्षिणि । श्येन॰ ॰ इ॰भा॰ । त्रि॰मारयवारिरि ॥
मारजित् । पुं॰ जिने । बुद्धे ॥ मारं-कामंजयति । जि॰ । सत्सूद्विषेति क्विप् । तुक् ॥
मारणम् । न॰ प्रतिघातने । वधे ॥

याविति ॥ मायाख्यस्यास्मिन्वाम तुप् ॥

मायावती । स्त्री॰ कामदेवपत्न्याम् । रत्याम् ॥ उगित्वान्ङीप् ॥

मायावी । पुं॰ कंसासुरे । बिडाले ॥ त्रि॰ मायाकारे । व्यंसके । ऐन्द्र जालिके ॥ मायास्यास्ति॰ अस्मि- न्वा । अस्मायामेधास्रजोविनि : ॥

मायाविनोद: । पुं॰ दैत्यदानवादौ ॥ मायायामायायांवाविनोदस्यमस्कार- रविशेष: क्रीडायावस्ये तिविग्रह: ॥

मायाशक्ति : । स्त्री॰ आवरण विक्षेप शक्तिसम्पन्नायाम् ॥

मायासीता । स्त्री॰ योगेनाभिव्यक्त सीताप्रकृतौ ॥

मायासुत : । पुं॰ बुद्धे ॥ मायाया : सुत : ॥

मायिक : । पुं॰ मायाकारे ॥ माया- स्तित्यस्य । व्रीह्यादिपाठाट्ठन् ॥ त्र॰ मायाकृते । त्रि॰ स्वपात्मके ॥

मायी । पुं॰ मायाकारे । धूर्त्ते । जालि के ॥ मायाविनि । मायाशक्तिम- ति॰ महेश्वरे । मायाया : प्रकृते र्नियामके ॥ मायान्तुप्रकृतिंविद्या- न्मायिनन्तुमहेश्वरम् । समाख्यन्त तीत्याहु : श्वेताश्वतरशाखिन ॥ मायास्त्य॰ अस्मिन्वाअस्ति । व्री ह्यादिपाठादिनि : ॥

मायु : । पुं॰ पित्ते ॥ मिनोति॰ प्र- क्षिपतिदेहेऊष्माणम् । डुमिञ्प्र- क्षेपणे । कृवापाजिमीत्युण् ॥

मायुराज : । पुं॰ कुवेरात्मजे । यक्षे कवौ ॥

मायूरम् । न॰ मयूरसमूहे ॥ मयूराणां समूह : । अनुदात्तादेरञ् ॥ मयू- रमांसे, ॥ मयूरस्यावयवोविकारो- वा । प्राणिरजतादिभ्योञ् ॥ मायू रंपाचितंमांसंघृतेयोपस्कारान्विते । ईषच्चवणसंयुक्तं मरिचैश्चासमन्वित- म् ॥ कषायसुष्णंमायूरंकफानिल- हरंगुरु । वर्णकालिमतत्सेव्यं दृष्ट- कीटादिभक्षणात् ॥

मायूरिक : । पुं॰ मयूरव्याधिरिणिशाकु- निके ॥ मयूरान्हन्तिपक्षिमत्स्यमृ- गान्हन्तीतिठक् ॥

मायूरी । स्त्री॰ अजमोदायाम् ॥

मार : । पुं॰ अनङ्गे । स्मरे ॥ मारय- ति॰विरहिणम् । मञ्चाच्च ॥ म- रणे ॥ विघ्ने । धत्तूरे ॥ मारयते ॥ म्रियतेऽनेन । मृङ्॰ । करणे- घञ् ॥

मारक : । पुं॰ मरके । उत्पाते । प- क्षिविशेषे । मारपक्षिणि । शाङ्ग॰- द्रु॰भा॰ ॥ त्रि॰मारकमात्रे ॥

मारजित् । पुं॰ जिने । बुद्धे ॥ मारं- कामंजयति । जि॰ । सत्सूद्विषेति क्विप् । तुक् ॥

मारणम् । न॰ प्रतिवारणे । दर्प ।

व्यभिचारविशेषे ॥ प्राणिनांप्राणहर
णं मारणं समुदायकृतम् । मृत्युहिंसा-
याम् । स्वार्थे ष्यन्त : । ण्युट् ॥
मारि : । स्त्री० मारणे । वर्षे ॥ घन
घये । मरके ॥
मारिचिकम् । त्रि० मरिचैः संस्कृ-
ते । संस्कृतमितिठक् ॥
मारिस : । त्रि० नटोक्तमे ॥ मान्यो-
क्ते ॥
मारिव्यसनधारक: । पुं० राजर्षिवि-
शेषे ॥
मारिष: । पुं० नाट्योक्त्या० आर्ये । मा
न्ये । श्रेष्ठे ॥ मर्षणात्० सहना-
त्मारिष: । पृषोदरादि: ॥ मर्ष०
पु० प्र० शाकविशेषे ॥ श्वेतरक्तप्रभे
देनद्विविधोमारिष: स्मृत: । मारि
षोमधुर: शीतो विष्टम्भी पित्तनुद्-
र: [illegible] रक्तमारिषकोगुरु-
र्मन्दाग्निकृत् । रक्तमारीषकोनाति
सधारोमधुर: सर: । श्लेष्मल :
कटु : [illegible] दोषहारित :
[illegible] तीयाश्च
[illegible] ॥
मा [illegible] महामायायाम् । श्री-
[illegible] यायाम् ॥
मारी । स्त्री० चण्डिकायाम् ॥ जनक्षये ॥
मारीनाममुखपद्मेषु [illegible] हेतु-
रूपारोगविशिष्टदेवताधिष्ठान : ।
सानदेवताभिरूपतिनाम्नप्रायश्च-
चित्कार्यंकरोति ॥ मार्ष्टिअर्यैश्व-
र्यै
मारीच : । पुं० राक्षसविशेषे । ताड
काराक्षसीपुत्रे । रावणानुचरे ॥
अयंसीताहरणकालेमायामृगरूप:
श्रीरामेणहत : ॥ कक्कोले ॥ याज-
कविशेषे ॥ राजयर्हहस्तिवण्ठ :
॥ राजोमणि ॥ कश्यपे ॥ मरीचेर
पत्यम् । तस्यापत्यमित्यण् ० ऋ
षिणाशिवा । वस्तुतस्तु० यास्कादि-
भ्यश्चेति० इञ्यामायन् । तथाच०
मिदर्थोऽस्यात् परस्त्रतिसूत्रे भाष्यम् ।
मरीचिशब्दोयास्कादिषु पठ्यतइति ।
स०मरीचानांवने ॥
मारीची । स्त्री० देवताविशेषे । माया
देव्याम् । पीठिरथायाम् । [illegible]-सु-
खायाम् ॥
मारुण्ड : । पुं० भुजङ्गाण्डे । प-
थि । मार्गे । गोमयमण्डले ॥
मारुत : । पुं० पवने । स्पर्शने ।
वायौ । त्रियस्तेऽनिमहरेण० विग्र
ह । कृत्० । मरुदेवता : । मरु-
देव०प्रज्ञाद्यण् ।
मारुतव्रतम् । न० राज्ञोव्रतविशे
षे ॥ यथा । प्रविश्यसर्वभूतानिययाच
रतिमारुत : । तथाचारै : प्रवे-
ष्टव्यंव्रतमेतद्धिमारुतम् ॥
मारुतात्मज : । पुं० हनुमति ॥ मरु
तस्यात्मज : ॥

व्याश्चन्यथानहि ॥ इतिदेवीपुराणे चैलोक्याभ्युदयेगोपुरद्वार लक्षणा ध्यायः ॥ मृगशिरोयुक्तापौर्णमासी मार्गी॰सास्मिन्नस्ति। यथा ॥ मृच्य ते विष्टणीक्रियते पादैः । मृजूष्टि । मार्गसे षा । मृगश्चन्वेषणे । घञ् ॥ मार्गोऽष्यादिष्यानूपाट विषयिपथश्चेदेशविविधोत्तेयः ॥ सम्प्रदाये ॥ त्रि॰ मृगसम्बन्धि नि ॥

मार्गकः । पुं॰ आग्रहायणे ॥

मार्गणः । पुं॰ शरे । न॰ अन्वेष णे । संयौषणे । याञ्चायाम् । याचने ॥ त्रि॰ अर्थिनि । याचके ॥ मार्ग अन्वेषणे । बहुलमन्यत्रा पीतियुच् ॥ मार्ग॰ ल्युट् ॥ मार्ग यति । मार्गते वा । ल्युःश्रावल्युट इतिल्युड्वा ॥

मार्गणकः । पुं॰ याचके ॥

मार्गधेनुः । पुं॰ )

मार्गधेनुकम् । न॰ ) योजनपरि माणे ॥

मार्गपः । मिषादाद्योगव्यासुत्पन्ने दाशापरनामनि ॥ निषादोमार्गवं सूतेदाशंनौकर्मजीविनम् कैवर्त्तमितियंप्राहुरार्य्यावर्त्तनिवासि नः ॥

मार्गशिरः । पुं॰ मार्गमासे ॥

मार्गशीर्षः । पुं॰ मार्गे । आग्रहायणिके। मंगसिर॰ पू॰ भा॰ ॥ द्वादशमासानांमध्ये॰ अ भिनवशालिवास्तु,पाकशाकादिशाली ॰ शीतातपशून्यत्वेनचसुखहेतु मार्गशीर्षोभगवद्विभूतिः । मासा नांमार्गशीर्षोहमितिभगवद्वचनात् ॥ तज्जातस्यफलंयथा । यस्यप्रसू तिःखलुमार्गमासितीर्थप्रवासीसततं मतिःस्यात् । परोपकारीप्रशस्ता सुद्धत्तिःसदुक्तियुक्तोवचनाभिज्ञा पी । मृगशिरसायुक्तापौर्णमासी मच्चैवायुक्तः कालश्चण् । ततो ङीप् । मार्गशीर्षीपौर्णमासीघ्यण् ॥ त्रि॰ मृगशिरसिजाते ॥ सन्धि वेलेत्यण् ॥

मार्गिकः । पुं॰ पारिपथिके । मृगा न्हन्ति मृगानुपश्यिति । पक्षिमत्स्ये तिठक् ॥

मार्गितः । त्रि॰ अन्वेषिते ॥ मार्ग्य तेस्म । क॰ । क्तः ॥

मार्गीयोधी । स्त्री॰ दक्षिणमार्गेमध्य षिश्रेयायांसंज्ञाविशेषे ॥ यथा । अ वषश्रवणनिष्ठाचमार्गीति ॥

मार्जः । पुं॰ विष्णौ ॥ पापादिनिर्म लीकारणे । मार्जने । रजके ॥

मार्जनः । पुं॰ लोध्रवृक्षे । न॰ प्रो क्षणादिनाऽङ्गनिर्मलीकरणे । मा र्ज्जी । मांजना॰ इ॰ भा॰ ॥ स्नान कालेशरीरमार्जनाद्युक्ताः । यथा ।

मार्जित : । त्रि० कृतमार्जने ॥ शु- द्धे ॥

मार्जिता । स्त्री० रसालायाम् । शि खरिण्याम् ॥ त्रि० शोधिते ॥ मा- र्ज्यतेस्म । मृजूशौचालङ्कारयो : । क्त : । टाप् ॥

मार्त्तण्ड : । पुं० तरणौ । सूर्ये ॥ मृताण्डेभव : । अण्मृगादि : ॥ क्रोडे । शूकरे ॥

मार्त्तण्डवल्लभा । स्त्री० सूर्यपत्न्याम् । आदित्यभक्तायाम् ॥

मार्त्ताण्ड : । पुं० सूर्ये । मृताण्डेभ- व : । अण् ॥ क्रोडे । भूदारे ॥

मार्त्तिक : । पुं० शरावे ॥ त्रि० मृ त्तिकाविकारे । मृत्तिकायाविकार: । तस्यविकारइत्यण् ॥

मार्द्दम् । न० पत्तने ॥

मार्दङ्गिक : । त्रि० मौरजिके । मृदङ्ग वादके । मृदङ्गवादनशिल्पमस्य । शिल्पमितिठक् । अथ०मृदङ्ग वादनेप्रयुक्तेयथा । मुख्यार्थ हस्तिस्वगभिधानात् ॥

मार्द्दव : । पुं० वर्णसङ्करजातिवि शेषे ॥ न० मृदुतायाम् । परदु:ख प्रदर्शनात्पीडाबुद्धौ ॥ अक्रूरत्वे । इच्छापूर्वपदार्थविकारिपिशिष्यादि षु०अप्रियभाषणादिव्यतिरेकेणवो धयितृत्वे । चित्ताकाठिन्ये ॥ मृ- दोर्भाव : । इगन्ताच्चाण् ।

मार्द्दीकम् । न० मधुनि । द्राक्षाम- द्ये ॥ मृद्वीकाद्राक्षा० तस्याविकार: । तस्यविकारइत्यण् ॥ अनुदात्तादे- श्चेत्यञ् वा ॥

मार्ष : । पुं० मारिषशाके ॥ मान्यो क्त्यार्थे ॥ मर्षयतीत्यस्मात्० मार्ष : ॥

मार्षिक : । पुं० मारिषशाके ॥

मार्ष्टि : । स्त्री० प्रोञ्छनादिनाद्रव्य- निर्मलीकृतौ । मार्जनायाम् ॥ मा र्जनम् । मृजूशुद्धौ । मृजूशौचाल ङ्करणयोर्वा०चुरादि : । क्तिन् । ति तुत्रेतीनेट् । णिलोप : ॥

माल : । पुं० उन्नतभूतले० देशे । म्लेच्छजातिविशेषे ॥ यथा । मा- लाभिख्या : किराताश्च सर्वेपिम्ले- च्छजातय : ॥ देशविशेषे ॥ तच० मेदिनीपुरप्रदेशे मालभूमिरितिप्रख्या त: ॥ न० कपटे ॥ वने ॥ उन्नतभू तले ॥ क्षेत्रे ॥ माति । मामाने । ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुर भद्रोग्रभेरभेलशुक्रशुक्लगौरवत्रेरा- माला : । इतिरन् । निपातनाल्ल त्वम् ॥

मालक : । पुं० निम्बवृक्षे । मल्लके । मद्यपात्रे । क्वुन् ॥ न० स्थल पद्मे ॥

मालका । स्त्री० माल्ये ॥

मालकौश : । पुं० कौशिके । रागवि

यादृषद्•भा• ॥

मालाधरः । पुं• वर्णवृत्तविशेषे ॥ द्विनसरगणान्विरोगजयति : पुनस्तूर्यवाम्•करतलपरिस्फुरत्कमकुण्डलीभान्वितः । सुरपतिगुरुधियापरिगतः समंतात्सखे•जयतिभुविहस्तभूपतिरयन्तुमालाधरः ॥ यथा। क्वचिदपिवयस्ययासहविनोदमातन्वती• कतिपयकथारसैर्नयतिवासरीयांशकम् । सुभगतयकामिनीसमधिगम्यसायामिनी समनुभवतिभामिनी मदनवेदना मन्दरा: ॥

मालारिष्टा । स्त्री• पाठ्याम्। मत्कुणतृल्याम् । हरितलतायाम् ॥

मालाशिका । स्त्री• पृक्कायाम् ॥

मालाली । स्त्री• पृक्कायाम् ॥

मालिः । पुं• सुकेशराक्षसपुत्रे ॥

मालिकः । पुं• मालाकारे ॥ पक्षिविशेषे ॥ मालाशिल्पमस्य। शिल्पमितिठक् । मालास्यास्तिवा । व्रीह्यादिभ्यश्चेतिठन् ॥

मालिका । स्त्री• सप्तलायाम् ॥ पुत्त्याम् ॥ ग्रीवालङ्कारे ॥ पुष्पमाल्ये ॥ नदीविशेषे ॥ सुरायाम् । मद्ये ॥ टाप् ॥

मालिकी । स्त्री• मालिकयोषिति ॥ मालिन्• इ• भा• ॥ टिड्ढेति ङीप् ॥

माली । पुं• मालावति॥ मालाऽस्त्यस्य । सुखादिषु•मालाक्षेपे•इतिपाठादिनिः ॥ व्रीह्यादित्वाद्वा•इनिः । सतुर्थे पादन्यत्रापि ॥ सुकेशराक्षसपुत्रे ॥

मालिनी । स्त्री• मालाकारभार्याम् ॥ मालिकयोषिति ॥ गौर्याम् । उमायाम् ॥ चम्पानगर्याम् । मन्दाकिन्याम् ॥ नदीविशेषे ॥ मालाऽस्त्यस्याः अस्याः । व्रीह्यादित्वादिनिः । ङीप् ॥ यद्वा। मलते। मल धारणे। णिनिः। ङीप् ॥ अग्निशिखायाम् ॥ दुरालभायाम् ॥ चतुर्दशाक्षरोप्छन्दो १५ भेदे ॥ यथा । ननमयययुतेय मालिनीभोगिलोकैः ॥ मृगमदकृतचर्चापीतकौषेयवासारुचिरशिखिशिखण्डाबद्धधम्मिल्लपाशा । अनृजुनिहितमंसेवंशमुत्क्वाणयन्तीध्वस्तमधुरिपुलीलामालिनीपातुराधा ॥

मालिन्यम् । न• मलिनत्वे ॥

मालेयः । त्रि• मालायाम्भवे॥ द्रव्याः ॥

मालु । स्त्री• पत्रलतायाम् । पत्रवल्ल्याम् ॥ नार्याम् ॥

मालुधानः । पुं मातुलाहौ। चित्रसर्पे ॥ मालुरोषधी•तत्प्रधानसंज्ञा ॥ महापद्मे ॥

मालुधानी । स्त्री• लतान्तरे ॥

मालूक : । पुं॰ कृष्णार्जके ॥

मालूर : । पुं॰ मालिङ्गस्थवृक्षे । श्रीफले । बिल्वे । वैल॰ इ॰ भा॰ ॥ मांसक्षीरपरेपालुनाति । लूतकेद ने । धातुलकाद्रुम् ॥ कपित्थवृक्षे ॥

मालिया । स्त्री॰ स्थूलैलायाम् ॥

माल्यम् । न॰ कुसुमे । पुष्पे ॥ मालाशांसाधुमाल्यं पुष्पमितिविवरणम् । यथा । यथामाल्यं नमाध्ये नवासितं तिपस्तर्पम् । नसुघ्रातिसर्वंगन्धं तदतत्सूक्ष्मप्रदर्शनम् ॥ पुष्पमालायाम् ॥ मूर्ध्नि न्यस्तपुष्पदामनि ॥ वीमदापापाद्यक्रिमाल्यधारणनिषेधीयथा । नविगन्धं कार्यापुयांवृषिगोन्ध्यं नधारयेत् । गलाश्रयानं पृष्ठे नयन्वैरविगर्हितम् ॥ रक्तमयस्त्रि ॥ नापानार्ने ॥ मल्यते । मध धारणे मल्लकोर्ध्वत् ॥ यथा । मा यौय । चतुर्थपादिस्थानृष्यम् ॥

माल्यपुष्प : । पुं॰ शणवृक्षे ॥

माल्यपुष्पिका । स्त्री॰ शणपुष्प्याम् ।

माल्यवान् । पुं॰ पर्वतविशेषे । मेरु : प्राच्यामानीलनिषधयान्योत्तराथौ दिमत्माल्यवान्मविस्तीर्णौ केतुमालिनाश्रयम् योमंधारिटौ । मा ल्याश्रारतास्यास्तिमतुप् ॥ राक्षसविशेषे

माष : । पुं॰ चेटात्तीवरजन्यायामुत्पन्ने॰ सङ्करजातौ ॥

माषवी । स्त्री॰ मक्षयायायाम् ॥

माषद्विष : । त्रि॰ प्रतिपेदरि । निषेधके ॥ माशब्द । इतियथापस: । तदाश्रित्यमाशब्दादिभ्यउपसङ्ख्यानमितिठप् ॥

माष : । पुं॰ व्रीहिगर्भादे । कुरुविन्दे । धान्यवीरे । वृषाकरे । मांसले । बलाढ्ये । पित्र्ये । भोगने । मा॰ इ॰ ष्टक॰ इ॰ भा॰ ॥ माषस्यपर्यायाः । बवबेषप्रात्र्यपधिवाभ्यदूषणम् । नवफलपाकशुपामिति लुपि॰युक्तवाव : ॥ माषोगुरु : स्वादुपाक : स्निग्धोरुच्योऽनिलापह :। उष्ण: सन्तर्पणोबल्य: शुक्रलोबृंहण : पर: ॥ भिन्नमूत्रमलस्तन्यमेद : पित्तकफप्रद: । गुदकीलार्दितश्वासपक्तिशूलानि नाशयेत् ॥ कफपित्तकरामाषा : कफपित्तकरंदधि । कफपित्तकरामत्स्याशुष्कार्कफपित्तदात् ॥ मृणांसमापसूपेनमधुनाचनमधर्यत ॥ तप्यपरिमाणविशेषे ॥ हेम्नपयसमधुरे पिण्डेयोग्यमापरा : । परिमाणविशेषे । माषके ॥ सच सामधमानसुसुरामते ५ गुञ्जाधरकृसते ८ ८ गुञ्जापरिमाणम् । कान्तिभ्रमानुसुरामते ५ ० ८ गुञ्जापरिमाणम् । पै

मतान्तरे १० गुञ्जापरिमाणम् । यथा । गुञ्जाभिर्दशभिर्माषः शाणो माषचतुष्टयमिति वैद्यकपरिभाषा । मासाइति भाषा ॥ ज्योतिः स्मृतिमते १२ गुञ्जापरिमाणम् । यथा । पलन्तु लौकिकैर्मानैः साष्टरक्तिद्विमाषकम् । तोलकत्रितयं ज्ञेयं ज्योतिस्तत्त्वे स्मृतिसम्मतमिति ज्योतिस्तत्त्वधृतवचनेनपलमष्टरक्तिकाधिकमाषद्वयाधिकतोलकत्रयम् । एतेनमाषकपरिमाणंद्वादशरक्तिकंभवति ॥ मूर्खे ॥ त्वग्दोषभेदे । मस्साइति भाषा ॥

माषकः । पुं॰ पञ्चरक्तिकपरिमाणे । गुञ्जाः पञ्चाद्यमाषकइत्यमरः ॥ दशार्द्धगुञ्जंप्रवदन्तिमाषं माषाह्वयैः षोडशभिश्च कर्षमिति लीलावती च ॥ षड्भिस्तु रक्तिकाभिः स्यात् माषकोहेमधान्यकौ । माषैर्गुञ्जाभिरष्टाभिः सप्तभिर्वाभवेत्क्वचिदिति भावप्रकाशः ॥

माषपर्णी । स्त्री॰ महासहायाम् । वनमुद्गौषधौ । काम्बोज्याम् । वनमाषे । माषाणीति॰ गौ॰ दे॰ भा॰ ॥ माषपर्णी हिमा तिक्ता रूक्षा शुक्रबलासकृत् । मधुरा ग्राहिणी शोथवातपित्तज्वरास्रजित् ॥

माषवर्द्धकः । पुं॰ स्वर्णकारे ॥

माषवटी । स्त्री॰ वटिकाविशेषे । चड्डी॰ बड़ी॰ इ॰ भा॰ ॥ माषाणांपिष्टिकाहिङ्गुजयार्द्रकसंस्कृता । तयाविरचितायत्नेनवटिकासाधुशोषिताः ॥ तलितास्तास्ततस्तैले अथवासुप्रतिष्ठिताः । वटकास्तुगुणैर्युक्ताज्ञातव्याश्चिराभ्रयम् ॥

माषशः । अ॰ प्रतिमाषम्॰ इत्यर्थे ॥

माषादः । पुं॰ कच्छपे ॥ त्रि॰ माषभक्षके ॥

माषाद्यः । पुं॰ शमीधान्यगणे । माषादिर्यस्यगणविशेषस्यसः । माषोमुद्गोराजमाषः कुलत्थश्चणकास्तिलाः । आढकाबड़ीवरइतिशमीधान्यगणः स्मृतः ॥

माषीणम् । न॰ माषक्षेत्रे । माष्ये ॥ माषाणांभवनंक्षेत्रम् । विभाषातिलमाषोमाभङ्गाणुभ्यइतिपक्षे खञ् ॥

माषेण्डरी । स्त्री॰ इण्डरे॰ इन्दरे॰ सेफ॰ इतिहिन्दवंशप्रसिद्धखाद्यद्रव्ये ॥

माष्यम् । न॰ माषीणे । माषक्षेत्रे । माषाणांभवनम्क्षेत्रम् । विभाषातिलमाषेतिपक्षे यत् ॥ माषेभ्योहितं वा । खलयवमाषेत्यादिना यत् ॥

माः । पुं॰ चन्द्रे ॥ मासे ॥ मिमीते मानन्दमितिमाः । बाहुलकादसि

मिथ्याध्यवसितिः । स्त्री॰ मिथ्याध्यवसाये ॥

मिथ्यानिरसनम् । न॰ शपथे ॥

मिथ्याप्रयुक्तः । त्रि॰ यदर्थं प्रतिपादमायप्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात्प्रतिपादयति । शब्दे ॥

मिथ्याभियोगः । पुं॰ अभ्याख्याने । असंमेधारयस्तोत्यादिमिथ्योद्भावनरूपे॰ मिथ्यापवादे । मिथ्याचासावभियोगश्च ॥

मिथ्याभिशंसनम् । न॰ अभिशापे । । स्वर्णंचौर्यं त्वयाकृतमित्यादिमिथ्यार्थवादिसाधनरूपे मिथ्यारोपवाक्ये ॥ अभिशंसेर्भावे ल्युट् ॥

मिथ्याभिशापः । पुं॰ मिथ्यापवादे ॥ यथा । शुक्लपक्षे चतुर्थ्यान्तु सिंहे चन्द्रस्य दर्शनम् । मिथ्याभिशापं कुरुते तस्मात् पश्येन्न तं ततः ॥

मिथ्यामतिः । स्त्री॰ भ्रान्तौ । भ्रमे ॥ मिथ्याचासौ मतिश्च ॥

मिथ्याविनीतः । त्रि॰ कपटेन विनयिनि ॥

मिथ्यासाक्षी । त्रि॰ कूटसाक्षिणि ॥ तथाज्ञानप्रकारमाह्याज्ञवल्क्यः । उक्ते पि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः । द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ॥

मिथ्योत्तरम् । न॰ चतुर्विधोत्तरान्तर्गतोत्तरविशेषे ॥ तल्लक्षणं यथा । अभियुक्तोऽभियोगस्य यदि कुर्यादपह्नवम् । मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः ॥ तच्चतुर्विधं यथा । मिथ्यैतत् नाभिजानामि मम तत्र न सन्निधिः । अजातश्चास्मि तत्काले॰ इति मिथ्या चतुर्विधम् । इति व्यवहारतत्त्वं ॥

मिथ्योपलब्धिः । स्त्री॰ मायागन्धर्वनगरादिज्ञाने ॥ मिथ्या चासावुपलब्धिश्च ॥

मिद्धम् न॰ निद्राभिसम्बन्धे ॥ आलस्ये ॥ मिदे ॥ निद्रायाम् ॥

मिन्मिनः । त्रि॰ सानुनासिकवाक्ये । शिष्टे । गुन्गुना॰ हि॰ भा॰ । गोना॰ कु॰ गौ॰ दे॰ भा॰ । भोमथा कू॰ पर्वतीयभाषा ॥ अस्य निदानन्तु । आवृत्तवायुः सकफो धमनीः शब्दवाहिनीः । नरान्करोत्यक्रियकान् मूकमिन्मिनगद्गदान् ॥

मिमङ्क्षुः । त्रि॰ मङ्क्तुमिच्छौ ॥ मस्जेः सन्नन्तादुप्रत्ययः ॥

मिमन्थिषुः । त्रि॰ मथितुमिच्छौ ॥ मथे . सन्नन्तादुः ॥

मिमानः । त्रि॰ मानकर्त्तरि ॥ माङोलटः शानजादेशः । द्वाभ्यां तिद्विर्भावः ॥

मिम्मिनः । त्रि॰ )
मिम्बिनः । त्रि॰ ) मिन्मिने ॥

थार्यं देशे । ततपृष्ठभागेकुरुतेऽरिष्ट-
विंशुतंक्रकाम्ब्वाशुभमादधाति ॥
भोगाययशमश्वयसपृष्ठे यायांच
थामेकथितंजयाय । सर्वार्थलाभा-
यथशमभेवेजातंसुतंस्यात्क्रमतोऽ
दृष्टैव ॥ क्रमान्निषेधंगमनस्य विश्रं-
कालंसमृद्धिंसुतमुपरोगम् । करो-
तिरोगक्षयमर्थलाभंश्रीमादिदिक्षु
तमुहूर्तमत् ॥ औषधेषाहमारोहेवि
वादेशयमेऽधर्मे । विद्यारम्भे शैल-
यायेसुतसमसुशोभनं ॥

मिश्रशब्दः । पुं० अश्वतरे ॥

मिश्रा । स्त्री० सङ्क्रान्तिविशेषे ॥ स्व
गौमियमेसाभवेदेवमिश्रायग्र्नांसु-
ख तनयिद्विभिरकम् ॥

मिश्रिता । स्त्री० मिश्रायाम् । मिश्रे-
यस्यार्थेवा ॥

मिश्रितः । त्रि० गौरवित्ते ॥ मिलिते
। युक्ते । (*) ॥ ॥

मिश्रिता । स्त्री० सङ्क्रान्तिविशेषे ।
मिश्रायाम् । मिश्रिताचैरविज्ञेया
मिश्रितसँस्तुसङ्क्रमे ।

मिश्रेया । स्त्री० मधुरिकायाम् । सौं
फ० पनसौंफ० धनसावा० म० भा० ॥
शतपुष्पायाम् । तालपर्ण्याम् । व-
नजायाम् । घनाक्पुष्प्याम् । स-
हितपुष्पिकायाम् । सगुफा० ङ० -
गो० दे० भा० । मिश्रेयातद्वयाप्रो-
क्ताविशेषादीनिशृणुत् । अग्निमा

न्द्यहरीहृद्यायसविट्हमिशुलहृत् ।
कृत्थोष्णापाचनीकासयमिश्रे ध्मानि
लान्हरेत् ॥ तद्गुणा० मधुरिका-
पर्यायशतपुष्पागुणा ॥ मिश्रयति ।
मिश्र० । घञ् । ईयते । ईङ्० ।
मधाधाथ् । मिश्राचासावियाच ।
शकन्ध्वादिः ॥

मिषः । पुं० स्पर्द्धने ॥ न० व्याजे ।
मिषति । मिष० । कः ॥

मिषन् । त्रि० पश्यति ॥

मिषिः । स्त्री० मधुरिकायाम् । शत
पुष्पायाम् । जटामांस्याम् ॥

मिषिका । स्त्री० जटामांस्याम् ॥

मिषी । स्त्री० मिस्याम् ॥

मिष्टः । पुं० मधुररसे ॥ नूतनसर्पि-
षश्चान्नचौदनं पिच्छिलानिदधी
नि । अल्पव्ययेसुन्दरियाम्यजनो-
मिष्टमश्नाति ॥ त्रि० मधुररसवि-
शिष्टे ॥

मिष्टनिम्बुकम् । न० मीठा० नीम्बू०
इतिप्रसिद्धे फले । मिष्टनिम्बुकमं
स्वादुगुरुमारुतपित्तनुत् । गरीरग-
विषघ्नं सिध्मोत्क्रमिघरक्तदत् ।
शोषाद्वष्टिपाषहृद्धिंरंबल्यवृष्य ह
पम् ॥

मिष्टान्नम् । न० मधुरद्रव्ये ॥ मिष्टान्न
पान्ताताचसततंश्रद्धयान्वितः । दे
वपूजापरोनित्यं नरो तीतायतेस्व-
त: ॥

न० यसे । पद्मनाले ॥ मृणालंशी तलं हृष्यं विशदाशाचलजिद्रुद । दुर्जरं स्वादु पाकस्तन्यानलकफप्रदम् ॥ सद्गाहिमधुरं रक्तं शालूकमपि तद्गुणम् । विसाङ्कुरास्तद्रफलानुला शाविभाविता: सैम्यरनिम्लुशाभ्याम् । विदीर्णखण्डोस्तत्स्तम्भेराजशिशिपङ्किं लघुदीरयन्ति । मृणत्ति । मृणहिंसायाम् । तमिविगिभि डिम्मणीतिकालन् ॥

मृणालिनी । स्त्री० पद्मिन्याम् ॥ मृणालानिसन्त्यच । पुष्करादिभ्यो देशमतीनि : ॥

मृणाली । स्त्री० विसे । पद्मादिमूले ॥ चपचयविवक्षायाम् गौरादित्वा न्ङीष् । स्वल्पमृणालजाती ॥

मृत : । त्रि० परासौ । प्राप्तपञ्चत्वे । परेते । प्रेते । संस्थिते । प्रमीते । मरा० ड० भा० ॥ यथा । धर्म: प्रवसितस्तत्र : प्रवसितं सत्पदूरे गतं पृथ्वीमन्दफलाजना: तपटिनो यौर्य्यं क्षिराधारत्यपा: । सर्वा: स्त्रीवशगा : स्त्रियश्चपला: नीचा जनाउन्नताश्चाकर्षन्तुजीवितं दानि युगीधन्यानराये मृता : ॥ इतिगारुडे ११५ अध्याय : । न० मृत्यौ ॥ याचिते । मृतन्तुयाचितं प्रोक्तमि तिमनु : । याचनहत्तिहिंमरणमि दद् : खञ्जनकास्त्रान्मृतमुच्यते ॥

म्रियते स्म । मृङ्प्राणत्यागे । गत्यर्थेतिक्त : ॥ तमिसृड्भ्यादिदेति तन्त्रा ॥

मृतकम् । न० शवे । मरणाशौचे ॥ यथा । यदिस्यान्मृतकेसूतिर्मृतके सूतकन्तथा । शेषेणैवभवेच्छुद्धिर : शेषे द्विरात्रकम् ॥

मृतकल्प : । त्रि० मृतप्राये । ईषदूनोमृत : । ईषदसमाप्तावितिकल्प प्प्रत्यय : ॥

मृतगावक : । पुं० मृगाले ॥

मृतजीव : । पुं० तिल्लकवृक्षे ॥

मृतमत्त : । पुं० )

मृतमत्तक : । पुं० ) शृगाले ॥

मृतवत्सा । स्त्री० यजीवत्सन्ताना याम् । मृतापत्यायाम् ॥

मृतसञ्जीवनी । स्त्री० मृतजीवनार्थिकायांविद्यायाम् ॥ गौरवहुस्पत्या म् । मृत : सञ्जीव्यतेऽनया । जीव प्राणधारणे । ल्युट् । ङीप् ॥

मृतस्नात : । त्रि० अपस्नाते । मृत शुद्धिस्नानकारिणि ॥ मृतेस्नात : । सप्तमीतिसमास : ॥

मृतस्नानम् । न० अपस्नाने । मृतोद्देशेनस्नाने ॥

मृतस्नमीणा । पुं० राजर्षिविशेषे ॥

मृतामदम् । न० तुत्थे ॥

मृताजकम् । न० तुवरिकायाम् ॥ मृतमाजयति । अजक्षेपणादौ ।

संख्यण् । संज्ञायांकन् ॥

मृतिः । स्त्री॰ मरणे ॥ मृङ् प्राणत्यागे । स्त्रियांक्तिन् ॥ मृतिः प्राणवियोगः स्यान्नतुनाशः सतो मतः । मृङ् प्राणत्यागइत्युक्तं स्वयंनष्टः कथंत्यजेत् ॥

मृत्करः । पुं॰ कुम्भकारे ॥

मृत्कांस्यम् । न॰ शरावे ॥

मृत्किरा । स्त्री॰ जलजन्तुविशेषे । घुर्घुर्याम् ॥

मृत्तालकम् । न॰ मूलके ॥

मृत्तिखनिनी । स्त्री॰ सातलायाम् । चर्मकषायाम् ॥

मृत्तालम् । न॰ तुवरिकायाम् । सुराष्ट्रजमृत्तिकायाम् ॥ मृदिताल : प्रतिष्ठाऽस्याः ॥

मृत्तालकम् । न॰ मृत्ताले ॥ स्वार्थेकन् ॥

मृत्तिका । स्त्री॰ मृदि ॥ माटी॰ इ॰ भा॰ ॥ मृदेव । स्वार्थे॰ मृत्तिकन् । प्रत्ययस्थादित्वे वसिद्धे ॰ककारोच्चारणं प्रक्रियालाघवार्थम् । टापोऽसुध्यापिशवचार्थंम् । प्रशस्ताभिर्मृत्तिकाभिः क्रीतः पक्व मृत्तिकः पटः ॥

मृत्फली । स्त्री॰ कुटीपथे ॥

मृत्युः । पुं॰ मरणे । यमतायाम् । निधने । शरीराद्यारम्भकर्मक्षय निमित्ते । मर्ममर्मच्छेदनरूपे॰ शरीरादिविच्छेदे ॥ सचसर्वेषांब्रह्मादीनांकालंप्राप्यावश्यमेवभवति । तथाहि । प्राप्तेकालेस्वयंब्रह्मापरार्द्धद्वयसम्मिते । निधनंयातितरसा जगत्कर्तास्वयंप्रभुः ॥ चतुर्युगसहस्रेषुब्रह्मणोदिवसेस्थिते । यस्मिन्भवनात्पञ्चनवचेन्द्रास्तथापुनः । तथैवदिग्गुणेविष्णुमरणायोपकल्प ते ॥ तथैवद्विगुणेकालेमहेश्वरः शान्तिमेतिच ॥ कश्चिन्नामरणं मूढानिश्चलेदैवनिर्मिते । महीमहीधराणांचनाशः सूर्यशशाङ्कयोः ॥ जातस्यहिध्रुवोमृत्युर्ध्रुवंजन्ममृतस्यच । अध्रुवेऽस्मिञ्छरीरेतुरक्षणीयंयशः स्थिरम् ॥ इतिश्रीदेवीभागवते ५ स्कन्धे ३१ ऽध्यायः ॥ आसन्नमृत्युर्लोकोऽयंध्रुवादीन्नपश्यति ॥ तथाहि । अरुन्धतींध्रुवञ्चैवविष्णोस्त्रीणिपदानिच । आसन्नमृत्युर्नोपश्येच्चतुर्थंमातृमण्डलम् ॥ अरुन्धतीभवेज्जिह्वाध्रुवोनासाग्रमुच्यते । विष्णोः पदानिभ्रूमध्येनेत्रयोर्मातृमण्डलमितिकाशीखण्डे १२ अध्यायः ॥ संसारे । अविद्याकामकर्मसमुदाये । स्वाभाविककर्मणि ॥ स्वाभाविकेज्ञाने ॥ संहारकारिणामध्येविनाशरूपेतौ भगवतोविभूतौ । यमे । वैवस्वते ॥ मरणम् । मृङ्॰ । भुजिमृङ्भ्यां

मृत्०द्। स्त्री० मृत्तिकायाम्॥ शौचे मृद्विशेषो यथा विष्णुपुराणे। वल्मीकमूषकोत्खातां मृदमन्तर्जलां तथा। शौचावशिष्टां गेहाच्च नादद्याल्लेपसम्भवाम्॥ अन्त:प्राण्यवपन्नाञ्च हलोत्खातां च पार्थिव। परित्यजेन्मृदस्त्वेता: सकलाः शौचसाधने॥ इति॥ अन्त:प्राण्यवपन्नां सकीटाम्॥ मृद्नाति० मृद्यते वा। मृदग्रीवादिसम्पदादित्वात् क्विप्। काश्याम्। तुवरिकायाम्॥

मृदङ्कुर:। पुं० हारीतपक्षिणि॥

मृदङ्ग:। पुं० स्वनामप्रसिद्धे वाद्ये। मुरजे॥ अथ मृदङ्गादिविवरणम्। मर्द्दल: खादिर: श्रेष्ठो गम्भीरध्वनिरक्तचन्दनजो वाद्यो गम्भीरध्वनिसम्पन्न:। सार्द्धहस्तप्रमाणस्तु दैर्घ्यमस्य विधीयते। चतुर्दशाङ्गुलं वामे दक्षिणे द्वादशाङ्गुलम्॥ दक्षिणञ्च भवेद्धीनमेकेनार्द्धाङ्गुलेन वा। करणाद्गतोमध्ये चैव यद्युर्भवेत्। परिणाहो भवेदस्य सार्द्धपञ्चशतम्। मृत्तिकानिर्म्मितश्चेव मृदङ्ग: परिकीर्त्तित:॥ घातयेत्पञ्चलिङ्गाद्यावादनार्थं समर्दले। विभूतिर्गैरिकं भक्तं सेन्दुकिणयवसंयुतम्॥ यद्वा चिपीटचूर्णैर्वा लोहचूर्णसमन्वितम्। सर्वमेतत्पिष्टं तल्लेप: खरलिरुच्यते॥ वामास्ये पूरिकां कृत्वा लेपं दद्याद्विचक्षणे। एवं मर्द्दलक: प्रोक्त: सर्ववाद्योत्तमोमत:॥ अस्य संयोगमासाद्य सर्ववाद्यं सुशोभते। एतद्वीजकाष्ठदलमद्भुतं विदु:॥ इति। विशेष: सङ्गीतशास्त्रे द्रष्टव्य:॥ पटहे। घोषे॥ वंशे॥ मृदाति। मृद०। मिडादिभ्य: किदिङ्गच्। मृत्पक्षगस्येतिवा॥

मृदङ्गक:। पुं० मृदङ्गे॥

मृदङ्गफल:। पुं० पनसवृक्षे॥ मृदङ्गवत्फलान्यस्य॥

मृदङ्गफलिनी। स्त्री० कोषातक्याम्॥

मृदङ्गी। स्त्री० कोषातक्याम्। श्वेतघोषाकृतिगौ०दे०भा०॥

मृदर:। पुं० व्याधि॥ त्रि०विलास सति॥ म्रियतेऽनेन०मृद्नाति वा। मृङ् मद०वा। कदरादयश्चेति० चरप्रत्ययान्तो निपातित:॥ भये॥

मृदा। स्त्री० मृत्तिकायाम्॥

मृदाकर:। पुं० वज्रे॥

मृदित:। त्रि० अभिनष्टे। विनाशिते॥ निष्पीडिते॥ चूर्णीकृते॥ मृद्यतेस्म। मृद०। क्त:। इट्। क्ङितिचेतिनगुण:॥ चौरे॥

मृदिनी। स्त्री० मृत्मायाम्॥

मृदुः। त्रि॰ कोमले। अतीक्ष्णे॥ मृदुः सर्वत्र बाध्यते॥ म्रदते। म्रद मर्द्दने। प्रथिम्रदिभ्रस्जामितिकुः सम्प्रसारणं च॥ मृदुशब्दो मृदुत्वगुणमुक्त्वा तद्द्रव्यमभिधत्ते इति गुणवचनो मृदुशब्दः। तेन स्त्रियां ङीप। भावे॰ मृदुः॥ न॰ विशेषनवचाटी। यथा। चित्रेन्दुमिवघोरा यस्मृदुमेव तथाङ्गुः। तत्र गोसम्भवोऽम्लिमधार्थ्यशोभनम्॥ स्त्री॰ मृदुकन्यायाम्॥

मृदुकृष्णायसम्। न॰ सीसके॥

मृदुगमना। स्त्री॰ हंस्याम्॥ त्रि॰ मन्दगमने॥

मृदुचर्मी। पुं॰ भूर्ज्जवृक्षे॥ त्रि॰ कोमलचर्मविशिष्टे॥

मृदुच्छदः। पुं॰ भूर्जे। शुक्लरुद्रे॥ पीलौ॥ अक्षोटे॥

मृदुता। स्त्री॰ मृदुत्वे॥

मृदुताल: पुं॰ श्रीतालवृक्षे॥

मृदुत्वच्। पुं॰ भूर्जवृक्षे। मृदीत्वग्यस्य॥

मृदुत्वच:। पुं॰ मृदुत्वचि। मृदी त्वग्यस्य:॥

मृदुत्वक्म्। न॰ सुवर्णे॥ इतिशब्दचन्द्रिका॥

मृदुपत्र:। पुं॰ नले॥ न॰ कोमलपत्रे॥ त्रि॰ कोमलपत्रवति॥ मृदूनिपत्राणि यस्य सः॥

मृदुपत्री। स्त्री॰ चिल्लीशाके॥

मृदुपर्वक:। पुं॰ वेत्रे॥ त्रि॰ कोमलपर्ववति॥

मृदुपुष्प:। पुं॰ शिरीषवृक्षे॥ त्रि॰ कोमलकुसुमविशिष्टे। मृदूनिपुष्पाणियस्य सः॥

मृदुफल:। पुं॰ मधुनारिकेले॥ विकङ्कते॥ त्रि॰ कोमलफलवति॥ मृदूनिफलानियस्य सः॥

मृदुबन्ध:। पुं॰ सात्त्विकरतिबन्धविशेषे॥

मृदुरेचनी। स्त्री॰ मार्कण्डिकायाम्॥

मृदुल:। त्रि॰ कोमले। मृदुर्गुणोऽस्यास्ति। सिध्मादिभ्यश्चेतिलच्॥ न॰ जले॥

मृदुलोमक:। पुं॰ शशके॥ त्रि॰ कोमलरोमविशिष्टे॥

मृदूत्पलम्। न॰ नीलपद्मे॥

मृद्वङ्गम्। न॰ त्रपुणि॥ कोमलगात्रे। त्रि॰ तद्वति॥ मृदून्यङ्गानियस्य। कर्मधारयो वा॥

मृद्वी। स्त्री॰ कपिलद्राक्षायां॥ कोमलाङ्ग्याम्॥ मृदुशब्दो मृदुत्वगुणमुक्त्वा मृदुत्वगुणयुक्तं द्रव्यमभिधत्ते इति गुणवचनत्वे न॰ वोतो गुणवचनादिति पाक्षिको ङीप्॥

मृद्वीका। स्त्री॰ गोस्तन्याम्। द्राक्षायाम्। मुग्धबो॰ ए॰ का॰। मृद्नाति। मृद॰। कर्णीकादयोन-

साधु : । कपिलद्राक्षायाम् ॥

मृधम् । न० युद्धे । मर्द्दनम् । मृधु हिंसायाम् । वाहुलकात्० भावे० घञर्थेवाक : ।

मृन्मय : । त्रि० मृदोविकारे । मय ट् । स्त्री० मृन्मयी ।

मृन्मरु : । पुं० अश्मनि । पाषाणे ।

मृषा । अ० वितथे । मिथ्या भूठ० इ० भा० । मृष्यते । मृषुसहने । काप्रत्यय : ॥

मृषाध्यायी । पुं० बके ॥

मृषार्थकम् । न० श्रद्भुते । अत्यन्ता सम्भवार्थवाक्ये ॥ यथा । एषवन्ध्यासुतोयातिखपुष्पकृतशेखर : । कूर्मक्षीरचतुस्नातः शशशृङ्गधनुर्द्धर : ॥ इ० । मृषाऽर्थोयस्मतत् । कप् ।

मृषाभाषा : । पुं० आम्रवृते ॥

मृषावाद : । पुं० मिथ्योदिते । मिथ्यावाक्ये । टट्टयाम् ॥

मृषावादी त्रि० मिथ्यावादिनि । मृषोद्ये । मृषावादोऽस्यास्ति । इनिः ॥ मिथ्याभियोक्तरि ।

मृषोद्य : । त्रि० मिथ्यावादिनि । राजसूयसूर्य मृषोद्य तुल्यादिनामृषोपपदाद्वदे : क्यप् गिनितुल्यं क्यबनि पात्यते । न० मिथ्यावाक्ये ॥

मृष्ट : त्रि० अपनीतमले । शोधिते । मृज्यतेस्म । मृजूशुद्धौ । क्त : । न० मरिचे ॥

मृष्टि : । स्त्री० अन्नादे : संस्कारविशेषे ।

मृष्टेरुक : । पुं० वदान्ये । दानशीले । मिष्टाशिनि ॥ अतिथिद्विषि ॥

मेक : । पुं० अजे । छागे ॥

मेकल : । पुं० ऋष्यपर्वते । गिरिविशेषे ॥

मेकलकन्यका । स्त्री० नर्मदानदीसरिति । रेवायाम् ॥ मेकलस्यपर्वतस्य कन्यका ।

मेकलाद्रिजा स्त्री० सोमोद्भवायाम् । रेवायाम् ॥ मेकलाद्रेर्जाता । जनी० । ड : ॥

मेक्षणम् । न० यज्ञीयपात्रविशेषे ॥

मेखल : । पुं० मेकलपर्वते ।

मेखलकन्यका स्त्री० रेवायाम् ॥

मेखला । स्त्री० खड्गबन्धे । खड्गादेर्यमदिनिर्मितेकटिबन्धने ॥ युद्धे हस्तात्पतनवारणायमणिबन्धे प्रथिप्यमाणेचर्मादौ ॥ स्त्रीकट्याभरणे । काञ्च्याम् ॥ रशनायाम् ॥ केचित्० एकयष्टिर्भवेत्काञ्चीमेखलात्वष्टयष्टिका । रशनाषोडशज्ञेयाकलाप : पञ्चविंशक : ॥ इतिपठन्ति० इदन्त्वभेदात्पर्यायता ॥ स्त्रीकट्यांबध्यमाने । श्रोणिस्थाने ॥ शैलनितम्बे । उपनयनकाले

धारणीयसूत्रनिर्मितसूत्रत्रये ॥ यथा । मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला । क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी ॥ मुञ्जालाभे तु कर्त्तव्याः कुशाश्मान्तकवल्वजैः । त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा ॥ इ० मनुः ॥ होमकुण्डोपरि दृढघटितवेष्टनविशेषे ॥ यथोक्तं वह्निप्रस्तावे । यावान् कुण्डस्य विस्तारः खननं तावदिष्यते । इत्थं त्रिमेखलास्तिस्रो वेदाग्निनयनाङ्गुलाः ॥ कुण्डे द्विहस्ते तासां तु वारसवेदगुणाङ्गुलाः । चतुर्हस्ते तु कुण्डे तास्ससुतकं गुणाङ्गुलाः ॥ मेखलाब्रह्मचारिमेखलावत् कुण्डवेष्टितास्तु दृढघटिताः तास्वातदेशाद्धोर्द्धे एकाङ्गुलिकपञ्चकरुद्धं परिखच्यो च्छ्रायेण विस्तारेण चेत्यादिक्रमेणवेदाद्यङ्गुलाः एतद्विपरीतास्त्वावरोत्ताद्यवस्थारविकला ॥ विह्वलामतीमि । खातादिकाङ्गुलं स्यात् मेखलानां विधिर्भवेदिति ॥ मखं गिलति । सा० । धातदृतिवा । पृषोदरादिः ॥ मां लक्ष्मीम् ईखति ॰माईखतिवा । माशब्दो निषेधे ईखतौ । यद्वा नकारस्य लत्वं । य द्वा । मा ईखलति । खलसञ्चये सि ञ्चने च । मूलविभुजादित्वात् कः । अपितु॰ वृद्धिः स्यात् ॥ नर्मदा-



याम् ॥ अग्निपर्याये ॥

मेखलिक : । पुं० मेखलिनि ॥ मेखलास्यास्ति । व्रीह्यादित्वाट्ठन् ॥

मेखली । पुं० मेखलावति । मेखलिके । मेखलास्यास्ति । व्रीह्यादित्वा दिनिः ॥

मेघ : । नः० अब्दे । वारिवाहे । घने । जलदे ॥ मेघास्त्रिविधाः सवर्षाश्च धूमवीनयः । निश्वासजाम्बुनी-मूलास्त्रियाजीवकल्पिप ॥ यच्च-वास्तुघनाघोराः पुष्करावर्त्तकादयः । जातिविशेषतः शब्दार्थः ॥ मेहतिसिञ्चति । मिहसेचने । घञ् । न्यङ्क्वादित्वात् कुत्वम् ॥ मुस्तायाम् ॥ राक्षसे ॥ षडागान्तर्गतरागविशेषे ॥ यथा । भैरवोऽथ वसन्तश्च नटनारायणस्तथा । श्रीरागो मेघरागश्च षडेते पुरुषाह्वयाः ॥

मेघकफ : । पुं० करकायाम् ॥

मेघकाल : । पुं० वर्षासु ॥

मेघचिन्तक : । पुं० चातकपक्षिणि ॥

मेघच्छद : । पुं० मेघच्छन्ने ॥ मेघान् छादयतीति । मेघ छिद्यते परितः । खश् प्रत्ययः । अरुर्द्विषदिति मुम् ।

मेघज : । त्रि० मेघभवस्तुनि ॥

मेघजालम् । न० कादम्बिन्याम् । मेघावली ॥

मेघजीवन : । पुं० चातके ॥ मेघजीवनस्य ॥

मेघज्योतिः। पुं॰ इरम्मदे। वज्राग्नौ। मेघस्यज्योतिः॥ अन्योन्यसङ्घट्टनेनमेघाग्निः सञ्चरन्नादीयो ज्योतिरग्निः पततिसः॥

मेघडम्बरः। पुं॰ मेघगर्जने॥ मेघस्याडम्बरः॥

मेघतिमिरम्। न॰ मेघाच्छन्नदिने॥

मेघदीपः। पुं॰ विद्युति॥

मेघध्वनिः। पुं॰ गर्जिते। मेघनिर्घोषे॥

मेघनादः। पुं॰ वरुणे॥ रावणात्मजे। इन्द्रजिति॥ मेघस्यनादइवनादोयस्य॥ मेघपर्णे॥ पलाशवृक्षे॥ तण्डुलीयशाके॥ हस्तिराजनिर्घण्टः॥ मेघस्यनादः॥

मेघनादजित्। पुं॰ रामानुजे। लक्ष्मणे॥ मेघनादमजैषीत्। जि॰। सत्सूद्विषेतिक्विप्। तुक्॥

मेघनादानुलासकः। पुं॰ मयूरे॥

मेघनादानुलासी। पुं॰ मयूरे॥ मेघनादेनअनुलसति॰ नन्दील: । लसश्लेषणक्रीडनयोः। सुप्यजातावितिणिनिः॥

मेघनामा। पुं॰ मुस्तके॥ मेघनामानिनामास्य॥ आदित्यघौपद्यमान्के॰ १५५॥

मेघनायकः। पुं॰ आपस्तम्बे॥ यथा। विदुरेणाकर्ण्य तुधतुभिः शोधितेऽसमात्। आपस्तम्बिरिति मत्तं पुष्करोद्भवमम्बुदम्॥ फलंयथा। आवर्त्तोनिर्जलोमेघः संवर्त्तश्चबहूदकः। पुष्करोदुष्करजलोद्रोणः सस्यप्रपूरकइति॥

मेघनिर्घोषः। पुं॰ स्तनिते। गर्जिते॥ मेघस्यनिर्घोषः॥

मेघपर्यायः। पुं॰ आदित्यघौपद्यमानके॰ १५५॥ मुस्तके॥ मेघोमेघवाचकः शब्दः पर्यायोऽस्य॥

मेघपुष्पम्। न॰ पिहडाम्बे। पयोमसि॥ अम्बुनि॥ नदीजले॥ पुं॰ इन्द्राश्वे॥ कृष्णस्यघोटके॥ मेघस्यपुष्पमिव॥

मेघप्रसवः। पुं॰ जले॥

मेघभवः। त्रि॰ मेघोत्पन्नवस्तुनि॥

मेघभूतिः। पुं॰ वज्रे॥

मेघमालः। पुं॰ प्लक्षद्वीपस्थे गिरिविशेषे॥ रसागर्भजातकल्किदेवपुत्रे॥

मेघमाला। स्त्री॰ कादम्बिन्याम्॥ मेघानांमाला॥

मेघयोनिः। पुं॰ धूमे॥

मेघरागः। पुं॰ रागविशेषे॥ मेघसंज्ञकोरागः॥

मेघवर्णा। स्त्री॰ नीलीवृक्षे॥ त्रि॰ घनसमानवर्णवति॥

मेघवर्त्म। न॰ नभसि। गगने॥

मेघवह्निः। पुं॰ वज्राग्नौ। इरम्मदे॥

मेघवाह : । पुं॰ इन्द्रे ॥ यथा । राजा स्वर्यान्समाहूयकुर्यादिन्द्रमहोत्सवम् । प्रधीसोमे घवाहस्तुमहतीं वृष्टिमावहेदितिदण्डनीति : ॥

मेघवाहन : । पुं॰ इन्द्रे । तुरासाहि ॥ मेघा : मदामेघागनरूपधारि णपैरावताद्ययोवाहनमस्य ॥ मेघा नृपाश्रयाशिवाशयसिवा । स्य : ॥ इन्द्रोऽपिमेघानाविश्यवर्षतीत्यागम : ॥

मेघविस्फूर्जिता । स्त्री॰ अतिधृतिच्छन्द : १८ प्रभेदे ॥ तस्यलक्षणोदाहरणं यथा । रसर्त्वश्वैर्यौम्नौसरगुरुयुतामेघविस्फूर्जितास्यात् ॥ यथा । कदम्बामोदाढ्याविपिनपवनाः केकिन : कान्तकेका : ॥ विनिद्रा : कान्दल्योदिपिदिशिमुदादद्दुराडम्बरा : । निशान्तस्यविद्युद्विलसिततसम्मेघविस्फूर्जिताचेत् प्रिय : स्वाधीनोसौदनुजदलनोराज्यमस्मात्किमन्यत् ॥

मेघवेश्म । न॰ खे ॥

मेघसार : । पुं॰ चीनकर्पूरे ॥

मेघसुहृत् । पुं॰ मयूरे ॥ मेघ : सुहृदस्य ॥

मेघस्तनितोद्भव : । पुं॰ विकण्टकवृक्षे ॥

मेघाकाश : । पुं॰ अभ्राकाशे ॥

मेघाख्यम् । न॰ मुस्तके ॥

मेघागम : । पुं॰ प्रावृषि । वर्षाकाले ॥ मेघस्यागमोयस्मिन् ॥ मेघस्यागमने ॥

मेघानन्दा । स्त्री॰ बलाकायाम् ॥

मेघानन्दी पुं॰ मयूरे ॥

मेघान्त : । पुं॰ शरदि ॥ मेघानामन्तोयस्मिन् ॥

मेघास्त : । पुं शरद्दतौ ॥

मेघास्थि । न॰ करकायाम्

मेघारुदम् । न॰ आकाशे ॥

मेघोदर : । पुं॰ पर्जन्यपितरि ॥

मेघ्य : । त्रि॰ मेघभवे ॥ दिगादित्वात्यत् ॥

मेचक : । पुं॰ मयूरस्यचन्द्रके ॥ मेचकोवर्णोस्त्यस्य । अर्श आद्यच् ॥ श्यामलवर्णे । कृष्णे ॥ मेचका : कृष्णनील : स्याद्दतसीपुष्पसन्निभ : । इतिशब्दार्णवे भेद : ॥ बर्हिकण्ठसमवर्णेमेचकंप्रवदन्तिबुधा इतिकात्य : । मचतिमिश्रीभवतिवर्णान्तरेण । मच कल्कने । कृञादिभ्य : संज्ञायां वुन् । मचिमच्योरिश्चोपधाया इतीत्वं लघूपधगुण : ॥ धूमे ॥ मेघे ॥ शोभाञ्जने ॥ न॰ स्रोतोञ्जने ॥ अन्धकारे ॥ नीलाञ्जने ॥ त्रि॰ श्यामवर्णयुक्ते ॥

मेचकाभिधा । स्त्री॰ पातालगरुडीलतायाम् ॥

मेटुला । स्त्री॰ आमलक्याम् ॥

मेठ : । पुं॰ हस्तिपके । निषादिनि ॥

मेढ्र : पुं॰ मेहने । शिश्ने ॥ मेहन् त्यनेन । मिह सेचने । दाम्नीतिष्ट्रन् ॥ मेहतिवा ॥ मेषे ॥

मेढ्रशृङ्गी । स्त्री॰ मेषशृङ्गीवृक्षे ॥

मेण्ठ : । पुं॰ हस्तिपके ॥

मेण्ड : पुं॰ मेठे । हस्तिपके ॥

मेण्ढ : । पुं॰ मेषे ॥

मेथि : । पुं॰ मेधिकाष्ठे । खलेबालयाम् । खलेपशुबन्धनार्थकाष्ठे ॥ मेथ्यन्ते मधयोऽत्र । मेथृसङ्गमे । सर्वधातुभ्यइन् ॥

मेथिका । स्त्री॰ मेथिन्याम् । मेथ्याम् । गन्धबीजायाम् । मेथीतिप्रसिद्धशाके ॥ मेथिकावातशमनी श्लेष्मघ्नीज्वरनाशिनी । ततः स्वल्पगुणावन्याबाजिनांसातुपूजिता ॥ अपिच । मेथिकादीपनोहृद्यावद्धविट्क्रिमिशूलनुत् ॥ रूक्षोष्णांलत् फलंश्वासानिलघ्नशमयीनुबयेत् ।

मेथिनी । स्त्री॰ मेथिकायाम् ॥

मेथी । स्त्री॰ मेथिकायाम् । गौरादित्वात्हलादिकारादित्तिवाङीप् ॥

मेद : । पुं॰ मेदसि । वपायाम् । गुणमांसस्नेहे ॥ अलम्बुषायाम् । मेदति । ञिमिदास्नेहने । घञ् ॥ मैदेहेननिषादभार्यायांजनिते॰ष गतजातिविशेषे ॥

मेद : पुच्छ : । पुं॰ दुम्बके । दुम्बा॰ दुम्बा॰ इ॰ भा॰ प्र॰ मेषविशेषे ॥ मेद : पुच्छोद्भवंमांसंहृद्यंवृष्यम्श्रमापहम् । पित्तश्लेष्मकरंकिञ्चिद्वातव्याधिविनाशनम् ।

मेद : सारा । स्त्री॰ मेदायाम् ॥

मेदक : । पुं॰ जगले । सुराकल्के ॥ मेद्यतिञिमिदा॰ । क्वुनादिभ्योवुन् ॥

मेदज : । पुं॰ भूमिजगुग्गुलौ ॥ त्रि॰ मेदोजाते ॥

मेद : । न॰ शुद्धमांसप्रभवस्नेहविशेषे ॥ वपायाम् । वसायाम् ॥ मेदस : स्वरूपंयथा । यन्मांसंस्वाग्निनापक्वं तन्मेदइतिकथ्यते । तदतीवगुरुस्निग्धं बलकार्येतिहंवयम् ॥ स्थानं यथा । मेदोहिसर्वभूतानामुदरेष्वस्थिषुस्थितम् अतएवोदरेवृद्धि : प्रायोमेदस्विनोभवेत् ॥ रोगविशेषे ॥ तन्निदानंयथा । अव्यायामदिवास्वप्नश्लेष्मलाहारसेविन : । मधुरोन्नरस : प्राय : स्नेहान्मेदोविवर्द्धयेत् ॥ अन्नरस : ॰ आमद्रव : ॥ अस्यष्टौवैगुण्यंयथा । मेदसावृतमार्गत्वात्पुष्यन्त्यनेनधातव : मेदस्तुचीयतेतस्मादशक्त : सर्वकर्मसु ॥ मेद्यति । ञिमिदा॰ । असुन् ॥

मेदस्कृत् । न॰ मांसे ॥

मेदा । स्त्री॰ अष्टवर्गान्तर्गतौषधिविशेषे ।

मेठः । पुं॰ हस्तिपके । निषादिनि ॥

मेढ्रः । पुं॰ मेहने । शिश्ने । मेहन्त्यनेन । मिहसेचने । दाम्नीतिष्ट्रन् ॥ मेढ्रतिवा । मेषे ॥

मेढ्रशृङ्गी । स्त्री॰ मेषशृङ्गीवृक्षे ॥

मेण्ठः । पुं॰ हस्तिपके ॥

मेण्डः । पुं॰ मेण्ठे । हस्तिपके ॥

मेण्ढः । पुं॰ मेषे ॥

मेथिः । पुं॰ मेथिकाष्ठे । खलेवाल्याम् । खले पशुबन्धनार्थं काष्ठे ॥ मेथ्यन्ते पशवोऽत्र । मेथृसङ्गमे । सर्वधातुभ्य इन् ॥

मेथिका । स्त्री॰ मेथिन्याम् । मेथ्याम् । गन्धबीजायाम् । मेथीतिप्रसिद्धायां ॥ मेथिकावातशमनी श्लेष्मघ्नीज्वरनाशिनी । ततः स्वल्पगुणावन्यावाजिमांसानुपूजिता ॥ अपिच । मेथिकादीपनीहृद्यावद्धविट्क्रमिशूलनुत् ॥ कृष्णोष्णारसत्फलंश्वासानिलश्लेष्मबलीन् क्षयेत् ॥

मेथिनी । स्त्री॰ मेथिकायाम् ॥

मेथी । स्त्री॰ मेथिकायाम् । गौरादित्वात्ङ्कृदिकारादिक्तिनाङीष् ॥

मेदः । पुं॰ मेदसि । वपायाम् । शुद्धमांसस्नेहे ॥ अलम्बुषायाम् ॥ मेद्यति । ञिमिदास्नेहने । घञ् ॥ वैदेहेननिषादभार्यायांजनिते॰ सङ्करजातिविशेषे ॥

मेदः पुच्छः । पुं॰ दुम्बके । दुम्बा॰ दुम्बा॰ इ॰ भा॰ प्र॰ मेषविशेषे ॥ मेदःपुच्छोद्भवंमांसंहृद्यंवृष्यश्रमापहम् । पित्तश्लेष्मकरं किञ्चिद्वातव्याधिविनाशनाम् ।

मेदःसारा । स्त्री॰ मेदायाम् ॥

मेदकः । पुं॰ जगले । सुराकल्के ॥ मेद्यतिञिमिदा॰ । कृञादिभ्यो वुन् ॥

मेदजः । पुं॰ भूमिजगुग्गुलौ ॥ त्रि॰ मेदोभवे ॥

मेदः । न॰ शुद्धमांसप्रभवस्नेहविशेषे ॥ वपायाम् । वसायाम् ॥ मेदसः स्वरूपंयथा । यन्मांसंस्वाग्निनापक्वं तन्मेद इतिकथ्यते । तदलौघगुरुस्निग्धंबलकार्यतिवृंहणम् ॥ स्थानं यथा । मेदोहिसर्वभूतानामुदरेष्वस्थिषुस्थितम् अतएवोदरेवृद्धिः प्रायोमेदस्विनोभवेत् ॥ रोगविशेषे ॥ तन्निदानंयथा । अव्यायामदिवास्वप्न श्लेष्मलाहारसेविनः । मधुरोऽन्नरसः प्रायः स्नेहान्मेदोविवर्द्धयेत् ॥ अन्नरसः॰ आमद्रवः ॥ अस्यदोषवैगुण्यंयथा । मेदसावृतमार्गत्वात्पुष्यन्त्यन्येनधातवः मेदस्तुचीयतेतस्मादशक्तः सर्वकर्मसु ॥ मेद्यति । ञिमिदा॰ । असुन् ॥

मेदस्कृत् । न॰ मांसे ॥

मेदा । स्त्री॰ अष्टवर्गान्तर्गतौषधिविशेषे ।

परशक्ति । त्रि॰ मेधाकारके ॥

मेधाजित् । पुं॰ कात्यायनमुनौ ।

मेधातिथि : । पुं॰ मुनिविशेषे । कण्वर्षे : पुत्रे ।

मेधारुद्र : । पुं॰ कालिदासे ॥

मेधावती । स्त्री॰ महाज्योतिष्मत्याम् त्रि॰ मेधाविशिष्टायाम् ॥ मेधावान्॰ मेधावत्॰ द्र॰ पुंनपुंसकयो : ॥

मेधाविक्रम् । न॰ तीर्थविशेषे ॥

मेधावी । पुं॰ शुकपक्षिणि ॥ पण्डिते ॥ व्याडौ ॥ मदिरायाम् । त्रि॰मेधान्विते ॥ प्रज्ञातिशयवति । जपापोहसमर्थे ॥ शमदमसर्वकर्मोपरमगुरूपसदनादिसाधनसापेक्षयुक्तमननिदिध्यासनाख्यवेदान्तवाक्यविचारेणपरिनिष्पन्नवेदान्तमहावाक्यकरणकनिरस्तसमस्तामात्यात्मज्ञ कञ्चिदन्याविषयकमहंब्रह्मास्मीतिब्रह्मात्मैक्यज्ञानमेवमेधा॰रायानित्यं युक्त॰स्थितप्रज्ञ॰विपश्चिति ॥ मेधास्यास्ति । अस्मायामेधास्रजोविनि : ॥

मेधाविनी । स्त्री॰ब्रह्मण : पत्न्याम् ब्राह्म्याम् ॥

मेधि : । पुं॰ खलेवाल्याम् । खलेपशुबन्धनायारोपितेकाष्ठे ॥ पुंसिमेधि : खलेदारुन्यस्तं यत् पशुबन्धने । मेध्यन्तिपशवोऽत्र । मेधृ॰ । इन् ॥

मेधिर : । त्रि॰ मेधाविनि ॥

मेध्य : । पुं॰ यवे ॥ छागे ॥ खदिरे ॥ त्रि॰पवित्रे । शुचौ । शुद्धे । यज्ञिये ॥ मेधनार्हम् । मेधृ॰ । ऋहलोर्ण्यत् ॥ मेधायैहितोवा । गवादिभ्योयत् ॥ मेधामर्हतिवा । दण्डादिभ्यायत् ॥ मेधइववा । शाखादिभ्योयः ॥ ज्ञानेनमेध्यमखिलमसेध्यं ज्ञानतोभवेत् । प्रज्ञानेसमुत्पन्नेमेध्यामेध्यंनविद्यते ॥

मेध्या । स्त्री॰ रक्तवचायाम् ॥ रोचनायाम् ॥ केतक्याम् ॥ ज्योतिष्मत्याम् ॥ शङ्खपुष्प्याम् ॥ ब्राह्म्याम् ॥ मेधायैहिता । यत् । टाप् ॥ योषिति । भार्याम् ॥ सोम : शौचंददौस्त्रीणांगन्धर्वश्चशुभांगिरम् । पावक : सर्वमेध्यत्वंमेध्यावैयोषितोह्यत : ॥

मेनका । स्त्री॰ हिमालयस्यभार्यायाम् । अप्सरोमातरि ॥ स्वर्वेश्यायाम् । शकुन्तलायाजनयित्र्याम् ॥

मेनकात्मजा । स्त्री॰ गिरिजायाम् । दुर्गायाम् ॥ मेनकाया : आत्मजा ॥

मेनकापति : । पुं॰ हिमालये ॥

मेनकापुत्र : । पुं॰ मैनाके ॥ मेनकाया : पुत्र : ॥

मेनकाप्राणेश : । पुं॰ हिमालये ॥

मेना । स्त्री॰ मेनकायाम् । हिमाद्रे

भगवत्तत्त्वभस्मजनन्याम् ॥

मेरुसावर्णः । पुं॰ एकादशमनौ ॥

मेलः । पुं॰ सङ्गमे ॥ मेलनम् । मिल संश्लेषे । घञ् ॥

मेलकः । पुं॰ सङ्गे । सङ्गमे ॥ मेलनम् । मिल॰ । घञ् । स्वार्थेकः ॥

मेलयालवणम् । न॰ चौपरेलवणे ॥

मेलनम् । न॰ मैत्रे । सङ्गमे ॥

मेला । स्त्री॰ मसीजले ॥ मेलके ॥ अञ्जने । मसानील्याम् ॥ टाप् ॥

मेलानन्दा । स्त्री॰ मस्याधारे । मसीपात्रे ॥

मेलान्धुः । स्त्री॰ मेलानन्दायाम् ॥

मेलाम्बुः पु॰ मस्याधारे ।

मेषः । पुं॰ हुडौ । मेढ्रे । उरभ्रे । उरणे । ऊर्णायौ । एडके । मेंढा॰ प्र॰ भा॰ ॥ मेषमांसगुणश्चैवाचिरात् पाकरं गुरु । मस्तैगातडविशो मांसमांसंक्षिदिरायुश्च तत् ॥ अपि चास्यमांसगुणाः । मेषमांसंगुरुस्निग्धंवस्त्यंवातकफप्रदम् । मेदःपुच्छामिषं तथ्य कफवातहरं गुरु ॥ मिषति । मिषस्पर्धायाम् । अच् । मैषज्यप्रभेदे । राशिविशेषे । क्रियसंज्ञके । लग्नविशेषे ॥ मेषलग्नोत्पन्नस्य फलं यथा । मेषलग्नेसमुत्पन्नश्चण्डोमानी धनी शुभः । क्रोधी स्वजनहन्ता च विक्रमी परवत्सलः ॥

मेषकः । पुं॰ जीवशाके ॥

मेषकम्बलः । पुं॰ ऊर्णायौ ॥ मेषलोमकृतः कम्बलः । शाकपार्थिवादिः ॥

मेषलोचनः । पुं॰ चक्रमर्दे ॥ मेषस्य लोचनमिव लोचनमस्य॰ तत्तुल्यपुष्पत्वात् । लोचनशब्दस्तत्पुष्पेलाक्षणिकः ॥ त्रि॰ मेषचक्षुस्तुल्यचक्षे ॥

मेषवल्ली । स्त्री॰ मेषशृङ्ग्याम् ॥

मेषविषाणिका । स्त्री॰ मेषशृङ्ग्याम् ॥

मेषशृङ्गः । पुं॰ स्थावरविषप्रभेदे ॥

मेषशृङ्गी । स्त्री॰ गन्धीक्षुपे । मेढ्रशृङ्ग्याम् । मेषविषाणिकायाम् ॥ मेषशृङ्गीरसे तिक्ता वातला श्वासकासहृत् । रूक्षा पाकेकटुः पित्तव्रणश्लेष्माक्षिशूलनुत् ॥ मेषशृङ्गीफलं तिक्तं कुष्ठमेहकफप्रणुत् । दीपनं स्रंसनं कासकृमिव्रणविषापहम् ॥ मेषस्य शृङ्गमस्याः । मेषशब्दोमेषशृङ्गसदृशेलाक्षणिकः ॥ गौरादिः ॥

मेषा । स्त्री॰ त्रुटौ । क्षुद्रैलायाम् ॥

मेषाक्षः । पुं॰ चक्रमर्दके । मेषस्याक्षीवाक्षिवस्य॰ तत्सदृशपुष्पत्वात् । षच्प्रोदर्शनादित्वच् । अक्षिशब्दः पुष्पेलाक्षणिकः ॥

मेषाक्षिकुसुमः । पुं॰ चक्रमर्दके ॥

मेषाण्डः । पुं॰ इन्द्रे ॥

मेषाधिपः । पुं॰ भौमग्रहे ॥ मेषस्य मेषराशेः अधिपः ॥

मेषाक्षी । स्त्री॰ चक्षाक्षीलत्वे ॥

मेषालु : । पुं॰ सर्व्वंरसत्वे ॥

मेषाश्रय : । पुं॰ चक्रमर्द्दे ॥

मेषिका । स्त्री॰ मेष्याम् ॥

मेषी । स्त्री॰ मेषस्त्रियाम् । भेड॰ भेडी॰ इ॰ भा॰ । तिमिशवृत्ते ॥ जटामांस्याम् ॥

मेसूरणम् । न॰ दग्धमलत्वे ॥ यथा । कार्मस्थामस्तदग्धमंसमेसूरणमास्पदम् ॥

मेह : । पुं॰ प्रमेहरोगे ॥ मेहति । मिहसेचने । पचाद्यच् ॥ मेहनंवा । घञ् ॥ प्रस्रावे ॥ मेषे ॥

मेहघ्नी । स्त्री॰ हरिद्रायाम् ॥ मेहंहन्ति । हन॰ । अमनुष्यकर्त्तृकेचेतिटक् ङीप् ॥

मेहत् । त्रि॰ मूत्रयति ॥ मेहति । मिह॰ । शतृ ॥

मेहन : । पुं॰ मुष्ककवृत्ते ॥ न॰ मूत्रे ॥ शिश्ने ॥ मेहन्त्यनेन । मिह॰ । करणेल्युट् ॥

मैत्र : । पुं॰ ब्राह्मणे ॥ सुधन्वाचार्य्ये ॥ न॰ अनुराधानक्षत्रे ॥ विशिष्टनक्षत्रादौयथा । चित्रेन्दुमित्रपौष्णाश्वमृदुमैत्रंतथाध्रुवा : । रक्तगीताम्बरक्रीडामित्रकार्य्यस्त्रशोभनम् ॥ अष्टमतारायाम् ॥ मित्रदेवताकपायुसम्बन्धान्मूत्रपुरीषोत्सर्गे ॥ यथाह्रापस्तम्ब : । मूत्रपुरीषेकुर्य्याद्दक्षिणां दिशंदक्षिणापरांवेति । दक्षिणापरां नैर्ऋतीम् । गच्छेतिशेष : । तथा प्रस्तमितेचवहिर्ग्रामाद्दाराद्वाऽवसथान्मूत्रपुरीषयो : कर्मवर्ज्जयेदिति ॥ शुष्कैस्तृणैस्तथाकाष्ठै : पर्णैर्वेणुदलेनवा । मृण्मयैर्भाजनैर्वापिपिधायवसुन्धरामितिवायुपुराणम् ॥ मूत्रोच्चारसमुत्सर्गंदिवाकुर्य्यादुदङ्मुख : । दक्षिणाभिमुखोरात्रौसन्ध्ययोश्चयथादिवेतिमनु : ॥ त्रि॰ मित्रसम्बन्धिनि ॥ मैत्रीस्निग्धता॰ तद्वति ॥ मित्रस्यकर्मभावोवा । युवादित्वादण् ॥ मित्रोदेवतास्यवा । सास्यदेवतेत्यण् ॥

मैत्रभम् । न॰ अनुराधानक्षत्रे ॥

मैत्रायणीय : । पुं॰ यजुर्वेदस्यशाखाभेदे ॥

मैत्रावरुण : । पुं॰ सुरोहुपमरायाव ... ऋत्विग्विशेषे ॥ यथा । मैत्रावरुणेनपुरोवाक्याचानुज्ञाताहत्प्रज्ञाभिःदेवतोद्देशेनाध्वर्य्युणोक्तपठितयाज्याशेषपदस्तासेदसोमादिकंजुहोतीति ॥ अगस्त्यमुनौ ॥

मैत्रावरुणि : । पुं॰ अगस्त्यमुनौ ॥ मित्रश्चवरुणश्च॰ मित्रावरुणौ । देवताद्वन्द्वेचेत्यानङ् । तयोरपत्यम् । अतइञ् ॥ वीक्ष्यागर्भान्त्यपत्ते॰ ॥

मैत्री । स्त्री॰ सौहार्द्दे ॥ स्निग्धतायाम्

न्याद्यावेक्ष : ॥

मोण : । पुं॰ शुष्कफले । वाने । नक्रमक्षिकायाम् । सर्पकरण्डे ॥

मोद : । पुं॰ हर्षे । सन्तोषे ॥

मोदक : । पुं॰ क्षत्रियाच्छूद्रायांजातेवर्णसङ्करजातिविशेषे । मयरा॰ इ॰ गौ॰ दे॰ भाषाप्रसिद्धे ॥ पुं॰ न॰ खाद्यविशेषे । लड्डुके । यवासशर्करायाम् । शर्करादिद्वारापक्वौषधविशेषे । न॰ वर्णवृत्तप्रभेदे । यथा । पादयुगंकुरुनूपुरसुन्दरमाशुकरं कुसुमचयमाहर । सुन्दरिसर्वजनीनमनोहरमोदकवृत्तमिदंपरिभावय यथा । मानसमेतदनुक्षणमिच्छति मोपसुखेयदिहविरोगच्छति । तत्क्षरयैप्रणतिंसुरवितिविसर्वसपदानमोविरतात्वयिपि । त्रि॰ हर्षके ॥

मोदनम् । न॰ सिक्थके । मोदे ॥

मोदनीय : । त्रि॰ हर्षणीये । आत्मनि ॥

मोदमान : । त्रि॰ आनन्दाभ्यासप्राप्ते । प्रमुदिते । आत्मनेपदी ॥

मोदमोदिनी । स्त्री॰ जम्ब्वाम् ॥

मोदयन्ती । स्त्री॰ वनमल्लिकायाम् । मठचंवेली॰इ॰भा॰ ॥

मोदा । स्त्री॰ अजमोदायाम् ॥

मोदाख्य : । पुं॰ आम्रवृक्षे ॥

मोदाढ्य : । त्रि॰ हर्षयुक्ते ॥

मोदाढ्या । स्त्री॰ मोचिकायाम् । अजमोदायां ॥

मोदित : । त्रि॰ सुरभीकृते । हर्षिते । हृष्टे । मुदहर्षे । कर्त्तरि क्तः ॥

मोदिनी । स्त्री॰ मल्लिकायाम् । यूथिकायाम् । मदिरायाम् । कस्तूरिकायाम् । अजमोदायां ॥

मोरट : । पुं॰ लताप्रभेदे । कर्णपुष्पे । पीलुपर्ण्यां । मधुस्रवे । दीर्घमूलक्षीरमोरटे । न॰ इक्षुमूले । अङ्कोठमूले । सप्तरात्रात्परक्षीरे । न दृष्टंधर्मनीरमोरटकैव्यटो॰ऽश्वोऽस्त्रम् । सुरति । मुरसंवेष्टने । शकादिभ्योऽटन् । पृषोदरादित्वात् ॥

मोरटकम् । न॰ इक्षुमूले ॥

मोरटा । स्त्री॰ मूर्वायाम् । मुरहरा॰इ॰भा॰ । टाप् ॥

मोष : । पुं॰ चौरधर्मे । मुष्यते । मुषस्तेये । घञ् ॥

मोषक : । पुं॰ तस्करे । मुष्णाति । मुष॰ । ण्वुल् ॥

मोषणम् । न॰ लुण्ठने । मोसना॰लूटना॰इ॰भा॰ । छेदने । वधे ॥

मोषिता । त्रि॰ चौरे । मोषणकर्त्तरि ।

मोह : । पुं॰ मूर्च्छायाम् । दुःखे । देहादावात्मबुद्धौ । यत्र दुर्लभेऽपि बुद्धिः समोहइतिलौकिका: । चित्तविभ्रमे । अविद्यायाम् । विपर्यये । अविद्यायाम् । तम: कार्ये ।

ज्वरा : ॥ इत्यादिब्रह्मवैवर्त्तपुराण
म् ॥ महाप्रलये० द्र० पश्चात् ॥

मोहशास्त्रम् । न० अविद्याजनकग्रन्थ ॥

मोहान्धकार : । पुं० अज्ञानध्वान्त ॥

मोहित : । त्रि० विवेकायोग्यत्वमा
पादित : । निर्णयासामर्थ्यप्राप्त ॥ मो
ह: सञ्जातोऽस्य । तारकादित्वादितच्
॥ अनात्मसुदेहेन्द्रियादिष्वात्माभि
मानरूपयुक्त पुरुषे ॥

मोहिनी । स्त्री० त्रिपुरमालिकापुष्प
वृक्षायामोषधौ ॥ आत्मीयत्वाभ्रंश
हेतुभूतायां प्रकृतौ ॥ समुद्रमथनका
लेदेवानाममृतपानायासुराणांमोह
नायभगवद्धृतावतारविशेषे ॥ स्वर्वे
श्याविशेषे ।

मौक्तिकम् । न० मुक्तायाम् । इत्यमर
: । मुक्ताफल । मोती० इ० भा०
॥ मौक्तिकंशीतलंवृष्यंचक्षुष्यंबल
पुष्टिदम् ॥ अपिच । मौक्तिकस्य
गुरुसुधोतदृष्टिरोगगमनंविषाप
हम् । राजयक्ष्मपरितोषनाशनंक्षी
णवीर्यबलपुष्टिवर्द्धनम् ॥ अस्यलक्ष
णंयथा । नक्षत्राभंशुभ्रमत्यन्तमुक्तं
स्निग्धंस्थूलंनिर्मलंनिर्व्रणञ्च । न्य
स्तंधत्तेगौरवंयत्तुलायांतन्निर्मूल्यं
मौक्तिकंसौख्यदायि ॥ अस्यदोषल
क्षणंयथा । यदिच्छायमौक्तिकंच
कारंशुक्तिस्पर्शेरुक्षतांचातिधत्ते ।
मत्स्याक्षाभंरूक्षमुक्तागमंनैतदर्थं

धीमताद्धोपदायि ॥ अष्टधामौक्ति
कंयथा । मातङ्गोरगमीनपोत्रिशिर
सस्त्वक्सारशङ्खाम्बुभृच्छुक्तीनामुद
राच्चमौक्तिकमपि स्पष्टंभवत्यष्टधा ॥
मौक्तिकविशेषोयथा । छायापाटल
नीलपीतधवलास्तत्रापिसामान्यतः
सर्वासांखलुयोनिरब्धिरितिवैशुक्ति
यज्ञांतुलक्षणम् ॥ अस्यपरीक्षायथा ।
लवणक्षारक्षोदिनिपात्रेऽङ्गीमूत्र
पूरितेक्षिप्तम् । मर्दितमपिशालितु
षैर्यद्विकृतंतन्मौक्तिकंजात्यं । मु
क्तैव । विनयादिभ्यष्ठक् ॥

मौक्तिकतण्डुल: । पुं० श्वेतयावनाले ॥

मौक्तिकदाम । न० वर्णवृत्तप्रभेदे ॥
यथा । पयोधरमत्रचतुष्टयमर्पितमिन्द्र
लतायदिविन्दुषोडशदेहि । भुजङ्ग
प्रयातवदीमौक्तिकदामसुवृत्तमिदंगु
मौक्तिकदाम् ॥ यथा । मयात्यधिक
स्मितहासविलासविनिन्दित
तनुस्तरापि । सत्रादिगमनशायना
द्धसनावप्रश्नामिकथंभवतीमपदाय ।

मौक्तिकप्रसवा । स्त्री० शुक्ती ॥

मौक्तिकयोनि: । पुं० मुक्तिकाकारणेषु
॥ यथा । शुक्ति : शङ्खोगज: क्रोड:
फणीमत्स्यश्चदर्दुर : । वेणुरेतेसमा
ख्यातास्तज्ज्ञैर्मौक्तिकयोनय : ॥
अगस्त्योप्याह । जीमूतकरिमत्स्या
हिवंशशङ्खवराहजा: । शुक्त्युद्भवाश्च
विज्ञेयाअष्टौमौक्तिकयोनय: । इति ।

मौनेय : । पुं० गन्धर्वगणविशेषे ॥
मौरजिक : । त्रि० मार्दङ्गिके । मुर-
जशब्दके ॥ मुरजः तद्वादनमस्य शिल्पमितिठक् ॥
मौर्ख्यम् । न० जाड्ये ॥ मूर्खस्यभावः । वर्णदृढादिभ्य. ष्यञ् चेतिष्यञ् ॥
मौर्वम् । न० काण्डे ॥ वस्त्रभेदे ॥
मूर्वाया विकार अवयवोवा । अण् ॥
मौर्वी । स्त्री० ज्यायाम् । धनुर्गुणे ॥
मूर्वाया विकारः । अवयवेवप्राग्दी
व्यतीयाण् । ङीप् । अमरः
ङ्ग्यास् । वी गा० इ० गी० भा० ॥
मौल : । पुं० वंशपरम्पराक्रमेणतद्दे-
शावस्थायिनि ॥ मूलादेमूलमाना
दि । मोङडज् ० इ० गी० भा० ॥ यथा ।
वंशपरम्परयामौला : सामन्ता : स्वा
मिनिपिङ्गः । तद्व्यवस्थागतशब्दात
व्यागोभवेत्संज्ञी । तद्वचनं यथा । ये
तत्पूर्वमसागम्या पश्चाद्भवन्तरग
ता । तन्मूलत्वात् तैमौलास्तेविधि.
परिकीर्त्तिता : ॥ मल्लिनाथः मूला
दागत । मूलेभवोवा । अण् ॥
मौलि : । पु० स्त्री० किरीटे ॥ धम्मि-
ल्ले संयतकेशे ॥ चूडायाम् ॥ मू
र्द्धनि । पुं० अशोकपादपे ॥ स्त्री०
भूमौ ॥ मूलस्यादूरभव । सुतङ्ग-
मादित्वादिञ् ॥ यद्वा । मूलप्रा-
प्तयम् । अतइञ् ॥
मौषलम् । न० मुषलतुल्ये ॥ यथा ।
महाभारतेमौषलंनाममहाभारतपर्वणि
शनम् । महाभारतस्यपर्वविशेषे ॥
मौष्टा । स्त्री० क्रीडाविशेषे ॥ मुष्टि :
प्रहरणमस्यांक्रीडायाम् । तदस्यां
प्रहरणमितिण : । टाप् ॥
मौहूर्त्त : । पुं० ज्योतिर्विदि । दैव
ज्ञे ॥ मुहूर्त्तमधीते० वेदवा । तद
धीतेतद्वेदेत्यण् ॥
मौहूर्त्तिक : । पुं० गणके । ज्योति
र्विदि ॥ मुहूर्त्तमधीते० वेदवा ।
क्रतूक्थादितिठञ् ॥
म्नक्ष : ॥ पुं० सदोषपृष्ठे । म्रक्षणे ।
म्रक्षणम् । न० स्नेहने । अभ्यङ्गे । तैले ॥
स्निग्धतायाम् ॥ द्रव्यस्यद्रव्यान्तरेण
संयोजने ॥
म्रदिमा । पुं० मार्दवे । मृदुत्वे ॥ मृद
दीर्घार्थ. । पृथ्वादिभ्यइमनिज्वा ॥
म्रदिष्ठ । त्रि० म्रदीयसि ॥ मृदुन् ॥
म्रदीयान् । त्रि० अतिसुकुमारे । अ
तिशयेनमृदुः ॥ ईयसुन् ॥ ० ॥
म्लातकम् । न० कैवर्तीमुस्तके ॥
म्रियमाण : । त्रि० मरणासन्ने ॥
म्लातम् । न० चोरिते ॥
म्लान । त्रि० मलिने । क्षामे । म्लै
गात्रविपर्यये । क्तः । संयोगादे
रातोधातोर्यण्वतइतिनिष्ठातस्यन: ॥
म्लाना । स्त्री० रजस्वलायाम् ॥ म्लाय
तिस्म म्लै० । गत्यर्थेतिक्त : ।
संयोगादेरितितस्यन : । टाप् ॥

